अथनवमी—

यंवैसूर्यंस्वर्भानुस्तमसाविध्यदासुरः ।
अत्रयस्तमन्वविन्दन्नह्यन्येअशक्नुवन् ॥ ९ ॥ १२ ॥

यम् । वै । सूर्यम् । स्वःऽभानुः । तमसा । अविध्यत् । आसुरः ।
अत्रयः । तम् । अनु । अविन्दन् । नहि । अन्ये । अशक्नुवन् ॥ ९ ॥ १२

अत्रिकृतंसामर्थ्यमनुवदति यंवैसूर्यमिति निगतव्याख्यैषा अत्रयस्तंसूर्यंअन्वविन्दन् इन्द्रार्थंसोमयागदेवतास्तुतिनमस्कारैः अनुक्रमेणईषत्तमोविरुध्यलब्धवन्तइत्यर्थःअन्येनह्य-शक्नुवन् नलब्धवन्तःखलु ॥ ९ ॥

॥ इतिचतुर्थस्यद्वितीयेद्वादशोवर्गः ॥ १२ ॥

कोनुवामितिविंशत्यृचंनवमंसूक्तं भौमस्यात्रेरार्षं षोडशीसप्तदश्यावतिजगत्यौ विंश्यैकपदा-विराट् शिष्टाःसप्तदशत्रिष्टुभः विश्वेदेवादेवताः तथाचानुक्रान्तं—कोनुविंशतिर्वैश्वदेवंवैतत्षोड-श्याद्यतिजगत्यावन्त्यैकपादेति । विनियोगोलैंगिकः ।

तत्रप्रथमा—

कोनुवांमित्रावरुणावृतायन्दिवोवांमहःपार्थिवस्यवादे ।
ऋतस्यंवासदसित्रासीथांनोयज्ञायतेवापशुषोनवाजान् ॥ १ ॥

कः । नु । वाम् । मित्रावरुणौ । ऋतऽयन् । दिवः । वा । महः ।
पार्थिवस्य । वादे । ऋतस्य । वा । सदसि । त्रासीथाम् । नः ।
यज्ञाऽयते । वा । पशुऽसः । न । वाजान् ॥ १ ॥

हेमित्रावरुणौ देवौ वांयुवां कोनु कःखलुयजमानः ऋतायन् यज्ञमिच्छन् शक्नुया-दितिशेषः तस्मात्कृतंमयैवदिवःसदसिद्युलोकसंबन्धिनिस्थाने महोमहतःपार्थिवस्यसदसि ऋतस्योत्पादकस्यांतरिक्षस्यसदसि तद्धेतुत्वात्ताच्छब्द्यं त्रिषुस्थानेषुनोस्मान्त्रासीथां रक्षतं वाशब्दश्चार्थे किंच यज्ञायते यज्ञमिच्छते हविर्दानेच मह्यं पशुषोनवाजान् पशुषुसीद-तोवाजानन्नानिक्षीरदध्यादीनीवतानियथाप्रयच्छथः तद्वदवतमिति यद्वा नशब्दश्चा-र्थे पशुषःपशून्वाजांश्चदत्तमित्यर्थः ॥ १ ॥

अथद्वितीया—

**तेनोमित्रोवरुणोअर्यमायुरिन्द्रऋभुक्षामरुतोजुषन्त।**
**नमोभिर्वायेदधतेसुवृक्तिंस्तोमंरुद्रायमीळ्हुषेसजोषाः ॥ २ ॥**

ते। नः। मित्रः। वरुणः। अर्यमा। आयुः। इन्द्रः। ऋभुक्षाः।
मरुतः। जुषन्त। नमःऽभिः। वा। ये। दधते। सुऽवृक्तिम्।
स्तोमम्। रुद्राय। मीळ्हुषे। सऽजोषाः ॥ २॥

तेमित्रादयोदेवाः नोस्माकं सुवृक्तिं स्तोमं शोभनपापादिवर्जनवत्स्तोत्रं नमोभिर्वा हविर्भिश्च जुषंत सेवन्तां येदधतेधारयन्ति उक्तलक्षणंस्तोत्रं देवाःद्विविधाः स्तोत्रभाजोहविर्भाजश्च अत्रस्तोत्रभाजउच्यन्ते आयुः सततगतिर्वायुरुच्यते अथमरुतएववियुज्यविशेष्यन्ते रुद्रायमीळ्हुषे तृतीयार्थेचतुर्थी रुद्रेणसहसजोषाःसजोषसःसहप्रीयमाणाः तेषांपुत्रत्वादितिभावः केचन रुद्रायसजोषाइत्येतन्मित्रादिसर्वदेवताविशेषणमितिकथयन्ति ॥ २ ॥

अथतृतीया—

**आवांयेष्ठाश्विनाहुवध्यैवातस्यपत्मन्रथ्यस्यपुष्टौ।**
**उतवादिवोअसुरायमन्मप्रान्धांसीवयज्यवेभरध्वम् ॥ ३ ॥**

आ। वाम्। येष्ठा। अश्विना। हुवध्यै। वातस्य। पत्मन्।
रथ्यस्य। पुष्टौ। उत। वा। दिवः। असुराय। मन्म। प्र।
अन्धांसिऽइव। यज्यवे। भरध्वम् ॥ ३ ॥

अनयाश्विनौ रुद्रश्चोच्यन्ते हेअश्विना अश्विनौ येष्ठा कामानांयंतृतमौ वां युवां वातस्यपत्मन् धर्मसाम्याद्धर्मिग्रहणं वायुसमानगतेरश्वस्यगमनेप्राप्तौ रथ्यस्य रथस्यपुष्टौच निमित्तेसति हुवध्यै हुवे आह्वयामि आह्वातुंप्रभवामि वा अथवा वायुवद्युवयोःशीघ्रगमनसाधनरथस्यपोषेचनिमित्तेसति उतवा किंचेत्यर्थः दिवोद्योतमानाय चतुर्थ्यर्थेषष्ठी असुरायमाणापहर्त्रेरुद्राय यद्वा द्युलोकसंबन्धिने असुरायप्राणदात्रे सूर्यायवायवेवा यज्यवे यागसाधकाय मन्ममननीयंस्तोत्रंप्रभरध्वं संपादयत हेऋत्विजः अन्धांसीव अन्नानिहविर्लक्षणानिहवींषिस्तोत्रंचेत्यर्थः ॥ ३ ॥

अथचतुर्थी—

प्रसक्षणोदिव्यःकण्वंहोतात्रितोदिवःसजोषावातोअग्निः ।
पूषाभगःप्रभृथेविश्वभोजाआजिनजग्मुराश्वश्वतमाः ॥ ४ ॥

प्र । सक्षणः । दिव्यः । कण्वऽहोता । त्रितः । दिवः । सऽजोषाः ।
वातः । अग्निः । पूषा । भगः । प्रऽभृथे । विश्वऽभोजाः । आजिम् ।
न । जग्मुः । आश्वश्वऽतमाः ॥ ४ ॥

अत्रलिंगोक्तादेवताःप्रजग्मुरितिसंबन्धः सक्षणोयज्ञंसेवमानः शत्रूणांसोढावादिव्योदिविभवः कण्वहोता कण्वाऋषयोमेधाविनोवाहोतारआह्वातारोयस्यसतथोक्तः त्रितः त्रिषुक्षित्यादिस्थानेषु तायमानोदिवःसूर्येणसहसजोषाःसमानगतिः समानप्रीतिर्वा वातः उक्तलक्षणकोवायुरग्निः पूषापोषकएतन्नामाभगश्चप्रभृथे प्रभरणवत्यस्मिन्यज्ञेउक्ताःसर्वेदेवाः विश्वभोजाविश्वरक्षकाः कृत्स्नात्तारोवा आश्वश्वतमाः प्रकृष्टगमनाश्ववतांश्रेष्ठाःसन्तः आजिंन संग्राममिव प्रजग्मुः प्रगच्छन्ति ॥ ४ ॥

अथपञ्चमी—

प्रवोरयिंयुक्ताश्वंभरध्वंरायएषेवसेदधीतधीः ।
सुशेवएवैरौशिजस्यहोतायेवएवामरुतस्तुराणाम् ॥ ५ ॥ १३ ॥

प्र । वः । रयिम् । युक्तऽअश्वम् । भरध्वम् । रायः । एषे । अवसे ।
दधीत । धीः । सुऽशेवः । एवैः । औशिजस्य । होता । ये ।
वः । एवाः । मरुतः । तुराणाम् ॥ ५ ॥ १३ ॥

हेमरुतोवोयूयं रयिं धनं युक्ताश्वं अश्वसहितं अश्वयोग्यंपुत्रंवाप्रभरध्वं संपादयत रायोधनानि गवाश्वादिलक्षणानि एषे प्राप्तुं अवसे अवइत्यन्ननाम अन्नाय प्राप्तानां धनानांरक्षणायवाधीः स्तोतादधीत धारयतिस्तुतिम् सचौशिजस्यकक्षीवतोहोताऽत्रिः एवैर्गन्तव्यैःकामैः गमनसाधनैरश्वैर्वा सुशेवः शेवमितिसुखनाम सुसुखोभवतु हेमरुतस्तुराणांत्वरमाणानांवोयुष्माकंयेएवाः कामाः अश्वावासंतितैरिति ॥ ५ ॥

॥ इतिचतुर्थस्यद्वितीयेत्रयोदशोवर्गः ॥ १३ ॥

प्रवोवायुमितिषष्ठीवायव्येपशौहविषोयाज्या प्रवोवायुंरथयुजंकृणुध्वमुतत्वामदितेमही सूत्रितंतत्पाठस्तु ।

अथषष्ठी—

प्रवोंवायुंरथयुजंकृणुध्वंप्रदेवंविप्रंपनितारमर्कैः ।
इषुध्यवंऋतसापःपुरंधीर्वस्वींर्नोअत्रपत्नीराधियेधुः ॥ ६ ॥

प्र । वः । वायुम् । रथऽयुजम् । कृणुध्वम् । प्र । देवम् । विप्रम् । पनितारम् । अर्कैः । इषुध्यवः । ऋतऽसापः । पुरम्ऽधीः । वस्वीः । नः । अत्र । पत्नीः । आ । धिये । धुरितिधुः ॥ ६ ॥

हेमदीयाऋत्विजोवोयूयंवायुंवायुदेवंरथयुजं यज्ञगमनाय रथसंबद्धंकृणुध्वं कुरुध्वं प्रदेवं द्योतमानं विप्रं विशेषेणकामानांपूरकं विप्रवत्पूज्यंवा पनितारं कर्मणिकर्तृप्रत्ययः स्तुत्यमित्यर्थः फलप्रदातारंवा अर्कैरर्चनीयसाधनैर्मंत्रैःप्रकृणुध्वं स्तुत किंच इषुध्यवः गंत्र्यः ऋतसापः यज्ञस्पृशः पुरंधीःपुरंध्यः स्त्रीरूपाः रूपवत्योवावस्वीः प्रशंस्यापत्नीर्देवपत्न्योत्रास्मिन्यज्ञेनोस्मदीयायधियेकर्मणेतन्निष्पत्तयेआधुः आगतवत्यः ॥ ६ ॥

अथसप्तमी—

उपवएषेवन्द्योभिःशूषैःप्रयह्वीदिवश्चितयद्भिरर्कैः ।
उषासानक्ताविदुषीवविश्वमाहावहतोमर्त्याययज्ञम् ॥ ७ ॥

उप । वः । एषे । वंद्येभिः । शूषैः । प्र । यह्वी इति । दिवः । चितयंत्ऽभिः । अर्कैः । उषसानक्ता । विदुषीइवेतिविदुषीऽइव । विश्वम् । आ । ह । वहतः । मर्त्याय । यज्ञम् ॥ ७ ॥

हेउषासानक्ता अहोरात्राभिमानिदेवते यह्वी महत्यौ वन्द्येभिर्वन्दनार्हैरितरैःदेवैःसहदिवोन्तरिक्षादविशेषेणसर्वप्रदेशात्वोयुष्मभ्यंउपप्रैषे उपप्रापयामिहविः ईषिःप्रापणकर्मास्यादुपप्राभिः समन्वितः शूषैःसुखकरैश्चितयद्भिःज्ञापयद्भिरर्कैर्मंत्रैःसहोपप्रापयामि हेउक्तेदेवते भवत्यौ विश्वं सर्वंकर्तव्यजातं विदुषीइव जानंत्याविव मर्त्याययजमानाययज्ञमावहतः अभिमुखंप्रापयतः हेति पूरणः यद्वा शूषैरित्यादीनितृतीयाबहुवचनान्तानिवन्द्येभिरित्यस्यविशेषणानीतिकेचिदाहुः॥७॥

अथाष्टमी—

अभिवोअर्चेपोष्यावतोनॄन्वास्तोष्पतिंत्वष्टांररराणः ।
धन्यांसजोषांधिषणानमोभिर्वनस्पतीँरोषंधीरायएषे ॥ ८ ॥

अभि । वः । अर्चे । पोष्याऽवतः । नॄन् । वास्तोः । पतिम् ।
त्वष्टारम् । रराणः । धन्या । सऽजोषाः । धिषणा । नमःऽभिः ।
वनस्पतीन् । ओषधीः । रायः । एषे ॥ ८ ॥

अहं पोष्यावतोबहुपोष्यजनयुक्तान्नॄन्कर्मनेतॄन् वोयुष्मानभ्यर्चे अभिपूजयामि स्तौमीत्यर्थः केपुनस्तेयूयं उच्यते—वास्तोष्पतिंत्वष्टारंरराणःस्तोत्रादिभिःक्रीडन् हविर्ददद्वाहंधन्याधनकरीसजोषाः इतरदेवैःसहगच्छन्तीप्रीणयन्तीवा धिषणा वाङ्नामैतत् वाग्देवता एताद्वितीयार्थेप्रथमा उक्तलक्षणांवाणींवनस्पतीनोषधीश्च नमोभिःसहार्चेइतिसंबन्धः किमर्थं रायएषे धनानिप्राप्तुम् ॥ ८ ॥

अथनवमी—

तुजेनस्तनेपर्वताःसन्तुस्वैतवोयेवसवोनवीराः ।
पनितआप्त्योयजतःसदानोवर्धान्नःशंसंनर्योअभिष्टौ ॥ ९ ॥

तुजे । नः । तने । पर्वताः । सन्तु । स्वऽएतवः । ये ।
वसवः । न । वीराः । पनितः । आप्त्यः । यजतः । सदा । नः ।
वर्धात् । नः । शंसम् । नर्यः । अभिष्टौ ॥ ९ ॥

पर्वताः पर्ववन्तः पुराणवन्तोमेघाः तनेविस्तृतेतुजेदाने यद्वा तनेतिपुत्रनाम षष्ठ्यर्थेचतुर्थी पुत्रस्यदानइत्यर्थः अथवा नस्तुजेपुत्रेतनेतत्पुत्रेच स्वैतवः शोभनमनाःसन्तु भवन्तु कीदृशास्ते येवसवः जगतोवासयितारः वीरान वीराइव किंच पनितः स्तुतः आप्त्यः आप्तव्यः सर्वैर्यजतोयजनीयआदित्यः सदासर्वदा नः शंसं अस्माकंस्तुतिं नर्योनरेभ्योहितोदेवःअभिष्टौ अभिगतएषणे अभिगमनेवासति वर्धात् वर्धयेत् ॥ ९ ॥

अथदशमी—

वृष्णोंअस्तोषिभूम्यस्यगर्भंत्रितोनपांतमपांसुवृक्ति ।
गृणीतेअग्निरेतरीनशूषैःशोचिष्केशोनिरिणातिवना ॥१०॥१४॥

वृष्णः । अस्तोषि । भूम्यस्य । गर्भम् । त्रितः । नपांतम् ।
अपाम् । सुऽवृक्ति । गृणीते । अग्निः । एतरि । न । शूषैः ।
शोचिःऽकेशः । नि । रिणाति । वना ॥ १० ॥ १४ ॥

भूम्यस्य भूमिरंतरिक्षं तदर्हस्यताद्दशस्य वृष्णोवर्षकस्यपर्जन्यस्य अथवाभूम्योभूमेरेवार्हः तदुचितवृष्टिप्रदानात् ताद्दशस्यमेवस्यगर्भंगर्भस्थानीयं अपांनपातं रक्षकं वैद्युतमग्निं सुवृक्ति स्तोत्रकर्मैतत् शोभनपापादिवर्जनवतास्तोत्रेण अस्तोषि स्तुतवानहं सत्रितस्तीर्णतमः त्रिषुस्थानेषुत्रित्वापन्नेषुतायमानोग्निः एतरिगन्तरिमयि शूषैः सुखकरैः रश्मिभिः नगृणीते नगरणंकुरुते नक्रुध्यतीत्यर्थः किंतु शोचिष्केशः प्रदीप्तरश्मिःसन् वना वनानि निरिणाति हिनस्ति दहतीत्यर्थः ॥ १० ॥

॥ इतिचतुर्थस्यद्वितीयेचतुर्दशोवर्गः ॥ १४ ॥

अथैकादशी—

कथामहेरुद्रियायब्रवामकद्रायेचिकितुषेभगाय ।
आपओषधीरुतनोवन्तुद्यौर्वनागिरयोवृक्षकेशाः ॥ ११ ॥

कथा । महे । रुद्रियाय । ब्रवाम । कत् । राये । चिकितुषे ।
भगाय । आपः । ओषधीः । उत । नः । अवन्तु । द्यौः । वना ।
गिरयः । वृक्षऽकेशाः ॥ ११ ॥

वयमत्रयः कथा केनप्रकारेण महे महते रुद्रियाय रुद्रपुत्राय मरुद्गणाय ब्रवाम स्तुतीः कत् किंच स्तोत्रं राये धनलाभाय चिकितुषे सर्वजानते भगायैतन्नामकायदेवायब्रवाम उतापिच आपः अब्देवताः ओषधीरोषधयोद्यौर्द्युदेवतावनावनानि गिरयोवृक्षकेशाः वृक्षाएवकेशस्थानीयायेषांते एता उक्तदेवतानोस्मानवन्तुरक्षन्तु ॥ ११ ॥

अथद्वादशी—

श्रृणोतुंनऊर्जांपतिर्गिरःसनभस्तरीयाँइषिरःपरिज्मा ।
श्रृण्वन्त्वापःपुरोनशुभ्राःपरिस्रुचोबबृहाणस्याद्रेः ॥ १२ ॥

श्रृणोतु । नः । ऊर्जाम् । पतिः । गिरः । सः । नभः । तरीयान् ।
इषिरः । परिऽज्मा । श्रृण्वन्तु । आपः । पुरः । न । शुभ्राः ।
परि । स्रुचः । बबृहाणस्य । अद्रेः ॥ १२ ॥

नोस्माकंगिरः स्तुतीः श्रृणोतु कः उर्जांबलानांपतिर्वायुः अथवाऊर्जामन्नानांपतिःप्राणोपाधिकस्यवायोःकृत्स्नान्नत्वंप्रसिद्धं श्रुतिश्चभवति—प्राणस्यान्नमिदंसर्वंप्रजापतिरकल्पयदिति । सः नभोनभसिचारी तरीयान् तरितव्यः इषिरोगमनशीलः परिज्मापरितोगन्ता किंच आपः श्रृण्वन्तु गिरः कीदृश्यस्ताः पुरोन पुराणीव शुभ्राःदीप्ताः बबृहाणस्यवर्धमानस्यअद्रेर्मेघस्य वापर्वतस्यवापरिपरितःस्रुचःसरणशीलाः ॥ १२ ॥

अथत्रयोदशी—

विदाचिन्नुमहान्तोयेवएवाब्रवामदस्मावार्यंदधानाः ।
वयश्चनसुभ्वंआवयन्तिक्षुभामर्तमनुयतंवधस्नैः ॥ १३ ॥

विद । चित् । नु । महान्तः । ये । वः । एवाः । ब्रवाम । दस्माः ।
वार्यम् । दधानाः । वयः । चन । सुऽभ्वः । आ । अव । यन्ति ।
क्षुभा । मर्तम् । अनुऽयतम् । वधस्नैः ॥ १३ ॥

हेमहान्तोमरुतोनु क्षिप्रं यूयं विद जानीथस्तोत्रं हेदस्माः दर्शनीयाः वोयुष्मान्येएवाः गन्तारोयुष्मान् भजमानाःवार्यंवरणीयंहविः दधानाः ददानाधारयन्तोवावयंब्रवामस्तुतिं यद्वा येवः यूयमित्यर्थः येयूयमेवाः अस्मद्यज्ञंअभिगन्तारः तेविद चिदितिपूरणः वयश्चन आगन्तारश्चैतेमरुतःसुभ्वःसुष्ठुभवन्तः प्रवृद्धाः आ अस्मदभिमुखमवयन्ति गच्छन्ति किंकुर्वन्तः क्षुभा क्षोभकेणसहितंमर्तंमरणधर्माणंवैरिणं अनुयतं अभिगतं वधस्नैरायुधैःपरिहरन्तोवयन्ति ॥१३॥

यति । किंकुर्वन् शुरुधः शुचा रुंधन्ति परानिति पृषोदरादिः दुःखकारिणोसुरानादेदिशानः पुनः पुनराह्वयन् हन्ति । तत्रदृष्टान्तः—शर्य्येव हननसाधनैरिषुभिः हन्ता वीरः प्रतिभटान् यथा हिनस्ति तद्वत् ॥ ५ ॥

॥ इति सप्तमस्य द्वितीये त्रयोविंशोवर्गः ॥ २३ ॥

अथ षष्ठी—

समातरानदद्दशानउस्रियोनानदेतिमरुतामिवस्वनः ।
जानन्नृतंप्रथमंयत्स्वर्णरंप्रशस्तयेकमवृणीतसुक्रतुः ॥ ६ ॥

सः । मातरा । न । ददृशानः । उस्रियः । नानदत् । एति ।
मरुताम्ऽइव । स्वनः । जानन् । ऋतम् । प्रथमम् । यत् ।
स्वःऽनरम् । प्रऽशस्तये । कम् । अवृणीत । सुऽक्रतुः ॥ ६ ॥

सपवमानःमातरा मातरौ द्यावापृथिव्यौ ददृशानः पुनः पुनः पश्यन् ततोनानदत् भृशंशब्दं कुर्वन् एति सर्वत्रगच्छति । तत्रदृष्टातः—उस्रियोन उस्रियेति गोनाम तस्य स्वरूपतोवत्सः यथा मातरं गां पश्यन् शब्दंकरोति तद्वत् । किंच मरुतामिव यथा मरुतांगणः स्वनः पचाद्यजन्तः स्वनंकुर्वन् सर्वतोगच्छति तद्वत् । यदुदकं स्वर्णरं स्वरितिसर्वपर्यायः सर्वमनुष्यहितंभवति सर्वे हि मनुष्या उदकेसंगच्छन्ते तत्कार्यत्वात् तादृशं प्रथमं मुख्यं ऋतमुदकं जानन् विद्वान् सुक्रतुः शोभनकर्मा सुप्रज्ञोवा सपवमानः प्रशस्तये प्रशंसनाय आत्मस्तोत्रकरणाय कं मनुष्यमवृणीत समभजत नान्यमस्मद्व्यतिरिक्तमित्यर्थः ॥ ६ ॥

अथ सप्तमी—

रुवतिभीमोवृषभस्तविष्ययाशृङ्गेशिशानोहरिणीविचक्षणः ।
आयोनिंसोमःसुकृतंनिषीदतिगव्ययीत्वग्भवतिनिर्णिगव्ययी ॥ ७ ॥

रुवति । भीमः । वृषभः । तविष्यया । शृङ्गे इति । शिशानः ।
हरिणी इति । विऽचक्षणः । आ । योनिम् । सोमः । सुऽकृतम् ।
नि । सीदति । गव्ययी । त्वक् । भवति । निःऽनिक् । अव्ययी ॥ ७ ॥

भीमः शत्रूणांभयंकरः वृषभः कामानांउदकानां वा वर्षणः विचक्षणः सर्वस्यविदर्शनशीलः सपवमानः तविष्यया तुइतिवृध्यर्थः अस्मादचइरितीप्रत्ययः तस्मादिच्छायामर्थेक्यच् सर्वप्रातिपदिकेभ्यइति सुगागमः आत्मनोबलेच्छया हरिणी हरितवर्णे द्वे शृंगे शिशानः तीक्ष्णीकुर्वन् प्रतिद्रोणकलशंप्रति द्वाभ्यांधाराभ्यां स्थाल्याग्रयणं गृह्णाति। तदुच्यते ते धारारूपशृंगे तीक्ष्णीकुर्वन् रुवति शब्दायते। रुशब्दे बहुलंछन्दसीतिशः। ततः ससोमः सुकृतं सुष्ठु कृतं योनिं स्वस्थानं द्रोणकलशमानिषीदति समन्तात्तिष्ठति। सोमस्य निर्णिक् निर्नेक्त्री परिशोधयित्री गव्ययी गोमयी त्वक्भवति। आनडुहे हि चर्मणि सोमाभिषवः। एवमव्ययी अविमयी त्वक्च निर्नेक्त्रीभवति तद्धि दशापवित्रापेक्ष्यमभिहितं॥ ७॥

अथाष्टमी—

शुचिःपुनानस्तन्वमरेपसमव्येहरिर्न्यधाविष्टसानवि।
जुष्टोमित्रायवरुणायवायवेत्रिधातुमधुक्रियतेसुकर्मभिः॥ ८॥

शुचिः। पुनानः। तन्वम्। अरेपसम्। अव्ये। हरिः। नि। अधाविष्ट। सानवि। जुष्टः। मित्राय। वरुणाय। वायवे। त्रिऽधातु। मधु। क्रियते। सुकर्मऽभिः॥ ८॥

अरेपसं पापरहितं। यद्वा रिपिगतौ गतिरहितं पात्रेस्थितं इत्यर्थः तादृशं तन्वंआत्मीयं शरीरं पुनानः शोधयन् अतएव शुचिः पूतः दीप्यमानोवा हरिः हरितवर्णःसोमः सानवि सानुनि समुच्छ्रितः अव्ये अविवालकृते दशापवित्रे न्यधाविष्ट ऋत्विग्भिर्निधीयते। धून्कंपने स्यसिच्सीयुट्तासिष्विति कर्मणिलुङि चिण्वदिटियण् णित्वाद्वृद्धिः। ततः मित्राय वरुणाय वायवे एतेभ्योजुष्टः पर्याप्तः त्रिधातु त्रिसंधानः। वसतीवरीभिः दध्ना पयसा संस्पृष्टः सोमः त्रिधातु तादृशं मधु मदकरः सोमः सुकर्मभिः शोभनकर्मयुक्तैर्ऋत्विक्भिः क्रियते मित्रादिदेवार्थं प्रदीयते॥ ८॥

अथ नवमी—

पवस्वसोमदेववीतयेवृषेन्द्रस्यहार्दिसोमधानमाविश।
पुरानोबाधाद्दुरितातिपारयक्षेत्रविद्धिदिशआहाविपृच्छते॥ ९॥

पर्वस्व । सोम । देवऽवीतये । वृषा । इन्द्रस्य । हार्दि ।
सोमऽधानम् । आ । विश । पुरा । नः । बाधात् । दुःऽइता । अति ।
पारय । क्षेत्रऽवित् । हि । दिशः । आह । विऽपृच्छते ॥ ९ ॥

हे सोम वृषा कामानामुदकानांवा सेचकस्त्वं देववीतये देवानांपानाय पवस्व कलशादिषु क्षर । अथ हे सोम त्वमिन्द्रस्य हार्दि हृदयंगमं प्रियं सोमधानं सोमोनिधीयतेस्मिन्निति सोमधानं पात्रं तदाविश प्राविश । किंच नोस्माकं बाधात् बाधनात् पीडनात् पुरा पूर्वमेव दुरिता दुरितानि दुर्गमनानि रक्षांसि अतिपारय अतीत्य पारंगमय । अपिच क्षेत्रवित् मार्गज्ञः पुरुषः विपृच्छते विविधं पंथानं पृच्छते जनाय दिशोमार्गानाह हि ब्रूते खलु । उक्रान्तं यथा रक्षति तथा यज्ञमार्गवेत्ता त्वं अस्मभ्यं यज्ञपथं उक्त्वास्मान् पालयेति ॥ ९ ॥

अथ दशमी—

हितोनसप्तिरभिवाजमर्षेन्द्रस्येन्दोजठरमापवस्व ।
नावानसिन्धुमतिपर्षिविद्वाञ्छूरोनयुध्यन्नवनोनिदस्पः ॥१०॥२४॥

हितः । न । सप्तिः । अभि । वाजम् । अर्ष । इन्द्रस्य । इन्दो इति ।
जठरम् । आ । पवस्व । नावा । न । सिन्धुम् । अति । पर्षि ।
विद्वान् । शूरः । न । युध्यन् । अव । नः । निदः । स्परिति स्पः॥ १०॥ २४॥

हेसोम ऋत्विग्भिः प्रेर्यमाणःसन् वाजं सोमनिधानं द्रोणकलशमभ्यर्ष अभिगच्छ । तत्रदृष्टान्तः—हितोन सप्तिः अश्वः हितः प्रेर्यमाणःसन् वाजं संग्राममभिलक्ष्य यथा याति तद्वत् । ततः हे इन्दो इन्द्रस्य जठरं जठरभूतं द्रोणकलशं वा आपवस्व आभिमुख्येन प्रविश । किंच विद्वान् सर्वंजानंस्त्वं अस्मानतिपर्षि दुरितानतीत्य पारय । तत्रदृष्टान्तः—नावान यथा नाविकाः सिंधुं नदीं नावा मनुष्यान् पारयन्ति तद्वत् । किंच हेसोम त्वं शूरोन शूरोवीरइव युध्यन् शत्रून् संप्रहरन् निदोनिन्दकाच्छत्रोः नोस्मानवस्पः अवपारय बाधां विनाश्य पालय । यद्वा नोस्माकं निदोनिन्दकान् शत्रून् अवस्पः अवाङ्मुखं जहि । स्पृहिंसायां बहुलंछन्दसीति श्नाप्रत्ययस्य लुक् तिपि गुणे हल्ङ्यादिना तिलोपः ॥ १० ॥

॥ इति सप्तमस्य द्वितीये चतुर्विंशोवर्गः ॥ २४ ॥

आदक्षिणेतिनवर्चं चतुर्थसूक्तं वैश्वामित्रस्य वृषभस्यार्षं पवमानसोमदेवताकं नवमीत्रिष्टुप् शिष्टाजगत्यः। तथाचानुक्रान्तं—आदक्षिणानव ऋषभस्तौ वैश्वामित्राविति। तावित्यनेन प्रकृतोरेणुः ऋषभश्चोभे परामृश्येते। श्रूयतेहि—अथहविश्वामित्रः पुत्रानामंत्रयामासमधुच्छन्दाः शृणोतनऋषभोरेणुरष्टकइति। गतःसूक्तविनियोगः।

तत्र प्रथमा—

आदक्षिणासृज्यतेशुष्म्या३सदंवेतिद्रुहोरक्षसःपातिजागृविः।
हरिरोपशंकृणुतेनभस्पयउपस्तिरेचम्वो३र्ब्रह्मनिर्णिजे॥ १॥

आ। दक्षिणा। सृज्यते। शुष्मी। आऽसदम्। वेति। द्रुहः। रक्षसः। पाति। जागृविः। हरिः। ओपशम्। कृणुते। नभः। पयः। उपऽस्तिरे। चम्वोः। ब्रह्म। निःऽनिजे॥ १॥

सोमस्य स्वभूतेयज्ञे ऋत्विग्भ्योदक्षिणा आसृज्यते अस्माभिः प्रदीयते शुष्मी बलवान् सोमः आसदमास्थानं द्रोणाख्यं वेति प्रविशति। किंच जागृविः जागरणशीलः सोमः द्रुहः द्रोहकारिणोरक्षसो राक्षसात्पाति स्तोतॄन् रक्षति। अपिच हरिर्हरितवर्णः सोमः ओपशं आसमन्तादुपशेतेइत्योपशः सर्वस्य धारकं नभो नभसआदित्यस्य स्वभूतं पयः उदकं कृणुते सर्वत्रकरोति। अग्नौप्रास्ताहुतिरित्यादिक्रमेण करोतीत्यर्थः। यद्वा नभोन्तरिक्षं पयः पयसोधारकं करोति। किंच अयंसोमश्चम्वोर्द्यावापृथिवीनामैतत् चमन्ति भक्षयन्ति मनुष्यदेवाअत्रेति तयोरुपस्तिरे उपस्तरणाय आच्छादनाय ब्रह्मबृहदुद्यत्तमांसि विनाशयन्तं। यद्वा परिवृढं सूर्यं द्युलोके करोति तथा तमेवसूर्यं निर्निजे पदार्थानां निर्नेजनाय परिशोधनायच करोति आदित्योहि द्यावापृथिव्यौ स्वतेजसोपस्तृणाति सहि स्वभासा सर्वंनिर्नेक्तिच॥ १॥

अथ द्वितीया—

प्रकृष्टिहेवशूषएतिरोरुवदसुर्यं१वर्णंनिरिणीतेअस्यतम्।
जहातिवव्रिंपितुरेतिनिष्कृतमुपप्रुतंकृणुतेनिर्णिजंतना॥ २॥

---

१ ऐ० ब्रा० ७. १७.

प्र । कुष्टिहाऽइव । शूषः । एति । रोरुवत् । असुर्यम् । वर्णम् ।
नि । रिणीते । अस्य । तम् । जहाति । वव्रिम् । पितुः । एति ।
निःऽकृतम् । उपऽप्रुतम् । कृणुते । निःऽनिजम् । तना ॥ २ ॥

शूषः शत्रूणांशोषकः बलवान् सोमः रोरुवत् अत्यन्तं शब्दंकुर्वन् कुष्टिहेव मनुष्याणांहन्ता योद्धेव प्रैति प्रगच्छति । किंच असुर्यं असुराणां बाधकं अस्यात्मनोवर्णं हरितं आवारकं बलंवा निरिणीत निर्गमयति । ततः ससोमः वव्रिं वृणोति शरीरमिति वव्रिर्जरा तां जहाति त्यजति । कथमिति चेत् तदुच्यते पितुरन्नं सोमः निष्कृतं संस्कृतं द्रोणकलशं दिवं वा इदानीमेति गच्छति । किंच सोमः तनाविवालेन तते विस्तृते दशापवित्रे निर्णिजं निर्णिगितिरूपनाम आत्मीयं रूपं उपप्रुतं उपगमनशीलं कृणुते करोति तस्माज्जरां त्यजतीत्यर्थः ॥ २ ॥

अथ तृतीया—

आद्रिभिःसुतःपवतेगभस्त्योर्वृषायतेनभसावेपतेमती ।
समोदतेनसतेसाधतेगिरानेनिक्तेअप्सुयजतेपरीमणि ॥ ३ ॥

अद्रिऽभिः । सुतः । पवते । गभस्त्योः । वृषऽयते । नभसा ।
वेपते । मती । सः । मोदते । नसते । साधते । गिरा । नेनिक्ते ।
अप्ऽसु । यजते । परीमणि ॥ ३ ॥

अद्रिभिर्ग्रावभिः गभस्त्योर्बाह्वोः बाहुभ्यांच सुतोभिषुतः ससोमः पवते पात्राणि प्रतिगच्छति । यःसोमः वृषायते वृषवदाचरति । किंच योमती मत्या स्तुत्याभिष्टुतःसन् नभसान्तरिक्षेण वेपते सर्वत्र गच्छति ससोमः मोदते हृष्टोभवति । तथा नसते ग्रहादिषु संश्लिष्टोभवति । किंच गिरा स्तुत्या स्तुतः सन् । साधते स्तोतॄणां धनादिकं साधयति । अपिच अप्सु वसतीवर्यांख्यासु नेनिक्ते शुद्धोभवति तथा परीमणि देवैरक्ष्यमाणे यज्ञे देवानां हविःप्रदानेन पोषके वा यज्ञे यजते पूजितोभवति ॥ ३ ॥

अथ चतुर्थी—

परिद्युक्षंसहसःपर्वतावृधंमध्वःसिञ्चन्तिहर्म्यस्यसक्षणिम् ।
आयस्मिन्गावःसुहुतादऊधनिमूर्धञ्छ्रीणन्त्यग्रियंवरीमभिः ॥ ४ ॥

परि । द्युक्षम् । सहसः । पर्वतऽवृधम् । मध्वः । सिंचन्ति ।
हर्म्यस्य । सक्षणिम् । आ । यस्मिन् । गावः । सुहुतऽअदः ।
ऊधनि । मूर्धन् । श्रीणन्ति । अग्रियम् । वरीमऽभिः ॥ ४ ॥

सहसः सहस्विनोमध्वोमदकराः सोमाः द्युक्षं दीप्यमाने द्युलोके क्षियन्तं निवसन्तं पर्वतावृधं मेघानां पर्वतानां वा वर्धयितारं हर्म्यस्य शत्रुपुरस्य सक्षणिमभिभवितारमिन्द्रं परिषिंचति । तथा सुहुतादः सुहुतानां हविषां भक्षयितारोगावो मूर्धन् मूर्धनि समुच्छ्रिते ऊधनि पयोधारकेस्थाने स्थितमग्रियं मुख्यं पयः वरीमभिरुरुत्वैः महत्वैर्यस्मिन्पवमानगुणविशिष्टइन्द्रे आश्रीणंति आमिश्रयन्ति दध्ना पयसाच सोमंश्रीणन्ति खलु तदुच्यते ॥ ४ ॥

अथ पंचमी–

समीरथंनभुरिजोरहेषतदशस्वसारोअदितेरुपस्थआ ।
जिगादुपंज्रयतिगोरपीच्यंपदंयदस्यमतुथाअजीजनन् ॥५॥२५॥

सम् । ईम् । इति । रथम् । न । भुरिजोः । अहेषत । दश । स्वसारः ।
अदितेः । उपऽस्थे । आ । जिगात् । उप । ज्रयति । गोः ।
अपीच्यम् । पदम् । यत् । अस्य । मतुथाः । अजीजनन् ॥ ५ ॥ २५ ॥

भुरिजोर्बाहुनामैतत् । बिभ्रति पदार्थानाभ्यामिति । तयोर्बाह्वोः दश दशसंख्याकाः स्वसारः सर्वत्र सरणशीलाः अंगुलयः अदितेर्भूमेरुपस्थे समीपे देवयजनदेशे ईमेनं सोममाभिमुख्येन समहेषत संप्रेरयन्ति । हिवर्धनगत्योः लुङिरूपं । कथमिव रथंन रथं यथांगुलयः प्रेरयंति तद्वत् ससोमः जिगात् पात्राणि गच्छति । किंच गोर्धेनोरपीच्यमन्तर्हितं पय उपज्रयति तदानीं उपगच्छति यद्यदा मतुथा मननीयगाथावन्तः स्तोतारः अस्य सोमस्य पदं स्थानं अजीजनन् जनयन्ति तदानीमित्यर्थः ॥ ५ ॥

॥ इति सप्तमस्य द्वितीये पंचविंशोवर्गः ॥ २५ ॥

अभिष्टवे श्येनोनयोनिमित्येषा । सूत्रितंच–संप्रेषितःश्येनोनयोनिंसदनंधियाकृतमिति । अग्नीषोमप्रणयनेप्येषा । सूत्रितंच–अन्तश्चप्रागाअदितिर्भवासि श्येनोनयोनिंसदनंधियाकृतमिति

सैषा षष्ठी—

श्येनोनयोनिंसदनंधियाकृतंहिरण्ययमासदंदेवएषति ।
एरिणन्तिबर्हिषिप्रियंगिराश्वोनदेवाँअप्येतियज्ञियः ॥ ६ ॥

श्येनः । न । योनिम् । सदनम् । धिया । कृतम् । हिरण्ययम् ।
आऽसदम् । देवः । आ । ईषति । आ । ईम् । इति । रिणन्ति ।
बर्हिषि । प्रियम् । गिरा । अश्वः । न । देवान् । अपि ।
एति । यज्ञियः ॥ ६ ॥

देवोद्योतमानः पवमानः धिया स्वकर्मणा कृतं संपादितं हिरण्ययं हिरण्मयमासदमासं-
द्यभिधानं सदनं गृहमेषति अभिमुखं गच्छति । ईषतेर्गत्यर्थस्य व्यत्ययेन परस्मैपदं । तत्रदृष्टा-
न्तः—श्येनोन योनिं कुलायं यथा श्येनः पक्षी प्रविशति तद्वत्। तत ईमेनं प्रियं प्रीणयितारं सो-
मं गिरा स्तुत्या बर्हिषि यज्ञे आरिणन्ति स्तोतारोभिमुखं प्रेरयन्ति स्तुवन्तीत्यर्थः। अनन्तरं य-
ज्ञियो यज्ञार्हो यष्टव्योयं सोमः अश्वोन अश्वइव त्वरया देवानप्येति अभिगच्छति ॥ ६ ॥

अथ सप्तमी—

पराव्यक्तोअरुषोदिवःकविर्वृषात्रिपृष्ठोअनविष्टगाअभि ।
सहस्रणीतिर्यतिःपरायतीरेभोनपूर्वीरुषसोविराजति ॥ ७ ॥

परा । विऽअक्तः । अरुषः । दिवः । कविः । वृषा । त्रिऽपृष्ठः ।
अनविष्ट । गाः । अभि । सहस्रऽनीतिः । यतिः । पराऽयतिः ।
रेभः । न । पूर्वीः । उषसः । वि । राजति ॥ ७ ॥

अरुष आरोचमानः कविः क्रान्तप्रज्ञः सोमः व्यक्तः विस्पष्टधारायुक्तः यद्वा वसतीवरी-
भिर्विशेषेणसिक्तःसन् दिवोन्तरिक्षात् परा पराङ्मुखमागच्छति पवित्रात् द्रोणकलशं पराग-
च्छतीत्यर्थः। वृषा वृषभस्त्रिपृष्ठः त्रीणि सवनानि पृष्ठानि अस्येति त्रिपृष्ठः सोमस्य सर्वेषु
विद्यमानत्वात् तस्मात् त्रिपृष्ठः सोमः गाः स्तोतृभिः क्रियमाणाः स्तुतीरभिलक्ष्य अनविष्ट शब्दा-
यते । नुशब्दे । किंच सहस्रनीतिः सहस्रनयनः प्रयोगबाहुल्यापेक्षं ग्रहेषु चमसेषुच सहस्रवि-

धनयनत्वं अतएव यतिः पात्रादीनि प्रत्यागंता परायति कलशान् प्रति परागंता भवति सोयं पूर्वीर्बह्वीरुषसः कालाध्वनोरितिद्वितीया बहुषूषःकालेषु रेभोन रेभृशब्दे शब्दायमानः स्तोतेव विराजति विशेषेण दीप्यते । तेषु सोमस्याभिषूयमाणत्वात् स्तोता खलु देवानां स्तुतिकरणेन राजति ॥ ७ ॥

अथाष्टमी—

त्वेषंरूपंकृणुतेवर्णोअस्यसयत्राशयत्समृतासेधतिस्रिधः ।
अप्सायातिस्वधयादैव्यंजनंसंसुष्टुतीनसंतेसंगोअग्रया ॥ ८ ॥

त्वेषम् । रूपम् । कृणुते । वर्णः । अस्य । सः । यत्र । अशयत् ।
सम्ऽऋता । सेधति । स्रिधः । अप्साः । याति । स्वधया । दैव्यम् ।
जनम् । सम् । सुऽस्तुती । नसते । सम् । गोऽअग्रया ॥ ८ ॥

अस्यान्वादेशे शादेशः । अस्य सोमस्य स्वभूतोवर्णः शत्रूणांनिवारकोरश्मिः त्वेषं दीप्यमानं रूपं कृणुते करोति । सरश्मिः यत्र समृता अर्तेःक्तिनिरूपं सम्यक् प्राप्यते योद्धृभिरत्रेति संग्रामः अस्मिन् समृतौ युद्धे अशयत् शेते तिष्ठति । शीङोलङि बहुलंछन्दसीति शपोलुगभावः । तत्रयुद्धे सरश्मिः स्रिधः शोषकान् शत्रून् सेधति निषेधति हिनस्तीतियावत् । वाक्यभेदादनिघातः । किंच अप्साः सनोतेर्विटि आत्वे च कृते रूपं । अपामुदकानां दाता । यद्वा वसतीवर्याख्यानामपां संभक्ता सोयं स्वधया हवीरूपेणान्नेन सह दैव्यं देवानांसंबन्धिनं जनं प्रतियाति गच्छति । अपिच सोयं सुष्टुती स्तुत्या संगच्छते उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । किंच ससोमः गोअग्रया गवादिमुख्यया यया वाचा स्तोतारः पशून् याचन्ते तया वाचा संनसते संगतोभवति । नसतिर्गत्यर्थः भिन्नवाक्यत्वादनिघातः ॥ ८ ॥

अथ नवमी—

उक्षेवयूथापरियन्नरावीदधित्विषीरधितसूर्यस्य ।
दिव्यःसुपर्णोवचक्षतक्षांसोमःपरिक्रतुनापश्यतेजाः ॥ ९ ॥ २६ ॥

उक्षाऽइव । यूथा । परिऽयन् । अरावीत् । अधि । त्विषीः ।
अधित । सूर्यस्य । दिव्यः । सुऽपर्णः । अव । चक्षत । क्षाम् ।
सोमः । परि । क्रतुना । पश्यते । जाः ॥ ९ ॥ २६ ॥

उक्षेव वृषभइव यूथा गोयूथानि प्रत्यागच्छन् शब्दंकरोति तद्वदयं सोमः स्तुतीः परियन् परिगच्छन्। अरावीत् शब्दायते ततः सूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य त्विषीर्दीप्तीरध्यधित अधिदधाति सूर्यात्मनाद्युलोकेवतिष्ठतइत्यर्थः। दधातेर्लुङि स्थाघ्वोरिच्चेतीत्वकित्वे। किंच दिव्यः दिविभवः सुपर्णः सुपतनः श्येनरूपया गायत्र्या हृतत्वात् शोभनगमनः सोमः क्षां पृथिवीनामैतत् क्षियन्ति निवसन्त्यत्रेति क्षां पृथिवीमवचक्षत अवपश्यति चष्टेर्लुङि बहुलंछन्दसीति शपोलुगभावः ततः सोमः जाः जाताः प्रजाः क्रतुना प्रज्ञानेन परिपश्यते परितः पश्यति व्यत्ययेनात्मनेपदं ॥ ९ ॥

॥ इति सप्तमस्य द्वितीये षड्विंशोवर्गः ॥ २६ ॥

हरिंमृजंतीतिनवर्चं पंचमं सूक्तं आंगिरसस्य हरिमन्तस्यार्षं पवमानसोमदेवताकं जागतमूर्ध्वंप्रागुशनसइति परिभाषया जागतं। तथाचानुक्रान्तं—हरिंहरिमन्तइति । गतोविनियोगः।

तत्र प्रथमा—

हरिंमृजन्त्यरुषोनयुज्यतेसंधेनुभिःकलशेसोमोअज्यते ।
उद्वाचंमीरयंतिहिन्वतेमतीपुरुष्टुतस्यकतिंचित्परिप्रियः ॥ १ ॥

हरिम् । मृजन्ति । अरुषः । न । युज्यते । सम् । धेनुऽभिः ।
कलशे । सोमः । अज्यते । उत् । वाचम् । ईरयंति । हिन्वते ।
मती । पुरुऽस्तुतस्य । कति । चित् । परिऽप्रियः ॥ १ ॥

हरिं हरितवर्णं सोमं ऋत्विजोमृजन्ति मार्जयन्ति। मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यतइति तत्रवृद्धेरभावः। सोयमरुषोन अर्तेरुषत् प्रत्ययः गमनशीलोश्वइव युज्यते इन्द्रादिभिः संयुज्यते। किंच कलशे कलशोद्रोणाभिधानः स्थितःसोमः धेनुभिः गोविकारैः दध्यादिभिः समज्यते समक्तः सिक्तोभवति। अपिच सोमोयदा वाचंशब्दमुदीरयति उद्गमयति शब्दं करोतीत्यर्थः तदा स्तोता रश्च मती सुपां सुलुगिति द्वितीयायाःपूर्वसवर्णदीर्घः स्तुतिं हिन्वते प्रेरयन्ति हिगतौ वृद्धौचेति स्वादिःआत्मनेपदी ततः स्तोत्राभिष्टुतः सपुरुष्टुतस्य बहुस्तोत्रयुक्तस्य स्तोतुःपरिप्रियः प्रीङ्तर्पणे क्विप् शसि इयङादेशःकृदुत्तरपदप्रकृतिस्वरत्वं परितः प्रीणयितॄणि कतिचित् कियन्ति धनानि प्रयच्छन्ति ॥ १ ॥

अथ द्वितीया—

**साकंवदन्तिबहवोमनीषिणइन्द्रस्यसोमंजठरेयदादुहुः ।**
**यदीमृजन्तिसुगभस्तयोनरःसनीळाभिर्दशभिःकाम्यंमधु ॥ २ ॥**

**साकम् । वदन्ति । बहवः । मनीषिणः । इन्द्रस्य । सोमम् ।**
**जठरे । यत् । आऽदुहुः । यदि । मृजन्ति । सुऽगभस्तयः ।**
**नरः । सऽनीळाभिः । दशऽभिः । काम्यम् । मधु ॥ २ ॥**

मनीषिणः मनसईशितारः प्राज्ञा बहवःस्तोतारः साकं सहैव युगपत् मंत्रान् वदन्ति तदा स्तुवन्ति यदा इन्द्रस्य जठरे द्रोणकलशे सोममादुहुः ऋत्विजोदुदुहुः तदाभिष्टुवन्तीति । दुहेर्लिटि उसि रूपं । द्विर्वचनस्यछन्दसि विकल्पितत्वादत्रद्विर्वचनाभावः । किंच यदि यदा सुगभस्तयः शोभनबाहुकानरः कर्मनेतारोमनुष्याः काम्यं काम्यमानं मधु मदकरं सोमं सनीळाभिर्दशभिः दशसंख्याकाभिरंगुलीभिर्मृजन्ति सोममभिषुण्वन्ति तदा वदन्तीत्यन्वयः ॥ २ ॥

अथ तृतीया—

**अरममाणोअत्येतिगाअभिसूर्यस्यप्रियंदुहितुस्तिरोरवम् ।**
**अन्वस्मैजोषमभरद्विनंगृसःसंद्वयीभिःस्वसृभिःक्षेतिजामिभिः ॥ ३ ॥**

**अरममाणः । अति । एति । गाः । अभि । सूर्यस्य । प्रियम् ।**
**दुहितुः । तिरः । रवम् । अनु । अस्मै । जोषम् । अभरत् । विनम्ऽगृसः ।**
**सम् । द्वयीभिः । स्वसृऽभिः । क्षेति । जामिऽभिः ॥ ३ ॥**

ससोमः अरममाणः अनुपरतःसन् पुनःपुनः देवानांप्रीणनाय ग्रहादीनि प्रविशन्नित्यर्थः । गा गोविकारानाश्रयणानभिलक्ष्य अत्येति अतिक्रम्य गच्छति । ततः शब्दायमानःसोमः सूर्यस्यादित्यस्य दुहितुरुषसः प्रियं रवं शब्दं तिरः तिरस्करोति । तस्मिन्काले सोमाभिषवध्वनिर्महान् भवतीत्यर्थः । विनंगृसः विनं कमनीयं स्तोत्रं गृह्णातीतिविनंगृसः स्तोता जोषं जुषेर्घन्निरूपं । पर्याप्तं स्तोत्रं तस्मै सोमाय अन्वभरत् अनुभरति । करोतीतियावत् । सोयंसोमः द्वयीभिः द्वाभ्यांपाणिभ्यामुत्पन्नाभिः जामिभिः परस्परंबन्धुभिः स्वसृभिः कर्मकरणार्थमितस्ततोगच्छन्तीभिरंगुलिभिः संक्षेति संगच्छते क्षिनिवासगत्योः छान्दसोविकरणस्य लुक् ॥ ३ ॥

अथ चतुर्थी—

नृधू॑तो॒अद्रि॑षुतो॒ब॒र्हिषि॑प्रि॒यःपति॒र्गवां॒प्रदि॒वइन्दु॑र्ऋ॒त्वियः॑ ।
पुरं॑धि॒वा॒न्मनु॑षोयज्ञ॒साध॑न॒ःशुचि॑र्धि॒याप॑वते॒सोम॑इन्द्रते ॥ ४ ॥

नृऽधू॑तः । अद्रि॑ऽसुतः । ब॒र्हिषि॑ । प्रि॒यः । पति॑ः । गवा॑म् ।
प्रऽदि॑वः । इन्दु॑ः । ऋ॒त्वियः॑ । पुर॑न्धिऽवान् । मनु॑षः । य॒ज्ञऽसाध॑नः ।
शुचि॑ः । धि॒या । प॒व॒ते । सोम॑ः । इ॒न्द्र॒ । ते॒ ॥ ४ ॥

हे इन्द्र पवमानगुणविशिष्टेन्द्र ते त्वदर्थं बर्हिषि यज्ञे अयं सोमः धिया स्वेनकर्मणा धारया वा पवते पात्रेषु स्यन्दते । कीदृशः नृधूतः कर्मनेतृभिर्मनुष्यैः शोधितः अद्रिषुतः तथा ग्रावभिरभिषुतः प्रियः देवानां प्रीणयिता गवांपतिः स्वामी इन्द्रोगा अलभत । तस्माद्गवांस्वामी । प्रदिवः पुराणनामैतत् पुराणः इन्दुः पात्रेषु क्षरन् ऋत्वियः ऋतौजातः ऋतोरण् छन्दसिघसितिघसः सित्वेन पदसंज्ञायां भसंज्ञानिमित्तओर्गुणोनभवति । पुरंधिवान् पुरंधिर्बहुधीरितियास्कः । बहुकर्मवान् मनुषोमनुष्यस्य यज्ञसाधनः शुचिर्दीप्यमानः यद्वा दशापवित्रेण शुद्धः एवंगुणः सोमः इन्द्रार्थं पवते इतिसंबन्धः ॥ ४ ॥

अथ पंचमी—

नृबा॒हुभ्यां॒चोदि॒तोधार॑यासु॒तो॑नुष्व॒धंप॑वते॒सोम॑इन्द्रते ।
आप्रा॒ःक्रतू॒न्त्सम॑जैरध्व॒रेम॒तीर्वेर्नद्रु॒षच्च॒म्वो॒३॑रास॑द॒द्धरि॑ः ॥५॥२७॥

नृबा॒हुऽभ्या॑म् । चो॒दि॒तः । धार॑या । सु॒तः । अ॒नु॒ऽस्व॒धम् । प॒व॒ते ।
सोम॑ः । इ॒न्द्र॒ । ते॒ । आ । अ॒प्राः॒ । क्रतू॑न् । सम् । अ॒जैः॒ । अ॒ध्व॒रे ।
म॒तीः । वेः । न । द्रु॒ऽसत् । च॒म्वोः॑ । आ । अ॒स॒द॒त् । हरि॑ः ॥५॥२७॥

हे इन्द्र पवमानगुणविशिष्ट नृबाहुभ्यां कर्मनेतृणामृत्विजां बाहुभ्यां चोदितः प्रेरितः धारया सुतोभिषुतः यथा धाराभवति तथाभिषुतइत्यर्थः । तादृशः सोमः ते तवानुष्वधं बलमनु बलार्थं यद्वा स्वधेत्यन्ननाम अन्नार्थं पवते आगच्छति । ततः सत्वं सोमपानेन क्रतून् कर्माणि

---

१ नि० ६. १३.

आमाः आपूरयसि । किंच अध्वरे यज्ञे मतीः अभिमानान् शत्रून् समजै सम्यकूजितवानसि । जिजये । लुङि सिपि सिचोबहुलं छन्दसीतीडभावः । सिचिवृद्धिरिति वृद्धिः । सोयं हरिर्हरितवर्णः सोमः चम्वोरधिषवणफलकयोः आसदद्दासीदति । तत्रदृष्टान्तः—वेर्न वीगत्यादिषु अन्येभ्योपि दृश्यतइति विच् सार्वधातुकार्धधातुकयोरितिगुणः । यथा वेः पक्षी द्रुषत् द्रुमेसीदतीति तद्वत् द्रुषदिति पूर्वपदादितिषत्वम् ॥ ५ ॥

॥ इति सप्तमस्य द्वितीये सप्तविंशोवर्गः ॥ २७ ॥

अथ षष्ठी—

अंशुंदुहन्तिस्तनयन्तमक्षितंकविंकवयोपसोमनीषिणः ।
समीगावोमतयोयन्तिसंयतऋतस्ययोनासदनेपुनर्भुवः ॥ ६ ॥

अंशुम् । दुहन्ति । स्तनयन्तम् । अक्षितम् । कविम् । कवयः ।
अपसः । मनीषिणः । सम् । ईमिति । गावः । मतयः । यन्ति ।
सम्ऽयतः । ऋतस्य । योना । सदने । पुनःऽभुवः ॥ ६ ॥

कवयः क्रान्तप्रज्ञाः अपसः कर्मवन्तः मनीषिणः मनसईशा मनीषा बुद्धिः तद्वन्तः ऋत्विजः स्तनयन्तं शब्दायमानं अक्षितमक्षीणं कविं क्रान्तदर्शिनं अंशुं सोमं दुहन्ति अभिषुण्वन्ति । ततः पुनर्भुवः पुनर्भवनशीलाः गावः पशवः मतयोमननीयाः स्तुतयश्च संयतः परस्परं संगताः सत्यः ऋतस्य सत्यभूतस्य यज्ञस्य योना योनौ योनिस्थानीये उत्पत्तिभूते सदने उत्तरवेद्याख्ये ईमेनं सोमं संयन्ति संगच्छन्ति ॥ ६ ॥

अथ सप्तमी—

नाभापृथिव्याधरुणोमहोदिवोऽपामूर्मौसिन्धुष्वन्तरुक्षितः ।
इन्द्रस्यवज्रोवृषभोविभूवसुःसोमोहृदेपवतेचारुमत्सरः ॥ ७ ॥

नाभा । पृथिव्याः । धरुणः । महः । दिवः । अपाम् । ऊर्मौ ।
सिन्धुषु । अन्तः । उक्षितः । इन्द्रस्य । वज्रः । वृषभः ।
विभुऽवसुः । सोमः । हृदे । पवते । चारु । मत्सरः ॥ ७ ॥

महोमहतो दिवोद्युलोकस्य धरुणोधारकोयं सोमः पृथिव्याः विस्तीर्णायाभूमेः नाभाना-भौ नाभिस्थानीये उच्छ्रितेप्रदेशे—यदुत्तरवेदीनाभिरित्याम्नानात्। उत्तरवेदिस्थाने ऋत्विग्भिःनि-हितः सिंधुषु स्यन्दमानासु नदीषु अपामुदकानां उर्मौ संघे अन्तर्मध्ये उक्षितः सिक्तः अन्त-रिक्षस्थानमध्येवर्तमानइत्यर्थः। तादृशइन्द्रस्य वज्रोवज्रस्थानीयोवृषभः कामानांवर्षिता अत-एव विभूवसुः व्याप्तधनः सोमः चारु कल्याणं यथाभवति तथा इन्द्रस्य मत्सरः मादयिता स-न् हृदे मनसे सुखाय पवते आगच्छति ॥ ७ ॥

अथाष्टमी—

सनूपंवस्वपरिपार्थिवंरजःस्तोत्रेशिक्षन्नाधून्वतेचसुक्रतो।
मानोनिर्भाग्वसुनःसादनस्पृशोरयिंपिशङ्गंबहुलंवसीमहि ॥ ८ ॥

सः। नु। पवस्व। परि। पार्थिवम्। रजः। स्तोत्रे। शिक्षन्।
आऽधून्वते। च। सुक्रतो इति सुऽक्रतो। मा। नः। निः।
भाक्। वसुनः। सदनऽस्पृशः। रयिम्। पिशङ्गम्।
बहुलम्। वसीमहि ॥ ८ ॥

हे सुक्रतो शोभनकर्मन् सुप्रज्ञवा सोम तादृशस्त्वं पार्थिवं रजः लोकं लक्षीकृत्य नु क्षिप्रं परिपवस्व परितः सर्वतः क्षर। किंकुर्वन् आधून्वते अदाभ्यग्रहात्रिभिरंशुभिराधावनंकुर्वते। तथा भगवतापस्तंबेन सूत्रितं—तैरेनंचतुराधुनोति पंचकृत्वः सप्तकृत्वोवेति। तस्मै स्तोत्रे धनादि-कंशिक्षन् प्रयच्छन् परिपवस्वेति समन्वयः। ततस्त्वंनोस्मान् वसुनोधनान् मानिर्भाक् मानि-र्भाक्षीः। कीदृशान् सदनस्पृशः येनभूतेन वसुना सदना सदनानि गृहान् पुत्रादीन् स्पृशन्ति तादृशान् ग्रहादिकस्य प्रदातुः धनान्मावियुजः। भाक् भजसेवायां लुङि सिपि सिचि बहुलंछ-न्दसीतीडागमाभावः। एकाचइतीट्प्रतिषेधः हलन्तलक्षणावृद्धिः सिपोलोपः। यस्मादेवं तस्मा-द्वयं पिशंगं नानारूपं कनकादिना अतएव बहुलं प्रभूतं रयिं धनं वसीमहि आच्छादयेम बहु-धनवन्तोभवेमेत्यर्थः वसआच्छादने आदादिकः लिङिरूपं ॥ ८ ॥

अथ नवमी—

आनूनंइन्दोशतदातवश्व्यंसहस्रदातुपशुमद्धिरण्यवत्।
उपमास्वबृहतीरेवतीरिषोधिस्तोत्रस्यपवमाननोगहि ॥ ९॥२९॥

---

१ ऐ० ब्रा० १.२८.।

आ । तु । नः । इन्दो इति । शतऽदातु । अश्व्यम् । सहस्रऽदातु ।
पशुऽमत् । हिरण्यऽवत् । उप । मास्व । बृहतीः । रेवतीः । इषः ।
अधि । स्तोत्रस्य । पवमान । नः । गहि ॥ ९ ॥ २८ ॥

हे इन्दो पवमान नोस्मभ्यं तु क्षिप्रं धनमायच्छ । कीदृशं शतदातु दातुदानं बहुदानं अश्व्यं अश्वसहितं सहस्रदातु सहस्रदानोपेतं पशुमत् पश्वादियुक्तं हिरण्यवत् हिरण्ययुक्तं च धनं देहि । तथा हे सोम बृहतीः प्रभूतानि रेवतीर्धनवन्ति यद्वा पयसोदातारः पशवः तद्वन्ति इषोन्नानिचास्मभ्यमुपमास्व उपमिमीष्व कुर्वितियावत् । किंच हे पवमान नोस्माकं एवंभूतस्य स्तोत्रस्य श्रवणाय अधिगहि आगच्छ । क्रियार्थोपपदस्येति चतुर्थी चतुर्थ्यर्थे बहुलंछन्दसीति षष्ठी ॥ ९ ॥

॥ इति सप्तमस्य द्वितीयेष्टाविंशोवर्गः ॥२८॥

स्रक्कइति नवर्चं षष्ठंसूक्तं आंगिरसस्य पवित्रस्यार्षं जागतं पवमानसोमदेवताकं तथाचानुक्रम्यते—स्रक्केपवित्रइति । प्रवर्ग्येभिष्टवे एतत्सूक्तं । सूत्रितंच—स्रक्केद्रप्सस्यायंवेनश्चोदयत्पृश्निगर्भाइति ।

तत्र प्रथमा—

**स्रक्केद्रप्सस्यधमतःसमस्वरन्नृतस्ययोनासमरन्तनाभयः ।**
**त्रीन्त्समूर्ध्नोअसुरश्चक्रआरभेसत्यस्यनावःसुकृतमपीपरन् ॥ १ ॥**

स्रक्के । द्रप्सस्य । धमतः । सम् । अस्वरन् । ऋतस्य । योना ।
सम् । अरन्त । नाभयः । त्रीन् । सः । मूर्ध्नः । असुरः । चक्रे ।
आऽरभे । सत्यस्य । नावः । सुऽकृतम् । अपीपरन् ॥ १ ॥

स्रक्के यज्ञस्य हनुस्थानीये स्रक्के ओष्ठप्रान्तो हनुरुच्यते । अधिषवणफलके धमतोभिषूयमाणस्य द्रप्सस्य सोमस्यांशवःसमस्वरन् संगच्छन्ते । तदास्यशब्दयन्त्वा ऋतस्य सत्यभूतस्य यज्ञस्य योना योनौ उत्पत्तिस्थाने नाभयः सोमरसाः समरन्त संगच्छन्ते । अर्तेःसमोगमीत्यादिनात्मनेपदं सर्तिशास्त्यर्तिभ्यश्चेतिच्लेरङ् । अथ असुरोबलवान् सर्वेषांप्रीणनात् प्राणदाता वा ससोमः मूर्ध्नः समुच्छ्रितान् त्रीन्लोकान् आरभे आरंभणाय मनुष्यदेवादीनां संचरणाय

चक्रे करोति । किंच सत्यस्य सत्यभूतस्य सोमस्य नावः नौकाइव स्थिताः चतस्रः स्थाल्यः आदित्याग्रयणोक्थ्यध्रुवस्थाल्यइति ताः स्थाल्यः सुकृतं सुष्ठु कर्माणि कुर्वन्तं यजमानमपीपरन् अभिमतदानेन पूजयन्ति वा । पारयतेर्लुङि चङि सन्वद्भावाभ्यासेत्वदीर्घाः ॥ १ ॥

अथ द्वितीया—

सम्यक्सम्यञ्चोमहिषाअहेषतसिन्धोरूर्मावधिवेनाअवीविपन् ।
मधोर्धाराभिर्जनयन्तोअर्कमित्प्रियामिन्द्रस्यतन्वमवीवृधन् ॥२॥

सम्यक् । सम्यञ्चः । महिषाः । अहेषत । सिन्धोः । ऊर्मौ । अधि ।
वेनाः । अवीविपन् । मधोः । धाराभिः । जनयन्तः । अर्कम् ।
इत् । प्रियाम् । इन्द्रस्य । तन्वम् । अवीवृधन् ॥ २ ॥

महिषाः पूज्याः महान्तोवा ऋत्विजः सम्यंचः परस्परंसंगताः सन्तः सम्यगहेषत सोमं सम्यक्प्रेरयन्ति अभिषुण्वन्तीतियावत् । हिगतौ वृद्धौच लुङि सिचि रूपं ततः वेनाः वेनतेःकान्तिकर्मणइतियास्कः । स्वर्गादिफलंकामयमानाऋत्विजः सिंधोः स्यन्दमानस्योदकस्य ऊर्मावधि संघे वसतीवर्यादिषु जलेषु सोममवीविपन् कंपयंति तत्र प्रेरयन्तीत्यर्थः । वपतेर्ण्यन्तस्य लुङि चङि णौचङ्युपधायाह्रस्वइतिह्रस्वः । किंच अर्कमर्चनीयंस्तोत्रं जनयन्तः कुर्वन्तः ते प्रियां प्रियतमां इन्द्रस्य तन्वं धाम च मधोर्मदकरस्य सोमस्य धाराभिः अवीवृधन् वर्धितवन्तः । वर्धतेर्लुङि चङि रूपं ॥ २ ॥

अथ तृतीया—

पवित्रवन्तःपरिवाचमासतेपितैषांप्रत्नोअभिरक्षतिव्रतम् ।
महःसमुद्रंवरुणस्तिरोदधेधीराइच्छेकुर्धरुणेष्वारभम् ॥ ३ ॥

पवित्रऽवन्तः । परि । वाचम् । आसते । पिता । एषाम् । प्रत्नः ।
अभि । रक्षति । व्रतम् । महः । समुद्रम् । वरुणः । तिरः । दधे ।
धीराः । इत् । शेकुः । धरुणेषु । आऽरभम् ॥ ३ ॥

१. नि० १०. ३८. ।

पवित्रवन्तः पवित्रेण शोधकेन सामर्थ्येनयुक्ताः सोमस्य रश्मयः वाचं सोमस्थितां माध्यमिकां वाचं पर्यासते पर्युपविशन्ति। सोमः अन्तरिक्षेतिष्ठतिखलु। सोमोवैराजागंधर्वेष्वासीदित्याम्नानात्। ततः प्रत्नः पुराणः एषां रश्मीनां पितायंसोमश्च व्रतं प्रकाशनात्मकं कर्माभिरक्षति अवितं करोति। किंच वरुणः सर्वस्य स्वतेजसाच्छादकः सोयं सोमः महोमहत् समुद्रमन्तरिक्षनामैतत् महदन्तरिक्षं तैरश्मिभिः तिरोदधे अन्तर्हितमकरोत् सर्वंव्यामोदितियावत्। तमिमं सोमं धीराः इत् इदवधारणे कर्मणि कुशलाः प्राज्ञाएव ऋत्विजः धरुणेषु सर्वस्य धारकेषु वसतीवर्याख्येषूदकेषु आरभं आरब्धुं शेकुः शक्नुवन्ति च रभेस्तुमर्थे शकिणमुल्कमुलौइति कमुल् लित्स्वरेण मध्योदात्तः॥ ३॥

अथ चतुर्थी—

स॒हस्र॑धारे॒ऽव॒ ते समस्व॑रन्दि॒वो नाके॒ मधु॑जिह्वा अस॒श्चतः॑।
अस्य॒ स्पशो॒ न नि मि॑षन्ति॒ भूर्ण॑यः प॒देप॑दे पा॒शिनः॑ सन्ति॒ सेत॑वः॥ ४॥

स॒हस्र॑ऽधारे। अव॑। ते। सम्। अ॒स्व॒र॒न्। दि॒वः। नाके॑।
मधु॑ऽजिह्वाः। अस॒श्चतः॑। अ॒स्य॑। स्पशः॑। न। नि। मि॒ष॒न्ति॒।
भूर्ण॑यः। प॒देऽप॑दे। पा॒शिनः॑। स॒न्ति॒। सेत॑वः॥ ४॥

सहस्रधारे बहूदकधारा यस्मात् द्रवन्ति तत्तथोक्तमन्तरिक्षं तस्मिन् वर्तमानास्ते सोमरश्मयः अव अवस्तात् स्थितां पृथिवीं समस्वरन् वृष्ट्यासंयोजयन्तीत्यर्थः। किंच दिवोद्युलोकस्य नाके समुच्छ्रितेदेशे वर्तमानाः मधुजिह्वाः मध्वग्राः सोमतेजसा अग्रेभ्योहि मधूत्पन्नंभवति। अतोमधुजिह्वाः असश्चतः संगतवर्जिताः पृथक्पृथक् दिवि अवस्थिताः। अस्यसोमस्य स्वभूताःस्पशः चारभूताः रश्मयः भूर्णयः क्षिप्रगामिनः सन्तोन निमिषन्ति निमेषं न कुर्वन्ति। किंतु पाशिनः सुकृतिनश्च ज्ञातुं सर्वदा जाग्रतीत्यर्थः। अथवा राजानोदुष्टान् विचारयितुं सर्वदा जागरणं कुर्वन्ति तद्वत्। एवं ते रश्मयः पदेपदे स्थानेस्थाने सेतवः संबद्धाःसन्तः पाशिनः पापकृतां बाधकाः सन्ति भवन्ति॥ ४॥

---

१ ऐ० ब्रा० १. २७.।

अथ पंचमी—

पितुर्मातुरध्यायेसमस्वरन्नृचाशोचन्तःसन्दहन्तोअव्रतान् ।
इन्द्रद्विष्टामपधमन्तिमाययात्वचमसिक्नींभूमनोदिवस्परि॥५॥२

पितुः । मातुः । अधि । आ । ये । सम्ऽअस्वरन् । ऋचा । शोचन्
सम्ऽदहन्तः । अव्रतान् । इन्द्रऽद्विष्टाम् । अप । धमन्ति । मायय
त्वचम् । असिक्नीम् । भूमनः । दिवः । परि ॥ ५ ॥ २९ ॥

पितुर्मातुः द्यावापृथिव्योः । द्यौर्मेपिताजनितानाभिरत्रबन्धुर्मेमातापृथिवीमहीयमित्यादि द्यावापृथिव्योः मातापितृत्वाम्नानात् । द्यावापृथिवीभ्यां ये सोमस्य रश्मयः अध्या समस्व अधिकं प्रादुर्भूताअभवन् । तेऋचा ऋत्विग्भिः क्रियमाणया स्तुत्या शोचन्तोदीप्यमानाः अ तान् कर्मरहितान् यजमानान् संदहन्तः सम्यक्विनाशयन्तः ते रश्मयः इन्द्रद्विष्टां इन्द्र द्वेषकारिणीं । केचेति पूर्वपदप्रकृतिस्वरः । इन्द्रेणद्विष्टां वा असिक्नीं । रात्रिनामैतत् । रात्रि कृष्णरूपां त्वचं राक्षसमित्यर्थः । मायया कर्मणा प्रज्ञया वा भूमनोविस्तृताः भूलोक दिवस्परि द्युलोकाच्च अपधमन्ति अपगतं कुर्वन्ति अपघ्नन्तीत्यर्थः ॥ ५ ॥

॥ इति सप्तमस्य द्वितीये एकोनत्रिंशोवर्गः ॥ २९ ॥

अथ षष्ठी—

प्रत्नान्मानादध्यायेसमस्वरञ्छ्लोकयन्त्रासोरभसस्यमन्तवः ।
अपानक्षासोबधिराअहासतऋतस्यपन्थांनतरन्तिदुष्कृतः ॥ ६

प्रत्नात् । मानात् । अधि । आ । ये । सम्ऽअस्वरन् ।
श्लोकऽयन्त्रासः । रभसस्य । मन्तवः । अप । अनक्षासः । बधिराः
अहासत । ऋतस्य । पन्थाम् । न । तरन्ति । दुःऽकृतः ॥ ६ ॥

श्लोकयंत्रासः श्लोकाः स्तुतयः स्तुतिनियमना रभसस्यमन्तवः वेगमतिमन्यमानाः ए ताहशायेसोमरश्मयः प्रत्नात् पुराणात् मानात् अन्तरिक्षादध्यासमस्वरन् सहप्रादुर्भूताअभवन्

1 ऋ० सं० २. ३. २०.

तान् रश्मीन् अनक्षासः चक्षुर्वर्जिताः साधुपदार्थानामद्रष्टारोनराः बधिराः देवतास्तुतिश्रवणवर्जिताः पापकृतोनरश्च अपहासत तान्परित्यजन्ति । दर्शिनः श्रवणवन्तोमेधाविनस्तु नपरिजहति किंतु स्तुवन्ति । तदेवाह—ऋतस्य सत्यस्य पंथां मार्गभूतमेषां गणं दुष्कृतः पापकृतोनरानतरन्ति नोत्तारयन्ति सुकृतिनस्तु तरन्तीत्यभिप्रायः ॥ ६ ॥

अथ सप्तमी—

सहस्रधारेवितंतेपवित्रआवाचंपुनन्तिकवयोमनीषिणः ।
रुद्रासएषामिषिरासोअद्रुहःस्पशःस्वञ्चःसुदृशोनृचक्षसः ॥ ७ ॥

सहस्रऽधारे । विऽतते । पवित्रे । आ । वाचम् । पुनन्ति ।
कवयः । मनीषिणः । रुद्रासः । एषाम् । इषिरासः । अद्रुहः ।
स्पशः । सुऽअञ्चः । सुऽदृशः । नृऽचक्षसः ॥ ७ ॥

कवयः क्रान्तकर्माणः अतएव मनीषिणः प्राज्ञाऋत्विजः सहस्रधारे अनेकधारोपेते वितते कर्मणि विस्तृते पवित्रे शुध्युत्पादकेसोमे वर्तमानां वाचं माध्यमिकां सोमःखलु विश्वावसुप्रभृतिगंधर्वाश्चान्तरिक्षेतिष्ठन्। सोमोवैराजागंधर्वेष्वासीदि[1]तिश्रवणात्।तत्रवर्तमानं सोमं देवागोपया वाचा क्रीतवन्तः तदासोमोवाकृतिष्ठतीति शक्यते वक्तुं । तस्मात् सोमेस्थितां माध्यमिकांवाचमापुनंति संस्कुर्वन्ति स्तुवन्तीतियावत्। यउक्तगुणां मरुतांमातरं माध्यमिकां वाचं स्तुवन्ति तेषां रुद्रासोरुद्रपुत्रा मध्यमवाचापुत्रामरुतः स्पशः वाचावशिनोभवन्ति । कीदृशा इषिरासः इषिरागमनशीलाः अद्रुहः स्तोतॄणामद्रोग्धारः । कर्मणिक्विबौणादिकः । परैरहिंस्याः स्वंचः शोभनाञ्चनाः अतएव सुदृशः सुदर्शनाः नृचक्षसोनृणांकर्मनेतॄणां द्रष्टारः ॥ ७ ॥

अथाष्टमी—

ऋतस्यगोपानदभायसुक्रतुस्त्रीषपवित्राहृद्य१न्तरादधे ।
विद्वान्त्सविश्वाभुवनाभिपश्यत्यवाजुष्टान्विध्यतिकर्तेअव्रतान् ॥८॥

ऋतस्य । गोपाः । न । दभाय । सुऽक्रतुः । त्री । सः । पवित्रा ।
हृदि । अन्तः । आ । दधे । विद्वान् । सः । विश्वा । भुवना । अभि ।
पश्यति । अव । अजुष्टान् । विध्यति । कर्ते । अव्रतान् ॥ ८ ॥

1 ऐ० ब्रा० १. २७.

ऋतस्य सत्यभूतस्य यज्ञस्य गोपा गोपायिता अतएव सुक्रतुः शोभनकर्मा सोमः भाय दंभाय स्तंभनाय नभवति परैर्दंभयितुं नशक्यतइत्यर्थः। किंच ससोमः त्री शेश्छन्दा हुलमितिलुक् त्रीणि पवित्रा अग्निवायुसूर्यात्मकानि त्रीणि पवित्राणि हृयन्तः हृदयस आदधे आदधाति स्वस्मिन् संगमयतीत्यर्थः। अपिच विद्वान् सर्वंजानानः ससोमः विश्वा सर्वाणि भुवनानि अभिपश्यति ततः कर्ते करोतेरौणादिकस्तप्रत्ययः कर्मण्यनुष्टानप्रिया तएवाव्रतानयजमानान् अवविध्यति अवाङ्मुखान् कृत्वा ताडयति हिनस्तीतियावत् ॥ ८

अथ नवमी—

**ऋतस्यतन्तुर्विततःपवित्रआजिह्वायाअग्रेवरुणस्यमायया ।**
**धीराश्चित्तत्समिनक्षन्तआशतात्राकर्तमवपदात्यप्रभुः ॥ ९ ॥**

**ऋतस्य । तन्तुः । विऽततः । पवित्रे । आ । जिह्वायाः । अग्रे ।**
**वरुणस्य । मायया । धीराः । चित् । तत् । सम्ऽइनक्षन्तः ।**
**आशत । अत्र । कर्तम् । अव । पदाति । अप्रऽभुः ॥ ९ ॥ ३०**

ऋतस्य सत्यभूतस्य यज्ञस्य तन्तुस्तनिता पवित्रे अविवालमये दशापवित्रे विततोविस्त यद्वा पवित्रे अन्तरिक्षे विस्तृतः सोमः वरुणस्य जिह्वायाअग्रे मायया कर्मणा आस्थित जिह्वाग्रे आपस्तिष्ठन्ति तासु सोमोवसतीति वसतीवर्याद्युदकेस्थितइत्यर्थः। ततः धीरा कर्मणिप्राज्ञाएव तत् वरुणजिह्वाग्रस्थानं समिनक्षन्तः इनक्षतिर्गतिकर्मा । संव्यामुवन्तः आशत । स्तुतिभिर्हविर्भिर्वा प्रामुवन् यः पुनः कर्तं कालाध्वनोरितिद्वितीया । कर्मणिअ समर्थोन भवति सोयमत्रास्मिन्नेवलोके अवपदाति अवस्तान्नरकेपतति नोपरिगच्छति। प लेटचडागमः तस्मात् । सर्वैः अग्निष्टोमादिकर्म कर्तव्यमित्येषोर्थोभिहितोभवति ॥ ९ ॥

॥ इति सप्तमस्य द्वितीये त्रिंशोवर्गः ॥ ३० ॥

शिशुर्नेतिनवर्चं सप्तमंसूक्तं दैर्घतमस्यस्य कक्षीवतआर्षं पवमानसोमदेवताकं अष्टमी शिष्टाजगत्यः । तथाचानुक्रम्यते—शिशुर्नकक्षीवांस्त्रिष्टुबष्टमीति । गतः सूक्तविनियोगः ।

तत्र प्रथमा—

**शिशुर्नजातोवचक्रदद्वनेस्वर्यद्वाज्यरुषःसिषासति ।**
**दिवोरेतसासचतेपयोवृधातमीमहेसुमतीशर्मसप्रथः ॥ १ ॥**

शिशुः । न । जातः । अर्व । चक्रदत् । वने । स्वः । यत् । वाजी ।
अरुषः । सिसासति । दिवः । रेतसा । सचते । पयःऽवृधा ।
तम् । ईमहे । सुऽमती । शर्म । सऽप्रथः ॥ १ ॥

सपवमानसोमोवने वननीये वसतीवर्याख्येउदके जातउत्पन्नः शिशुर्न शिशुरिव अवचक्रदत् अवाङ्मुखंक्रन्दति उदकमध्ये शब्दंकरोतिखलु। यद्यदा वाजी बलवानन्नवान्वा अरुषआरोचमानः यद्वा वाजी अश्वइव अरुषः अर्तेरुषच् । गमनशीलः सोमः स्वः स्वर्गलोकं सिषासति संभक्तुमिच्छति । सनोतेः सनीडभावे आत्वं सनोतेरिति सांहितिकं षत्वं । सोयं पयोवृधा गवामोषधीनां च क्षीरस्यवर्धकेन रेतसोदकेन सह दिवोद्युलोकात् सचतेपार्थिवलोकं समवेति । तं तादृशं प्रसिद्धं सोमं सप्रथः सर्वतः पृथुतरं धनादिना युक्तं शर्मगृहं तद्वयं सुमती। सुपांसुलुगिति तृतीयायाः पूर्वसवर्णदीर्घः। सुमत्या शोभनया स्तुत्या ईमहे याचामहे । ईमहइतियाच्ञाकर्मा। ईङ्गतौ दैवादिकश्छान्दसः श्यनोलुक् ॥ १ ॥

अथ द्वितीया–

**दिवोयःस्कम्भोधरुणःस्वांततआपूर्णोअंशुःपर्येतिविश्वतः ।**
**सेमेमहीरोदसीयक्षदावृतासमीचीनेदाधारसमिषःकविः ॥ २ ॥**

दिवः । यः । स्कम्भः । धरुणः । सुऽआततः । आऽपूर्णः । अंशुः ।
परिऽएति । विश्वतः । सः । इमे इति । मही इति । रोदसी इति ।
यक्षत् । आऽवृता । समीचीने इति सम्ऽईचीने । दाधार ।
सम् । इषः । कविः ॥ २ ॥

दिवोद्युलोकस्य स्कंभः विष्कंभयिता संरोद्धा धरुणः सर्वस्यधारकः यद्वा पृथिव्याधारकः । विष्टंभोदिवोधरुणःपृथिव्याइत्याम्नानात् । तादृशः स्वाततः सुष्ठुसर्वत्र विततो विस्तृतः अतएवापूर्णः पात्रेषु संपूर्णोयोंशुः सोमात्मकः विश्वतः सर्वतः पर्येति । तिङिचोदात्तवतीति गतेर्निघातः ससोम इमे मही महत्यौ रोदसी द्यावापृथिव्यौ आवृता आसंभजनीयेन कर्मणा यक्षत् यजतु स्वबलेन संयोजयत्वित्यर्थः ततः सोयं समीचीने परस्परं संगते द्यावापृथिव्यौ

---

१ ऋ० सं० ७. ३. २५. ।

दाधार धारयांचकार । तुजादीनामित्यभ्यासस्यदीर्घः । अनन्तरं कविः क्रान्तकर्मा इषोन्न
स्तोतृभ्यः संप्रयच्छतु । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥ २ ॥

अथ तृतीया–

महि॒प्सरः॒सुकृ॑तंसो॒म्यंम॑धू॒र्वीगव्यू॑ति॒रदि॑तेर्ऋ॒तंय॒ते ।
ईशे॒योवृ॒ष्टेरि॒तउ॒स्रियो॒वृषा॒पांने॒तायइ॒तऊ॑तिर्ऋ॒ग्मियः॑ ॥ ३ ॥

महि॑ । प्सरः॑ । सुऽकृ॑तम् । सो॒म्यम् । मधु॑ । उ॒र्वी । गव्यू॑तिः ।
अदि॑तेः । ऋ॒तम् । य॒ते । ईशे॑ । यः । वृ॒ष्टेः । इ॒तः । उ॒स्रियः॑ ।
वृषा॑ । अ॒पाम् । ने॒ता । यः । इ॒तःऽऊ॑तिः । ऋ॒ग्मियः॑ ॥ ३ ॥

ऋतं सत्यभूतं यज्ञं यते गच्छते तस्माइन्द्राय सुकृतं सुष्टुसंस्कृतं सोम्यं सोममयं महि म
प्रभूतं मधु मधुररसं प्सरः भक्षणं पानीयं भवति। प्साभक्षणे। किंच तस्माद्यज्ञं प्रत्यागच्छत
न्द्रादीनां अदितेरदीनायाः पृथिव्याः गव्यूतिर्मार्गश्च उर्वी विस्तीर्णोभवति इन्द्रः श
हस्रसंख्याकैर्हरिभिः सह गन्तुं मार्गेविस्तीर्णोभवदित्यर्थः । यइन्द्रः इतः इमं लोकं प्रत्या
न्त्या वृष्टेः ईशे ईश्वरोभवति । तथा उस्रियः उस्रियोगोनाम गोभ्योहितः अपामुदकानां
वर्षको यज्ञस्य नेता नायकः इतऊतीः इममस्मदीयं यज्ञं प्रति ऊतिर्गमनं यस्यसतथोक्तः
गच्छन् यइन्द्रः ऋग्मियः ऋगर्हःस्तोतव्योभवति । तस्माअयंसोमः पातव्योभवतीति ॥ ३

प्रवर्ग्येभिष्टवे आत्मन्वन्नभइत्येषा। सूत्रितंच–तदुप्रयक्षतममस्यकर्मात्मन्वन्नभोदुह्यते
पयइति ।

सैषा सूक्ते चतुर्थी–

आ॒त्मन्व॒न्नभो॑दुह्यते घृ॒तंपय॑ऋ॒तस्य॒नाभि॑र॒मृतं॒विजा॑यते ।
स॒मी॒ची॒नाःसु॒दान॑वःप्री॒णन्ति॒तन्नरो॑हि॒तमव॑मेहन्ति॒पेर॑वः ॥ ४

आ॒त्म॒न्ऽव॒त् । नभः॑ । दु॒ह्य॒ते॒ । घृ॒तम् । पयः॑ । ऋ॒तस्य॑ । नाभिः॑ ।
अ॒मृत॑म् । वि । जा॒य॒ते॒ । स॒म्ऽई॒ची॒नाः । सु॒ऽदान॑वः । प्री॒ण॒न्ति॒ ।
तम् । नरः॑ । हि॒तम् । अव॑ । मे॒ह॒न्ति॒ । पेर॑वः ॥ ४ ॥

आत्मन्वत् अनोनुडितिनुडागमः । आत्मन्वत् सारवत् घृतं पयश्च नभोनभस आदित्यरूपात् सोमोदुह्यते । किंच ऋतस्य यज्ञस्य नाभिः णह्बन्धने स्वमोर्नपुंसकादिति सोलुङ्न भवति सर्वविधीनां छन्दसि विकल्पितत्वात् । नाभिर्यज्ञस्यबन्धकं अमृतमुदकंच विजायते तस्मादेवप्रादुर्भवति । ततः सुदानवः शोभनस्तुतिहविर्दानवन्तोयजमानाः समीचीनाः परस्परंसंगताःसन्तः तमिमंसोमं प्रीणंति प्रीणयन्ति स्तुतिभिस्तर्पयंति । अथ नरोनेतारः पेरवः । पारक्षणे मापोरित्वेरुन्नितिरुन्प्रत्ययः सर्वस्यरक्षकाः सोमरश्मयः हितं निहितं अवावस्तात् वर्तमानं पार्थिकमुदकं मेहन्ति वर्षन्ति । मिहसेचने भौवादिकः । यद्वा हितमुदकं पृथिवीं प्रति मेहन्ति॥४॥

अथ पञ्चमी–

अरा॑वीदं॒शुः सच॑मानऊ॒र्मिणा॑देवा॒व्यं१ मनु॑षेपिन्वति॒त्वच॑म् ।
दधा॑ति॒गर्भ॒मदि॑तेरु॒पस्थ॒आयेन॑तो॒कंच॒तन॑यंच॒धाम॑हे ॥ ५॥ ३१॥

अरा॑वीत् । अं॒शुः । सच॑मानः । ऊ॒र्मिणा॑ । दे॒व॒ऽअ॒व्य॑म् । मनु॑षे । पि॒न्व॒ति॒ । त्वच॑म् । द॒धा॑ति । गर्भ॑म् । अदि॑तेः । उ॒प॒ऽस्थे॑ । आ । येन॑ । तो॒कम् । च॒ । तन॑यम् । च॒ । धाम॑हे ॥ ५ ॥ ३१ ॥

ऊर्मिणा वसतीवर्यादीनामुदकानां संघेन सचमानः ऋत्विग्भिः सेचमानः अंशुः सोमः अरावीत् शब्दं करोति । किंच ससोमः देवाव्यं अवरक्षणे अवितॄस्तृतंत्रिभ्यईरितिईप्रत्ययः । देवानां पालयित्रीं त्वचं आत्मनः शरीरं मनुषे मनुष्याय यजमानाय पिन्वति सिंचति पात्रेषु क्षरतीतियावत् । अपिच अदितेरदीनायाः पृथिव्याउपस्थे समीपे ओषधीषु तं गर्भमादधाति सुधामयैः किरणैर्विदधाति । येन गर्भेण वयं तोकं दुःखनाशकं पुत्रं च तनयं तनोतिकुलमिति तनयः पौत्रः तं च धामहे दध्महे धारयामः । दधार्तेर्लेटिबहुलंछन्दसीति शपोलुक् ॥ ५ ॥

॥ इति सप्तमस्य द्वितीये एकत्रिंशोवर्गः ॥ ३१ ॥

अथ षष्ठी–

स॒हस्र॑धारेऽव॒ताअ॑स॒श्चत॑स्तृ॒तीये॑सन्तु॒रज॑सिप्र॒जाव॑तीः ।
चत॑स्रो॒नाभो॒निहि॑ताअ॒वोदि॒वोह॒विर्भ॑रन्त्य॒मृतं॑घृत॒श्चुतः॑ ॥ ६ ॥

सहस्रऽधारे । अव । ताः । असश्चतः । तृतीये । सन्तु । रजसि ।
प्रजाऽवतीः । चतस्रः । नाभः । निऽहिताः । अवः । दिवः । हविः
भरन्ति । अमृतम् । घृतऽश्चुतः ॥ ६ ॥

सहस्रधारे बहूदकधारे तृतीये रजसि लोके स्वर्गे वर्तमाना असश्चतः परस्परमशक्ता
जावतीः उत्पादित प्रजावत्यः सोमस्यस्वभूतास्ताः अवसन्तु अवस्तात् पृथिव्यां पतन्तु ।
स्ताइत्याह चतस्रोनाभो नभसोबाधिकाः सोमस्य संबन्धिन्यश्चतस्रोदीप्तयः कलाः दिवो द्यु
कादवः अवस्तात् निहिताः सोमेन स्थापितास्ताः घृतश्चुतः घृतस्य उदकस्य च्यावयित्र्यः
त्यः हविः सोमादिलक्षणंभरन्ति देवानां प्रयच्छन्ति । तथा अमृतं गोष्वोषधीषुच पयोरूपं
धारूपंच भरन्ति प्रक्षिपन्ति ॥ ६ ॥

अथ सप्तमी—

श्वेतंरूपंकृणुतेयत्सिषासतिसोमोमीढ्वाँअसुरोवेदभूमनः ।
धियाशमीसचतेसेमभिप्रवद्दिवस्कवंन्धमवंदर्षदुद्रिणंम् ॥ ७ ॥

श्वेतम् । रूपम् । कृणुते । यत् । सिसासति । सोमः । मीढ्वान् ।
असुरः । वेद । भूमनः । धिया । शमी । सचते । सः । ईम् ।
अभि । प्रऽवत् । दिवः । कवन्धम् । अव । दर्षत् । उद्रिणम् ॥ ७

श्वेतं दीप्यमानं शुक्लं रूपं कृणुते तदाकरोति । यद्यदा सिषासति स्वर्गं संभक्तुमिच्छ
सोमेपात्राण्यागते सति तत्तेजसानुरंजितानां तेषां श्वेतं रूपं भवति । ततोमीढ्वान् मिहसेचने
स्मात् क्वसौ दाश्वान् साह्वान् मीढ्वांश्चेति निपातनादभिमतरूपसिद्धिः । कामानां सेक्ता अस
प्राज्ञः बलवान्वा सोमः भूमनः बहुधनानि वेद स्तोतृभ्योदातुं जानाति प्रयच्छतीतियावत् ।
ईं सोचिलोपेचेदितिसुलोपः सोयं धिया प्रज्ञानेन प्रवत् प्रकृष्टानि शमी द्वितीयायाः पूर्वसव
दीर्घः कर्माणि अभिसचते अभितः समवैति । किंच दिवोन्तरिक्षात् उद्रिणं उदकवन्तं क
न्धं मेघं कवंधशब्देन मेघोभिधीयते । तात्स्थ्यात्ताच्छब्द्यमिति । मेघं अवदर्षत् अवदारय
विवृतद्वारंकरोति । मेघं विदार्यान्तरिक्षाद्वृष्टिं करोतीत्यर्थः ॥ ७ ॥

अथाष्टमी—

अधश्वेतंकलशंगोभिरक्तंकार्ष्मन्नावाज्यक्रमीत्ससवान् ।
आहिन्विरेमनसादेवयन्तःकक्षीवतेशतहिमायगोनाम् ॥ ८ ॥

अध । श्वेतम् । कलशम् । गोभिः । अक्तम् । कार्ष्मन् । आ ।
वाजी । अक्रमीत् । ससऽवान् । आ । हिन्विरे । मनसा ।
देवऽयन्तः । कक्षीवते । शतऽहिमाय । गोनाम् ॥ ८ ॥

अध अथानन्तरं श्वेतं संप्रतिसोमसंसर्गात् श्वेतवर्णं गोभिरुदकैः अक्तं संपृक्तं द्रोणकलशं ससवान् संभजन् सोम आक्रमीत् आक्रमते कार्ष्मन् कार्ष्मशब्दः काष्ठावचनः आजिंधावन्तोयोद्धारोयांगन्तुमिच्छन्ति तस्यां काष्ठायां वाजी कश्चिदश्वो युद्धंभजमानः आक्रमीत् आक्रमते सोमः काष्ठायां द्रोणकलशेपततीत्यर्थः । ततस्तस्मैसोमाय देवयन्तः देवानिच्छन्तः ऋत्विजः मनसा आहिन्विरे स्तुतीराभिमुख्येनप्रेरयन्ति । तत्र शतहिमाय बहुगमनाय कक्षीवते स्तोत्रकारिणे एतन्नामकाय ऋषये सोमः गोनां गाः पशून् प्रेरयति गोःपादान्तइतिनुडागमः क्रियाग्रहणंकर्तव्यमिति संप्रदानसंज्ञा चतुर्थ्यर्थेषष्ठी ॥ ८ ॥

अथ नवमी—

अद्भिःसोमपपृचानस्यतेरसोऽव्योवारंविपवमानधावति ।
समृज्यमानःकविभिर्मदिन्तमःस्वदस्वेन्द्रायपवमानपीतये ॥ ९ ॥ ३२ ॥

अत्ऽभिः । सोम । पपृचानस्य । ते । रसः । अव्यः । वारम् ।
वि । पवमान । धावति । सः । मृज्यमानः । कविऽभिः ।
मदिन्ऽतम । स्वदस्व । इन्द्राय । पवमान । पीतये ॥ ९ ॥ ३२ ॥

हे पवमान पवित्रेण पूयमान हे सोम अद्भिर्वसतीवर्यादिभिरुदकैः पपृचानस्य संपृच्यमानस्य ते तव रसोऽव्ययः अवेर्वारं वालं दशापवित्रं विधावति विविधं प्राप्नोति । ततः हे मदिन्तम

मादयितृतम हे पवमानसोम त्वं कविभिः क्रान्तकर्मभिः ऋत्विग्भिर्मृज्यमानः पूयमा सन् इन्द्राय पीतये इन्द्रस्य पानार्थं स्वदस्व प्रियरसोभव ॥ ९ ॥

॥ इति सप्तमस्य द्वितीये द्वात्रिंशोवर्गः ॥ ३२ ॥

अभिप्रियाणीतिपंचर्चं अष्टमं सूक्तं भार्गवस्यकवेरार्षं जागतं पवमानसोमदेवताकं । त थानुक्रम्यते—अभिप्रियाणिपंचकविरिति । गतोविनियोगः ।

तत्र प्रथमा—

अ॒भि प्रि॒याणि॑ पवते॒ चनो॑हितो॒ नामा॑नि य॒ह्वो अधि॒ येषु॒ वर्ध॑ते ।
आ सूर्य॑स्य बृह॒तो बृ॒हन्नधि॒ रथं॒ विष्व॑ञ्चमरुहद्विचक्ष॒णः ॥ १ ॥

अ॒भि । प्रि॒याणि॑ । प॒व॒ते॒ । चनः॑ऽहितः । नामा॑नि । य॒ह्वः । अधि॑ ।
येषु॑ । वर्ध॑ते । आ । सूर्य॑स्य । बृ॒ह॒तः । बृ॒हन् । अधि॑ । रथ॑म् ।
विष्व॑ञ्चम् । अ॒रु॒ह॒त् । वि॒ऽच॒क्ष॒णः ॥ १ ॥

चनोहितः चनइत्यन्ननाम चायतेरसुनि चनइत्यौणादिकसूत्रेण निपातितः चनसेन्नाय हितः । यद्वा हितान्नः सोमः प्रियाणि जगतः प्रीणयितॄणि नामानि नमनशीलानि तान्युदकान्यभिपवते अभितःकरोति येष्वन्तरिक्षस्थितेषूदकेषु यह्वोमहानयंसोमोधिवर्धते अधिकंप्रवृद्धोभवति अपांमध्येसोमोवसति ततोबृहन् महान् सोमः बृहतोमहतः परिवृढस्यसूर्यस्य विष्वंचं विष्वग्गमनं अधि उपरिरथं विचक्षणः सर्वस्यविद्रष्टा सन् आरुहत् आरोहति अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठतेइति ॥ १ ॥

अथ द्वितीया—

ऋ॒तस्य॑ जि॒ह्वा प॑वते॒ मधु॑ प्रि॒यं व॒क्ता पति॑र्धि॒यो अ॒स्या अदा॑भ्यः ।
दधा॑ति पु॒त्रः पि॒त्रोर॑पी॒च्यं१॒॑ नाम॑ तृ॒तीय॒मधि॑ रोच॒ने दि॒वः ॥ २ ॥

ऋ॒तस्य॑ । जि॒ह्वा । प॒व॒ते॒ । मधु॑ । प्रि॒यम् । व॒क्ता । पतिः॑ ।
धि॒यः । अ॒स्याः । अदा॑भ्यः । दधा॑ति । पु॒त्रः । पि॒त्रोः । अ॒पी॒च्य॑म् ।
नाम॑ । तृ॒तीय॑म् । अधि॑ । रो॒च॒ने । दि॒वः ॥ २ ॥

ऋतस्य सत्यभूतस्य यज्ञस्य जिह्वा मुख्यत्वेन जिह्वास्थानीयः सोमः प्रियं प्रियकरं मधु मदकरं रसं पवते क्षरति। कीदृशः वक्ता शब्दकृत् यद्वा स्तोतृभिः क्रियमाणाः स्तुतयः साधीयस्यइति प्रतिश्रवणस्य कर्ता अस्याः धियः एतस्यकर्मणः पतिः पालयिता अदाभ्योरक्षोभिर्हिंसितुमशक्यः पुत्रोयजमानः पित्रोर्मातापित्रोरपीच्यं अन्तर्हितं यन्नाम तौ नजानीतः नामकरणवेलायां। तस्मात्तयोरपरिज्ञायमानं तत्तृतीयं नाम दिवोद्युलोकस्य रोचने दीप्यमाने सोमेभिषूयमाणेसति अधि दधाति अत्यन्तं धारयति। नक्षत्रव्यावहारिकनाम्नी प्रभाष्य सोमयाजीति तृतीयमस्यनामेति भगवताबौधायनेनोक्तं ॥ २ ॥

अथ तृतीया—

अवं॑द्युता॒नः क॒लशाँ॑ अचिक्रद॒न्नृभि॒र्येमा॒नः कोश॒ आ हि॒रण्य॑ये ।
अ॒भीमृ॒तस्य॑ दो॒हना॑ अनूषता॒धि त्रि॑पृ॒ष्ठ उ॒षसो॒ वि रा॑जति ॥ ३ ॥

अव॑ । द्यु॒ता॒नः । क॒लशा॑न् । अ॒चि॒क्र॒द॒त् । नृऽभिः॑ । ये॒मा॒नः ।
कोशे॑ । आ । हि॒रण्य॑ये । अ॒भि । ई॒म् । ऋ॒तस्य॑ । दो॒हनाः॑ ।
अ॒नू॒ष॒त॒ । अधि॑ । त्रि॒ऽपृ॒ष्ठः । उ॒षसः॑ । वि । रा॒ज॒ति॒ ॥ ३ ॥

द्युतानः द्युतदीप्तौ दीप्यमानः नृभिः कर्मनेतृभिर्ऋत्विग्भिः हिरण्ययये हिरण्मये कोशे अधिषवणचर्मणि तस्यहिरण्मयत्वं हिरण्यपाणिरभिषुणोतीति हिरण्यसंबन्धात् तादृशेकोशे येमानः छान्दसे कर्मणि लिटि कानचि रूपं नियम्यमानः सोमः ततः ऋतस्य सत्यभूतस्य यज्ञस्यदोहनादोग्धारःऋत्विजईमेनं सोममभ्यनूषत अभिष्टुवन्ति। ग्रावाणोवत्साऋत्विजोदुहन्तीति[1]। तैत्तिरीयब्राह्मणे एषांदोग्धृत्वमभिहितं सोमः कलशान् द्रोणाभिधानान् प्रतिअवाचिक्रदत् अवक्रन्दति शब्दायते। ततः त्रिपृष्ठः त्रीणिसवनान्येव पृष्ठानि यस्य सतथोक्तः त्रिषु सवनेषु सोमस्य विद्यमानत्वात् त्रिचक्रादित्वात् उत्तरपदान्तोदात्तत्वं। तादृशः सोमः उषसोधि यागाहनि विराजति अधिशीङ्स्थासामितिद्वितीया। तेषु अहःसु विशेषेणदीप्यते। यद्वा राजतिरन्तर्णीतण्यर्थः अहानि प्रकाशयति ॥ ३ ॥

1 तै० सं० ६. २. ११.

अथ चतुर्थी—

अद्रिभिःसुतोमतिभिश्चनोहितःप्ररोचयन्रोदसीमातराशुचिः ।
रोमाण्यव्यासमयाविधावतिमधोर्धारापिन्वमानादिवेदिवे ॥ ४ ॥

अद्रिऽभिः । सुतः । मतिऽभिः । चनःऽहितः । प्रऽरोचयन् ।
रोदसी इति । मातरा । शुचिः । रोमाणि । अव्या । समया ।
वि । धावति । मधोः । धारा । पिन्वमाना । दिवेऽदिवे ॥ ४ ॥

मतिभिः । मनज्ञाने मंत्रेवृषेषपचमनेतिक्तिन्नुदात्तः । स्तुतिभिरद्रिभिर्ग्रावभिश्च सुतोभिषुतोचनोहितः चनसेन्नायहितः हितान्नोवा मातरा जगतोनिर्मात्र्यौ रोदसी द्यावापृथिव्यौ प्ररोचयन् स्वतेजसा प्रकाशयन् अतएव शुचिर्दीप्यमानः एवंविधः सोमः अव्यानि अविभवानि रोमाणि तैःकृतानिपवित्राणि समया अभितः समीपे विधावति विशेषेण रक्षति किंच पिन्वमाना अद्भिः सिच्यमाना मधोर्मदकरस्य सोमस्य धारा दिवेदिवे अन्वहं दीर्घसत्रेषु पवित्राण्युभयतः पवते ॥ ४ ॥

अथ पंचमी—

परिसोमप्रधन्वास्वस्तयेनृभिःपुनानोअभिवासयाशिरम् ।
येतेमदाआहनसोविहायसस्तेभिरिन्द्रंचोदयदातवेमघम् ॥५॥३२॥

परि । सोम । प्र । धन्व । स्वस्तये । नृऽभिः । पुनानः । अभि ।
वासय । आऽशिरम् । ये । ते । मदाः । आऽहनसः । विऽहायसः ।
तेभिः । इन्द्रम् । चोदय । दातवे । मघम् ॥ ५ ॥ ३२ ॥

हे सोम स्वस्तये अविनाशाय परिप्रधन्व पात्राणि परितः प्रगच्छ धविर्गत्यर्थः । किंच नृभिः कर्मनेतृभिर्ऋत्विग्भिः पुनानः पूयमानस्त्वं आशिरमाश्रयणं क्षीरादिकमभिवासय आच्छादय संयोजयेतियावत् । आहनसः आहनवन्तोवचनवन्तइतियास्कः[1] । शत्रूणामाभिमुख्येन हन्तारः

---

1 नि० ४. १५.

अभिहन्यमाना अभिपूयमाणाः स्तुतिमन्तः शब्दवन्तोवा विहायसःमहन्नामैतत् महान्तस्तेत्वदीया येमदा मदहेतवोरसाः सन्ति तेभिस्तैः सोमैरस्माभिर्दीयमानैर्मघं मंहनीयं धनमस्मभ्यं दातवे दातुमिन्द्रं चोदय प्रेरय ॥ ५ ॥

॥ इति सप्तमस्य द्वितीये त्रयस्त्रिंशोवर्गः ॥ ३३॥

वेदार्थस्यप्रकाशेन तमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्ससंहिताभाष्ये सप्तमाष्टके द्वितीयोध्यायः ॥ २ ॥

## ॥श्रीगणेशायनमः॥



यस्यनिःश्वसितंवेदा योवेदेभ्योखिलंजगत् । निर्ममे तमहंवन्दे विद्यातीर्थमहेश्वरं ॥ १ ॥

व्याख्यायाव्यहतमज्ञः सप्तमस्यद्वितीयकं । अध्यायंसायणामात्यस्तृतीयं व्याकरोत्यथ ॥ २ ॥

तत्र धर्तेतिपंचर्चं नवमंसूक्तं भार्गवस्यकवेरार्षं जागतं पवमानसोमदेवताकं । धर्तेत्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

ओम् धर्ता॑दि॒वः प॑वते॒ कृत्व्यो॒ रसो॒ दक्षो॑ दे॒वाना॑मनु॒माद्यो॒ नृभिः॑ ।
ह॒रिः सृ॑जा॒नो अत्यो॒ न सत्व॑भि॒र्वृथा॒ पाजां॑सि कृणुते न॒दीष्वा ॥ १ ॥

ध॒र्ता । दि॒वः । प॒व॒ते॒ । कृत्व्यः॑ । रसः॑ । दक्षः॑ । दे॒वाना॑म् ।
अ॒नु॒ऽमाद्यः॑ । नृऽभिः॑ । ह॒रिः । सृ॒जा॒नः । अत्यः॑ । न । सत्व॑ऽभिः ।
वृथा॑ । पाजां॑सि । कृ॒णु॒ते॒ । न॒दीषु॑ । आ ॥ १ ॥

धर्ता सर्वस्यधारकः सोमोदिवोन्तरिक्षादन्तरिक्षस्थितादृशापवित्राव् पवते पूयते । कीदृशः सोमः कृत्व्यः कर्तव्यः शोध्यइत्यर्थः रसोरसात्मकः देवानांदक्षः बलप्रदः यद्वा दक्षः प्रवर्धनीयोदेवानामर्थाय तथा नृभिर्नेतृभिर्ऋत्विग्भिः अनुमाद्यः अनुमदनीयः स्तुत्योवा हरिर्हरितवर्णः सत्वभिः प्राणिभिः सृजानः सृज्यमानः अत्योन अश्वइव सयथा शिक्षितो वृथाअनायासेन गच्छति तद्वत् वृथा अप्रयत्नेन पाजांसि बलानि स्वीयान्वेगान् कृणुते कुरुते नदीषु वसतीवरीषु ताभिरित्यर्थः । आसिक्तइतिशेषः अयमभिषवसमयाभिप्रायः ॥ १ ॥

अथ द्वितीया—

शूरो॒ न ध॑त्त॒ आयु॑धा॒ गभ॑स्त्योः॒ स्व१॒ः सिषा॑सन्रथि॒रो गवि॑ष्टिषु ।
इन्द्र॑स्य॒ शुष्म॑मी॒रय॑न्नप॒स्युभि॒रिन्दु॑र्हि॒न्वा॒नो अ॑ज्यते मनी॒षिभिः॑ ॥ २ ॥

शूरः । न । धत्ते । आयुधा । गभस्त्योः । स्वः१रिति स्वः ।
सिसासन् । रथिरः । गोऽइष्टिषु । इन्द्रस्य । शुष्मम् । ईरयन् ।
अपस्युऽभिः । इन्दुः । हिन्वानः । अज्यते । मनीषिऽभिः ॥ २ ॥

अयं सोमोगभस्त्योर्हस्तयोः आयुधा आयुधानि शूरोन शूरइव धत्ते धारयति स्वः स्वर्गं सुखसाधनं यज्ञंवा सिषासन् संभक्तुमिच्छन् रथिरोरथवान् । रथादिरच्प्रत्ययः । गविष्टिषु यजमानस्यगवामेषणेषु सत्सु यजमानार्थं गोसंभजनाय रथवानित्यर्थः । इन्द्रस्य शुष्मं बलं ईरयन् प्रेरयन्निन्दुः सोमोदेवः अपस्युभिः कर्मेच्छुभिः मनीषिभिः मेधाविभिर्ऋत्विग्भिः हिन्वानः प्रेर्यमाणः अज्यते गोभिः ॥ २ ॥

अथ तृतीया—

इन्द्रस्यसोमपवमानऊर्मिणातविष्यमाणोजठरेष्वाविश ।
प्रणःपिन्वविद्युदभ्रेवरोदसीधियानवाजाँउपमासिशश्वतः ॥ ३ ॥

इन्द्रस्य । सोम । पवमानः । ऊर्मिणा । तविष्यमाणः । जठरेषु ।
आ । विश । प्र । नः । पिन्व । विऽद्युत् । अभ्राऽइव । रोदसी
इति । धिया । न । वाजान् । उप । मासि । शश्वतः ॥ ३ ॥

हे सोम पवमानः पूयमानस्त्वं तविष्यमाणो वर्धयिष्यमाणःसन् इन्द्रस्य जठरेषु ऊर्मिणा प्रभूतयाधारया विश जठरप्रदेशस्य बाहुल्याद् बहुवचनं । नोस्मदर्थं विद्युदभ्रेव अभ्राणीव सा यथा दोग्धि अभ्राणि तद्वद् प्रपिन्व धुक्ष रोदसी द्यावापृथिव्यौ । किंच धिया कर्मणान इदानीं नेतिसंप्रत्यर्थे शश्वतः बहुनामैतद् बहून् वाजान् अन्नानि उपसमीपे मासि निर्मासि ॥ ३ ॥

अथ चतुर्थी—

विश्वस्यराजापवतेस्वर्दृशऋतस्यधीतिमृषिषाळवीवशत् ।
यःसूर्यस्यासिरेणमृज्यतेपितामतीनामसमष्टकाव्यः ॥ ४ ॥

विश्वस्य । राजा । पवते । स्वःऽदृशः । ऋतस्य । धीतिम् ।
ऋषिषाट् । अवीवशत् । यः । सूर्यस्य । असिरेण । मृज्यते ।
पिता । मतीनाम् । असमष्टऽकाव्यः ॥ ४ ॥

विश्वस्य जगतोराजा स्वामी सोमः पवते पूयते । स्वर्दृशः स्वर्गदृष्टुः सर्वद्रष्टुर्वा ऋतस्य सत्यभूतस्येन्द्रस्य मनुष्यवाच्यनृतशब्दप्रतियोगिकस्य ऋतशब्दस्य देवार्थः तत्राप्यौचित्येनेन्द्र प्रतिगृह्यते । तस्य धीतिं मतिं कर्मवा ऋषिषाट् ऋषीणामतीन्द्रियद्रष्टृणां अभिभविता समहत्त्वेन स्वयमप्यृषिश्रेष्ठत्वादितिभावः।तथाचमंत्रान्तरं—ब्रह्मादेवानांपदवीःकवीनामितिं । ईदृशःसोम अवीवशत् अकामयतेन्द्रस्यकर्म। यःसोमः सूर्यस्य देवस्यासिरेण क्षेपकेण रश्मिना मृज्यते असमष्टकाव्यः अन्यैःकविभिरव्याप्तकर्मा सोमोमतीनां अस्मदीयानां स्तुतीनां पिता पालकः स्वामी भवतीतिशेषः । यद्वा योमतीनां पिता असमष्टकाव्यश्चसन् मृज्यते सपवतइतिसंबन्धः ॥४

अथ पंचमी—

वृषे॑वयू॒थापरि॒कोश॑मर्ष॒स्य॒पामु॒पस्थे॑वृष॒भःकनि॑क्रदत् ।
सइन्द्रा॑यपवसेमत्स॒रिन्त॑मो॒यथा॒जेषा॑मसमि॒थेत्वोत॑यः ॥ ५ ॥ १

वृषा॑ऽइव । यू॒था । परि॑ । कोश॑म् । अ॒र्ष॒सि॒ । अ॒पाम् । उ॒पऽस्थे॑ ।
वृ॒ष॒भः । कनि॑क्रदत् । सः । इन्द्रा॑य । प॒व॒से॒ । म॒त्स॒रिन्ऽत॑मः ।
यथा॑ । जेषा॑म । स॒म्ऽइ॒थे । त्वाऽऊ॑तयः ॥ ५ ॥ १ ॥

हे सोम त्वं वृषेव यूथा यूथानि वृषभइव सयथा तानि प्रविशति तद्वत् कोशं कोशवद्रसधारकं कलशं पर्यर्षसि परिगच्छसि। कुत्र स्थः सन् अपामुपस्थे अन्तरिक्षे कीदृशः सन् वृषभोवर्षिता कनिक्रदच्छब्दंकुर्वन्। सत्वं हे सोम इन्द्रायेद्रार्थं पवसे पूयसे मत्सरिन्तमोमादयितृतमस्त्वं यथा वयं जेषाम जयेम समिथे संग्रामे त्वोतयस्त्वयारक्षिताः सन्तः ॥ ५ ॥

॥ इति सप्तमस्य तृतीये प्रथमोवर्गः ॥ १ ॥

एषप्रकोशइति पंचर्चंदशमंसूक्तं ऋष्याद्याः पूर्ववत् । एषइत्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

ए॒षप्रकोशे॒मधु॑माँअचिक्रद॒दिन्द्र॑स्य॒वज्रो॒वपु॑षो॒वपु॑ष्टरः ।
अ॒भीमृ॒तस्य॑सु॒दुघा॑घृ॒तश्चुतो॑वा॒श्राअ॑र्षन्ति॒पय॑सेव॒धे॒नवः॑ ॥ १ ॥

---

१ ऋ० सं० ७. ४. ७. ।

एषः । प्र । कोशे । मधुंऽमान् । अचिक्रदत् । इन्द्रस्य । वज्रः ।
वपुषः । वपुःऽतरः । अभि । ईम् । ऋतस्य । सुऽदुघाः ।
घृतऽश्चुतः । वाश्राः । अर्षन्ति । पयसाऽइव । धेनवः ॥ १ ॥

एषोयं सोमोमधुमान् मधुररसः कोशे द्रोणकलशे प्राचिक्रदत् प्रकर्षेणशब्दायते कीदृश-एषः इन्द्रस्यवज्रो वज्रस्थानीयः बलकरत्वेन वज्रवत् प्रहरणसाधनत्वात् वज्रत्वोपचारः एष-एवहिसोमः वज्रे इन्द्रस्यसाधने तथा वपुषो बीजानांवपुरन्यस्माद्वपुष्टरः अतिशयेन वप्ता बी-जावापस्य सोमकर्तृकत्वात् । सोमोवैरेतोधाइतिश्रुतेः। ईमस्य ऋतस्य सत्यफलस्य सोमस्य धा-राइतिशेषः। अभ्यर्षन्ति अभिगच्छन्ति । कीदृश्यस्ताः सुदुघाः सुष्ठुदोग्ध्यः फलानां । घृतश्चुतः उदकस्य रसस्य वा क्षरयित्र्यः वाश्राः शब्दयन्त्यः किमिव पयसेव पयसायुक्ता वाश्राः धेन-वइवेति ॥ १ ॥

अथ द्वितीया—

सपूर्व्यःपवतेयंदिवस्परिश्येनोमथायदिषितस्तिरोरजः ।
समध्वआयुवतेवेविजानइत्कृशानोरस्तुर्मनसाहबिभ्युषा ॥ २ ॥

सः । पूर्व्यः । पवते । यम् । दिवः । परि । श्येनः । मथायत् ।
इषितः । तिरः । रजः । सः । मध्वः । आ । युवते । वेविजानः ।
इत् । कृशानोः । अस्तुः । मनसा । अह । बिभ्युषा ॥ २ ॥

सः सोमः पूर्व्यः प्रत्नः पवते पूयतेभिषूयतइत्यर्थः । यंसोमंदिवोद्युलोकात् श्येनइषितः स्वमात्राप्रेषितःसन् परिमथायत् पर्यमथ्नात् तिरस्तीर्णं तिरस्कुर्वन् । किंच रजः तृतीयंलोकं सए-व सोमो मध्वो मधुररसं सोमं आयुवते यौति पृथक्करोति द्युलोकात् स्वयं वेविजानइत् चल-न्नधोगच्छन् कृशानोः सोमपालस्य अस्तुः शरक्षेप्तुः सकाशाद्बिभ्युषा भीतेनमनसा अह सह मध्वआयुवतइतिसंबंधः । कृशानोः सोमपालत्वं ब्राह्मणेस्पष्टमुक्तं—कृशानुःसोमपालःसव्य-स्यपदः ॥ २ ॥

---

१ तै० ब्रा० १. ८. १. । १ ऐ० ब्रा० ३. २६.

अथ तृतीया—

तेनः॒पूर्वास॒उप॑रास॒इन्द॑वोम॒हेवाजा॑यधन्वन्तुगोमं॑ते ।
ई॒क्षेण्या॑सोअ॒ह्यो॒३॒॑नचार॑वो॒ब्रह्म॑ब्रह्म॒येजु॑जु॒षुर्ह॒विर्ह॑विः ॥ ३ ॥

ते । नः॒ । पूर्वा॑सः । उप॑रासः । इन्द॑वः । म॒हे । वाजा॑य । ध॒न्व॒न्तु॒ । गोऽमं॑ते । ई॒क्षेण्या॑सः । अ॒ह्यः॑ । न । चार॑वः । ब्रह्म॑ऽब्रह्म । ये । जु॒जु॒षुः । ह॒विःऽह॑विः ॥ ३ ॥

ते वक्ष्यमाणाः पूर्वासः पूर्वे उपरासः उपरता अन्नेत्युपराः तादृशाइन्दवः सोमाः महे महते गोमते नोमह्यं वाजायान्नायान्नलाभार्थं धन्वन्तु गच्छन्तु प्राप्नुवन्तु । कीदृशाइन्दवः ईक्षेण्यासः ईक्षणीयाः संदर्शनीयाः अह्योन अह्यः स्त्रियः आहननात् ताइव सुवेषाःस्त्रियइव चारवोरमणीयाः । तेइत्युक्तं केइत्याह येइन्दवोब्रह्मब्रह्म सर्वमपिस्तावकंमंत्रजातं हविर्हविः सर्वमपिहविर्जातंच जुजुषुः सेवन्ते ॥ ३ ॥

अथ चतुर्थी—

अ॒यंनो॑वि॒द्वान्व॑नवद्वनुष्य॒तइन्दुः॑स॒त्राचा॒मन॑सापुरुष्टु॒तः ।
इ॒नस्य॒यःसद॑ने॒गर्भ॑माद॒धेगवा॑मुरु॒ब्जम॒भ्यर्ष॑तिव्र॒जम् ॥ ४ ॥

अ॒यम् । नः॒ । वि॒द्वान् । व॒न॒व॒त् । व॒नु॒ष्य॒तः । इन्दुः॑ । स॒त्राचा॑ । मन॑सा । पु॒रु॒ऽस्तु॒तः । इ॒नस्य॑ । यः । सद॑ने । गर्भ॑म् । आ॒ऽद॒धे । गवा॑म् । उ॒रु॒ब्जम् । अ॒भि । अर्ष॑ति । व्र॒जम् ॥ ४ ॥

अयमिन्दुः सोमोनोस्मान् वनुष्यतोहन्तुमिच्छतः शत्रून् विद्वान् जानन् हन्तुं वनवत् हन्तु तान् । केनसाधनेन सत्राचा सहांचता मनसा कीदृशः पुरुष्टुतः बहुभिःस्तुतः यः सोमोइनस्येश्वरस्याग्नेः सदनेस्थाने भूमौ वेद्यांवा वर्तमानोगर्भमादधे धारयत्योषधीषु यश्चगवामस्मदीयानां शत्रुभिरपहृतानामुरुब्जं प्रभूतानामपांपयसां जनकं व्रजमभ्यर्षति गच्छति सवनवदिति॥४॥

अथ पञ्चमी—

चक्रि॒र्दि॒वःप॑वते॒कृत्व्यो॒रसो॑म॒हाँअद॑ब्धो॒वरु॑णो॒हु॒रुग्य॒ते ।
असा॑विमि॒त्रोवृ॒जने॑षुय॒ज्ञियोऽत्यो॒नयू॒थेवृ॑ष॒युःकनि॑क्रदत् ॥ ५॥२॥

चक्रिः । दिवः । पवते । कृत्व्यः । रसः । महान् । अदब्धः । वरुणः । हुरुक् । यते । असावि । मित्रः । वृजनेषु । यज्ञियः । अत्यः । न । यूथे । वृषऽयुः । कनिक्रदत् ॥ ५ ॥ २ ॥

चक्रिः सर्वस्यकर्ता कृत्व्यः कर्मण्योरसोरसात्मकोमहान् गुणैरधिकः अदब्धः अहिंस्यः वरुणः हुरुक् कुटिलं यते गच्छते इतस्ततः परिचरतइत्यर्थः । तदर्थं दिवःसकाशात् पवते पूयते अन्तरिक्षस्थाद्दशापवित्रादित्यर्थः । किंच सोमः असावि सूयते कदा वृजनेषु अरिष्टेषुसत्सु तत्परिहारार्थं । कीदृशः समित्रः सर्वेषांमित्रभूतः यज्ञियोयष्टव्यः अत्योन अश्वइव यूथे वडवायूथे सयथावृषयुःसन् शब्दंकरोति तद्वदसौ वृषभोरसस्यवर्षिता कनिक्रदच्छब्दंकुर्वन् असावि इति ॥ ५ ॥

॥ इति सप्तमस्य तृतीये द्वितीयोवर्गः ॥ २ ॥

प्रराजावाचमिति पंचर्चमेकादशंसूक्तं ऋष्याद्याः पूर्ववत् । प्रराजेत्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

प्रराजावाचंजनयन्नसिष्यददपोवसानोअभिगाइयक्षति ।
गृभ्णातिरिप्रमविरस्यतान्वाशुद्धोदेवानामुपयातिनिष्कृतम् ॥ १ ॥

प्र । राजा । वाचम् । जनयन् । असिस्यदत् । अपः । वसानः । अभि । गाः । इयक्षति । गृभ्णाति । रिप्रम् । अविः । अस्य । तान्वा । शुद्धः । देवानाम् । उप । याति । निःऽकृतम् ॥ १ ॥

राजा राजमानोयं सोमोभिषूयमाणः सन् वाचं शब्दं जनयन् उत्पादयन् असिष्यददत्म-स्यन्दते । तथा अपोवसतीवरीर्वसानः आच्छादयन् गाः स्तुतीः अभि इयक्षति अभिगच्छति इयक्षतिर्गतिकर्मसुपठितः अस्यसोमस्य रिप्रं अनुपादेयत्वेन पापरूपं अभिषुतवल्लीशकलादिरूपं अविरविरोमनिर्मितं दशापवित्रं तान्वा स्वीयेन वस्त्रेण गृभ्णाति गृह्णाति शोधनसमये पश्चात् शुद्धोदेवानां निष्कृतं संस्कृतंस्थानं उपयाति उपगच्छति ॥ १ ॥

अथ द्वितीया—

इन्द्राय सोम परि षिच्यसे नृभिर्नृचक्षा ऊर्मिः कविरज्यसे वने ।
पूर्वीर्हि ते स्रुतयः सन्ति यातवे सहस्रमश्वा हरयश्चमूषदः ॥ २ ॥

इन्द्राय । सोम । परि । सिच्यसे । नृऽभिः । नृऽचक्षाः ।
ऊर्मिः । कविः । अज्यसे । वने । पूर्वीः । हि । ते । स्रुतयः ।
सन्ति । यातवे । सहस्रम् । अश्वाः । हरयः । चमूऽसदः ॥ २ ॥

हे सोम त्वमिन्द्रायेन्द्रार्थं नृभिर्नेतृभिर्ऋत्विग्भिः परिषिच्यसे अभिषूयसे । तथा हेसोम नृचक्षाः नृणां यष्ट्रूणामनुग्रहेण द्रष्टा ऊर्मिः प्रेर्यमाणः प्रवृद्धोवा कविर्मेधावी च त्वं वनेउदके अज्यसे प्रेर्यसे पूर्वीर्बह्वोहि तेस्रुतयोमार्गाः छिद्राणिसन्ति यातवे यातुं । अल्पस्यसोमस्यापरिमितस्रुतिगमनासंभवात्तस्यबाहुल्यमाह चमूषदः अभिषवणफलकयोः सीदतः सहस्रं अपरिमिता अश्वा व्याप्ता हरयोहरितवर्णाः अंशवःसन्ति अथचेन्द्राय परिषिच्यसइत्युक्तत्वादिन्द्रप्राप्तौमार्गसाधनयोः सद्भाव उत्तरार्धेनप्रतिपादितः । तेपुरातन्यः सरण्यः सन्तीन्द्रंप्रतियातुं । तथा सहस्रसंख्याकाहरितवर्णाः अश्वाश्च सन्ति अथचेन्द्राय चमूषदस्तवेति ॥ २ ॥

अथ तृतीया—

समुद्रिया अप्सरसो मनीषिणमासीना अन्तरभि सोममक्षरन् ।
ता ईं हिन्वन्ति हर्म्यस्य सक्षणिं याचन्ते सुम्नं पवमानमक्षितम् ॥ ३ ॥

समुद्रियाः । अप्सरसः । मनीषिणम् । आसीनाः । अन्तः ।
अभि । सोमम् । अक्षरन् । ताः । ईम् । हिन्वन्ति । हर्म्यस्य ।
सक्षणिम् । याचन्ते । सुम्नम् । पवमानम् । अक्षितम् ॥ ३ ॥

समुद्रियाः समुद्रसाधनत्वात्समुद्रमन्तरिक्षं तत्संबन्धिन्यः अप्सरसः काश्चनअंतर्यज्ञमध्ये आसीनाः पात्रेषुवर्तमानाः वसतीवर्योमनीषिणं मेधाविनं सोममभ्यक्षरन् अभिषूयमाणं सोममभिक्षरन्ति ताईं एनं पवमानं हर्म्यस्य हर्म्यवत्सुखकरस्य यागगृहस्य सक्षणिं चेतनशीलं हिन्वन्ति वर्धयन्ति पोषयन्ति तएते स्तोतारोवा पवमानं सोमं अक्षितमक्षीणं सुम्नं सुखं याचन्ते

प्रार्थयन्ते तत्रायंभावः काश्चनाप्सरसः सोमंराजानं मनीषिणंकामयमाना देवानपिपरित्यज्य स्वर्गादागत्य राज्ञःसमीपेस्थित्वा तस्यरसानाददते स्वरसेनवर्धयन्ति तंसुखं याचन्तइति ॥ ३ ॥

अथ चतुर्थी—

गोजिन्नःसोमोरथजिद्धिरण्यजित्स्वर्जिदब्जित्पवतेसहस्रजित् ।
यंदेवासश्चक्रिरेपीतयेमदंस्वादिष्ठंद्रप्समरुणंमयोभुवम् ॥ ४ ॥

गोऽजित् । नः । सोमः । रथऽजित् । हिरण्यऽजित् । स्वःऽजित् ।
अप्ऽजित् । पवते । सहस्रऽजित् । यम् । देवासः । चक्रिरे ।
पीतये । मदम् । स्वादिष्ठम् । द्रप्सम् । अरुणम् । मयःऽभुवम् ॥ ४ ॥

नोस्माकं गोजित् गवांजेता तथा रथजित् रथस्यजेता हिरण्यजित् हिरण्यजेता तथा स्वर्जित् स्वर्गस्य सुखस्यजेता अब्जित् अपांजेता सहस्रजित् सहस्रसंख्याकस्य धनस्यजेता सोमः पवते पूयते यंदेवासोदेवाश्चक्रिरेकृतवन्तः। किमर्थं पीतये पानाय कीदृशं सोमं मदं मदकरं स्वादिष्ठं स्वादुतमं द्रप्सं रसात्मकं अरुणं अरुणवर्णं मयोभुवं सुखस्यभावयितारं ॥ ४ ॥

अथ पञ्चमी—

एतानिसोमपवमानोअस्मयुःसत्यानिकृण्वन्द्रविणान्यर्षसि ।
जहिशत्रुमन्तिकेदूरकेचयउर्वींगव्यूतिमभयंचनस्कृधि ॥ ५ ॥३॥

एतानि । सोम । पवमानः । अस्मऽयुः । सत्यानि । कृण्वन् ।
द्रविणानि । अर्षसि । जहि । शत्रुम् । अन्तिके । दूरके । च । यः ।
उर्वीम् । गव्यूतिम् । अभयम् । च । नः । कृधि ॥ ५ ॥ ३ ॥

हे सोम एतानि पूर्वमंत्रोक्तानि गवादीनि द्रविणानि सत्यानि कृण्वन् कुर्वन् पवमानः पूयमानः अर्षसि पवसे जहि च शत्रुं योस्मच्छत्रुरंतिके समीपे दूरके अत्यंतदूरे देशेच वर्तते तं जहि। तथा उर्वीं गव्यूतिं विस्तीर्णं मार्गं अभयं नोस्माकं कृधि कुरु ॥ ५ ॥

॥ इति सप्तमस्य तृतीये तृतीयोवर्गः ॥ ३ ॥

अचोदसइति पंचर्चंद्वादशंसूक्तं ऋष्याद्याः पूर्ववत्। अचोदसइत्यनुक्रान्तं। गतोविनियोगः।

तत्र प्रथमा—

अचोदसोंनोधन्वन्त्विन्दवःप्रसुवानासोंबृहद्दिवेषुहरयः ।
विचनशंन्नइषोअरातयोर्योनशन्तसनिषन्तनोधियः ॥ १ ॥

अचोदसः । नः । धन्वन्तु । इन्दवः । प्र । सुवानासः ।
बृहत्ऽदिवेषु । हरयः । वि । च । नशन् । नः । इषः ।
अरातयः । अर्यः । नशन्त । सनिषन्त । नः । धियः ॥१ ॥

अचोदसः अचोदनाः अनन्यप्रेरिताइन्दवः सोमाः नोस्माकं प्रधन्वंतु प्रगच्छन्तु धन्वतिर्गतिकर्मा कुत्र बृहद्दिवेषु प्रभूतदीप्तिषु यागेषु निमित्तेषु अथवा बृहद्दिवकुलजेषु मध्ये । नइतिसंबन्धः । कीदृशाइन्दवः सुवानासः सूयमाना हरयोहरितवर्णाः । किंच नोस्मभ्यं येच इषोन्नस्यअरातयः अदातारःसन्ति तेच विनशन् विनश्यन्तु । तथा अर्यः अरयोपि नशन्त विनश्यन्तु सनिषंत संभजन्तुच नोधियोस्मदीयानि कर्माणि देवा अस्मत्प्रियभूतावा ॥ १ ॥

अथ द्वितीया—

प्रणोधन्वन्त्विन्दवोमदच्युतोधनावायेभिरर्वतोजुनीमसि ।
तिरोमर्तस्यकस्यचित्परिह्वृतिंवयंधनानिविश्वधाभरेमहि ॥ २ ॥

प्र । नः । धन्वन्तु । इन्दवः । मदऽच्युतः । धना । वा । येभिः ।
अर्वतः । जुनीमसि । तिरः । मर्तस्य । कस्य । चित् ।
परिऽह्वृतिम् । वयम् । धनानि । विश्वधा । भरेमहि ॥ २ ॥

धन्वन्तु प्रगच्छन्तु नोस्माकमिन्दवः सोमाः मदच्युतो मदस्राविणोवा अथवा किंचिदित्यर्थः धना धनान्यपि प्रधन्वन्तु येभिर्यैःसोमैः अर्वतोबलवतः शत्रोःसमीपं जुनीमसि जुनीमः प्राप्नुमः कस्यचित् कस्यापिमर्तस्य मनुष्यस्य प्रबलस्य परिह्वृतिं परितोबाधांतिरस्तिरस्कुर्वन्तोवयंधनानि गवादिरूपाणि विश्वधा सर्वदा भरेमहि बिभृयाम ॥ २ ॥

अथतृतीया—

उतस्वस्याअरात्याअरिर्हिषउतान्यस्याअरात्यावृकोहिषः ।
धन्वन्नतृष्णासमरीततांअभिसोमजहिपवमानदुराध्यः ॥ ३ ॥

उत । स्वस्याः । अरात्याः । अरिः । हि । सः । उत । अन्यस्याः ।
अरात्याः । वृकः । हि । सः । धन्वन् । न । तृष्णा । सम् । अरीत ।
तान् । अभि । सोम । जहि । पवमान । दुःऽआध्यः ॥ ३ ॥

उतापिच ससोमः स्वस्या अरात्याः स्वीयस्यशत्रोः समीपं अरिः अभिगन्ताहननाय । उतापिच ससोमोन्यस्या अस्मदीयायाअरात्या अस्मच्छत्रोर्वृकोहि हिंसकः खलु । अरातिशब्दः स्त्रीलिंगोप्यस्ति । अथप्रत्यक्षकृतः धन्वन्नतृष्णा धन्व निरुदकोदेशः तस्मिंस्थितस्य तृष्णेव सायथा तंसमरीत प्राप्नोति तद्वत् तानुभयविधान्शत्रून् जहि । किंच हे सोम पवमान दुराध्यः शत्रुभिः दुःसाध्यस्त्वं जहि ॥ ३ ॥

अथ चतुर्थी—

दिवितेनाभापरमोयआददेपृथिव्यास्तेरुरुहुःसानविक्षिपः ।
अद्रयस्त्वाबप्सतिगोरधित्वच्य१प्सुत्वाहस्तैर्दुदुहुर्मनीषिणः ॥४॥

दिवि । ते । नाभा । परमः । यः । आऽददे । पृथिव्याः । ते ।
रुरुहुः । सानवि । क्षिपः । अद्रयः । त्वा । बप्सति । गोः । अधि ।
त्वचि । अप्ऽसु । त्वा । हस्तैः । दुदुहुः । मनीषिणः ॥ ४ ॥

हेसोम ते तव सपरमः उत्तरोंशो दिवि दिवः नाभा नाभौ द्युलोकस्य नाभिस्थानीयेदेशे अथवा नाभौ वृष्ट्यादेर्बंधके दिवि द्युलोकेवर्तते यआददे आदत्ते हविर्देवतारूपःसन् ते तव द्युलोकस्थांशस्यावयवाः पृथिव्याः सानवि समुच्छ्रितेदेशे पर्वतादिप्रदेशे क्षिपः क्षिप्ताः संतोरुरुहुः रोहन्ति त्वा त्वां द्युलोकस्थसोमांशभूतं अद्रयोग्रावाणोबप्सति भक्षयन्ति बप्सतिरत्तिकर्मा । कुत्र गोरधित्वचि । अधीतिसप्तम्यर्थानुवादी । आनडुहे अधिषवणचर्मणीत्यर्थः । यद्यपीदानींतनाः कृष्णाजिनेभिषुण्वन्ति नगोचर्मणि तथापि तस्मिन् सोमोमीयते क्रयार्थं । तथाचसति यस्मिन्मिमीते तस्याधिषवणचर्मेति सूत्रात् मानसाधनस्यैव गोचर्मणोधिषवणचर्मत्वाभिधानादविरोधः । त्वा त्वां तथा अप्सु वसतीवरीषु दुदुहुर्दुहन्ति अद्भिराप्लाव्यदुहन्तीत्यर्थः । यद्वा अप्सूदकेषु रसेषुनिमित्तेषु दुदुहुः कैः साधनैः हस्तैर्हस्तोहन्तेरिति[1]निरुक्तं । केमनीषिणोमेधाविनोध्वर्य्वादयः॥४॥

---

1 नि० १. ७. ।

अथ पञ्चमी—

एवानंइन्दोसुभ्वंसुपेशसंरसंतुञ्जन्तिप्रथमाअंभिश्रियः ।
निदंनिदंपवमाननितारिषआविस्तेशुष्मोभवतुप्रियोमदः ॥५॥४॥

एव । ते । इन्दो इति । सुऽभ्वम् । सुऽपेशसम् । रसम् । तुञ्जन्ति ।
प्रथमाः । अभिऽश्रियः । निदम्ऽनिदम् । पवमान । नि । तारिषः ।
आविः । ते । शुष्मः । भवतु । प्रियः । मदः ॥ ५ ॥ ४ ॥

पूर्वत्राद्रयस्त्वांबप्सतीत्युक्तं तदेवोच्यते हे इन्दो सोम एव एवं इदानीं क्रियमाणप्रकारेण ते तव सुभ्वं शोभनभवनं सुपेशसं पेशइतिरूपनाम सुरूपं रसं प्रथमाः प्रथममेव यद्वा प्रथम-इतिमुख्यनाम प्रथमामुख्याः ग्रावाणः अध्वर्यवोवा अभिश्रियः अभिश्रयन्तःसन्तः तुंजन्ति प्रेरयन्ति। हे पवमान निदंनिदं अस्मन्निन्दकं सर्वमपिशत्रुं नितारिषः विनाशय। ते तव शुष्मो-बलकरः प्रियः प्रियभूतोमदः मदकरोरसः आविर्भवतु ॥५॥

॥ इति सप्तमस्य तृतीये चतुर्थोवर्गः ॥ ४ ॥

सोमस्यधारेति पंचर्चंत्रयोदशंसूक्तं भरद्वाजस्य वसुनाम्नआर्षं जागतं पवमानसोमदेवताकं तथाचानुक्रान्तं—सोमस्यवसुर्भारद्वाजइति । गतोविनियोगः ।

तत्र प्रथमा—

सोमस्यधारापवतेनृचक्षसऋतेनदेवान्हवतेदिवस्परि ।
बृहस्पतेरवथेनाविदिद्युतेसमुद्रासोनसवनानिविव्यचुः ॥ १ ॥

सोमस्य । धारा । पवते । नृऽचक्षसः । ऋतेन । देवान् । हवते ।
दिवः । परि । बृहस्पतेः । रवथेन । वि । दिद्युते । समुद्रासः । न ।
सवनानि । विव्यचुः ॥ १ ॥

सोमस्याभिषूयमाणस्य सा धारा पवते श्चोतते। कीदृशस्यसोमस्य नृचक्षसः नृणां यज-मानानांद्रष्टुः सच ऋतेन यज्ञेन देवान् सोमभाजइन्द्रादीन् हवते कुत्रदिवस्परि द्युलोकस्योपरि

वर्तमानात् बृहस्पतेः मंत्रपालकस्य स्तोतुः स्वथेन शब्देन स्तोत्रेण विदिद्युते विद्योतते समुद्रासोन समुद्राइव पृथिवीं सवनानि यज्ञसंबन्धीनि विव्यचुः व्याप्नुवन्ति ॥ १ ॥

अथ द्वितीया—

यंत्वावाजिन्नघ्न्याअभ्यनूषतायोहतंयोनिमारोहसिद्युमान् ।
मघोनामायुःप्रतिरन्महिश्रवइन्द्रायसोमपवसेवृषामदः ॥ २ ॥

यम् । त्वा । वाजिन् । अघ्न्याः । अभि । अनूषत । अयःऽहतम् ।
योनिम् । आ । रोहसि । द्युऽमान् । मघोनाम् । आयुः । प्रऽतिरन् ।
महि । श्रवः । इन्द्राय । सोम । पवसे । वृषा । मदः ॥ २ ॥

हे वाजिन् अन्नवत् सोम यं त्वा त्वां अघ्न्या अहननीयागावो अभ्यनूषत अभिष्टुवन्ति आशिरार्थंस्थिताः शब्दायन्तइत्यर्थः । सत्वं अयोहतं अयइतिहिरण्यनाम तेन तद्वान् पाणिर्लक्ष्यते हिरण्मयेनपाणिनाहतं संस्कृतं योनिं स्थानमारोहसि। द्युमान् दीप्तःसन् ।अभियोनिमयोहतमिति ह्युक्तं । किंच हे सोम मघोनां हविष्मतां यजमानानां आयुरायुष्यं महिमहत् श्रवोन्नं यशोवा प्रतिरन् वर्धयन्निन्द्रायेन्द्रार्थं पवसे पूयसे । वृषा वर्षको मदोमदकरश्च त्वम् ॥ २ ॥

अथ तृतीया—

एन्द्रस्यकुक्षापवतेमदिन्तमऊर्जंवसानःश्रवसेसुमङ्गलः ।
प्रत्यङ्सविश्वाभुवनाभिपप्रथेक्रीळन्हरिरत्यःस्यन्दतेवृषा ॥ ३ ॥

आ । इन्द्रस्य । कुक्षा । पवते । मदिन्ऽतमः । ऊर्जम् । वसानः ।
श्रवसे । सुऽमङ्गलः । प्रत्यङ् । सः । विश्वा । भुवना । अभि ।
पप्रथे । क्रीळन् । हरिः । अत्यः । स्यन्दते । वृषा ॥ ३ ॥

अयं सोमः इन्द्रस्यकुक्षा कुक्षौ आपवते आसिच्यते किमर्थं श्रवसे तस्यान्नाय यष्टुर्वान्नसिध्यर्थं सोमोविशेष्यते—मदिन्तमः मादयितृतमः ऊर्जंवसानः बलकरं रसमाच्छादयन्।अपोवसानईतिह्युक्तं । सुमंगलः शोभनमंगलप्रदः ससोमः प्रत्यङ्विश्वाभुवना सर्वाणिभूतजातानि

१ ऋ० सं० ६. ७. १६. । १ ऋ० सं० ६. ८. ६. ।

अभिपप्रथे अभिप्रथयति दिव्युदितःसन् क्रीळन् येषां संक्रीडमानोहरिर्हरितवर्णः अत्यः अतनकुशलः वृषावर्षकः स्यन्दते रसरूपेण ॥ ३ ॥

अथ चतुर्थी—

तंत्वांदेवेभ्योमधुंमत्तमंनरःसहस्रंधारंदुहतेदशक्षिपः ।
नृभिःसोमप्रच्युतोग्रावंभिःसुतोविश्वान्देवाँआपंवस्वासहस्रजित् ॥ ४ ॥

तम् । त्वा । देवेभ्यः । मधुमत्ऽतमम् । नरः । सहस्रंऽधारम् ।
दुहते । दश । क्षिपः । नृऽभिः । सोम । प्रऽच्युतः । ग्रावंऽभिः ।
सुतः । विश्वान् । देवान् । आ । पवस्व । सहस्रऽजित् ॥ ४ ॥

हे सोम तं तादृशं त्वा त्वां देवेभ्यः इन्द्राद्यर्थं मधुमत्तमं अतिशयेन मधुमन्तं सहस्रधारं बहुधारायुक्तं दुहते दुहन्ति । के नरोनेतारः ऋत्विजोदशक्षिपः तेषां दशसंख्याका अंगुलयश्च हे सोम नृभिर्मनुष्यैः प्रच्युतोग्रावभिः सुतोभिषुतस्त्वं सहस्रजित् सहस्रसंख्याकस्यधनस्य जेता सन् विश्वान् देवान् आपवस्व ॥ ४ ॥

अथ पंचमी—

तंत्वांहस्तिनोमधुंमन्तमद्रिंभिर्दुहन्त्यप्सुवृषभंदशक्षिपः ।
इन्द्रंसोममादयन्दैव्यंजनंसिन्धोरिवोर्मिःपवमानोअर्षसि ॥ ५॥५॥

तम् । त्वा । हस्तिनः । मधुऽमन्तम् । अद्रिंऽभिः । दुहन्ति ।
अप्ऽसु । वृषभम् । दश । क्षिपः । इन्द्रम् । सोम । मादयन् ।
दैव्यम् । जनम् । सिन्धोःऽइव । ऊर्मिः । पवमानः । अर्षसि ॥ ५॥५॥

तं तादृशं मधुमन्तं मधुररसं वृषभं कामानांवर्षकं त्वा त्वां हस्तिनः सुहस्तस्य दशक्षिपोंगुलयः अद्रिभिर्ग्रावभिरप्सु दुहंति । तादृश हेसोम इन्द्रं अन्यं दैव्यं जनं देवसंबन्धिनं संघं मादयन् सिंधोरूर्मिरिव पवमानः पूयमानः सन्नर्षसि गच्छसि ॥ ५ ॥

॥ इति सप्तमस्य तृतीये पंचमोवर्गः ॥ ५ ॥

प्रसोमस्येति पंचर्चंचतुर्दशंसूक्तं ऋषिदैवतेपूर्ववत् अंत्यात्रिष्टुप् शिष्टाजगत्यः। प्रसोमस्येत्यनुक्रान्तं। गतोविनियोगः।

तत्र प्रथमा—

प्रसोम॑स्यपव॑मानस्योर्मयइन्द्र॑स्ययन्तिजठरं॑सुपेश॑सः।
दध्नायदीमुन्नी॑तायशसागवां॑दानायशूर॑मुदम॑न्दिषुःसुताः॥ १॥

प्र। सोम॑स्य। पव॑मानस्य। ऊर्मयः॑। इन्द्र॑स्य। यन्ति।
जठर॑म्। सुऽपेश॑सः। दध्ना। यत्। ईम्। उत्ऽनी॑ताः। यशसा॑।
गवा॑म्। दानाय॑। शूर॑म्। उत्ऽअम॑न्दिषुः। सुताः॥ १॥

सोमस्य पवमानस्य पूयमानस्य ऊर्मयोरसप्रवाहः इन्द्रस्य जठरं प्रयन्ति प्रगच्छन्ति सुपेशसः सुरूपाऊर्मयइतिसंबंधः यद्यदा ईमेतेसुताअभिषुताः सोमाः गवां यशसा बलभूतेन दध्नासहोन्नीताः सन्तोदानाय यजमानविषयाभिमतदानाय शूरं विक्रान्तमिन्द्रं उदमन्दिषुः उन्मादयन्ति तदा जठरंयन्ति॥ १॥

अथ द्वितीया—

अच्छाहिसोम॑ःकलशाँअसि॑ष्यदत्योनवोळ्हा॑रघुव॑र्तनिर्वृषा॑।
अथा॑देवाना॑मुभय॑स्यजन्म॑नोविद्वाँअश्नोत्यमुतइतश्चयत्॥ २॥

अच्छ॑। हि। सोम॑ः। कलशान्। असि॑स्यदत्। अत्य॑ः। न।
वोळ्हा॑। रघुऽव॑र्तनिः। वृषा॑। अथ॑। देवाना॑म्। उभय॑स्य।
जन्म॑नः। विद्वान्। अश्नोति। अमुत॑ः। इतः। च। यत्॥ २॥

असौसोमः कलशानच्छाभिमुखं असिस्यदत् स्यन्दते कइव अत्योनवोळ्हा रथस्यवाहकःअश्वइव सयथा स्वगंतव्यमभिगच्छतितद्वत्। यद्वायमुत्तरत्रदृष्टान्तः—वोळ्हाश्वइव रघुवर्तनिः लघुगमनः वृषावर्षकश्च। अथापिच देवानां सोमसजोषामुभयस्योभयविधं जन्मनोजातं विद्वान् जानन् असिष्यदत् कलशान्। किं तदुभयं जन्मेति उच्यते यद्देवजातं अमुतोद्युलोकात् इतश्चास्माद्भूलोकाद्वाश्नोतिव्याप्नोति यज्ञं तस्योभयस्यजातं विद्वानितिसंबन्धः॥ २॥

अथ तृतीया—

आनः सोमपवमानः किरावस्विन्दोभवमघवाराधसोमहः ।
शिक्षावयोधोवसवेसुचेतुनामानोगयमारेअस्मत्परासिचः ॥ ३ ॥

आ । नः । सोम । पवमानः । किर । वसु । इन्दो इति । भव ।
मघऽवा । राधसः । महः । शिक्ष । वयःऽधाः । वसवे । सु । चेतुना ।
मा । नः । गयम् । आरे । अस्मत् । परा । सिचः ॥ ३ ॥

आकिर सर्वतोविक्षिप नोस्मभ्यं । हे सोम पवमानः पूयमानस्त्वं । किंच वसुवासकंधनं गवादिरूपं । किंच हे इन्दो दीप्तसोम मघवा धनवांस्त्वं महोमहतो राधसोधनस्यभव । दातेतिशेषः । तथा हे वयोधाः अन्नस्यधातः सोम वसवे वासकाय परिचरतेमह्यं चेतुना कष्टेन प्रज्ञानेन सु सुखं कल्याणं शिक्ष देहि । नोस्मभ्यं प्रदेयं गयं धनं अस्मदारे अस्मत्तोदूरं मापरासिचः मापेरय ॥ ३ ॥

अथ चतुर्थी—

आनः पूषापवमानः सुरातयोमित्रोगच्छन्तुवरुणः सजोषसः ।
बृहस्पतिर्मरुतोवायुरश्विनात्वष्टासवितासुयमासरस्वती ॥ ४ ॥

आ । नः । पूषा । पवमानः । सुऽरातयः । मित्रः । गच्छन्तु ।
वरुणः । सऽजोषसः । बृहस्पतिः । मरुतः । वायुः । अश्विना ।
त्वष्टा । सविता । सुऽयमा । सरस्वती ॥ ४ ॥

सुरातयः सुदानाः सजोषसः संगताः पूषादयोदेवा आगच्छन्तु नोस्मानस्माकंयज्ञंवा । तथा सुयमा यम्यते नियम्यतइति यमोविग्रहः सुविग्रहा सरस्वती चागच्छतु ॥ ४ ॥

अथ पञ्चमी—

उभेद्यावापृथिवीविश्वमिन्वेअर्यमादेवोअदितिर्विधाता ।
भगोनृशंसउर्व१न्तरिक्षंविश्वेदेवाः पवमानंजुषन्त ॥ ५ ॥ ६ ॥

उभे इति॑ । द्यावा॑पृथि॒वी इति॑ । वि॒श्व॒मि॒न्वे इति॑ वि॒श्व॒म्ऽइ॒न्वे ।
अ॒र्य॒मा । दे॒वः । अदि॑तिः । वि॒ऽधा॒ता । भगः॑ । नृऽशंसः॑ । उ॒रु ।
अ॒न्तरि॑क्षम् । विश्वे॑ । दे॒वाः । पव॑मानम् । जु॒ष॒न्त॒ ॥ ५ ॥ ६ ॥

विश्वमिन्वे । इन्वतिर्व्याप्तिकर्मा । सर्वव्यापिन्यावुभेद्यावापृथिवी द्यावापृथिव्यौ अर्यमादयस्त्रयश्च भगश्च नृशंसोनृभिः शंसनीयः उर्वन्तरिक्षंच विश्वेदेवाश्च पवमानं पूयमानं सोमं जुषन्त सेवन्ते ॥ ५ ॥

॥ इति सप्तमस्य तृतीये षष्ठोवर्गः ॥ ६ ॥

असावीतिपंचर्चं पंचदशंसूक्तं ऋष्याद्याः पूर्ववत् । अस्यानुक्रमणिका—असावीतित्रिष्टुबन्तइति । अनेनद्विवचनेन प्रकृतयोः प्रसोमस्येत्यादिकयोर्द्वयोरपि त्रिष्टुन्तता प्रतिपादिता । गतोविनियोगः ।

तत्र प्रथमा—

**असा॑वि॒सोमो॑अरु॒षोवृषा॒हरी॒राजे॑वद॒स्मोअ॒भिगा॑अचिक्रदत् ।**
**पुना॒नोवारं॒पर्ये॑त्य॒व्ययं॒श्ये॒नोनयोनिं॑घृ॒तवं॑न्तमा॒सद॑म् ॥ १ ॥**

असा॑वि । सोमः॑ । अ॒रु॒षः । वृषा॑ । हरिः॑ । राजा॑ऽइव । द॒स्मः ।
अ॒भि । गाः । अ॒चि॒क्र॒द॒त् । पु॒ना॒नः । वार॑म् । परि॑ । ए॒ति॒ ।
अ॒व्यय॑म् । श्ये॒नः । न । योनि॑म् । घृ॒तऽव॑न्तम् । आ॒ऽसद॑म् ॥ १ ॥

सोम । असावि अभिषुतोभूत् कीदृशः सोमः अरुष आरोचमानः वृषावर्षको हरिर्हरितवर्णः । सच राजेव दस्मोदर्शनीयः सन् गाउदकानि अभिलक्ष्य अचिक्रदच्छब्दंकरोति स्वरसनिर्मोकसमये । पश्चात्पुनानः पूयमानः अव्ययंवारं वालं दशापवित्रं पर्येति श्येनोन श्येनइव योनिं स्वकीयंस्थानं घृतवन्तमुदकवन्तं आसदं आसदनाय पवतइतिशेषः ॥ १ ॥

अथ द्वितीया—

**क॒विर्वे॑ध॒स्यापर्ये॑षि॒माहि॑न॒मत्यो॒नमृ॒ष्टोअ॒भिवाज॑मर्षसि ।**
**अ॒प॒सेध॑न्दुरि॒तासो॑ममृळय घृ॒तंवसा॑नः॒परि॑यासिनि॒र्णिज॑म् ॥ २ ॥**

कृविः । वेधस्या । परि । एषि । माहिनम् । अत्यः । न । मृष्टः ।
अभि । वाजम् । अर्षसि । अपऽसेधन् । दुःऽइता । सोम ।
मृळय । घृतम् । वसानः । परि । यासि । निःऽनिजम् ॥ २ ॥

हे सोम कविः क्रान्तदर्शी सन् वेधस्या यागविधानेच्छया माहिनं मंहनीयं पवित्रं पर्येषि परिगच्छसि पश्चान्मृष्टः प्रक्षालितः अत्योन अश्वइव वाजं संग्राममभ्यर्षसि । हे सोम दुरिता अस्माकं दुरितानि अपसेधन् परिहरन् मृळय सुखय । घृतमुदकं वसानआच्छादयन् परियासि अभिगच्छसि । किं निर्णिजं निर्णेजकं पवित्रं ॥ २ ॥

अथ तृतीया—

पुर्जन्यःपिता महिषस्यपर्णिनोनाभापृथिव्यागिरिषुक्षयंदधे ।
स्वसारआपोअभिगाउतासरन्त्संग्रावभिर्नसतेवीतेअध्वरे ॥ ३ ॥

पर्जन्यः । पिता । महिषस्य । पुर्णिनः । नाभा । पृथिव्याः ।
गिरिषु । क्षयम् । दधे । स्वसारः । आपः । अभि । गाः । उत ।
असरन् । सम् । ग्रावऽभिः । नसते । वीते । अध्वरे ॥ ३ ॥

यस्य महिषस्य महतः पर्णिनः पर्णवतः पतनवतोवा सोमस्य पर्जन्यः पिता जनकः ससोमः पृथिव्या नाभा नाभौ नाभिस्थानीये हविर्धानीये गिरिषु गिरिसंबन्धिग्रावसु क्षयं निवासं दधे धारयत्यभिषवसमये । उतापि स्वसारोंगुलय आपोवसतीवर्योगाः आशिरार्थाः स्तुतयोवाअभ्यसरन् अभिसरन्ति संनसते संगच्छतेच ग्रावभिः साकं । कुत्र वीते कान्ते अध्वरे यज्ञे ॥ ३ ॥

अथ चतुर्थी—

जायेवपत्यावधिशेवमंहसेपज्रायागर्भशृणुहिब्रवीमिते ।
अन्तर्वाणीषुप्रचरासुजीवसेनिन्द्योवृजनेसोमजागृहि ॥ ४ ॥

जायाऽइव । पत्यौ । अधि । शेवं । मंहसे । पज्रायाः । गर्भ ।
शृणुहि । ब्रवीमि । ते । अन्तः । वाणीषु । प्र । चर ।
सु । जीवसे । अनिन्द्यः । वृजने । सोम । जागृहि ॥ ४ ॥

जायेवपत्यौ जाया यथा स्वभार्या भर्तरि सुखंप्रयच्छति तद्वत् । शेव शेवं द्वितीयाया-आम् भावाभावश्छान्दसः सुखं मंहसे प्रयच्छसि यजमाने । हे पज्रायाः गर्भ सोम शृणुहि शृणु स्तुतीः यास्तेतुभ्यं ब्रवीमि । पजिर्गतिकर्मा । पज्रापृथिवीत्याहुः अपिवा माध्यमिकावाक् पज्रा भूमावोषधिरूपेण जातत्वाद्गर्भत्वं माध्यमिकायावाचोपि वृष्टिसाधनत्वात्तत्पुत्रत्वं । सत्वं वाणीषु वाक्षु स्तुतिष्वन्तर्मध्ये सुसुष्ठु प्रचर जीवसेस्माकं जीवनाय हे सोम अनिन्द्यः स्तुत्यस्त्वं वृजनेस्माकं शत्रुबले जागृहि बुद्धोभव ॥ ४ ॥

अथ पञ्चमी—

यथा॒पूर्वे॑भ्यःशत॒साअमृ॑ध्रःसह॒स्र॒साः॒पर्य॑या॒वाज॑मिन्दो ।
ए॒वाप॑वस्वसु॒वि॒ताय॒नव्य॑से॒तव॑व्र॒तमन्वाप॑ःसचन्ते ॥ ५ ॥ ७ ॥

यथा॑ । पूर्वे॑भ्यः । श॒त॒ऽसाः । अमृ॑ध्रः । स॒ह॒स्र॒ऽसाः । प॒रि॒ऽअया॑ः ।
वाज॑म् । इ॒न्दो॒ इति॑ । ए॒व । प॒व॒स्व॒ । सु॒वि॒ताय॑ । नव्य॑से ।
तव॑ । व्र॒तम् । अनु॑ । आप॑ः । स॒च॒न्ते॒ ॥ ५ ॥ ७ ॥

हे इन्दोसोम यथापूर्वेभ्योमहर्षिभ्यः स्तोतृभ्यः शतसाः शतसंख्याकस्यधनस्यदाता अमृध्रः अभवः तथा सहस्रसाश्च वाजमन्नं तस्यदाताचसन् पर्ययाः परिगच्छेः एवमेवमिदानीमपि नव्यसे नवतराय सुवितायाभ्युदयाय पवस्व क्षर । तव व्रतंकर्म अन्वापोवसतीवर्यः सचन्ते अतः पवस्व ॥ ५ ॥

॥ इति सप्तमस्य तृतीये सप्तमोवर्गः ॥ ७ ॥

पवित्रंतइति पंचर्चंषोडशंसूक्तं आंगिरसस्य पवित्रस्यार्षं जागतं पवमानसोमदेवताकं तथाचानुक्रान्तं—पवित्रंतेपवित्रइति । अभिष्टवे आद्येऋचौवक्तव्ये । सूत्रितंच—पवित्रंतेविततंब्रह्मणस्पतइतिद्वे वियत्पवित्रंधिषणाअतन्वतेति ।

तत्र प्रथमा—

प॒वित्रं॑ते॒वित॑तंब्रह्मणस्पते॒प्रभु॒र्गात्रा॑णि॒पर्ये॑षि॒वि॒श्वत॑ः ।
अत॑प्ततनू॒र्नतदा॒मोअ॑श्नुते॒शृता॒स॒इद्वह॑न्त॒स्तत्समा॑शत ॥ १ ॥

पुवित्र॑म् । ते॒ । वि॒ऽत॑तम् । ब्र॒ह्म॒णः॒ । प॒ते॒ । प्र॒ऽभुः । गात्रा॑णि ।
परि॑ । ए॒षि॒ । वि॒श्वतः॑ । अत॑प्तऽतनूः । न । तत् । आ॒मः ।
अ॒श्नु॒ते॒ । शृ॒तासः॑ । इत् । वह॑न्तः । तत् । सम् । आ॒श॒त॒ ॥ १ ॥

हे ब्रह्मणस्पते मंत्रस्यस्वामिन् सोम ते पवित्रं शोधकं अंगं विततं सर्वत्र विस्तृतं सप्रभुः प्रभविता त्वं गात्राणि पातुरंगानि पर्येषि परिगच्छसि । विश्वतः सर्वतः तव तत्पवित्रं अतप्ततनूः पयोव्रतादिना असंतप्तगात्रः आमः अपरिपक्कोनाश्नुते नव्यामोति । शृतासइत् शृताएव परिपक्वाएव वहन्तोयागं निर्वहन्तः तत्पवित्रं समाशत व्यामुवन्ति ॥ १ ॥

अथ द्वितीया—

तपो॑ष्प॒वित्रं॒वित॑तंदि॒वस्प॒देशोच॑न्तोअस्य॒तन्त॑वो॒व्य॑स्थिरन् ।
अव॑न्त्यस्यपवी॒तार॑मा॒शवो॑दि॒वस्पृ॒ष्ठमधि॑तिष्ठन्ति॒चेत॑सा ॥ २ ॥

तपोः॑ । प॒वित्र॑म् । वि॒ऽत॑तम् । दि॒वः । प॒दे । शोच॑न्तः । अ॒स्य॒ ।
तन्त॑वः । वि । अ॒स्थि॒र॒न् । अव॑न्ति । अ॒स्य॒ । प॒वि॒तार॑म् ।
आ॒शवः॑ । दि॒वः । पृ॒ष्ठम् । अधि॑ । ति॒ष्ठ॒न्ति॒ । चेत॑सा ॥ २ ॥

तपोः शत्रूणांतापकस्य सोमस्य पवित्रं शोधकमंगं तेजोवादिवस्पदे द्युलोकस्योच्छ्रिते स्थाने विततं विस्तृतं । तृतीयस्यामितोदिविसोमआसीदितिब्राह्मणं । अस्यतन्तवोंशवः शोचन्तोदीप्यमाना व्यस्थिरन्विविधं तिष्ठन्ति पृथिव्यां हविर्धानेवा अस्यसोमस्यआशवः शीघ्रगामिनोरसा अवन्ति रक्षन्ति । कं पवितारं पावयितारं यजमानमवन्ति रक्षन्ति होमद्वारा । पश्चात् हुताः दिवोद्युलोकस्यपृष्ठं पृष्ठभागमुन्नतदेशं चेतसाबुध्यादेवगमनेच्छावत्या अधितिष्ठन्ति आश्रयन्ते ॥ २ ॥

अभिष्टवे अरूरुचदित्येषा आवपनीया । सूत्रितंच—ईळेद्यावापृथिवीइति प्रागुत्तमायाअरूरुचदुषसःपृश्निरग्रियइत्यावपेतेति ।

---

१ तै० ब्रा० ३. २. १. ।

सैषासूक्ते तृतीया—

अरूरुचदुषसःपृश्निरग्रियउक्षाबिभर्तिभुवनानिवाजयुः ।
मायाविनोममिरेअस्यमाययानृचक्षसःपितरोगर्भमादधुः ॥ ३ ॥

अरूरुचत् । उषसः । पृश्निः । अग्रियः । उक्षा । बिभर्ति ।
भुवनानि । वाजऽयुः । मायाऽविनः । ममिरे । अस्य ।
मायया । नृऽचक्षसः । पितरः । गर्भम् । आ । दधुः ॥ ३ ॥

उषसःसंबन्धी पृश्निरादित्यः । पृश्निरादित्योभवतिप्राश्नुतएनंवर्णइतिनिरुक्तं । अग्रियो मुख्यः सोयंसोमः अरूरुचत् रोचयति सउक्षा जलस्यसेक्ता बिभर्ति पुष्णात्युदकेन भुवनानि भूतजातानि वाजयुः तेषामन्नमिच्छन् मायाविनः मायाप्रज्ञा प्रज्ञावन्तः अस्यसोमस्य मायया प्रज्ञया ममिरे निर्मांति सोमस्यैकैकांशपानेनजातबलाअग्न्यादयः स्वस्वव्यापारेणजगत्सृजंतीत्यर्थः । तथास्यमायया नृचक्षसोनृणांद्रष्टारः पालकादेवाः अंगिरसः पितरोवागर्भमादधुः धारयंति ओषधीषु वा अत्रसूर्यात्मासोमःस्तूयते सूर्यरश्म्यनुगमाधीनवर्धनाच्चन्द्रस्य । अयमुषसः पृश्निःसविता अरूरुचत् रोचयति सर्वंरोचतेवा शिष्टंसमानं । तत्संबंधिनः नृचक्षसः नृणांद्रष्टारः पितरोजगद्रक्षकारश्मयोगर्भमादधुः वृष्ट्यर्थम् ॥ ३ ॥

अभिष्टवे खरमवेक्ष्यमाणो गंधर्वइत्थेत्येतांपठेत् । सूत्रितंच—गंधर्वइत्थापदमस्यरक्षतीति खरमवेक्ष्येति ।

सैषा चतुर्थी—

गन्धर्वइत्थापदमस्यरक्षतिपातिदेवानांजनिमान्यद्भुतः ।
गृभ्णातिरिपुंनिधयानिधापतिःसुकृत्तमामधुनोभक्षमाशत ॥ ४ ॥

गन्धर्वः । इत्था । पदम् । अस्य । रक्षति । पाति । देवानाम् ।
जनिमानि । अद्भुतः । गृभ्णाति । रिपुम् । निऽधया । निधाऽपतिः ।
सुकृत्ऽतमाः । मधुनः । भक्षम् । आशत ॥ ४ ॥

---

1 नि० २. १४.

गंधर्वः उदकानांस्तुतीनांवाधारक आदित्यः अस्य सोमस्यपदं स्थानं द्युसंबन्धिनं इत्थासत्यं रक्षति । सोयंसोमोदेवानां जनिमानि जन्मानि देवानित्यर्थः पातिरक्षति । अद्भुतोमहान् । किंचायंरिपुं अस्मद्वैरिणं निधया निधा पाश्या पाशसमूहेन गृभ्णाति गृह्णाति निधापतिः पशुसमूहस्वामी तस्यास्यमधुनः मधुररसस्यभक्षं सुकृत्तमाः अतिशयेनसुकृतकर्तारः एवआशत प्राप्नुवन्ति ॥ ४ ॥

अन्तिमेप्रवर्ग्ये परिधानीयायाःपूर्वं हविर्हविष्मइत्येषावपनीया। सूत्रितंच—उत्तमेप्रागुत्तमायाहविर्हविष्मोमहिसद्मदैव्यमित्यावपेतेति ।

सैषा पंचमी—

**हविर्ह॑विष्मो॒महि॒सद्म॒दैव्यं॒नभो॒वसा॑नः॒परि॑यास्यध्व॒रम् ।**
**राजा॑प॒वित्र॑रथो॒वाज॒मारु॑हः॒स॒हस्र॑भृष्टिर्जयसि॒श्रवो॑बृ॒हत् ॥५॥८॥**

ह॒विः । ह॒वि॒ष्म॒ः । महि॑ । सद्म॑ । दैव्य॑म् । नभ॑ः । वसा॑नः ।
परि॑ । या॒सि॒ । अ॒ध्व॒रम् । राजा॑ । प॒वित्र॑ऽरथः । वाज॑म् । आ ।
अ॒रु॒हः॒ । स॒हस्र॑ऽभृष्टिः । ज॒य॒सि॒ । श्रव॑ः । बृ॒हत् ॥ ५ ॥ ८ ॥

हे हविष्मः हविरित्युदकनाम उदकवन् सोम हविर्भूतं नभ उदकनामैतत् उदकरसमित्यर्थः वसानः आच्छादयन् महि महत् दैव्यंसद्म यागगृहं परियासि परिगच्छस्यध्वरंनिवोढुं । किंच हे सोम राजा पवित्ररथश्च वाजं संग्रामं आरुहः आरोहसि यद्वा तत्रतत्र संग्रामवाचकेनशब्देन यज्ञव्यवहारदर्शनादत्र वाजोयज्ञाख्यसंग्रामः तमारुहः यथाकश्चिद्राजा रथमारुह्य स्वस्थानंप्रविशति तद्वदितिभावः । किंच सहस्रभृष्टिः बहुभ्रंशः अपरिमितगमनइत्यर्थः । अथवा भृष्टिरायुधं असंख्यातायुधःसन् बृहत्श्रवः महदन्नं जयसि अस्माकं ॥ ५ ॥

॥ इति सप्तमस्य तृतीयेष्टमोवर्गः ॥ ८ ॥

पवस्वदेवमादनइति पंचर्चंसप्तदशंसूक्तं वाचापुत्रस्य प्रजापतेरार्षं जागतं पवमानसोमदेवताकं । तथाचानुक्रान्तं—पवस्ववाच्यः प्रजापतिरिति । गतोविनियोगः ।

तत्र प्रथमा—

**पव॑स्वदेव॒माद॑नो॒विच॑र्षणिर॒प्सा इन्द्रा॑य॒वरु॑णाय॒वा॒यवे॑ ।**
**कृ॒धीनो॑अ॒द्यवरि॑वः॒स्व॒स्ति॒मदु॑रु॒क्षि॒तौगृ॑णी॒हि॒दैव्यं॒जन॑म् ॥ १ ॥**

पवस्व । देवऽमादनः । विऽचर्षणिः । अप्साः । इन्द्राय । वरुणाय । वायवे । कृधि । नः । अद्य । वरिवः । स्वस्तिऽमत् । उरुऽक्षितौ । गृणीहि । दैव्यम् । जनम् ॥ १ ॥

हे सोम देवमादनो देवानांमादयिता विचर्षणिः विद्रष्टा अप्साः अपांदातात्वं पवस्व क्षर । कस्मै इन्द्राय वरुणाय वायवे नोस्माकं वरिवोधनं स्वस्तिमत् । स्वस्तात्यविनाशनाम । तद्वद्धनं अद्य इदानीं कृधि कुरु । उरुक्षितौ विस्तीर्णायांभूमौ यज्ञसंबन्धिन्यां दैव्यंजनं देवसंबन्धिनंसंघं जनशब्दःसंघवाची तंगृणीहि गृणातिःशब्दकर्मा शब्दय यथा त्वदीयाभिषवशब्दंश्रुत्वा देवाआगच्छन्ति तथागृणीहीत्यर्थः । अथवा दैव्यंजनमित्यृषिः स्वात्मानमाह देवसंबंधिनंजनं मांगृणीहि साधुसंभक्तेति शब्दय ॥ १ ॥

अथ द्वितीया—

आयस्तस्थौभुवनान्यमर्त्योविश्वानिसोमःपरितान्यर्षति ।
कृण्वन्त्संचृतंविचृतमभिष्टयइन्दुःसिषक्त्युषसंनसूर्यः ॥ २ ॥

आ । यः । तस्थौ । भुवनानि । अमर्त्यः । विश्वानि । सोमः । परि । तानि । अर्षति । कृण्वन् । सम्ऽचृतम् । विऽचृतम् । अभिष्टये । इन्दुः । सिसक्ति । उषसम् । न । सूर्यः ॥ २ ॥

यः अमर्त्योदेवः सोमोभुवनानि लोकानातस्थौ आस्थितवान् तानि विश्वानि सर्वाणि भुवनानि पर्यर्षति परितोगच्छति परितोरक्षतीत्यर्थः । सोयमिंदुः यज्ञं यजमानंवा संवृतं देवैःफलैर्वा संबद्धं कृण्वन् कुर्वन् विचृतं असुरादिभिः दुःखैर्वाविमुक्तं कृण्वन् अभितोयागाय सिषक्ति सेवते यज्ञं । उषसंनसूर्यः सूर्यउषसमिव । यथा । अभिष्टये अभितोगमनाय प्राणिनां संचृतं प्रकाशैःसंयुक्तं विचृतं तमोभिर्विमुक्तंच लोकंकुर्वन्नुषसं सेवते तद्वत् ॥ २ ॥

अथ तृतीया—

आयोगोभिःसृज्यतओषधीष्वादेवानांसुम्नइषयन्नुपावसुः ।
आविद्युतापवतेधारयासुतइन्द्रंसोमोमादयन्दैव्यंजनम् ॥ ३ ॥

आ । यः । गोभिः । सृज्यते । ओषधीषु । आ । देवानाम् ।
सुम्ने । इषयन् । उपऽवसुः । आ । विऽद्युता । पवते । धारया ।
सुतः । इन्द्रम् । सोमः । मादयन् । दैव्यम् । जनम् । ॥ ३ ॥

यः सोमोगोभिः रश्मिभिः आसृज्यते ओषधीषु यंसोमं स्थापयन्तीत्यर्थः । किमर्थं देवानां सुम्ने सुखे निमित्तेसति कीदृशोयः इषयन् देवान् प्राप्तुमिच्छन् इषगतौ । धनमिच्छन्वा तथा उपावसुः शत्रुभ्यः सकाशात्प्राप्तधनः ससोमो विद्युता विद्योतमानया धारया आपवते सुतःसन् । किंकुर्वन् दैव्यं देवस्वामिनं इन्द्रं जनं देवसंबंधिसंघं मादयन् ॥ ३ ॥

अथ चतुर्थी—

एषस्यसोमः पवतेसहस्रजिद्धिन्वानोवाचमिषिरामुषर्बुधम् ।
इन्दुःसमुद्रमुदियर्तिवायुभिरेन्द्रस्यहार्दिकलशेषुसीदति ॥ ४ ॥

एषः । स्यः । सोमः । पवते । सहस्रऽजित् । हिन्वानः । वाचम् ।
इषिराम् । उषःऽबुधम् । इन्दुः । समुद्रम् । उत् । इयर्ति ।
वायुऽभिः । आ । इन्द्रस्य । हार्दि । कलशेषु । सीदति ॥ ४ ॥

एषः स्यः सः सोमः पवते पूयते । कीदृशएषः सहस्रजित् सहस्रजेता किंकुर्वन् वाचं ऋत्विजां स्तुतिरूपांवाचं हिन्वानः प्रेरयन् कीदृशींवाचं इषिरां गमनशीलां स्तुत्यंप्रतिगंत्रीं उषर्बुधं उषसिप्रबुद्धं सोयमिन्दुः सोमः समुद्रं समुद्रियंरसं उदियर्ति उद्गमयति । वायुभिर्गंतृभिरध्वर्य्वादिभिः वायुरेववाप्रेर्यमाणः सन् तथेन्द्रस्यहार्दि हार्दं प्रियं तद्धार्दीन्द्रस्य प्रियवद्यथाभवति तथा कलशेषु द्रोणकलशप्रभृतिष्वासीदति ॥ ४ ॥

अथ पंचमी—

अभित्यंगावःपयसापयोवृधंसोमंश्रीणंतिमतिभिःस्वर्विदम् ।
धनंजयःपवतेकृत्व्योरसोविप्रःकविःकाव्येनास्वर्चनाः ॥ ५ ॥ ९ ॥

अभि । त्यम् । गावः । पयसा । पयःऽवृधम् । सोमम् । श्रीणन्ति ।
मतिऽभिः । स्वःऽविदम् । धनम्ऽजयः । पवते । कृत्व्यः । रसः ।
विप्रः । कविः । काव्येन । स्वःऽचनाः ॥ ५ ॥ ९ ॥

त्यं तं पयोवृधं पयसोवर्धकं सोमं गावः पयसा स्वकीयेन क्षीरेण अभिश्रीणन्ति श्रयणं कुर्वन्ति। योमतिभिः स्तुतिभिः सर्वंप्रयच्छति तं स्वर्विदं सोमं श्रीणन्ति सधनंजयः शत्रुधनानां जेतासोमः काव्येन कर्मणापवते पूयते। कीदृशः सक्रत्व्यः कर्मण्यः रसोरसरूपः विप्रोमेधावी कविःक्रांतप्रज्ञः स्वर्चनाः सर्वान्नः चनइत्यन्ननाम ॥ ५ ॥

॥ इति सप्तमस्य तृतीये नवमोवर्गः ॥ ९ ॥

इन्द्रायइति द्वादशर्चंअष्टादशंसूक्तं भृगुगोत्रस्य वेनस्यार्षं पवमानसोमदेवताकं एकादशी-द्वादश्यौत्रिष्टुभौ शिष्टाजगत्यः। तथाचानुक्रान्तं–इन्द्रायद्वादश वेनोभार्गवोद्विनिष्टुबन्तमिति। गतोविनियोगः।

तत्र प्रथमा–

इन्द्रा॑यसोमसु॒षु॑तः॒परि॑स्र॒वापामी॑वाभवतु॒रक्ष॑सासह ।
मा॒तेर॑सस्यमत्सतद्वया॒विनो॒द्रवि॑णस्वन्तइ॒हस॒न्त्विन्द॑वः ॥ १ ॥

इन्द्रा॑य । सो॒म॒ । सु॒ऽसु॑तः । परि॑ । स्र॒व॒ । अप॑ । अमी॑वा । भ॒व॒तु॒ । रक्ष॑सा । स॒ह । मा । ते॒ । रस॑स्य । म॒त्स॒त॒ । द्व॒या॒विनः॑ । द्रवि॑णस्वन्तः । इ॒ह । स॒न्तु॒ । इन्द॑वः ॥ १ ॥

हे सोम त्वं सुषुतः सुष्ठु अभिषुतःसन् इन्द्राय इन्द्रार्थं परिस्रव परितःस्रव गच्छ रसंमुंच। अमीवारोगः रक्षसासह अपभवतु अपगतोवियुक्तोभवतु ते तव रसस्य स्वांशंरसंपीत्वा माम-त्सत मामाद्यन्तु के द्वयाविनः द्वयं सत्यानृतं तेनयुक्ताः पापिनइत्यर्थः किंच इन्दवस्तेरसाः इ-हास्मिन्यज्ञे द्रविणस्वन्तः धनवंतः सन्तु भवन्तु ॥ १ ॥

अथ द्वितीया–

अ॒स्मान्त्सं॑म॒र्येप॑वमानचोदयद॒क्षोदे॒वाना॒मसि॒हि॒प्रि॒योमद॑ः ।
ज॒हि॒शत्रूँ॑र॒भ्याभ॑न्दनाय॒तःपिबे॑न्द्रसोम॒मव॑नो॒मृधो॒जहि ॥ २ ॥

अ॒स्मान् । सं॒ऽम॒र्ये । प॒व॒मा॒न॒ । चो॒द॒य॒ । दक्षः॑ । दे॒वाना॑म् । असि॑ । हि । प्रि॒यः । मद॑ः । ज॒हि । शत्रू॑न् । अ॒भि । आ । भ॒न्द॒ना॒ऽय॒तः । पिब॑ । इ॒न्द्र॒ । सोम॑म् । अव॑ । नः॒ । मृधः॑ । ज॒हि ॥ २ ॥

हे पवमानसोम अस्मान्समर्ये संग्रामे चोदय प्रेरय दक्षोह्यसि समर्थः खलु भवसि देवानांमध्ये । यद्वा देवानां प्रीणनाय दक्षोसि यद्वा दक्षस्त्वं देवानांप्रियः प्रियकरोमदोमादयितासि हि। जहिचशत्रूनस्माकं अभ्यागच्छचास्मान्प्रति। भंदनायतः भंदनाःस्तुतयः भंदतेःस्तुतिकर्मणः ताइच्छतः पिब हे इन्द्र सोमं अवजहि नोस्माकं संग्रामकारिणो जहि मृधः संग्रामात् ॥ २ ॥

अथ तृतीया—

अदब्धइन्दोपवसेमदिन्तमआत्मेन्द्रस्यभवसिधासिरुत्तमः ।
अभिस्वरन्तिबहवोमनीषिणोराजानमस्यभुवनस्यनिंसते ॥ ३ ॥

अदब्धः । इन्दो इति । पवसे । मदिन्ऽतमः । आत्मा । इन्द्रस्य ।
भवसि । धासिः । उत्ऽतमः । अभि । स्वरन्ति । बहवः ।
मनीषिणः । राजानम् । अस्य । भुवनस्य । निंसते ॥ ३ ॥

हे इन्दो क्लिद्यमानसोम अदब्धः अहिंसितोमदिन्तमोमादयितृतमस्त्वं पवसे पूयसे आत्मास्वयमेव उत्तमस्त्वं इन्द्रस्यधासिः अन्नंभवसि अस्यभुवनस्यराजानंसोमं बहवोमनीषिणः स्तोतारोभिस्वरंति अभिष्टुवन्ति निंसते गच्छन्तिवा ॥ ३ ॥

अथ चतुर्थी—

सहस्रणीथःशतधारोअद्भुतइन्द्रायेन्दुःपवतेकाम्यंमधु ।
जयन्क्षेत्रमभ्यर्षाजयन्नपउरुंनोगातुंकृणुसोममीढ्वः ॥ ४ ॥

सहस्रऽनीथः । शतऽधारः । अद्भुतः । इन्द्राय । इन्दुः । पवते ।
काम्यम् । मधु । जयन् । क्षेत्रम् । अभि । अर्ष । जयन् ।
अपः । उरुम् । नः । गातुम् । कृणु । सोम । मीढ्वः ॥ ४ ॥

सहस्रनीथो बहुप्रकारनयनः शतधारः अपरिमितधारोपेतः अद्भुतः आश्चर्यकरोमहानिन्दुः इन्द्राय काम्यं मधुपवते । किंच क्षेत्रमस्मभ्यं जयन् अपश्चजयन् अभ्यर्ष अभिगच्छपवित्रं। हेसोम मीढ्वः सेक्तः गातुं मार्गं नोस्माकं उरुंविस्तीर्णं कृणु कुरु ॥ ४ ॥

अथ पञ्चमी—

कनिक्रदत्कलशेगोभिरज्यसेव्य१व्ययंसमयावारमर्षसि ।
मर्मृज्यमानोअत्योनसानसिरिन्द्रस्यसोमजठरेसमक्षरः ॥ ५ ॥

कनिक्रदत् । कलशे । गोभिः । अज्यसे । वि । अव्ययम् ।
समया । वारम् । अर्षसि । मर्मृज्यमानः । अत्यः । न ।
सानसिः । इन्द्रस्य । सोम । जठरे । सम् । अक्षरः ॥ ५ ॥

हेसोम कनिक्रदत्शब्दंकुर्वन् कलशेवर्तमानो गोभिः पयोभिः अज्यसे सिक्तोभवसि । अव्ययं अविमयं वारं वालं दशापवित्रं समया तत्समीपे व्यर्षसि विविधंगच्छसि मर्मृज्यमानः शोध्यमानः अत्योन अश्वइव सानसिः संभजनशीलस्त्वं हेसोम इन्द्रस्यजठरे समक्षरः सम्यक्क्षरसि ॥ ५ ॥

अथ षष्ठी—

स्वादुःपवस्वदिव्यायजन्मनेस्वादुरिन्द्रायसुहवीतुनाम्ने ।
स्वादुर्मित्रायवरुणायवायवेबृहस्पतयेमधुमाँअदाभ्यः ॥ ६ ॥ १० ॥

स्वादुः । पवस्व । दिव्याय । जन्मने । स्वादुः । इन्द्राय ।
सुहवीतुऽनाम्ने । स्वादुः । मित्राय । वरुणाय । वायवे । बृहस्पतये ।
मधुऽमान् । अदाभ्यः ॥ ६ ॥ १० ॥

हेसोम स्वादुस्त्वं दिव्याय जन्मने देवगणाय पवस्व तथा सुहवीतुनाम्ने शोभनाह्वाननामधेयायेन्द्रायत्वंपवस्व मित्राय वरुणाय वायवे बृहस्पतयेच पवस्व मधुमान् मधुररसः अदाभ्यः अन्यैरहिंस्यस्त्वं ॥ ६ ॥

॥ इति सप्तमस्य तृतीये दशमोवर्गः ॥ १० ॥

अथ सप्तमी—

अत्यंमृजन्तिकलशेदशक्षिपःप्रविप्राणांमतयोवाचईरते ।
पवमानाअभ्यर्षन्तिसुष्टुतिमेन्द्रंविशन्तिमदिरासइन्दवः ॥ ७ ॥

अत्य॑म् । मृ॒जन्ति॒ । क॒लशे॑ । दश॑ । क्षिपः॑ । प्र । विप्रा॑णाम् ।
म॒तयः॑ । वाचः॑ । ई॒र॒ते॒ । पव॑मानाः । अ॒भि । अ॒र्ष॒न्ति॒ ।
सु॒ऽस्तुतिम् । आ । इन्द्र॑म् । वि॒श॒न्ति॒ । म॒दि॒रासः॑ । इन्द॑वः ॥ ७ ॥

अत्यमतनवन्तमश्वस्थानीयंवा सोमं कलशे दशक्षिपोदशांगुलयः अध्वर्युसंबन्धिन्यो-मृजन्ति शोधयन्ति । तथा विप्राणांमध्ये मतयः स्तोतारोवाचः स्तुतीरीरते प्रेरयन्ति । पवमानाः सोमाः अभ्यर्षन्ति । अभिगच्छन्ति । सुष्टुतिं शोभनस्तुतिं इन्द्रं मदिरासोमदकराइन्दवः सोमाः आविशंति प्रविशन्ति ॥ ७ ॥

अथाष्टमी—

पव॑मानो अ॒भ्य॑र्षा सु॒वीर्य॑मु॒र्वीं गव्यू॑तिं म॒हि शर्म॑ स॒प्रथः॑ ।
माकि॑र्नो अ॒स्य परि॑षूति॒रीश॒तेन्दो॒ जये॑म॒ त्वया॒ धनं॑धनम् ॥ ८ ॥

पव॑मानः । अ॒भि । अ॒र्ष॒ । सु॒ऽवीर्य॑म् । उ॒र्वीम् । गव्यू॑तिम् । म॒हि ।
शर्म॑ । स॒ऽप्रथः॑ । माकिः॑ । नः॒ । अ॒स्य । परि॑ऽसूतिः । ई॒श॒त॒ ।
इन्दो॒ इति॑ । जये॑म । त्वया॑ । धन॑म्ऽधनम् ॥ ८ ॥

हे सोम पवमानः पूयमानस्त्वं सुवीर्यं उर्वीं महतीं गव्यूतिं गोमार्गंच महि महत् सप्रथः सर्वतः पृथु शर्म गृहं सुखंवा अभ्यर्ष अभिगमय नोस्माकमस्यकर्मणः परिषूतिः हिंसायाः परिप्रेरकोद्वेषी माकिरीशत मैश्वरोभवतु हेइन्दो सोम त्वया साधनेन धनंधनं सर्वमपिधनं जयेम ॥ ८ ॥

अथ नवमी—

अधि॒ द्याम॑स्थाद्वृष॒भो वि॑चक्ष॒णोऽरू॑रुच॒द्वि दि॒वो रो॑च॒ना क॒विः ।
राजा॑ प॒वित्र॒मत्ये॑ति॒ रोरु॑वद्दि॒वः पी॒यूषं॑ दुहते नृ॒चक्ष॑सः ॥ ९ ॥

अधि॑ । द्याम् । अ॒स्था॒त् । वृ॒ष॒भः । वि॒ऽच॒क्ष॒णः । अरू॑रुचत् ।
वि । दि॒वः । रो॒च॒ना । क॒विः । राजा॑ । प॒वित्र॑म् । अति॑ । ए॒ति॒ ।
रोरु॑वत् । दि॒वः । पी॒यूष॑म् । दु॒ह॒ते॒ । नृ॒ऽचक्ष॑सः ॥ ९ ॥

अधि उपरि अस्थात् अवस्थात् द्यां द्युलोकं वृषभोवर्षिता विचक्षणो विद्रष्टायं सोमः तथाकृत्वा दिवोद्युलोकसंबंधीनि रोचना रोचमानानि नक्षत्रादीनि व्यरूरुचत् विविधं रोचयति । कविः क्रान्तप्रज्ञः सन् राजासोमः पवित्रं दशापवित्रं अत्येति अतिक्रम्यगच्छति । रोरुवत् शब्दंकुर्वन् दिवोद्युलोकस्य पीयूषं सारं रसं नृचक्षसः नृणांद्रष्टारः सोमा दुहते स्रवन्ति स्वकीयंरसमान्तरिक्ष्यमुदकंवा दुहन्तीत्यर्थः ॥ ९ ॥

अथ दशमी—

दिवोनाकेमधुजिह्वाअसश्चतोवेनादुहन्त्युक्षणंगिरिष्ठाम् ।
अप्सुद्रप्संवावृधानंसमुद्रआसिन्धोरूर्मामधुमन्तंपवित्रआ ॥ १० ॥

दिवः । नाके । मधुऽजिह्वाः । असश्चतः । वेनाः । दुहन्ति ।
उक्षणम् । गिरिऽस्थाम् । अप्ऽसु । द्रप्सम् । वावृधानम् । समुद्रे ।
आ । सिन्धोः । ऊर्मा । मधुऽमन्तम् । पवित्रे । आ ॥ १० ॥

दिवोद्योतमानस्ययज्ञस्य संबंधिनि नाके दुःखरहिते हविर्धानाख्येस्थाने मधुजिह्वाः मधुरवाचः असश्चतः असंसक्ताः पृथक्पृथगित्यर्थः । यद्वा चिरमकृत्वा शीघ्रमभिषुण्वन्तोवेना एतन्नामकामहर्षयो दुहन्ति अभिषुण्वन्ति । यद्वा द्युलोकएव वेनाः कांताः देवादुहन्ति तंसोमं उक्षणं सेक्तारं गिरिष्ठां गिरौउन्नतेदेशे वर्तमानं अप्सूदकेषु वसतीवरीषु अन्तर्वृधानं वर्धमानं द्रप्सं रसरूपं समुद्रे समुद्रवत् प्रवृद्धेद्रोणकलशे सिन्धोरुदकस्य ऊर्मा ऊर्मौ पूरेआसिंचंतीतिशेषः तदर्थं मधुमन्तं माधुर्योपेतंरसं पवित्रे दशापवित्रे आसिंचन्तीतिशेषः ॥ १० ॥

अथैकादशी—

नाकेसुपर्णमुपपप्तिवांसंगिरोवेनानामकृपन्तपूर्वीः ।
शिशुंरिहन्तिमतयःपनिप्नतंहिरण्ययंशकुनंक्षामणिस्थाम् ॥ ११ ॥

नाके । सुऽपर्णम् । उपपप्तिऽवांसम् । गिरः । वेनानाम् । अकृपन्त ।
पूर्वीः । शिशुम् । रिहन्ति । मतयः । पनिप्नतम् । हिरण्ययम् ।
शकुनम् । क्षामणि । स्थाम् ॥ ११ ॥

नाके द्युलोके वर्तमानं सुपर्णं शोभनपर्णोपेतं पश्चात् उपपतिवांसं उपपतयन्तंसोमं वेनानां स्तोतॄणामस्माकं संबन्धिन्यः पूर्वीर्बह्वीर्गिरः स्तुतयः उपाकृपन्त उपकल्पन्ते अभिष्टुवन्तीत्यर्थः। तं शिशुं शिशुवत्संस्कर्तव्यंसोमं मतयः स्तुतयः रिहन्ति लिहन्ति। संस्पृशन्ति प्राप्नुवन्तीत्यर्थः। कीदृशं शिशुं पनिप्नतं शब्दायन्तं पनतेर्यङ्लुगन्तात्शतरि अभ्यासस्यनिगागमउपधालोपश्च। हिरण्ययं हिरण्मयं शकुनं पक्षिणं क्षामणि क्षमायां स्थां हविर्धानेस्थां वर्तमानं ॥ ११ ॥

अथ द्वादशी—

ऊर्ध्वोगन्धर्वोअधिनाकेअस्थाद्विश्वारूपाप्रतिचक्षाणोअस्य।
भानुःशुक्रेणशोचिषाव्यद्यौत्प्रारूरुचद्रोदसीमातराशुचिः॥१२॥११॥

ऊर्ध्वः। गन्धर्वः। अधि। नाके। अस्थात्। विश्वा। रूपा।
प्रतिऽचक्षाणः। अस्य। भानुः। शुक्रेण। शोचिषा। वि। अद्यौत्।
प्र। अरूरुचत्। रोदसी इति। मातरा। शुचिः॥ १२ ॥ ११ ॥

ऊर्ध्वउन्नतोगंधर्वोरश्मीनांधारकः सोमोनाके आदित्ये अध्यस्थात् अधितिष्ठति किंकुर्वन् अस्यादित्यस्य विश्वा विश्वानि रूपा रूपाणि प्रतिचक्षाणः प्रतिपश्यन् भानुरादित्यः सोमाधिष्ठितः सन् शुक्रेण दीप्तेन शोचिषा तेजसा व्यद्यौत् विद्योतते नकेवलंस्वयमेव अपितु मातरा-निर्मात्र्यौ रोदसी द्यावापृथिव्यौ प्रारूरुचत् प्ररोचयति शुचिर्दीप्तः सूर्यः ॥ १२ ॥

॥ इति सप्तमस्य तृतीये एकादशोवर्गः ॥ ११ ॥

॥ इति नवमे मंडले चतुर्थोनुवाकः ॥ ४ ॥

इत्थंदाशतयीमध्ये नवमेमंडलेस्फुटम्। अनुवाकश्चतुर्थोयं संगमेनप्रदर्शितः ॥ १ ॥

अथपंचमेचानुवाके एकादशसूक्तानि तत्र प्रतइत्यष्टाचत्वारिंशदृचं प्रथमंसूक्तं। प्रथम-दशर्चस्य आकृष्टाइतिमाषाइतिच द्विनामानऋषिगणाद्रष्टारः। द्वितीयस्यदशर्चस्य सिकताइति निवावरीइति द्विनामानऋषिगणाः। तृतीयस्यदशर्चस्य पृश्नयइतिअजाइतिचनामद्वयोपेताऋ-षिगणाः। अदृष्टार्थमेषांद्विनामत्वमवगंतव्यं। चतुर्थस्यदशर्चस्य आकृष्टामाषाइत्यादिद्विनामा-नस्त्रयोगणाः द्रष्टारः। आत्रेयइतिनामानमुनयोगणद्रष्टारः। एवंचत्वारिंशदृताः अथपंचानांभौमो-

त्रिऋषिः ततस्तिसृणांगृत्समदः । जगतीछन्दः पवमानसोमोदेवता । तथाचानुक्रान्तं—प्रतेष्टाचत्वारिंशदृषिगणादशर्चा आकृष्टामाषाःप्रथमे सिकतानिवावरीद्वितीये पृश्नयोऽजास्तृतीये त्रयश्चतुर्थेत्रिःपंचान्त्यास्तिस्रोगृत्समदइति । गतोविनियोगः ।

तत्र प्रथमा—

प्रतेआशवःपवमानधीजवोमदाअर्षन्तिरघुजाइवत्मना ।
दिव्याःसुपर्णामधुमन्तइन्दवोमदिन्तमासःपरिकोशमासते ॥ १ ॥

प्र । ते । आशवः । पवमान । धीऽजवः । मदाः । अर्षन्ति ।
रघुजाःऽइव । त्मना । दिव्याः । सुऽपर्णाः । मधुऽमन्तः । इन्दवः ।
मदिन्ऽतमासः । परि । कोशम् । आसते ॥ १ ॥

हे पवमान पूयमान सोम ते तव आशवोव्याप्ताः धीजवोमनोवेगामदाः मदकरारसाः अर्षन्ति गच्छन्ति त्मना आत्मनैव अनायासेनइत्यर्थः । कइव रघुजाइव रघुःशीघ्रगावडवा तत्रजाता रघुजास्तेइव निर्गतास्तेदिव्याः दिविभवाः अन्तरिक्षे दशापवित्रे धार्यमाणाइत्यर्थः । सुपर्णाः सुपतनाः मधुमन्तोमाधुर्योपेताः मदिन्तमासः अतिशयेनमादयितृतमाः इन्दवोदीप्तारसाः कोशंद्रोणकलशं पर्यासते पर्युपविशंति ॥१॥

अथ द्वितीया—

प्रतेमदासोमदिरासआशवोसृक्षतरथ्यासोयथापृथक् ।
धेनुर्नवत्संपयसाभिवज्रिणमिन्द्रमिन्दवोमधुमन्तऊर्मयः ॥ २ ॥

प्र । ते । मदासः । मदिरासः । आशवः । असृक्षत । रथ्यासः ।
यथा । पृथक् । धेनुः । न । वत्सम् । पयसा । अभि । वज्रिणम् ।
इन्द्रम् । इन्दवः । मधुऽमन्तः । ऊर्मयः ॥ २ ॥

प्रासृक्षत प्रसृज्यन्ते ते तव मदिरासोमदकरा आशवोव्याप्ता मदासः सोमरसाः । कइव रथ्यासोरथ्याअश्वास्तेयथा तथापृथक् प्रसृज्यन्ते तेमधुमन्तोमाधुर्योपेताऊर्मयः प्रवृद्धरसाः इन्दवः सोमाः धेनुः पयसा वत्समिव स्वरसेन वज्रिणमिन्द्रमभिगच्छन्ति ॥ २ ॥

अथ तृतीया—

अत्यो॒नहि॑या॒नोअ॒भिवाज॑मर्ष॒स्व॒र्वित्कोश॑न्दि॒वोअद्रि॑मातरम् ।
वृषा॑प॒वित्रे॒अधि॒सानो॑अ॒व्यये॒सोमः॑पुना॒नइ॑न्द्रि॒याय॒धाय॑से ॥ ३ ॥

अत्यः॑ । न । हि॒या॒नः । अ॒भि । वाज॑म् । अ॒र्ष॒ । स्वः॒ऽवित् ।
कोश॑म् । दि॒वः । अद्रि॑ऽमातरम् । वृषा॑ । प॒वित्रे॑ । अधि॑ ।
सानौ॑ । अ॒व्यये॑ । सोमः॑ । पु॒ना॒नः । इ॒न्द्रि॒यम् । धाय॑से ॥ ३ ॥

अत्योन अश्वइव हियानःप्रेर्यमाणोवाजं संग्रामं अभ्यर्ष अभिगच्छ । तथा स्वर्वित् सर्ववित् कोशं द्रोणकलशं दिवोद्युलोकात् अद्रिमातरं अद्रिर्भेघः तेनतज्जन्यमुदकंलक्ष्यते तस्य निर्माता-रमभ्यर्ष । अथप्रत्यक्षकृतः वृषा वर्षकः सोमः अव्यये अविमये पवित्रे दशापवित्रे अधिसानौ अधीतिसप्तम्यर्थानुवादी समुच्छ्रिते तस्मिन् पुनानः पूयमानोभवति । किमर्थं धायसे धारकाय इन्द्रियाय तदर्थम् ॥ ३ ॥

अथ चतुर्थी—

प्रत॒आश्वि॑नीःपवमान॒धी॒जुवो॑दि॒व्याअ॑सृग्र॒न्पय॑सा॒धरी॑मणि ।
प्रान्तर्ऋष॑य॒स्स्थावि॑रीरसृक्षत॒येत्वा॑मृ॒जन्त्यृ॑षिषाण॒वे॒धसः॑ ॥ ४ ॥

प्र । ते॒ आश्वि॑नीः । प॒व॒मा॒न॒ । धी॒ऽजुवः॑ । दि॒व्याः । अ॒सृ॒ग्र॒न् ।
पय॑सा । धरी॑मणि । प्र । अ॒न्तः । ऋष॑यः । स्थावि॑रीः ।
अ॒सृ॒क्ष॒त॒ । ये । त्वा॒ । मृ॒जन्ति॑ । ऋ॒षि॒ऽसा॒न॒ । वे॒धसः॑ ॥ ४ ॥

हे पवमानसोम ते तव आश्विनीः व्याप्ताः अशूव्याप्तावित्यस्मादौणादिकोविनिः । ततः अण् व्यत्ययेनाद्युदात्तः धीजुवोमनोवेगाः दैव्याःदिविभवाः दिवःपतंत्योधाराः पयसायुक्ताः धरीमणि धारके द्रोणकलशे प्रासृग्रन् गच्छन्ति येवेधसः विधातारः ऋषयः हेसोम ऋषिषाण ऋषिभिःसंभक्त त्वा त्वां मृजन्ति अभिषुण्वन्ति ते ऋषयः । स्थाविरीः स्थविराधाराः अन्त-र्मध्ये पात्रस्यान्तः प्रासृक्षत प्रसृजन्ति ॥ ४ ॥

अथ पञ्चमी–

विश्वाधामानिविश्वचक्षऋभ्वसःप्रभोस्तेसतःपरियन्तिकेतवः ।
व्यानशिःपवसेसोमधर्मभिःपतिर्विश्वस्यभुवनस्यराजसि ॥५॥१२॥

विश्वा । धामानि । विश्वऽचक्षः । ऋभ्वसः । प्रऽभोः । ते ।
सतः । परि । यन्ति । केतवः । विऽआनशिः । पवसे । सोम ।
धर्मऽभिः । पतिः । विश्वस्य । भुवनस्य । राजसि ॥ ५ ॥ १२ ॥

हे विश्वचक्षः सर्वस्यद्रष्टः सोम प्रभोः परिवृढस्य सतस्ते तव ऋभ्वसः ऋभ्वाइति महन्नाम महान्तः केतवोरश्मयोविश्वा सर्वाणि धामानि तेजःस्थानानि देवशरीराणि परियन्ति परिगच्छन्ति प्रकाशयन्तीत्यर्थः। हे सोम व्यानशिः व्यापनशीलश्चत्वं धर्मभिर्धारकैः रसनिष्पंदैः पवसे पूयसे । विश्वस्य भुवनस्यचपतिः स्वामी त्वं राजसि ईश्वरोभवसि ॥ ५ ॥

॥ इति सप्तमस्य तृतीये द्वादशोवर्गः ॥ १२ ॥

अथ षष्ठी–

उभयतःपवमानस्यरश्मयोध्रुवस्यसतःपरियन्तिकेतवः ।
यदीपवित्रेअधिमृज्यतेहरिःसत्तानियोनाकलशेषुसीदति॥६॥

उभयतः । पवमानस्य । रश्मयः । ध्रुवस्य । सतः । परि । यन्ति ।
केतवः । यदि । पवित्रे । अधि । मृज्यते । हरिः ।
सत्ता । नि । योना । कलशेषु । सीदति ॥ ६ ॥

पवमानस्य पूयमानस्य ध्रुवस्य स्वयमविचलितस्य सतः विद्यमानस्य सोमस्य केतवः प्रज्ञापका रश्मयः उभयत इतश्चामुतश्च परियन्ति परिगच्छन्ति अभिषवसमयएवंभवति । यदि यदा पवित्रे दशापवित्रे हरिर्हरितवर्णोयं अधिमृज्यते तदानीं सत्ता सदनशीलोयं योना योनौ स्वीयेस्थाने कलशेषु द्रोणकलशादिषु निषीदति ॥ ६ ॥

अथ सप्तमी—

यज्ञस्यंकेतुःपंवतेस्वध्वरःसोमोंदेवानामुपंयातिनिष्कृतम् ।
सहस्रंधारःपरिकोशंमर्षतिवृषांपवित्रमत्येंतिरोरुंवत् ॥ ७ ॥

यज्ञस्यं । केतुः । पवते । सुऽअध्वरः । सोमः । देवानांम् । उपं ।
याति । निःऽकृतम् । सहस्रंऽधारः । परिं । कोशंम् ।
अर्षति । वृषां । पवित्रंम् । अतिं । एति । रोरुंवत् ॥ ७ ॥

यज्ञस्यकेतुः प्रज्ञापकः स्वध्वरः शोभनयागः सोमः पवते पूयतेभिषूयते। तादृशः सोमोदेवानांनिष्कृतं संस्कृतं स्थानमुपयाति उपगच्छति। तदर्थं सहस्रधारः कोशं द्रोणकलशं पर्यर्षति ततः तदर्थं वृषा सेक्तायं रोरुवत् शब्दयन् पवित्रमत्येति अतिक्रम्य गच्छत्यधोदेशम्॥७॥

अथाष्टमी—

राजांसमुद्रंनद्योऽविगांहतेपामूर्मिंसंचतेसिन्धुंषुश्रितः ।
अध्यंस्थात्सानुपवंमानोअव्ययंनाभांपृथिव्याधरुणोंमहोदिवः॥८॥

राजां । समुद्रम् । नद्यः । वि । गाहते । अपाम् । ऊर्मिम् । सचते ।
सिन्धुंषु । श्रितः । अधि । अस्थात् । सानुं । पवंमानः । अव्ययंम् ।
नाभां । पृथिव्याः । धरुणंः । महः । दिवः ॥ ८ ॥

अयं सोमोराजा समुद्रमन्तरिक्षं नद्यस्तत्रत्याअपश्च विगाहते विगाह्यचापामूर्मिं सचते उदकपूरंस्रवति सिंधुषु उदकेषु ग्रहेषुचाश्रितःसन् हूयमानःसन् रश्मिद्वारा सूर्यंप्राप्यान्तरिक्षे मेघेषुवर्ततइत्यर्थः। अस्यैव वृष्टिसाधनत्वात्। यद्वा लुप्तोपममेतत् समुद्रंनद्यइव सिंधुषुवसतीवरीषु श्रितआश्रितःसन् समुद्रमभिषुतसोमरसाधारपात्रं विगाहते अभिषवात्पूर्वं। पश्चात्पवमानः पूयमानोव्ययं सानु समुच्छ्रितं दशापवित्रं अध्यस्थात् अधितिष्ठति कुत्रदेशे नाभापृथिव्या नाभिस्थानीययज्ञे तत्संबन्धिनि हविर्धानइत्यर्थः । यज्ञमाहुर्भुवनस्यनाभिंमितिश्रुतेः। कीदृशः महोदिवो द्युलोकस्य धरुणोधर्ता ॥ ८ ॥

---

१ तै० सं० ७. ४. १७. ।

अथ नवमी—

दिवोनसानुंस्तनयन्नचिक्रदद्द्यौश्चयस्यंपृथिवीचधर्मभिः ।
इन्द्रस्यसख्यंपवतेविवेविदत्सोमःपुनानःकलशेषुसीदति ॥ ९ ॥

दिवः । न । सानु । स्तनयन् । अचिक्रदत् । द्यौः । च । यस्य ।
पृथिवी । च । धर्मऽभिः । इन्द्रस्य । सख्यम् । पवते । विऽवेविदत् ।
सोमः । पुनानः । कलशेषु । सीदति ॥ ९ ॥

दिवोन सानु स्तनयन् द्युलोकस्य समुच्छ्रितंस्थानं शब्दयन्निवाचिक्रदत् क्रन्दते यस्य सोमस्य धर्मभिः धारणैर्द्यौःपृथिवीच धृते स्यातां वृष्टिप्रदानद्वारौषध्याद्युत्पादनेन देवानांहविर्भागेन चोभयधारकत्वंप्रसिद्धं। तादृशः सोमोमहानुभावः पुनानः पूयमानः इन्द्रस्य सख्यं विवेविदत् पवते पूयते पवित्रे । सपुनानः सोमः कलशेषु सीदति निवसति ॥ ९ ॥

अथ दशमी—

ज्योतिर्यज्ञस्यंपवतेमधुप्रियंपितादेवानांजनिताविभूवसुः ।
दधातिरत्नंस्वधयोरपीच्यंमदिन्तमोमत्सरइन्द्रियोरसः ॥ १० ॥ १३ ॥

ज्योतिः । यज्ञस्य । पवते । मधु । प्रियम् । पिता । देवानाम् ।
जनिता । विभुऽवसुः । दधाति । रत्नम् । स्वधयोः । अपीच्यम् ।
मदिन्ऽतमः । मत्सरः । इन्द्रियः । रसः । १० ॥ १३ ॥

यज्ञस्यज्योतिः प्रकाशकःसोमः प्रियंदेवानां मधु मधुरं रसंपवते क्षरति । यद्वा ज्योतिर्यज्ञस्येत्येतदपि मधुविशेषणं । तथा सत्युक्तलक्षणंमधु पवते पूयतइत्यर्थः ।सोमरसोविशेष्यते पिता रक्षिता देवानां । उत्पादयिता सर्वस्य । विभुवसुः प्रभूतधनः ईदृशः सस्वधयोर्द्यावापृथिव्योः ।स्वधे पुरंधी इति द्यावापृथिवीनामसुपठितः।तयोरपीच्यमन्तर्हितं रत्नंरमणीयंधनं दधाति स्थापयति स्तोतृषु । पुनः सएवविशेष्यते मदिन्तमःमादयितृतमः मत्सरः सोमःइन्द्रियः इन्द्रेण जुष्ट इन्द्रस्यवर्धकोवा रसोरसरूपः ॥ १० ॥

॥ इति सप्तमस्य तृतीये त्रयोदशोवर्गः ॥ १३ ॥

अथैकादशी—

अभिक्रन्दन्कलशंवाज्यर्षतिपतिर्दिवःशतधारोविचक्षणः ।
हरिर्मित्रस्यसदनेषुसीदतिमर्मृजानोविभिःसिन्धुभिर्वृषा ॥ ११ ॥

अभिऽक्रन्दन् । कलशम् । वाजी । अर्षति । पतिः । दिवः ।
शतऽधारः । विऽचक्षणः । हरिः । मित्रस्य । सदनेषु । सीदति ।
मर्मृजानः । अविऽभिः । सिन्धुऽभिः । वृषा ॥ ११ ॥

वाजी वेजनवान् गमनवान् अश्वसदृशोवा सोमः अभिक्रन्दन् शब्दंकुर्वन् कलशमभ्यर्षति गच्छति।कीदृशोवाजी दिवःपतिः द्युलोकस्यस्वामी शतधारः शतसंख्याकधारः विचक्षणोविद्रष्टा हरिर्हरितवर्णोरसात्मकः सोमोमित्रस्य देवानां मित्रभूतस्य यज्ञस्य वा सदनेषुस्थानेषु सीदति पात्रेषु धृतःसन्। कीदृशोहरिः सिन्धुभिः स्यन्दनसाधनैः अविभिर्दशापवित्रच्छिद्रैर्मर्मृजानः शोध्यमानोवृषा वर्षकः ॥ ११ ॥

अथ द्वादशी—

अग्रेसिन्धूनांपवमानोअर्षत्यग्रेवाचोअग्रियोगोषुगच्छति ।
अग्रेवाजस्यभजतेमहाधनंस्वायुधःसोतृभिःपूयतेवृषा ॥ १२ ॥

अग्रे । सिन्धूनाम् । पवमानः । अर्षति । अग्रे । वाचः । अग्रियः ।
गोषु । गच्छति । अग्रे । वाजस्य । भजते । महाऽधनम् ।
सुऽआयुधः । सोतृऽभिः । पूयते । वृषा ॥ १२ ॥

यः सोमः पवमानः सिन्धूनां स्यन्दमानानामुदकानां अग्रे अर्षति गच्छति तथाअग्रियः अग्रार्हःश्रेष्ठोग्रेवाचोमाध्यमिकायाअग्रेअर्षति । तथा गोषु रश्मिषु गच्छति तथा वाजस्यान्नस्य बलस्यवालाभाय महाधनं संग्रामं भजते सस्वायुधः वृषा वर्षकःसोमः सोतृभिः अभिषवकर्तृभिः पूयते ॥ १२ ॥

अथ त्रयोदशी—

अयंमतवाञ्छकुनोयथाहितोव्येससारपवमानऊर्मिणा।
तवक्रत्वारोदसीअन्तराकवेशुचिर्धियापवतेसोमइन्द्रते ॥ १३ ॥

अयम्। मतऽवान्। शकुनः। यथा। हितः। अव्ये। ससार।
पवमानः। ऊर्मिणा। तव। क्रत्वा। रोदसी इति। अन्तरा।
कवे। शुचिः। धिया। पवते। सोमः। इन्द्र। ते ॥ १३ ॥

अयं सोमोमतवान् मतं संमतं प्रियं स्तोत्रं तद्वान् पवमानः पूयमानः शोध्यमानश्चसन् हितः प्रेरितः शकुनःपक्षी यथा शीघ्रंगच्छति तथा अव्येपवित्रे ऊर्मिणारसेन ससार गच्छति। हेकवे क्रान्तप्रज्ञ अनूचानवा। येवाअनूचानास्तेकवयइतिश्रुतेः। तादृशेन्द्रयजमान यद्वा उक्तलक्षणेन्द्र ते तव क्रत्वा कर्मणा धियाप्रज्ञयाच यद्वा विशेषणविशेष्यभावः धियाधारकेणक्रत्वाकर्मणा रोदसी अंतरा रोदस्योर्द्यावापृथिव्योर्मध्ये शुचिः सोमः पवते पूयते ॥ १३ ॥

अथ चतुर्दशी—

द्रापिंवसानोयजतोदिविस्पृशमन्तरिक्षप्राभुवनेष्वर्पितः।
स्वर्जज्ञानोनभसाभ्यक्रमीत्प्रत्नमस्यपितरमाविवासति ॥ १४ ॥

द्रापिम्। वसानः। यजतः। दिविऽस्पृशम्। अन्तरिक्षऽप्राः।
भुवनेषु। अर्पितः। स्वः। जज्ञानः। नभसा। अभि। अक्रमीत्।
प्रत्नम्। अस्य। पितरम्। आ। विवासति ॥ १४ ॥

दिविस्पृशं दिवःस्प्रष्टारं द्रापिं कवचं तेजोरूपं वसानः आच्छादयन् यजतोयष्टव्योन्तरिक्षप्राः अंतरिक्षस्यपूरकः उदकेन तादृशः सोमोभुवनेषूदकेष्वर्पितः स्वः सर्वैस्तवनयामिनव्यं देवसंघं स्वर्गंवा जज्ञानः जनयन् अथवा स्वरुदकं तज्जनयन् नभसा उदकेन अभ्यक्रमीत् अभिक्रामति अस्योदकस्य पितरं पालकं प्रत्नं पुराणं इन्द्रं आविवासति परिचरति ॥ १४ ॥

---

१ ऐ० ब्रा० २. ३८।

अथ पञ्चदशी—

**सोअ॑स्य॒विशे॒महि॒शर्म॑यच्छति॒योअ॒स्य॒धाम॑प्रथ॒मंव्या॑न॒शे ।**
**प॒दंयद॑स्यप॒र॒मेव्यो॑म॒न्यतो॒विश्वा॑अ॒भिसंया॑तिसं॒यतः॑ ॥१५॥१४॥**

सः । अ॒स्य॒ । वि॒शे । महि॑ । शर्म॑ । य॒च्छति॒ । यः । अ॒स्य॒ ।
धाम॑ । प्र॒थ॒मम् । वि॒ऽआ॒न॒शे । प॒दम् । यत् । अ॒स्य॒ । प॒र॒मे ।
वि॒ऽओ॑मनि । अतः॑ । विश्वाः॑ । अ॒भि । सम् ।
या॒ति॒ । स॒म्ऽयतः॑ ॥ १५ ॥ १४ ॥

ससोमः अस्येन्द्रस्यविशे प्रवेशनाय महिमहत् शर्म सुखं यच्छति यःसोमोस्येन्द्रस्यधाम तेजोयुक्तंशरीरं प्रथमं इतरदेवप्राप्तेः पूर्वं व्यानशे प्राप्तवान् यत् यस्यास्यसोमस्य परमेउत्कृष्टे व्योमन् व्योमनि द्युलोके वेद्यांवा पदंस्थानं भवति यतोयस्मात् सोमात् तृप्तइन्द्रः सोमःस्वयं वा विश्वाः संयतः सर्वान् संग्रामान् अभिसंयाति सम्यगभिगच्छति ससोमोमहिशर्मयच्छतीतिसंबन्धः ॥ १५ ॥

॥ इति सप्तमस्य तृतीये चतुर्दशोवर्गः ॥ १४ ॥

अथ षोडशी—

**प्रोअ॑यासी॒दिन्दु॒रिन्द्र॑स्यनिष्कृ॒तंसखा॒सख्यु॒र्नप्रमि॑नातिसं॒गिर॑म् ।**
**मर्य॑इवयु॒व॒तिभिः॒सम॑र्षति॒सोमः॑क॒लशे॑श॒तया॑म्नाप॒था ॥ १६ ॥**

प्रो इति॑ । अ॒या॒सी॒त् । इन्दुः॑ । इन्द्र॑स्य । निः॒ऽकृ॒तम् । सखा॑ ।
सख्युः॑ । न । प्र । मि॒ना॒ति॒ । स॒म्ऽगिर॑म् । मर्यः॑ऽइव । यु॒व॒तिऽभिः॑ ।
सम् । अ॒र्ष॒ति॒ । सोमः॑ । क॒लशे॑ । श॒तऽया॑म्ना । प॒था ॥ १६॥

इन्दुः सोमः इन्द्रस्यनिष्कृतं स्थानमुदरं प्रोअयासीत् प्रैवगच्छति गत्वाच सखा सखिभूतः सोमः सख्युरिन्द्रस्य संगिरं सम्यग्गिरणाधारभूतं उदरं नप्रमिनाति नहिनस्ति। किंच मर्यइवयुवतिभिः मर्त्योयथा युवतिभिः सहसंगतोभवति तद्वदयमपि सोमोयुवतिभिर्मिश्रणशीलाभिर्वसतीवरीभिरद्भिः सह समर्षति संगच्छते अभिषवकाले पश्चात्सोमः शतयाम्ना अनेकयामनसाधनच्छिद्रोपेतेन पथामार्गेण दशापवित्रसंबन्धिनि कलशे द्रोणकलशे गच्छतीतिशेषः।

यद्वैकमेववाक्यं । यथा मर्योयुवतिभिः सहसंगच्छते एवं कलशे शतयाम्नापथा संगच्छ-
तेद्भिः ॥ १६ ॥

अथ सप्तदशी–

प्रवोधियोमन्द्रयुवोविपन्युवःपनस्युवःसंवसनेष्वक्रमुः ।
सोमंमनीषाअभ्यनूषतस्तुभोभिधेनवःपयसेमशिश्रयुः ॥ १७ ॥

प्र । वः । धियः । मन्द्रऽयुवः । विपन्युवः । पनस्युवः ।
सम्ऽवसनेषु । अक्रमुः । सोमम् । मनीषाः । अभि । अनूषत ।
स्तुभः । अभि । धेनवः । पयसा । ईम् । अशिश्रयुः ॥ १७ ॥

हे सोम वोयुष्माकं धियोध्यातारः मन्द्रयुवः मदकरं शब्दं कामयमानाः पनस्युवः स्तुतिं कामयमानाः विपन्युवः स्तोतृनामैतत् स्तोतारः संवसनेषु संवासयोग्येषु यागगृहेषु प्राक्रमुः प्रक्रमन्ते । तदेवाह सोमं मनीषाः मनसईशाः ईश्वराः स्तोतारः अभ्यनूषत अभिष्टुवन्ति धेनवोपि पयसा स्वीयेन ईमेनंसोममभ्यशिश्रयुः अभिश्रीणन्ति ॥ १७ ॥

अथाष्टादशी–

आनःसोमसंयतंपिप्युषीमिषमिन्दोपवस्वपवमानोअस्रिधम् ।
यानोदोहतेत्रिरहन्नसश्चुषीक्षुमद्वाजवन्मधुमत्सुवीर्यम् ॥ १८ ॥

आ । नः । सोम । सम्ऽयतम् । पिप्युषीम् । इषम् । इन्दो इति ।
पवस्व । पवमानः । अस्रिधम् । या । नः । दोहते । त्रिः ।
अहन् । असश्चुषी । क्षुऽमत् । वाजऽवत् । मधुऽमत् ।
सुऽवीर्यम् ॥ १८ ॥

हेइन्दो दीप्तसोम पवमानस्त्वं नोस्माकं संयतं संगृहीतं पिप्युषीं प्रवृद्धमिषमन्नं अस्रिधं अक्षीणं आपवस्व प्रयच्छेत्यर्थः । या यादृशी नोस्माकं अहन् अहनि अह्नः त्रिः त्रिषुसवनेषु असश्चुषी अप्रतिबंधादोहते क्षरति । किं क्षुमत् शब्दोपेतं सर्वत्रश्रूयमाणं वाजवत् मधुमत् माधुर्योपेतं सुवीर्यं शोभनसामर्थ्यं पुत्रं दोहते तां इषं पवस्वेति समन्वयः ॥ १८ ॥

अथैकोनविंशी—

वृषामतीनांपवतेविचक्षणःसोमोअह्नःप्रतरीतोषसोदिवः ।
क्राणासिन्धूनांकलशाँअवीवशदिन्द्रस्यहार्द्याविशन्मनीषिभिः॥१९॥

वृषा । मतीनाम् । पवते । विऽचक्षणः । सोमः । अह्नः । प्रऽतरीता ।
उषसः । दिवः । क्राणा । सिन्धूनाम् । कलशान् । अवीवशत् ।
इन्द्रस्य । हार्दि । आऽविशन् । मनीषिऽभिः ॥ १९ ॥

अयंसोमः पवते अभिषूयते । कीदृशःसोमः मतीनां मतयः स्तोतारः तेषां वृषा वर्षकः कामानां विचक्षणोविद्रष्टा अह्नः उषसोदिवोद्युलोकस्यादित्यस्यवा प्रतरीता वर्धयिता । किंच सिंधूनां स्यंदमानानां उदकानां क्राणा कर्ता करोतेः शानचि बहुलंछन्दसीति विकरणस्यलुक् । सुपांसुलुगित्याकारः कलशानवीवशत् कामयते प्रवेष्टुं । किंकुर्वन् इन्द्रस्यहार्दि हृदयमाविशन् प्रविशन् मनीषिभिः स्तुतइतिशेषः । यद्वा व्यवहितमपि मनीषिभिरित्येतत्पवतइत्यनेन संबध्यते ॥ १९ ॥

अथ विंशी—

मनीषिभिःपवतेपूर्व्यःकविर्नृभिर्यतःपरिकोशाँअचिक्रदत् ।
त्रितस्यनामजनयन्मधुक्षरदिन्द्रस्यवायोःसख्यायकर्तवे॥२०॥१५॥

मनीषिऽभिः । पवते । पूर्व्यः । कविः । नृऽभिः । यतः । परि ।
कोशान् । अचिक्रदत् । त्रितस्य । नाम । जनयन् । मधु ।
क्षरत् । इन्द्रस्य । वायोः । सख्याय । कर्तवे ॥ २० ॥ १५॥

अयंसोमोमनीषिभिर्मेधाविभिरध्वर्य्वादिभिः पवतेपूयते यद्वायं मनीषिभिः मनीषिणीभिः धाराभिः पवते क्षरति । कीदृशोयं पूर्व्यः पुराणः कविर्मेधावी नृभिर्नेतृभिरध्वर्य्वादिभिः यतः नियमितः सन् कोशान् कलशान्प्राप्तुं पर्यचिक्रदत् परिक्रन्दते शब्दंकरोति त्रितस्य त्रिषुस्थानेषु विस्तृतस्येन्द्रस्य यजमानस्यसंबन्धि नाम नामकमुदकं जनयन् उत्पादयन् मधु मधुरंरसं क्षरत् किमर्थं इन्द्रस्य वायोश्च सख्याय कर्तवे सख्यं कर्तुं ॥ २० ॥

॥ इति सप्तमस्य तृतीये पंचदशोवर्गः ॥ १५ ॥ वृषेत ॥२५॥१६॥

अथैकविंशी—

अयंपुनानउषसोविरोचयदयंसिन्धुभ्योअभवदुलोककृत् ।
अयंत्रिःसप्तदुदुहानआशिरंसोमोहृदेपवतेचारुमत्सरः ॥२१॥

अयम् । पुनानः । उषसः । वि । रोचयत् । अयम् । सिन्धुऽभ्यः ।
अभवत् । ऊँ इति । लोकऽकृत् । अयम् । त्रिः । सप्त । दुदुहानः ।
आऽशिरम् । सोमः । हृदे । पवते । चारु । मत्सरः ॥ २१ ॥

अयं सोमः पुनानः पूयमानः उषसो विरोचयत् विविधं रोचयति । अयं सिंधुभ्यः स्यन्दमानेभ्योऽद्भ्यो वसतीवरीभ्यः अभवत् समृद्धोभवति उइतिपूरणः कीदृशोयं लोककृत् लोकानांकर्ता वर्षकत्वाद्वेतोधारकत्वाद्वास्यलोककृत्त्वं । अयं सोमः त्रिःसप्त एकविंशतिंवा ऋत्विङ्मुखेन आशिरं दुदुहानः दुहानः दोहस्यप्रयोजकत्वात्कर्तुरुपचारः मत्सरोमदकरः चारु रमणीयं पवते क्षरति । किमर्थं हृदे हृदयाय हृदयगमनाय ॥ २१ ॥

अथ द्वाविंशी—

पवस्वसोमदिव्येषुधामसुसृजानइन्दोकलशेपवित्रआ ।
सीदन्निन्द्रस्यजठरेकनिक्रदन्नृभिर्यतःसूर्यमारोहयोदिवि ॥२२॥

पवस्व । सोम । दिव्येषु । धामऽसु । सृजानः । इन्दो इति ।
कलशे । पवित्रे । आ । सीदन् । इन्द्रस्य । जठरे । कनिक्रदत् ।
नृऽभिः । यतः । सूर्यम् । आ । अरोहयः । दिवि ॥ २२ ॥

हे सोम दिव्येषु धामसु स्थानेषु देवानांसंबन्धिषूदरेष्वित्यर्थः तेषु पवस्व क्षर । कीदृशान्
हेइदे इन्दो दीप्त सोम कलशे पवित्रे आ दशापवित्रे च । आइतिचार्थे । सृजानः सृज्यमानः । अन्ना-
अक्षीणं आपवस्वेत्यहोति यवागूं पचतीतिवदार्थिकः क्रमोवगंतव्यः ।किंचेन्द्रस्य जठरे सीदन् जठरंगच्छ-
नेषु असश्चुषी अप्रतिबद्धंकुर्वन् नृभिर्नेतृभिर्ऋत्विग्भिः यतः परिगृहीतःहुतइत्यर्थः । तथाभूतः सन् दि-
माधुर्योपेतं सुवीर्यं शोभनसामर्थ्यंतमकरोः ॥ २२ ॥

अथ त्रयोविंशी—

अद्रिभिः सुतः पवसे पवित्र आँ इन्दविन्द्रस्य जठरेष्वाविशन् ।
त्वं नृचक्षा अभवो विचक्षण सोम गोत्रमङ्गिरोभ्योऽवृणोरप ॥२३॥

अद्रिऽभिः । सुतः । पवसे । पवित्रे । आ । इन्दो इति । इन्द्रस्य ।
जठरेषु । आऽविशन् । त्वम् । नृऽचक्षाः । अभवः । विऽचक्षण ।
सोम । गोत्रम् । अङ्गिरःऽभ्यः । अवृणोः । अप ॥ २३ ॥

हे इन्दो सोम अद्रिभिः ग्रावभिः सुतोभिषुतस्त्वं पवसे क्षरसि पूयसेवा पवित्रे आ दशापवित्रे। आइतिपूरणः। यद्वा अभिषुतोभवसि पवसेचेति चार्थआकारः। किंकुर्वन् इन्द्रस्य जठरेषु जठरप्रदेशेषु आविशन् जठरप्रदेशायेत्यर्थः। किंच हे विचक्षण विद्रष्टः सोम त्वं नृचक्षाः अभवः नृणां मनुष्याणामनुग्रहेण द्रष्टाभवसि। किंच हे सोम त्वं अंगिरोभ्योगोत्रं मेघमुदकं क्षारयितुं पणिभिरपहृतानां गवामावरकं पर्वतंवा अपावृणोः ॥ २३ ॥

अथ चतुर्विंशी—

त्वां सोम पवमानं स्वाध्योऽनु विप्रासो अमदन्नवस्यवः ।
त्वां सुपर्ण आभरद्दिवस्परीन्दो विश्वाभिर्मतिभिः परिष्कृतम् ॥ २४॥

त्वाम् । सोम । पवमानम् । सुऽआध्यः । अनु । विप्रासः । अमदन् ।
अवस्यवः । त्वाम् । सुऽपर्णः । आ । अभरत् । दिवः । परि । इन्दो
इति । विश्वाभिः । मतिऽभिः । परिऽकृतम् ॥ २४ ॥

हे सोम पवमानं त्वां स्वाध्यः सुमतयः सुकर्माणोवा विप्रासोविप्रा मेधाविनः स्तोतारः अवस्यवोरक्षाकामा अन्वमदन् अनुष्टुवन्ति। हे इन्दो त्वां सुपर्णः श्येन आभरत् आहरत् दिवस्परि द्युलोकस्योपरि द्युलोकादित्यर्थः। कीदृशं त्वां विश्वाभिर्मतिभिः सर्वाभिः स्तुतिभिः परिष्कृतमलंकृतं ॥ २४ ॥

अथ पंचविंशी—

अव्ये पुनानं परि वार ऊर्मिणा हरिं नवन्ते अभि सप्त धेनवः ।
अपामुपस्थे अध्यायवः कविमृतस्य योना महिषा अहेषत ॥२५॥१६॥

अव्ये । पुनानम् । परि । वारे । ऊर्मिणा । हरिम् । नवन्ते । अभि ।
सप्त । धेनवः । अपाम् । उपऽस्थे । अधि । आयवः । कविम् ।
ऋतस्य । योना । महिषाः । अहेषत ॥ २५ ॥ १६ ॥

अव्ये अविमये वारे वाले दशापवित्रे ऊर्मिणा रसेन परि परितः पुनानं पवमानं हरिं हरितवर्णं सोमं अभिनवन्ते अभिगच्छन्ति सप्तधेनवः प्रीणयित्र्यः सप्त गायत्र्याद्याःसप्त गंगाद्या नद्योवा नवते क्षोदते इतिगतिकर्मसुपठितः ।किंच कविं त्वां अपामुपस्थे अन्तरिक्षस्योत्संगे ऋतस्य योना योनौ उदकनामैतत् ऋतंयोनिः ऋतस्ययोनिरिति तन्नामसुपाठात् उदके महिषाः महान्तआयवोमनुष्याः अध्यहेषत अधिकं प्रेरयन्ति ॥ २५ ॥

॥ इति सप्तमस्य तृतीये षोडशोवर्गः ॥ १६ ॥

अथ षड्विंशी—

इन्दुःपुनानोअतिगाहतेमृधोविश्वानिकृण्वन्त्सुपथानियज्यवे ।
गाःकृण्वानोनिर्णिजंहर्यतःकविरत्योनक्रीळन्परिवारमर्षति ॥२६॥

इन्दुः । पुनानः । अति । गाहते । मृधः । विश्वानि । कृण्वन् ।
सुऽपथानि । यज्यवे । गाः । कृण्वानः । निःऽनिजम् । हर्यतः ।
कविः । अत्यः । न । क्रीळन् । परि । वारम् । अर्षति ॥ २६ ॥

अयमिन्दुः दीप्तः सोमः पुनानः पूयमानःअतिगाहते अतिक्रम्य गच्छति । मृधः शत्रून् । किंकुर्वन् विश्वानि गंतव्यानि सुवर्त्मानि वैदिकानि लौकिकानिच सुपथानि कृण्वन् कुर्वन् कस्मै यज्यवे यागकर्त्रे यजमानाय शत्रून् परिहरन् मार्गान् सुपथान् कुर्वन् कलशं प्रविशतीत्यर्थः । किंच निर्निजं आत्मीयं रूपं गाः कृण्वानोरसमयान् कुर्वाणइत्यर्थः हर्यतः कान्तः हर्यगतिकांत्योः औणादिकःअतच् कविः क्रान्तप्रज्ञः एवंभूतः सोमः अत्योन अश्वइव क्रीळन् वारं दशापवित्रं पर्यर्षति परिगच्छति ॥ २६ ॥

अथ सप्तविंशी—

असश्चतःशतधाराअभिश्रियोहरिंनवन्तेवताउदन्युवः ।
क्षिपोमृजन्तिपरिगोभिरावृतंतृतीयेपृष्ठेअधिरोचनेदिवः ॥ २७॥

असश्चतः । शतऽधाराः । अभिऽश्रियः । हरिम् । नवन्ते । अवं ।
ताः । उदन्युवः । क्षिपः । मृजन्ति । परि । गोभिः । आऽवृतम् ।
तृतीये । पृष्ठे । अधि । रोचने । दिवः ॥ २७ ॥

असश्चतः परस्परमसंगताः शतधाराः अभिश्रियः अभितः सोमंश्रयन्त्यः ताः प्रसिद्धाः सूर्यस्य रश्मयो हरिं अवनवन्ते गच्छन्ति । उदन्युवः उदकेच्छावत्यः यद्वा धाराशब्देनात्र सोमधारा अभिप्रेताः असश्चतोसंबद्धाः अभिश्रियःअभितोगाः श्रयंत्यः गोभिः श्रिताः ताः प्रसिद्धा उदन्युव इन्द्रसंबन्धि वृष्टिकामा हरिमिन्द्रं अवनवन्ते संगच्छन्ते क्षिपोंगुलयोपि गोभिः दीप्तिपक्षे गोभीरश्मिभिरावृतं सोमधारापक्षे गोभिः पर्यावृतं व्याप्तं सोमं मृजन्ति अवशोधयन्ति। दिव आदित्याद्रोचने रोचमाने यमादित्योरोचयति तस्मिन् तृतीयेपृष्ठे क्षित्यपेक्षायां तृतीयभूते द्युलोके अधिवसन्तं सोमंमृजन्ति ॥ २७ ॥

अथाष्टाविंशी—

तवेमाःप्रजादिव्यस्यरेतसस्त्वंविश्वस्यभुवनस्यराजसि ।
अथेदंविश्वंपवमानतेवशेत्वमिन्दोप्रथमोधामधाअसि ॥ २८ ॥

तव । इमाः । प्रऽजाः । दिव्यस्य । रेतसः । त्वम् । विश्वस्य । भुवनस्य ।
राजसि । अथ । इदम् । विश्वम् । पवमान । ते । वशे । त्वम् ।
इन्दो इति । प्रथमः । धामऽधाः । असि ॥ २८ ॥

तव दिव्यस्य रेतसःसकाशादिमाःप्रजा उत्पद्यमानाः प्राणिनउत्पन्नाः । सोमोवैरेतोधाइति श्रुतेः । त्वं विश्वस्य भुवनस्य राजसि ईश्वरोभवसि । अथापिचेदंविश्वं हे पवमान ते वशे त्वदधीनं वर्तते । हे इन्दो प्रथमोमुख्यस्त्वं धामधाः धाम्नोधर्ता असि भवसि ॥ २८ ॥

अथैकोनत्रिंशी—

त्वंसमुद्रोअसिविश्ववित्कवेतवेमाःपञ्चप्रदिशोविधर्मणि ।
त्वंद्यांचपृथिवींचातिजभ्रिषेतवज्योतींषिपवमानसूर्यः ॥ २९ ॥

---

१ तै० ब्रा० १. ८. १ ।

त्वम् । समुद्रः । असि । विश्वऽवित् । कवे । तव॑ । इमाः । पञ्च॑ ।
प्रऽदिशः । विऽधर्मणि । त्वम् । द्याम् । च । पृथिवीम् । च । अति ।
जभ्रिषे । तव॑ । ज्योतींषि । पवमान । सूर्यः ॥ २९ ॥

हे कवे क्रान्तप्रज्ञ त्वं यस्मात्समुद्रः वर्षसाधनोपां अतोविश्वविदसि । यद्वा समुद्रोद्रवात्मकोसि विश्वविच्चासि । किंच तव विधर्मणि विधारणे इमाः पंचप्रदिशः प्रकृष्टादिशोभवन्तीतिशेषः । त्वं द्यांच दिवं च पृथिवींच अतिजभ्रिषे बिभर्षि । हे पवमान सूर्योदेवस्तवज्योतींषि आप्यायपति ॥ २९ ॥

अथ त्रिंशी—

त्वंपवित्रेरजसोविधर्मणिदेवेभ्यः सोमपवमानपूयसे ।
त्वामुशिजःप्रथमाअंगृभ्णततुभ्येमाविश्वाभुवनानियेमिरे ॥३०॥१७॥

त्वम् । पवित्रे । रजसः । विऽधर्मणि । देवेभ्यः । सोम ।
पवमान । पूयसे । त्वाम् । उशिजः । प्रथमाः । अगृभ्णत ।
तुभ्य॑ । इमा । विश्वा । भुवनानि । येमिरे ॥ ३० ॥ १७ ॥

हे सोम पवमान त्वं रजसोलोकस्य रसस्यवा विधर्मणि विधारके दशापवित्रे देवेभ्यः देवार्थं पूयसे । त्वामुशिजः कामयमाना ऋत्विजः प्रथमाः प्रतमामुख्याः अगृभ्णत गृह्णंति । तुभ्य तुभ्यं इमा इमानि विश्वा सर्वाणि भुवनानि भूतजातानि येमिरे यच्छन्त्यात्मानं ॥३०॥

॥ इति सप्तमस्य तृतीये सप्तदशोवर्गः ॥ १७ ॥

अथैकत्रिंशी—

प्ररेभएत्यतिवारमव्ययंवृषावनेष्ववचक्रदद्धरिः ।
संधीतयोवावशानाअनूषतशिशुंरिहन्तिमतयःपनिप्नतम् ॥ ३१ ॥

प्र । रेभः । एति । अति । वार॑म् । अव्ययम् । वृषा । वनेषु ।
अव॑ । चक्रदत् । हरिः । सम् । धीतयः । वावशानाः । अनूषत ।
शिशुम् । रिहन्ति । मतयः । पनिप्नतम् ॥ ३१ ॥

रेभः शब्दयिता । रेभृशब्दे । सोमः अव्ययं अविमयं वारं वालं प्रत्येति प्रकर्षेणातिगच्छति । वृषा सेक्ता सोमोवनेषूदकेषु अवचक्रदत् अवक्रंदत् । हरिर्हरितवर्णः सोमः । समनूषत संस्तुवन्ति । के धीतयोध्यातारो वावशाना यागं सोमंवाकामयमानाः शिशुं शिशुवत्संस्कर्तव्यं सोमं मतयः स्तुतयोरिहन्ति लिहन्ति स्पृशंति स्वविषयीकुर्वन्तीत्यर्थः । कीदृशं पनिप्रतं शब्दयंतं ॥ ३१ ॥

अथ द्वात्रिंशी—

ससूर्यस्यरश्मिभिःपरिव्यततन्तुंतन्वानस्त्रिवृतंयथाविदे ।
नयन्नृतस्यप्रशिषोनवीयसीःपतिर्जनीनामुपयातिनिष्कृतम् ॥ ३२ ॥

सः । सूर्यस्य । रश्मिऽभिः । परि । व्यत । तन्तुम् । तन्वानः ।
त्रिऽवृतम् । यथा । विदे । नयन् । ऋतस्य । प्रऽशिषः । नवीयसीः ।
पतिः । जनीनाम् । उप । याति । निःऽकृतम् ॥ ३२ ॥

ससोमः सूर्यस्यरश्मिभिः परिव्यत परिवेष्टयत्यात्मानं । किंकुर्वन् त्रिवृतं सवनैर्देवैर्वात्रिवृतं तंतुं यज्ञं तन्वानः विस्तारयन् । यथा विदे जानाति येनप्रकारेण संपूर्णमवगच्छति तस्माएवं जनीनांपतिः पालकः स्वामी निष्कृतं संस्कृतं पात्रं उपयाति गच्छति ॥ ३२ ॥

अथ त्रयस्त्रिंशी—

राजासिन्धूनांपवतेपतिर्दिवऋतस्ययातिपथिभिःकनिक्रदत् ।
सहस्रधारःपरिषिच्यतेहरिःपुनानोवाचंजनयन्नुपावसुः ॥ ३३ ॥

राजा । सिन्धूनाम् । पवते । पतिः । दिवः । ऋतस्य । याति ।
पथिऽभिः । कनिक्रदत् । सहस्रऽधारः । परि । सिच्यते । हरिः ।
पुनानः । वाचम् । जनयन् । उपऽवसुः ॥ ३३ ॥

सिन्धूनां नदीनामुदकानां राजा ईश्वरः दिवः पतिः द्युलोकस्यस्वामीसोमः पवते पूयते । ऋतस्य यज्ञस्य पथिभिः मार्गैः कनिक्रदच्छब्दंकुर्वन् याति सहस्रधारोबहुधारायुक्तः सोमोनृभिर्नेतृभिः परिषिच्यते पात्रेषु । पुनानः पूयमानोवाचं शब्दं जनयन् उत्पादयन् उपावसुः उपगच्छद्धनः परिषिच्यतइति समन्वयः ॥ ३३ ॥

अथ चतुस्त्रिंशी–

पवमानमह्यर्णोविधावसिसूरोनचित्रोअव्ययानिपव्यया ।
गभस्तिपूतोनृभिरद्रिभिःसुतोमहेवाजायधन्यायधन्वसि ॥ ३४ ॥

पवमान । महि । अर्णः । वि । धावसि । सूरः । न । चित्रः ।
अव्ययानि । पव्यया । गभस्तिऽपूतः । नृऽभिः । अद्रिऽभिः ।
सुतः । महे । वाजाय । धन्याय । धन्वसि ॥ ३४ ॥

हे पवमानसोम मह्यर्णोबहूदकं अर्णइत्युदकनाम रसंवा विधावसि गमयसि । धावुगतिशुध्योः । किंच सूरोन चित्रः सूर्यइव चित्रः चायनीयः पूज्यःसन् अव्ययानि अविमयानि पव्यया पात्राणि गच्छसि । किंच गभस्तिपूतोबहुभिरभिशोधितः नृभिर्ऋत्विग्भिः ग्रावभिश्च सुतोभिषुतो महेमहते वाजाय संग्रामायधन्याय धनेभ्योहिताय धन्वसि गच्छसि । धन्वतिर्गतिकर्मा ॥ ३४ ॥

अथ पंचत्रिंशी–

इषमूर्जंपवमानाभ्यर्षसिश्येनोनवंसुकलशेषुसीदसि ।
इन्द्रायमद्वामद्योमदःसुतोदिवोविष्टम्भउपमोविचक्षणः ॥ ३५ ॥ १८ ॥

इषम् । ऊर्जम् । पवमान । अभि । अर्षसि । श्येनः । न । वंसु ।
कलशेषु । सीदसि । इन्द्राय । मद्वा । मद्यः । मदः । सुतः । दिवः ।
विष्टम्भः । उपऽमः । विऽचक्षणः ॥ ३५ ॥ १८ ॥

हे पवमान पूयमानसोम इषमन्नं ऊर्जं बलंचाभ्यर्षसि । श्येनोन श्येनइव वंसु वननीयेषु कुलायेषु कलशेषु सीदसि निषण्णोभवसि । अथपरोक्षकृतः । इन्द्राय मद्वा मदकरोमद्योमदहेतुः मदोरसः सुतोभिषुतः । कीदृशः दिवोद्युलोकस्योपमः उपमीयमानोविष्टंभोविशेषेणस्तंभयिता स्थूणा यथागृहं तथा तद्वत् विचक्षणोविद्रष्टा । स्थूणेवजनाँउपमिदित्युक्तं ॥ ३५ ॥

॥ इति सप्तमस्य तृतीयेष्टादशोवर्गः ॥ १८ ॥

---

१ ऋ० सं० १. ४. २५.

अथ षट्त्रिंशी—

सप्तस्वसारोअभिमातरःशिशुंनवंजज्ञानंजेन्यंविपश्चितम् ।
अपांगन्धर्वंदिव्यंनृचक्षसंसोमंविश्वस्यभुवनस्यराजसे ॥ ३६ ॥

सप्त । स्वसारः । अभि । मातरः । शिशुम् । नवम् । जज्ञानम् ।
जेन्यम् । विपःऽचितम् । अपाम् । गन्धर्वम् । दिव्यम् ।
नृऽचक्षसम् । सोमम् । विश्वस्य । भुवनस्य । राजसे ॥ ३६ ॥

सप्त सर्पणस्वभावाः सप्तसंख्याकावा स्वसारः मातरो मातृस्थानीया गंगायमुनाद्याः शिशुं शिशुस्थानीयं अभिगच्छन्तीतिशेषः । स्वकीयैः पयोभिराच्छादयन्तीतिशेषः । कीदृशं शिशुं नवं जज्ञानं जायमानं जेन्यं जयशीलंविपश्चितं विद्वांसं अपांजनकं तेषांमध्ये वर्तमानं वा गंधर्वं उदकस्यधातारं दिव्यं दिविभवं नृचक्षसं नृणांद्रष्टारंसोमं अभिगच्छन्ति किमर्थं विश्वस्य भुवनस्य राजसे विराजनार्थं ॥ ३६ ॥

अथ सप्तत्रिंशी—

ईशानइमाभुवनानिवीयसेयुजानइन्दोहरितःसुपर्ण्यः ।
तास्तेक्षरन्तुमधुमद्घृतंपयस्तवव्रतेसोमतिष्ठन्तुकृष्टयः ॥ ३७ ॥

ईशानः । इमा । भुवनानि । वि । ईयसे । युजानः । इन्दो इति ।
हरितः । सुऽपर्ण्यः । ताः । ते । क्षरन्तु । मधुऽमत् । घृतम् ।
पयः । तव । व्रते । सोम । तिष्ठन्तु । कृष्टयः ॥ ३७ ॥

हे इन्दो सोम ईशानः सर्वस्य स्वामी त्वं इमा इमानि भुवनानि भूतजातानि वीयसे गच्छसि वीगत्यादिषु । किंकुर्वन् हरितोहरितवर्णाः सुपर्ण्यः सुपतनाश्वाश्वाः रथे युजानो योजयन् ताः सुपर्ण्यः ते तव संबन्धिन्यः मधुमत् माधुर्योपेतं घृतं दीप्तं पयउदकं क्षरन्तु । हेसोम तव व्रते कर्मणि तिष्ठन्तु कृष्टयोमनुष्याःसर्वे ॥ ३७ ॥

अथाष्टात्रिंशी—

त्वंनृचक्षाअसिसोमविश्वतःपवमानवृषभताविधावसि ।
सनःपवस्ववसुमद्धिरण्यवद्वयंस्यामभुवनेषुजीवसे ॥ ३८ ॥

त्वम् । नृऽचक्षाः । असि । सोम । विश्वतः । पवमान । वृषभ ।
ता । वि । धावसि । सः । नः । पवस्व । वसुऽमत् । हिरण्यऽवत् ।
वयम् । स्याम । भुवनेषु । जीवसे ॥ ३८ ॥

हे सोम त्वं विश्वतः सर्वतः सर्वेषु भुवनेषु नृचक्षाः नृणांद्रष्टा असि भवसि । हे पवमान वृषभ अपांवर्षक ताअपोविधावसि विविधंगच्छसि सत्वं नोस्माकं पवस्व क्षर । किं वसुमत् बहुभिर्वसुभिर्वासकैर्गवादिद्रव्यैर्युक्तं तथा हिरण्यवत् बहुभिर्हिरण्यैर्युक्तं धनं वयंच वसुभिर्हिरण्यैर्युक्ताः भुवनेषु लोकेषु जीवसे जीवितुं प्रभवः स्याम भवेम ॥ ३८ ॥

अथैकोनचत्वारिंशी—

गोवित्पवस्ववसुविद्धिरण्यविद्रेतोधाइन्दोभुवनेष्वर्पितः ।
त्वंसुवीरोअसिसोमविश्ववित्तंत्वाविप्राउपगिरेमआसते ॥ ३९ ॥

गोऽवित् । पवस्व । वसुऽवित् । हिरण्यऽवित् । रेतःऽधाः । इन्दो
इति । भुवनेषु । अर्पितः । त्वम् । सुऽवीरः । असि । सोम ।
विश्वऽवित् । तम् । त्वा । विप्राः । उप । गिरा । इमे । आसते ॥ ३९ ॥

हे सोम त्वं पवस्व क्षर । कीदृशः गोवित् गवांलंभकः वसुवित् धनस्य लंभकः हिरण्यवित् हिरण्यस्य लंभकः रेतोधाः रेतउदकं तस्य धाता ओषधीनां यद्वा रेतः प्रजननसामर्थ्यं तस्य धारयिता भुवनेषु उदकेष्वर्पितः । हे इन्दो सोम त्वं सुवीरः सुवीर्योसि भवसि । विश्ववित्सर्वस्यवेत्ता तं त्वा त्वां इमेविप्रागिरास्तुत्याउपासते ॥ ३९ ॥

अथ चत्वारिंशी—

उन्मध्वऊर्मिर्वननाअतिष्ठिपदपोवसानोमहिषोविगाहते ।
राजापवित्ररथोवाजमारुहत्सहस्रभृष्टिर्जयतिश्रवोबृहत् ॥ ४० ॥ १९ ॥

उत् । मध्वः । ऊर्मिः । वननाः । अतिस्थिपत् । अपः । वसानः ।
महिषः । वि । गाहते । राजा । पवित्रऽरथः । वाजम् । आ ।
अरुहत् । सहस्रऽभृष्टिः । जयति । श्रवः । बृहत् ॥ ४० ॥ १९ ॥

मध्वः मधुरस्योर्मीरसः वननाः वननीयावाचः उदतिष्ठिपत् उत्थापयति । सोमाभिषव-कालेस्तुतिवाचः प्रवृत्तेः । अपोवसानः आच्छादयन् महिशोमहान् विगाहते प्रविशति कलशं । राजा सोमः पवित्ररथः दशापवित्रं एवरथोयस्य सतथोक्तः तादृशः सोमोवाजं संग्राममारुहत् आरोहति । सहस्रभृष्टिः बहुभ्रंशः अपरिमितगमनो बृहच्छ्रवः महदन्नंजयति अस्मदर्थं ॥ ४० ॥

॥ इति सप्तमस्य तृतीये एकोनविंशोवर्गः ॥ १९ ॥

अथैकचत्वारिंशी—

**सभन्दनाउदियर्तिप्रजावतीर्विश्वायुर्विश्वाःसुभराअहर्दिवि ।**
**ब्रह्मप्रजावद्रयिमश्वपस्त्यंपीतइन्दविन्द्रमस्मभ्यंयाचतात् ॥४१॥**

सः । भन्दनाः । उत् । इयर्ति । प्रजाऽवतीः । विश्वऽआयुः । विश्वाः । सुऽभराः । अहःऽदिवि । ब्रह्म । प्रजाऽवत् । रयिम् । अश्वऽपस्त्यम् । पीतः । इन्दो इति । इन्द्रम् । अस्मभ्यम् । याचतात् ॥ ४१ ॥

ससोमः विश्वायुः सर्वस्यगन्ता सोमः प्रजावतीः प्रजारूपफलदात्र्यः सुभराः सुष्ठु ह्रियमाणा विश्वाः सर्वाभन्दनाः स्तुतीः उदियर्ति उत्कृष्टं प्रेरयति । कस्मिन्काले उच्यते । अहर्दिवि अहोरात्रयोश्च । अथ प्रत्यक्षकृतः । ब्रह्मपरिवृढंकर्म प्रजावत् प्रजाभिर्युक्तं प्रजाफलकमित्यर्थः । यद्वा ब्रह्मअन्नं तच्च प्रजावत् प्रजाद्युपेतं तथा रयिंधनं कीदृशं अश्वपस्त्यं व्याप्तगृहं तदुभयं हे इन्दो दीप्तसोम पीत इन्द्रेण पीतस्त्वं त्वमेवेन्द्रमस्मभ्यं याचतात् याचस्व ॥४१॥

अथ द्विचत्वारिंशी—

**सोअग्रेअह्नांहरिर्हर्यतोमदःप्रचेतसाचेतयतेअनुद्युभिः ।**
**द्वाजनायातयन्नन्तरीयतेनराचशंसंदैव्यंचधर्तरि ॥ ४२ ॥**

सः । अग्रे । अह्नाम् । हरिः । हर्यतः । मदः । प्र । चेतसा । चेतयते । अनु । द्युऽभिः । द्वा । जना । यातयन् । अन्तः । ईयते । नराशंसम् । च । दैव्यम् । च । धर्तरि ॥ ४२ ॥

ससोमोग्रे सर्वेषां संमुखं चेतसा प्राणिनां चेतनेनसह अह्नां द्युभिर्दीप्तिभिः अनुप्रचेतयते अनुप्रज्ञापयते यद्वा अह्नामग्रे अग्रभागे प्रातरित्यर्थः स्तोतॄणां चेतसा प्रज्ञानेन द्युभिर्दीप्तिभिः स्तुतिभिश्चानु प्रचेतयते । कीदृशः सहरिर्हरितवर्णः हर्यतः कान्तः मदोमदकरः । किंच द्वाजना द्वौजनौ स्तोतारं यष्टारंच याचयन् प्रापयन् स्वविहितेनकर्मणा लौकिकवैदिकौ द्वौजनौ द्रष्टव्यौ एवंकुर्वन्नन्तर्द्यावापृथिव्योर्मध्ये ईयते गच्छति । ईङ्गतौ । किंकुर्वन् नराशंसैः नरैः शंसनीयं मानुषमित्यर्थः दैव्यंचोभयविधं धनं धर्तरि धारके यजमाने प्रेरयन्निितिशेषः ॥ ४२ ॥

अथ त्रिचत्वारिंशी—

अञ्जते॒व्यं॑ञ्जते॒सम॑ञ्जते॒क्रतुं॑रिहन्ति॒मधु॑ना॒भ्यं॑ञ्जते ।
सिन्धो॑रुच्छ्वा॒सेप॒तय॑न्तमु॒क्षणं॑हिरण्यपा॒वाःप॒शुमा॑सुगृभ्णते॥४३॥

अ॒ञ्जते॑ । वि । अ॒ञ्ज॒ते॒ । सम् । अ॒ञ्ज॒ते॒ । क्रतु॑म् । रि॒ह॒न्ति॒ । मधु॑ना । अ॒भि । अ॒ञ्ज॒ते॒ । सिन्धोः॑ । उ॒त्ऽश्वा॒से । प॒तय॑न्तम् । उ॒क्षण॑म् । हि॒र॒ण्य॒ऽपा॒वाः । प॒शुम् । आ॒सु॒ । गृ॒भ्ण॒ते॒ ॥ ४३ ॥

सोममृत्विजः अंजते गोभिः तथा व्यंजते विविधमञ्जन्ति समंजते सम्यगंजन्ति स्तुत्यर्थत्वादपुनरुक्तिः । तथा क्रतुं बलकर्तारं रिहन्ति लिहन्ति आस्वादयन्ति देवाः तथा पुनर्मधुना गव्येन अभ्यंजते तमेव सोमं सिंधोरुदकस्यरसस्याधारभूते उच्छ्वासे उच्छ्रितदेशे पतयन्तं गच्छन्तं पतॄगतावित्यस्मात्स्वार्थेणिचि वृध्द्यभावश्छान्दसः। उक्षणं सेक्तारं हिरण्यपावाः हिरण्येन पुनन्तः पशुं द्रष्टारं । पशुः पश्यतेरितिनिरुक्तं[1] । आसु वसतीवरीषु गृभ्णते गृह्णन्ति ॥ ४३ ॥

अथ चतुश्चत्वारिंशी—

वि॒प॒श्चिते॒पव॑मानायगायतम॒हीनधारात्यन्धो॒अर्षति ।
अहि॒र्नजू॒र्णामति॒सर्प॑ति॒त्वच॒मत्यो॒नक्रीळ॑न्नसर॒द्वृषा॒हरिः॑ ॥ ४४ ॥

वि॒पः॒ऽचिते॑ । पव॑मानाय । गा॒य॒त॒ । म॒ही । न । धारा॑ । अति॑ । अन्धः॑ । अ॒र्ष॒ति॒ । अहिः॑ । न । जू॒र्णाम् । अति॑ । स॒र्प॒ति॒ । त्वच॑म् । अत्यः॑ । न । क्रीळ॑न् । अ॒स॒र॒त् । वृषा॑ । हरिः॑ ॥ ४४ ॥

---

1 नि० ३. १६.

हे ऋत्विजः विपश्चिते मेधाविने पवमानाय पूयमानाय गायत स्तुतिंकुरुत । सच विपश्चित्सोमः महीनधारा महतीवर्षधारेव अन्धोन्नंरसात्मकं अत्यर्षति अहिर्न अहिरिव जूर्णां जीर्णां त्वचमतिसर्पति अतिमुंचति अभिषवादिकर्मणा त्वचंमुंचतीत्यर्थः। तद्वदतिसर्पति धारा दशापवित्रात् अत्योन अश्वइव क्रीळन् असरत् सरति गच्छति द्रोणकलशं । वृषा वर्षकः कामानां हरि र्हरितवर्णोरसः ॥ ४४ ॥

अथ पञ्चचत्वारिंशी—

अग्रेगोराजाप्यंस्तविष्यतेविमानोअह्नांभुवनेष्वर्पितः ।
हरिर्घृतस्नुःसुदृशीकोअर्णवोज्योतीरथःपवतेरायओक्यः ॥४५॥२०॥

अग्रेऽगः । राजा । अप्यः । तविष्यते । विऽमानः । अह्नाम् ।
भुवनेषु । अर्पितः । हरिः । घृतऽस्नुः । सुऽदृशीकः । अर्णवः ।
ज्योतिःऽरथः । पवते । राये । ओक्यः ॥ ४५ ॥ २० ॥

अग्रेगः अग्रेगन्ता राजा राजमानः अप्यः अप्सुसंस्कृतः सोमः तविष्यते स्तूयते योह्नां दिनानां विमानो विमाता । चन्द्रकलाह्रासवृद्ध्यधीनत्वादहर्व्यवहारस्य भुवनेषूदकेषु वसतीवरीसंबंधिष्वर्पितः स्थापितः सराजा तविष्यते । किंच हरिर्हरितवर्णः घृतस्नुः प्रसृतोदकः सुदृशीकः शोभनदर्शनः अर्णवः उदकवान् अर्णइत्युदकनाम । ज्योतीरथः ज्योतिर्मयरथः राये धनस्य प्रापयिता ओक्यः ओकइतिनिवासनाम तस्यहितः एतादृशः सोमः पवते गच्छति ॥४५॥

॥ इति सप्तमस्य तृतीये विंशोवर्गः ॥ २० ॥

अथ षट्चत्वारिंशी—

असर्जिस्कम्भोदिवउद्यतोमदःपरित्रिधातुर्भुवनान्यर्षति ।
अंशुंरिहन्तिमतयःपनिप्नतंगिरायदिनिर्णिजमृग्मिणोययुः ॥४६॥

असर्जि । स्कम्भः । दिवः । उत्ऽयतः । मदः । परि । त्रिऽधातुः ।
भुवनानि । अर्षति । अंशुम् । रिहन्ति । मतयः । पनिप्नतम् । गिरा ।
यदि । निःऽनिजम् । ऋग्मिणः । ययुः ॥ ४६ ॥

दिवोद्युलोकस्य स्कंभः स्कंभयिता धारक उद्यतः मदः मादकः सोमः असर्जि सृज्यते अभिषूयतेइत्यर्थः । किंच त्रिधातुः द्रोणलकशाधवनीयपूतभृदाख्यास्त्रयोधातवोयस्य सतथोक्तः तादृशोभुवनानि उदकानि पर्यर्षति गच्छति अंशुं सोमं पनिप्नतं शब्दायमानं मतयः पूजकारिहन्ति लिहंति आस्वादयन्ति कदा यदि यदा निर्निजं निर्निक्तं यद्वा निर्निगितिरूपनाम रूपवन्तमित्यर्थः तं ऋग्मिणः स्तोतारोगिरास्तुत्या ययुर्गच्छन्ति तदा ॥ ४६ ॥

अथ सप्तचत्वारिंशी—

प्रतेधाराअत्यण्वानिमेष्यः पुनानस्यसंयतोयन्तिरंहयः ।
यद्गोभिरिन्दोचम्वोःसमज्यसआसुवानःसोमकलशेषुसीदसि ॥ ४७ ॥

प्र । ते । धाराः । अति । अण्वानि । मेष्यः । पुनानस्य । सम्ऽयतः ।
यन्ति । रंहयः । यत् । गोभिः । इन्दो इति । चम्वोः ।
सम्ऽअज्यसे । आ । सुवानः । सोम । कलशेषु । सीदसि ॥ ४७ ॥

पुनानस्य पूयमानस्य ते तव संयतः संगृह्यमाणाः रंहयोरंहणस्वभावा धाराः मेष्यःअण्वानि अणूनि लोमानि प्रतियन्ति अतिक्रम्यगच्छन्ति हे इन्दो सोम यद्यदा गोभिरुदकैः चम्वोः अधिषवणफलकयोरुपरि समज्यते तदानीं हे सोम सुवानः सूयमानस्त्वं कलशेष्वासीदसि ॥ ४७ ॥

अथाष्टाचत्वारिंशी—

पवस्वसोमक्रतुविन्नउक्थ्योऽव्योवारेपरिधावमधुप्रियम् ।
जहिविश्वान्रक्षसइन्दोअत्रिणोबृहद्वदेमविदथेसुवीराः ॥ ४८ ॥ २१ ॥

पवस्व । सोम । क्रतुऽवित् । नः । उक्थ्यः । अव्यः । वारे । परि ।
धाव । मधु । प्रियम् । जहि । विश्वान् । रक्षसः । इन्दो इति ।
अत्रिणः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ४८ ॥ २१ ॥

हे सोम नोस्माकं क्रतुवित् कर्मज्ञःस्तुतिज्ञइत्यर्थः उक्थ्यः स्तुत्यः यतः स्तुत्यः अतः क्रतुविदित्यभिप्रायः ईदृशस्त्वं नोस्माकं यागाय पवस्व स्रव रसं अव्योवारे दशापवित्रे प्रियं

मधु परिधाव परिक्षर हे इन्दो दीप्त सोम अत्रिणो भक्षकान् विश्वान् रक्षसोजहि सुवीराः सुपुत्रावयं विदथे यज्ञे बृहन्महद्धनं वदेम उच्चारयेम याचेमेत्यर्थः । यद्वा प्रभूतं स्तोत्रं वदेम ॥४८॥

॥ इति सप्तमस्य तृतीये एकविंशोवर्गः ॥ २१ ॥

प्रतुद्रवेतिनवर्चं द्वितीयंसूक्तं काव्यस्योशनसआर्षं अनादेशपरिभाषया त्रैष्टुभं पवमानसोमदेवताकं । तथाचानुक्रान्तं—प्रतुनवोशनाइति । जागतमूर्ध्वं प्रागुशनसइतिवचनाज्जगत्यधिकारोनिवृत्तः । गतोविनियोगः ।

तत्र प्रथमा—

प्रतुद्रवपरिकोशंनिषीदनृभिःपुनानोअभिवाजमर्ष ।
अश्वंनत्वावाजिनंमर्जयन्तोच्छाबर्हीरशनाभिर्नयन्ति ॥ १ ॥

प्र । तु । द्रव । परि । कोशम् । नि । सीद । नृऽभिः । पुनानः ।
अभि । वाजम् । अर्ष । अश्वम् । न । त्वा । वाजिनम् ।
मर्जयन्तः । अच्छ । बर्हिः । रशनाभिः । नयन्ति ॥ १ ॥

हे सोम तु क्षिप्रं प्रद्रव गच्छ गत्वाच कोशं द्रोणकलशं परिनिषीद निषण्णोभव । नृभिर्नेतृभिः पुनानः पूयमानः वाजमन्नं यजमानार्थं उद्दिश्याभ्यर्ष अभिगच्छ । वाजिनं बलवन्तमश्वंन अश्वमिव तं यथा मार्जयन्ति तद्वद्वाजिनं त्वां मर्जयन्तः मार्जयन्तः शोधयन्तोबर्हिर्यज्ञमच्छ प्रति रशनाभीरशनावदायताभिरंगुलिभिर्नयन्ति अध्वर्युप्रमुखाः ॥ १ ॥

अथ द्वितीया—

स्वायुधःपवतेदेवइन्दुरशस्तिहावृजनंरक्षमाणः ।
पितादेवानांजनितासुदक्षोविष्टम्भोदिवोधरुणःपृथिव्याः ॥ २ ॥

सुऽआयुधः । पवते । देवः । इन्दुः । अशस्तिऽहा ।
वृजनम् । रक्षमाणः । पिता । देवानाम् । जनिता ।
सुऽदक्षः । विऽस्तम्भः । दिवः । धरुणः । पृथिव्याः ॥ २ ॥

स्वायुधः शोभनायुधः इन्दुः सोमोदेवः पवते । सचदेवोशस्तिहा रक्षोहा वृजनं उपद्रवं रक्षमाणः पिता पालकोदेवानां तथा जनिताउत्पादकः । सुदक्षः सुबलः दिवोविष्टंभः विशेषेणस्तंभयिता पृथिव्याश्च धरुणोधारकः एवं महानुभावः पवते ॥ २ ॥

अथ तृतीया—

ऋषिर्विप्रः पुरएता जनानामृभुर्धीरउशना काव्येन ।
सचिद्विवेद निहितं यदासामपीच्यं१ गुह्यं नाम गोनाम् ॥ ३ ॥

ऋषिः । विप्रः । पुरःऽएता । जनानाम् । ऋभुः । धीरः ।
उशना । काव्येन । सः । चित् । विवेद । निऽहितम् ।
यत् । आसाम् । अपीच्यम् । गुह्यम् । नाम । गोनाम् ॥ ३ ॥

ऋषिरतीन्द्रियद्रष्टा विप्रोमेधावी पुरएता पुरतोगन्ता जनानां मनुष्याणां ऋभुः उरुभासमानः धीरोधीमान् उशना एतन्नामाऋषिः यः सचित् सएव काव्येन कवित्वेन स्तोत्रेण विवेद लभते । किं यदासां गोनां गवां अपीच्यंअंतर्हितनामैतत् अंतर्हितं गुह्यं गोपनीयं नाम नामकमुदकं पयोलक्षणं निहितं स्थापितं लभतइत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

एषस्यते मधुमाँ इन्द्र सोमोवृषावृष्णे परिपवित्रे अक्षाः ।
सहस्रसाः शतसाभूरिदावा शश्वत्तमं बर्हिरावाज्यस्थात् ॥ ४ ॥

एषः । स्यः । ते । मधुऽमान् । इन्द्र । सोमः । वृषा । वृष्णे ।
परि । पवित्रे । अक्षारिति । सहस्रऽसाः । शतऽसाः । भूरिऽदावा ।
शश्वत्ऽतमम् । बर्हिः । आ । वाजी । अस्थात् ॥ ४ ॥

हे इन्द्र वृष्णे वर्षकाय ते तुभ्यं एषस्यः ससोमोमधुमान् माधुर्योपेतोवृषा वर्षकः पवित्रे पर्यक्षाः परिक्षरति क्षरतेर्लुङिरूपं । सएव सहस्रसाः सहस्रसंख्याकधनस्यदाता शतसाः शतसंख्याकस्य दाता भूरिदावा ततोपि भूरेर्दाता वाजी बलवान् शश्वत्तमं नित्यं बार्हियज्ञं आ अस्थात् आतिष्ठति ॥ ४ ॥

अथ पंचमी—

एतेसोमाअभिगव्यासहस्रामहेवाजायामृताय्श्रवांसि ।
पवित्रेभिःपवमानाअसृग्रञ्छ्रवस्यवोनपृतनाजोअत्याः॥५॥२२॥

एते । सोमाः । अभि । गव्या । सहस्रा । महे । वाजाय ।
अमृताय । श्रवांसि । पवित्रेभिः । पवमानाः । असृग्रन् ।
श्रवस्यवः । न । पृतनाजः । अत्याः ॥ ५ ॥ २२ ॥

एतेसोमाः गव्या गव्यानि सहस्रा सहस्राणि श्रवांस्यन्नानि आशिरलक्षणानि लक्षीकृत्य पवित्रेभिः पवित्रच्छिद्रैः पवमानाः पूयमानाः महे महते वाजायान्नाय अमृताय अमृतत्वाय अभ्यसृग्रन् सृज्यन्ते । किमिच्छवः श्रवस्यवः अन्नेच्छवः पृतनाजः सेनाजेतारःअत्यान अश्वाइव ॥ ५ ॥

॥ इति सप्तमस्य तृतीये द्वाविंशोवर्गः ॥ २२ ॥

अथ षष्ठी—

परिहिष्मापुरुहूतोजनानांविश्वासरद्भोजनापूयमानः ।
अथाभरश्येनभृतप्रयांसिरयिंतुञ्जानोअभिवाजमर्ष ॥ ६ ॥

परि । हि । स्म । पुरुऽहूतः । जनानाम् । विश्वा । असरत् ।
भोजना । पूयमानः । अथ । आ । भर । श्येनऽभृत । प्रयांसि ।
रयिम् । तुञ्जानः । अभि । वाजम् । अर्ष ॥ ६ ॥

अयं पर्यसरत परिसरति जनानां अर्थाय । विश्वा सर्वाणि भोजना भोजनानि अन्नानि धनानिवा । कीदृशः पुरुहूतः बहुभिराहूतः पूयमानः शोध्यमानः । अथप्रत्यक्षकृतः अथेदानीं हे श्येनभृत श्येनेनाहृत सोम त्वं प्रयांस्यन्नानि आभर आहर रयिं धनं तुंजानः ददानः वाजमन्नरसं अभ्यर्ष अभिगच्छ ॥ ६ ॥

अथ सप्तमी—

एषसुवानःपरिसोमःपवित्रेसर्गोनसृष्टोअदधावदर्वा ।
तिग्मेशिशानोमहिषोनशृङ्गेगागव्यन्नभिशूरोनसत्वा ॥ ७ ॥

एषः । सुवानः । परि । सोमः । पवित्रे । सर्गः । न । सृष्टः ।
अदधावत् । अर्वा । तिग्मे इति । शिशानः । महिषः । न ।
शृङ्गे इति । गाः । गव्यन् । अभि । शूरः । न । सत्वा ॥ ७ ॥

एषसुवानः सूयमानः अर्वा अरणकुशलः सोमः सर्गोनसृष्टः विसृष्टोश्वइव पवित्रे पर्यदधावत् परिधावति । किंच तिग्मे तीक्ष्णे शृंगे शिशानः तीक्ष्णीकुर्वन् महिषोन महान् महिषाख्योमृगइव । तथान्यदृष्टान्तः—गा गव्यन् प्रभूतागाइच्छन् शूरोन शूरइव एतौ महिषशूरौ यथा प्रतिबुद्धौ शीघ्रं धावतः तद्वत् सत्वा सदनशीलोयं अभिगच्छतीतिशेषः ॥ ७ ॥

अथाष्टमी—

एषाययौपरमादन्तरद्रेःकूचित्सतीरूर्वेगाविवेद ।
दिवोनविद्युत्स्तनयन्त्यभ्रैःसोमस्यतेपवतइन्द्रधारा ॥ ८ ॥

एषा । आ । ययौ । परमात् । अन्तः । अद्रेः । कूःचित् । सतीः ।
ऊर्वे । गाः । विवेद । दिवः । न । विऽद्युत् । स्तनयन्ती । अभ्रैः ।
सोमस्य । ते । पवते । इन्द्र । धारा ॥ ८ ॥

एषा सोमधारा परमात् उच्छ्रितात् स्थानात् ययौ जगाम पात्रं तयामाप्तव्यंदेशंवा । किंच अद्रेः पणीनां निवासस्थानस्य पर्वतस्यान्तः कूचित् क्वचित् कुत्रचिद्गूढे ऊर्वे देशे सतीः वर्तमानाः पणिभिरपहृताः गाः विवेदलब्धवती । यत्र पणयोगाअपहृत्यस्थापितवन्तः सदेशऊर्वः । ऊर्वंगव्यंमहिगृणानइति[1] हिमंत्रान्तरं । दिवोनविद्युत् दिवःसकाशाद्विद्युदिव स्तनयन्ती शब्दयन्ती विद्युद्विशेष्यते अभ्रैः प्रेरितेतिशेषः सायथाशब्दंकरोति तद्वच्छब्दं कुर्वन्ती सोमस्य संबन्धिनी सेयं धारा हे इन्द्र ते त्वदर्थं त्वत्पानाय पवते पूयते क्षरति वा ॥ ८ ॥

---

१ ऋ० सं० ४. ६. १. ।

अथ नवमी—

उतस्मंराशिंपरिंयासिगोनामिन्द्रेणसोमसरथंपुनानः ।
पूर्वीरिषोबृहतीर्जीरदानोशिक्षाशचीवस्तवताउपष्टुत् ॥ ९ ॥ २३॥

उत । स्म । राशिम् । परि । यासि । गोनाम् । इन्द्रेण । सोम ।
सऽरथम् । पुनानः । पूर्वीः । इषः । बृहतीः । जीरदानो इति
जीरऽदानो । शिक्ष । शचीऽवः । तव । ताः । उपऽस्तुत ॥ ९ ॥ २३॥

उतस्म अपिच खलु हेसोम पुनानः पूयमानोगोनां गवांराशिंसमूहं पणिभिरपहृतं परियासि परिगच्छसि । कथंभूतःसन् उच्यते इन्द्रेणसह रथमेकमेवरथं आस्थाय । हे जीरदानो क्षिप्रदानसोम उपस्तुत उपस्तूयमानस्त्वं पूर्वीर्बह्वीः बृहतीर्महतीरिषः उक्तलक्षणान्यन्नानि शिक्ष देहि । हेशचीवः अन्नवन् ताइषःतवस्वभूता इतिशेषः ॥ ९ ॥

॥ इति सप्तमस्य तृतीये त्रयोविंशोवर्गः ॥ २३ ॥

अयं सोमइत्यष्टर्चं तृतीयंसूक्तं ऋष्याद्याःपूर्ववत् । अयं सोमोष्टावित्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

अयंसोमइन्द्रतुभ्यंसुन्वेतुभ्यंपवतेत्वमस्यपाहि ।
त्वंहयंचकृषेत्वंववृषइन्दुंमदायुयुज्यायसोमम् ॥ १ ॥

अयम् । सोमः । इन्द्र । तुभ्यम् । सुन्वे । तुभ्यम् । पवते । त्वम् ।
अस्य । पाहि । त्वम् । ह । यम् । चकृषे । त्वम् । ववृषे ।
इन्दुम् । मदाय । युज्याय । सोमम् ॥ १ ॥

हे इंद्रअयं सोमः तुभ्यं त्वदर्थं सुन्वे सूयते सुनोतेः कर्मार्थे लटि लोपस्तआत्मनेपदेष्विति तलोपः तुभ्यं त्वदर्थमेव पवते पूयते त्वंचास्य अमुंपाहि पिब त्वंह यं इंदुं सोमं चकृषे करोषि त्वंच यं ववृषे वृतवानसि किमर्थं मदाय युज्याय सहायाय सोमं इन्द्राय बलकरत्वात् सहायइतिप्रसिद्धं यमेवंकरोषित्वं तंपाहीतिसमन्वयः ॥ १ ॥

अथ द्वितीया—

**सईंरथोनभुरिषाळयोजिमहः पुरूणिसातयेवसूनि ।**
**आदींविश्वानहुष्याणिजातास्वर्षातावनऊर्ध्वानवन्त ॥ २ ॥**

सः । ईम् । रथः । न । भुरिषाट् । अयोजि । महः । पुरूणि ।
सातये । वसूनि । आत् । ईम् । विश्वा । नहुष्याणि ।
जाता । स्वःऽसाता । वने । ऊर्ध्वा । नवन्त ॥ २ ॥

सईं सोयं सोमः भुरिषाट् भूरिभारस्यसोढा रथोन रथइव भुरिषाट् प्रभूतस्य भारस्य सोढा अयोजि युज्यते । कीदृशः समहोमहान् किमर्थमयोजि पुरूणि बहूनि वसूनि धनानि सातयेसमर्थ्यंदातुं । आदींयोगानंतरं विश्वा विश्वानि सर्वाणि नहुष्याणि नहुषोमनुष्यास्तेषां संबंधीनि जाता जातानि अस्मद्विरोधीनि ऊर्ध्वा उन्मुखानि वने वननीये स्वर्षाता स्वर्षातौ संग्रामनामैतत् स्वर्गलाभयुक्ते । संग्रामे नवंत गच्छन्तु । नवतिर्गतिकर्मा यद्वा सोमं संग्रामे युद्धार्थिनः संगच्छन्ति ॥ २ ॥

अथ तृतीया—

**वायुर्नयोनियुत्वाँइष्टयामानासत्येवहवआशम्भविष्ठः ।**
**विश्ववारोद्रविणोदाइवत्मन्पूषेवधीजवनोसिसोम ॥ ३ ॥**

वायुः । न । यः । नियुत्वान् । इष्टऽयामा । नासत्याऽइव ।
हवे । आ । शम्ऽभविष्ठः । विश्वऽवारः । द्रविणोदाःऽइव ।
त्मन् । पूषाऽइव । धीऽजवनः । असि । सोम ॥ ३ ॥

यः सोमोनियुत्वान् नियुतोवायोरश्वाः तद्वान् वायुर्न वायुरिव इष्टयामा इष्टगमनः । नासत्येव अश्विनाविव हवे हवमाह्वानमाकर्ण्य आसर्वतः शंभविष्ठः सुखस्यभावयितृतमः द्रविणोदातेव त्मन् आत्मनि विश्ववारोविश्वैर्वरणीयोभवति तद्वद्विश्ववारोसि । पूषेवपोषकः सवितेवधीजवनोवेगोसि । यद्वा कर्मणांप्रवर्तयितासि हे सोम ॥ ३ ॥

अथ चतुर्थी—

इन्द्रोनयोमहाकर्माणिचक्रिर्हन्तावृत्राणामसिसोमपूर्भित् ।
पैद्वोनहित्वमहिनाम्नांहन्ताविश्वस्यासिसोमदस्योः ॥ ४ ॥

इन्द्रः । न । यः । महा । कर्माणि । चक्रिः । हन्ता । वृत्राणाम् ।
असि । सोम । पूःऽभित् । पैद्वः । न । हि । त्वम् । अहिऽनाम्नाम् ।
हन्ता । विश्वस्य । असि । सोम । दस्योः ॥ ४ ॥

इन्द्रोन इन्द्रइव यस्त्वं महा महान्ति कर्माणि चक्रिः ताच्छील्येन करोषि सत्वं हेसोम वृत्राणां शत्रूणां हन्तासि भवसि। तथा पूर्भित् पुरांभेत्तासि। किंच पैद्वोनहि अश्वइवखलु अहिनाम्नां हन्ताभवसि । आगत्यहन्तीत्यहिः तन्नामकानामित्यर्थः । नकेवलंतेषामेव अपितु विश्वस्यापि सर्वस्यापि दस्योः उपक्षपयितुः शत्रोर्हन्तासि ॥ ४ ॥

अथ पंचमी—

अग्निर्नयोवनआसृज्यमानोवृथापाजांसिकृणुतेनदीषु ।
जनोनयुध्वामहतउपब्दिरियर्तिसोमःपवमानऊर्मिम् ॥ ५ ॥

अग्निः । न । यः । वने । आ । सृज्यमानः । वृथा । पाजांसि ।
कृणुते । नदीषु । जनः । न । युध्वा । महतः । उपब्दिः ।
इयर्ति । सोमः । पवमानः । ऊर्मिम् ॥ ५ ॥

अग्निर्न अग्निरिव यः सोमोवने अरण्ये आसृज्यमानः वनसंबन्धी अग्निः यथा बलानि कुरुते एवंयः सोमोवृषा अनायासेन नदीष्वान्तरिक्षाणि पाजांसि कृणुते कुरुते। किंच युध्वा युद्धस्यकर्ता जनोन शूरो मनुष्यइव महतः शत्रोरुपब्दिः वाङ्नामैतत् शब्दयितासन् पवमानः पूयमानः सोमः ऊर्मिं प्रवृद्धं रसमियर्ति प्रेरयति ॥ ५ ॥

अथ षष्ठी—

एतेसोमाअतिवाराण्यव्यादिव्यानकोशासोअभ्रवर्षाः ।
वृथासमुद्रंसिन्धवोननीचीःसुतासोअभिकलशाँअसृग्रन् ॥ ६ ॥

एते । सोमाः । अति । वाराणि । अव्या । दिव्याः । न ।
कोशासः । अभ्रऽवर्षाः । वृथा । समुद्रम् । सिन्धवः ।
न । नीचीः । सुतासः । अभि । कलशान् । असृग्रन् ॥ ६ ॥

एते पूयमानाः सोमाः अव्या अविमयानि वाराणि वालानि अतिगच्छन्तीतिशेषः । तत्र दृष्टान्तः—दिव्यान कोशासः दिविभवाः कोशाः आपइव ताविशेष्यन्ते अभ्रवर्षाः अभ्रैर्वृष्यमाणाः । किंच वृथा अनायासेन समुद्रं सिंधवोन नद्यइव नीचीः नीचीनाग्राः सुतासोभिषुताः सोमाः कलशानभ्यसृग्रन् अभिगच्छन्ति ॥ ६ ॥

अथ सप्तमी—

शुष्मीशर्धोनमारुतंपवस्वानभिशस्तादिव्यायथाविट् ।
आपोनमक्षूसुमतिर्भवानःसहस्राप्साःपृतनाषाण्नयज्ञः ॥ ७ ॥

शुष्मी । शर्धः । न । मारुतम् । पवस्व । अनभिऽशस्ता ।
दिव्या । यथा । विट् । आपः । न । मक्षु । सुऽमतिः । भव ।
नः । सहस्रऽअप्साः । पृतनाषाट् । न । यज्ञः ॥ ७ ॥

हे सोम शुष्मी शुष्मं बलं शोषणात् बलवांस्त्वं मारुतं शर्धोन मरुतां बलमिव पवस्व । तत्रदृष्टान्तमेवस्पष्टयति—यथा दिव्याविट् प्रजा अनभिशस्ता अभिशासोनिंदा अनिंदिता पवते । मरुतोवैदेवानांविशइतिहिब्राह्मणं[1] । किंच आपोन उदकानीव मक्षु क्षिप्रं पवमानस्त्वं सुमतिर्भव नोस्माकं । किंच सहस्राप्साः अप्सइतिरूपनाम बहुरूपस्त्वं पृतनाषाट्न पृतनानामभिभवितेन्द्रइव यज्ञो यष्टव्योभवसीति ॥ ७ ॥

अथाष्टमी—

राज्ञोनुतेवरुणस्यव्रतानिबृहद्गभीरंतवसोमधाम ।
शुचिष्ट्वमसिप्रियोनमित्रोदक्षाय्योअर्यमेवासिसोम ॥ ८ ॥ २४ ॥

राज्ञः । नु । ते । वरुणस्य । व्रतानि । बृहत् । गभीरम् । तव ।
सोम । धाम । शुचिः । त्वम् । असि । प्रियः । न । मित्रः ।
दक्षाय्यः । अर्यमाऽइव । असि । सोम ॥ ८ ॥ २४ ॥

---

1 ऐ० ब्रा० १. ९.

हे सोम वरुणस्य वारकस्य राज्ञः ते तव व्रतानि कर्माणि नुक्षिप्रं करोमीतिशेषः। हे सोम तव धाम तेजःस्थानं बृहन्महत् गभीरंच प्रियोन मित्रइव त्वं शुचिर्दीप्तः शुद्धोवासि अर्यमेव अर्यमादेवइव त्वं दक्षाय्योसि ॥ ८ ॥

॥ इति सप्तमस्य तृतीये चतुर्विंशोवर्गः ॥ २४ ॥

प्रोस्यवह्निरिति सप्तर्चंचतुर्थंसूक्तं ऋष्याद्याःपूर्ववत्। प्रोस्यसप्तेत्यनुक्रान्तं। गतोविनियोगः

तत्र प्रथमा—

**प्रोस्यवह्निःपथ्याभिरस्यान्दिवोनवृष्टिःपवमानोअक्षाः।**
**सहस्रधारोअसदन्न्य१स्मेमातुरुपस्थेवनआचसोमः ॥ १ ॥**

प्रो इति। स्यः। वह्निः। पथ्याभिः। अस्यान्। दिवः। न। वृष्टिः। पवमानः। अक्षारिति। सहस्रऽधारः। असदत्। नि। अस्मे इति। मातुः। उपऽस्थे। वने। आ। च। सोमः ॥ १ ॥

प्र उ इति निपातद्वयसमुदायएकोनिपातः। प्रो अस्यान् प्रस्यन्दते स्यः सवह्निः वोढा पथ्याभिः यज्ञमार्गैः दिवोनवृष्टिः दिवः सकाशात् वृष्टिरिव पवमानःसन् अक्षाः व्यापोषि। सोयंसोमः सहस्रधारोबहुधारःसन् अस्मे अस्मासु न्यसदत् निसीदति मातुः दशापवित्रस्य उपस्थे द्युलोकस्यवा उपस्थे अथवा वने सोमः आनिषीदति ॥ १ ॥

अथ द्वितीया—

**राजासिन्धूनामवसिष्टवासऋतस्यनावमारुहद्रजिष्ठाम्।**
**अप्सुद्रप्सोवावृधेश्येनजूतोदुहईंपितादुहईंपितुर्जाम् ॥ २ ॥**

राजा। सिन्धूनाम्। अवसिष्ट। वासः। ऋतस्य। नावम्। आ। अरुहत्। रजिष्ठाम्। अप्ऽसु। द्रप्सः। ववृधे। श्येनऽजूतः। दुहे। ईम्। पिता। दुहे। ईम्। पितुः। जाम् ॥ २ ॥

अयं राजा सोमः सिंधूनामुदकानां क्षीरादिस्यंदिनीनां गवांवासो वसनस्थानीयं क्षीराख्यं श्रयणद्रव्यं अवसिष्ट आच्छादयति तथाकृत्वा रजिष्ठां ऋजुतरां ऋतस्य यज्ञस्य नावमारुहत् आरोहति। सद्रप्सः सोमरसः श्येनजूतः श्येनेनापहृतोरसोप्सुवसतीवरीषु ववृधे वर्धते। ईं तमिमं पितुः पालकात् पितृस्थानीयात् द्युलोकात् जां जातमपत्यं सोमं ईमयं पितापालको

लोकोदुहे दोग्धिरसं। तथा अध्वर्युरपि दुहेदोग्धि अथवोक्तलक्षणमेवं सोमं पिता पालकः स्वामी यजमानोदोग्धि फलं। तथा दुहे अध्वर्युरपि रसंदुहे। यद्वा दुहईमिति पुनरुक्तिरादरार्था॥२॥

अथ तृतीया—

**सिंहंनसन्तमध्वोअयासंहरिमरुषंदिवोअस्यपतिम्।**
**शूरोयुत्सुप्रथमःपृच्छतेगाअस्यचक्षसापरिपात्युक्षा॥ ३॥**

सिंहम्। नसन्त। मध्वः। अयासम्। हरिम्। अरुषम्। दिवः।
अस्य। पतिम्। शूरः। युत्ऽसु। प्रथमः। पृच्छते। गाः।
अस्य। चक्षसा। परि। पाति। उक्षा॥ ३॥

सिंहं शत्रूणां हिंसकं सिंहसदृशं मध्वउदकस्य अयासं प्रेरकं हरिं हरितवर्णं अरुषं रूपवन्तं अस्यदिवोद्युलोकस्यपतिं पालकं सोमं नसंत व्याप्नुवन्ति। यजमानाः। युत्सु संग्रामेषु शूरः प्रथमोदेवानांमध्ये मुख्यः सोमोगाः पणिभिरपहृताः पृच्छतेमार्गज्ञान् पणीन् हत्वा गालब्धुं गोमार्गं पृच्छतीत्यर्थः। किंच अस्यचक्षसासामर्थ्येन उक्षा सेक्तादेवेन्द्रः परिपाति विश्वं॥ ३॥

अथ चतुर्थी—

**मधुपृष्ठंघोरमयासमश्वंरथेयुञ्जन्त्युरुचक्रऋष्वम्।**
**स्वसारईंजामयोमर्जयन्तिसनाभयोवाजिनमूर्जयन्ति॥ ४॥**

मधुऽपृष्ठम्। घोरम्। अयासम्। अश्वम्। रथे। युञ्जन्ति।
उरुऽचक्रे। ऋष्वम्। स्वसारः। ईम्। जामयः। मर्जयन्ति।
सऽनाभयः। वाजिनम्। ऊर्जयन्ति॥ ४॥

मधुपृष्ठं मधुरपृष्ठभागं घोरंभयानकं अयासं गन्तारं ऋष्वं दर्शनीयं उक्तलक्षणमश्वमश्वस्थानीयं व्याप्तं सोमं उरुचक्रे प्रभूतचक्रे रथे यथाश्वं युंजंति रथिकास्तद्वत् प्रभूतचरणेरथे रंहणस्यसाधने यज्ञाख्ये रथेयुंजंति योजयंत्यध्वर्य्वादयः। किंच ईमेनंसोमं स्वसारः स्वयंसारिण्यः परस्परं स्वसृभूतावा जामयोबन्धुभूता अंगुलयः एकहस्तनिष्पन्नत्वात् स्वसृत्वंजामित्वं च एवंभूतामार्जयन्ति शोधयन्ति। तदेवाह सनाभयः समानबंधना वाजिनं बलवन्तं सोममूर्जयन्ति बलिनंकुर्वन्ति॥ ४॥

अथ पंचमी—

चतस्र ईं घृतदुहः सचन्ते समाने अन्तर्धरुणे निषत्ताः ।
ता ईमर्षन्ति नमसा पुनानास्ता ईं विश्वतः परि षन्ति पूर्वीः ॥ ५ ॥

चतस्रः । ईम् । घृतऽदुहः । सचन्ते । समाने । अन्तः । धरुणे ।
निऽसत्ताः । ताः । ईम् । अर्षन्ति । नमसा । पुनानाः ।
ताः । ईम् । विश्वतः । परि । सन्ति । पूर्वीः ॥ ५ ॥

चतस्रो घृतदुहो घृतदोग्ध्र्यः गाव ईमेनं सोमं सचन्ते सेवन्ते । कीदृश्यस्ताः समाने एकस्मिन्धरुणे सर्वेषांधारके अन्तः अन्तरिक्षे निषत्ताः निषण्णाः ता घृतदुहः ईमेनमर्षन्ति प्राप्नुवन्ति नमसान्नेन पुनानाः पूयमानाः सत्यः ताः पूर्वीर्बह्व्यः प्रभूता गावो विश्वतः सर्वतः परिषंति परिभवन्ति ॥ ५ ॥

अथ षष्ठी—

विष्टम्भो दिवो धरुणः पृथिव्या विश्वा उत क्षितयो हस्ते अस्य ।
असत्त उत्सो गृणते नियुत्वान्मध्वो अंशुः पवत इन्द्रियाय ॥ ६ ॥

विष्टम्भः । दिवः । धरुणः । पृथिव्याः । विश्वाः । उत । क्षितयः ।
हस्ते । अस्य । असत् । ते । उत्सः । गृणते । नियुत्वान् । मध्वः ।
अंशुः । पवते । इन्द्रियाय ॥ ६ ॥

अयं सोमो दिवो द्युलोकस्य विष्टंभभूतः यथा गृहस्यस्तंभः तद्वत् तथा पृथिव्या धरुणो धारकः उतापिच विश्वाः सर्वाः क्षितयः प्रजाः अस्य सोमस्य हस्ते भवन्ति उत्सः उत्सरंत्यस्मात्कामा इत्युत्सः सोमः स गृणते स्तुवते ते तुभ्यं नियुत्वानश्ववान् असत् भवतु । स सोमो मध्वः मधु कर्मणि षष्ठी मधुररसः अंशुः सोमः । अंशुः शमष्टमात्रो भवती[1]तियास्कः । य इन्द्रियाय पवते पूयते भिपूयते ॥ ६ ॥

अथ सप्तमी—

वन्वन्नवातो अभि देववीतिमिन्द्राय सोम वृत्रहा पवस्व ।
शग्धि महः पुरुश्चन्द्रस्य रायः सुवीर्यस्य पतयः स्याम ॥ ७ ॥ २५ ॥

---

1 नि० ३. ५.

वन्वन् । अवा॑तः । अ॒भि । दे॒वऽवी॑तिम् । इन्द्रा॑य । सो॒म॒ ।

वृ॒त्र॒ऽहा । प॒व॒स्व॒ । श॒ग्धि । म॒हः । पु॒रु॒ऽच॒न्द्रस्य॑ । रा॒यः ।

सु॒ऽवीर्य॑स्य । पत॑यः । स्या॒म॒ ॥ ७ ॥ २५ ॥

वन्वन् सन् देववीतिं देवानांपानार्थं हे सोम इन्द्राय इन्द्रार्थं वृत्रहा वृत्रस्यहन्ता अवातः त्वं अभिपवस्व क्षर । कथंभूतः त्वं शग्धि शक्तिमान् महोमहानसि त्वत्प्रसादाद्वयं पुरुश्चन्द्रस्य बह्वाह्लादकस्य सुवीर्यस्य शोभनावीरायस्मिन् तादृशस्य राये धनस्य पतयः स्याम ॥ ७ ॥

॥ इतिसप्तमस्य तृतीये पंचविंशोवर्गः ॥ २५ ॥

प्रहिन्वानइति षळृचंपंचमंसूक्तं मैत्रावरुणेर्वसिष्ठस्यार्षं त्रैष्टुभं पवमानसोमदेवताकं । तथाचानुक्रान्तं । प्रहिन्वानःषड्वसिष्ठइति । गतोविनियोगः ।

तत्र प्रथमा—

प्रहि॑न्वा॒नोज॑नि॒तारोद॑स्यो॒रथो॒नवाजं॑सनि॒ष्यन्न॑यासीत् ।

इन्द्रं॑गच्छ॒न्नायु॑धा॒सं॒शिशा॑नो॒विश्वा॒वसु॒हस्त॑योरा॒दधा॑नः ॥ १ ॥

प्र । हि॒न्वा॒नः ज॒नि॒ता । रोद॑स्योः । रथः॑ । न । वाज॑म् ।

स॒नि॒ष्यन् । अ॒या॒सी॒त् । इन्द्र॑म् । गच्छ॑न् । आयु॑धा ।

स॒म्ऽशिशा॑नः । विश्वा॑ । वसु॑ । हस्त॑योः । आ॒ऽद॒धा॑नः ॥ १ ॥

हिन्वानः प्रेर्यमाणोध्वर्य्वादिभिः जनिता उत्पादयिता रोदस्योर्द्यावापृथिव्योः । तयोर्जनयितृत्वं वृष्टिप्रदानहविःप्रापणाभ्यां । रथोन यथा रथोगच्छति तादृक्सोमोवाजं अन्नं सनिष्यन् दास्यन् प्रायासीत् प्रयच्छति । इन्द्रंगच्छन् प्राप्नुवन् आयुधा आयुधानि संशिशानः सम्यक् तीक्ष्णीकुर्वन् इन्द्रसाहाय्यगमनार्थं तीक्ष्णायुधःसन् विश्वा सर्वाणि वसु वसूनि हस्तयोरादधानोस्मभ्यंदानाय एवंकुर्वन् प्रायासीत् ॥ १ ॥

अथ द्वितीया—

अ॒भित्रि॒पृ॒ष्ठंवृष॑णंव॒यो॒धामा॑ङ्गू॒षाणा॑मवावशन्त॒वाणीः॑ ।

वना॒वसा॑नो॒वरु॑णो॒नासिन्धू॒न्विर॑त्न॒धाद॑यते॒वार्या॑णि ॥ २ ॥

अ॒भि । त्रि॒ऽपृ॒ष्ठम् । वृष॑णम् । व॒यः॒ऽधाम् । आ॒ङ्गू॒षाणा॑म् ।

अ॒वा॒व॒श॒न्त॒ । वाणीः॑ । वना॑ । वसा॑नः । वरु॑णः । न ।

सिन्धू॑न् । वि । र॒त्न॒ऽधाः । द॒य॒ते॒ । वार्या॑णि ॥ २ ॥

त्रिपृष्ठं त्रीणिपृष्ठानि स्तोत्राणि द्रोणकलशादिस्थानानिवा सवनानि वा यस्यसतथोक्तः। तं वृषणं वर्षकं वयोधामन्नस्यदातारं सोमं आंगूषाणां आघोषवतां स्तोतॄणां वाणीर्वाचः अभ्यवावशन्त शब्दयन्ते। वना वनानि उदकानि वसानः आच्छादयन् वरुणोन वरुणइव सिन्धूनाच्छादयति तद्वत् रत्नधाः रत्नानांदाता सोमोवार्याणि धनानि विदयते प्रयच्छति स्तोतृभ्यः॥ २॥

अथ तृतीया–

शूरग्रामःसर्ववीरःसहावाञ्जेतापवस्वसनिताधनानि।
तिग्मायुधःक्षिप्रधन्वासमत्स्वषाळ्हःसाह्वान्पृतनासुशत्रून्॥ ३॥

शूरऽग्रामः। सर्वऽवीरः। सहाऽवान्। जेता। पवस्व। सनिता। धनानि। तिग्मऽआयुधः। क्षिप्रऽधन्वा। समत्ऽसु। अषाळ्हः। सह्वान्। पृतनासु। शत्रून्॥ ३॥

हे सोम पवस्व त्वं। कीदृशस्त्वं शूरग्रामः शूराणां ग्रामः संघोयस्यसः सर्ववीरः सर्वे वीरायस्य सतथोक्तः सहावान् सहनवान् जेता जयशीलः सनिता संभक्ता धनानि तिग्मायुधः तीक्ष्णप्रहरणसाधनः क्षिप्रधन्वा क्षिप्रसहनशीलधन्वा समत्सु संग्रामेषु अषाळ्हः असोढः साह्वान् अभिभवन् कुत्र पृतनासु शत्रुसेनासु कान् शत्रून्॥ ३॥

अथ चतुर्थी–

उरुगव्यूतिरभयानिकृण्वन्त्समीचीनेआपवस्वापुरंधी।
अपःसिषासन्नुषसःस्व१र्गाःसंचिक्रदोमहोअस्मभ्यंवाजान्॥ ४॥

उरुऽगव्यूतिः। अभयानि। कृण्वन्। समीचीने इति सम्ऽईचीने। आ। पवस्व। पुरंधी इति पुरम्ऽधी। अपः। सिसासन्। उषसः। स्वः। गाः। सम्। चिक्रदः। महः। अस्मभ्यम्। वाजान्॥ ४॥

हे सोम उरुगव्यूतिर्विस्तीर्णमार्गस्त्वं अभयानि स्तोतृभ्यः कृण्वन् कुर्वन् पुरंधी इदं द्यावापृथिव्योर्नाम। ते समीचीने संगतेकुर्वन् आपवस्व आक्षर। अपः उषसः स्वः आदित्यं गारश्मींश्चसिषासन् पुष्ट्यर्थं संभक्तुमिच्छन् संचिक्रदः संक्रन्दसे। महोमहतः महान्ति वाजान् अन्नानिअस्मभ्यंदातुमितिशेषः॥ ४॥

अथ पंचमी–

मत्सिसोमवरुणंमत्सिमित्रंमत्सीन्द्रमिन्दोपवमानविष्णुम् ।
मत्सिशर्धोमारुतंमत्सिदेवान्मत्सिमहामिन्द्रमिन्दोमदाय ॥ ५ ॥

मत्सि । सोम । वरुणम् । मत्सि । मित्रम् । मत्सि । इन्द्रम् । इन्दो इति ।
पवमान । विष्णुम् । मत्सि । शर्धः । मारुतम् । मत्सि । देवान् ।
मत्सि । महाम् । इन्द्रम् । इन्दो इति । मदाय ॥ ५ ॥

हे पवमान पूयमानेन्दो सोम त्वं वरुणादीन् मत्सि तर्पय तेषां मदाय । इन्द्रस्य प्राधान्यात् द्विरभिधानं ॥ ५ ॥

अथ षष्ठी–

एवाराजेवक्रतुमाँअमेनविश्वाघनिघ्नद्दुरितापवस्व ।
इन्दोसूक्तायवचसेवयोधायूयंपातस्वस्तिभिःसदानः ॥ ६ ॥ २६ ॥

एव । राजाऽइव । क्रतुऽमान् । अमेन । विश्वा । घनिघ्नत् ।
दुःऽइता । पवस्व । इन्दो इति । सुऽउक्ताय । वचसे । वयः ।
धाः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥ २६ ॥

अनया स्तुतिमुपसंहरन् फलमाशास्ते । हेसोम एव एवं स्तुतइतिशेषः । क्रतुमांस्त्वं राजेव अमेन बलेन विश्वा सर्वाणिदुरिता दुरितानि घनिघ्नन् विनाशयन् पवस्व । हे इन्दो दीप्तसोम सूक्ताय शोभनमुदिताय वचसे अस्माकं स्तोत्राय तद्वचः विमृष्यार्थवदागत्य वयोधा अन्नंधेहि अन्नलाभस्य स्तुतिनिमित्तकत्वात्तस्य स्तुतिवचसः प्राधान्येनोक्तिः शिष्टं सिद्धं ॥ ६ ॥

॥ इति सप्तमस्य तृतीये षड्विंशोवर्गः ॥ २६ ॥

वेदार्थस्यप्रकाशेन तमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके तृतीयोध्यायः ॥३॥

---

## ॥ श्रीगणेशायनमः ॥



यस्यनिःश्वसितंवेदा योवेदेभ्योखिलंजगत् । निर्ममे तमहंवन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
तृतीयं श्रुतितत्वज्ञः सप्तमस्याष्टकस्यसः । व्याख्याय सायणामात्यश्चतुर्थं व्याचिकीर्षति ॥ २ ॥

तत्रासर्जीति षळृचमष्टमंसूक्तं मारीचस्य कश्यपस्यार्षं त्रैष्टुभं पवमानसोमदेवताकं । असर्जिकश्यपइत्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा–

ॐम् असर्जिवक्वारथ्येयथाजौधियामनोताप्रथमोमनीषी ।
दशस्वसारोअधिसानोअव्येजन्तिवह्निंसदनान्यच्छ ॥ १ ॥

असर्जि । वक्वा । रथ्ये । यथा । आजौ । धिया । मनोता ।
प्रथमः । मनीषी । दश । स्वसारः । अधि । सानौ । अव्ये ।
अजन्ति । वह्निम् । सदनानि । अच्छ ॥ १ ॥

वक्वा शब्दायमानः वचपरिभाषणे वनिप् । एतादृशः पवमानः सोमः आजौ अजन्ति कर्मार्थंमृत्विजइति आजिर्यज्ञः । तस्मिन् धिया कर्मणा स्तोत्रेणवा साकं असर्जि सृज्यते पात्रेष्विति । तत्र दृष्टान्तः–रथ्ये रथार्हे आजौ संग्रामनामैतत् । अजन्ति प्रक्षिपंत्यायुधान्यत्रेति तस्मिन् अश्वो यथा धिया अंगुल्या सृज्यते तद्वत् । कीदृशः मनोता यस्मिन्देवानां मनांसि ओतानि प्रोतानि सः । तथाचब्राह्मणं–तस्मिन्हितेषांमनांस्योतानीति[1] । प्रथमः सर्वेषां देवानांमुख्यः मनीषी मनसईषा मनीषा स्तुतिः तद्वान् दश स्वसारः दशसंख्याका अंगुलयः सदनानि यज्ञगृहाणि अच्छाभिमुखीकृत्य वह्निं वोढारं सोमं सानौ समुच्छ्रिते । अधिः सप्तम्यर्थानुवादः । अव्ये अविभवे अविवालेन कृते पवित्रे अजन्ति प्रेरयन्ति । अजगतिक्षेपणयोः ॥ १ ॥

---

१ ऐ० ब्रा० २. १०. ।

अथ द्वितीया—

**वीतीजनस्यदिव्यस्यकव्यैरधिसुवानोनहुष्येभिरिन्दुः ।**
**प्रयोनृभिरमृतोमर्त्येभिर्मर्मृजानोविभिर्गोभिरद्भिः ॥ २ ॥**

**वीती । जनस्य । दिव्यस्य । कव्यैः । अधि । सुवानः । नहुष्येभिः । इन्दुः । प्र । यः । नृऽभिः । अमृतः । मर्त्येभिः । मर्मृजानः । अविऽभिः । गोभिः । अत्ऽभिः ॥ २ ॥**

कव्यैः साधुभिः स्तोतृभिः नहुष्येभिर्मनुष्यैः सुवानः अभिषूयमाणः इंदुः सोमः दिव्यस्य दिविभवस्य जनस्य देवगणस्य वीती सुपांसुलुगिति चतुर्थ्याःपूर्वसवर्णदीर्घः सोमभक्षणार्थं यज्ञमधिगच्छति । किंच अमृतः मरणधर्मरहितोयः सोमः नृभिः कर्मनेतृभिः मर्त्येभिः मर्त्यैः अविभिरविमयैः पवित्रैः तथा गोभिरानडुहैः अधिषवणचर्मभिः । यद्वा गोविकारैः क्षीरादिभिः अद्भिःवसतीवर्यादिभिरुदकैश्च मर्मृजानः भृशंशोध्यमानःसन् यज्ञंमति गच्छति । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥ २ ॥

अथ तृतीया—

**वृषावृष्णेरोरुवदंशुरस्मैपवमानोरुशदीर्तेपयोगोः ।**
**सहस्रमृक्वापथिभिर्वचोविदध्वस्मभिःसूरोअण्वंवियाति ॥ ३ ॥**

**वृषा । वृष्णे । रोरुवत् । अंशुः । अस्मै । पवमानः । रुशत् । ईर्ते । पयः । गोः । सहस्रम् । ऋक्वा । पथिऽभिः । वचःऽवित् । अध्वस्मऽभिः । सूरः । अण्वम् । वि । याति ॥ ३ ॥**

वृषा कामानांवर्षकः वृषेवाचरन्वा रोरुवत् भृशंशब्दायमानः अंशुः सोमः पवमानः पूयमानः सन् अस्मै वृष्णे वर्षकायेन्द्राय तदर्थं रुशत् रोचतेरिदंरूपं । आरोचमानं श्वेतं गोः पय आश्रयणद्रव्यं ईर्ते गच्छति ईरगतौ आदादिकः । किंच ऋक्वा छन्दसीवनिपाविति मत्वर्थीयोवनिप् स्तोत्रवान् अतएव वचोवित् स्तुतीनांज्ञाता सूरः सुवीर्यः सर्वेषामग्निष्टोमादिकर्मप्रेरकः सोमः अध्वस्मभिः ध्वंसनवर्जितैः हिंसारहितैः सहस्रं पथिभिर्बहुभिर्मार्गैः अण्वं सूक्ष्मच्छिद्रं पवित्रं वियाति अतीत्य द्रोणकलशं गच्छति ॥ ३ ॥

अथ चतुर्थी—

रुजादृह्लाचिद्रक्षसःसदांसिपुनानइन्दऊर्णुहिविवाजान् ।
वृश्चोपरिष्टात्तुजतावधेनयेअन्तिदूरादुपनायमेषाम् ॥ ४ ॥

रुज । दृह्ला । चित् । रक्षसः । सदांसि । पुनानः । इन्दो इति ।
ऊर्णुहि । वि । वाजान् । वृश्च । उपरिष्टात् । तुजता । वधेन ।
ये । अन्ति । दूरात् । उपऽनायम् । एषाम् ॥ ४ ॥

हे सोम दृह्लाचित् दृढान्यपि परैरगन्तव्यत्वेन रक्षसोराक्षसस्य सदांसि स्थानानि पुराणि रुज विनाशय । रुजोभंगे तौदादिकः । किंच हे इन्दो पवमानः पुनानः पवित्रादिभिः पूयमानस्त्वं वाजान् अन्नानि तस्य बलानिवा विविधं ऊर्णुहि आच्छादय आहरेत्यर्थः । तथा येराक्षसा उपरिष्टादूर्ध्वदेशादागच्छन्ति ये वा अन्तिके समीपे आगच्छन्ति ये च दूरात् दूरदेशाद्वा आगच्छन्ति येषां राक्षसानां उपनायं उपनेतारं स्वामिनं तुजता तुजतिर्हिंसाकर्मा । हिंसकेन वधेन हननसाधनेनायुधेन त्वं वृश्च छिन्धि । ओव्रश्चूछेदने तौदादिकः ॥ ४ ॥

अथ पंचमी—

सप्रत्नवन्नव्यसेविश्ववारसूक्तायपथःकृणुहिप्राचः ।
येदुःषहासोवनुषाबृहन्तस्तांस्तेअश्यामपुरुकृत्पुरुक्षो ॥ ५ ॥

सः । प्रत्नऽवत् । नव्यसे । विश्वऽवार । सुऽउक्ताय । पथः । कृणुहि ।
प्राचः । ये । दुःऽसहासः । वनुषा । बृहन्तः । तान् । ते ।
अश्याम । पुरुऽकृत् । पुरुक्षो इति पुरुऽक्षो ॥ ५ ॥

हे विश्ववार विश्वैः सर्वैर्वरणीय हे सोम तादृशस्त्वं प्रत्नवत् पुराणइव स्थितस्त्वं नव्यसे नवीयसे नवतराय नवशब्दादीयसुनीकारलोपश्छांदसः । तस्मै सूक्ताय शोभनस्तुतिकाय मह्यं पथोमार्गान् प्राचः प्राचीनान् कृणुहि कुरु सर्वत्रगमनं प्रयच्छेत्यर्थः । कृविर्हिंसाकरणयोः धिन्विकृण्व्योरचेत्युप्रत्ययः । हेपुरुकृत् बहुकर्मन् हेपुरुक्षो टुक्षुशब्दे मितद्र्वादित्वात् डुप्रत्ययः । बहुविधं शब्दायमान हेसोम दुःसहासः रक्षोभिःसोढुमशक्याः अतएव वनुषा वनतिर्हिंसार्थः ।

हिंसयायुक्ताः बृहन्तोमहान्तः येत्वदीया अंशाःसन्ति तान् ते तव स्वभूतान् अंशान् वयं यज्ञे अश्याम प्राप्नुयाम ॥ ५ ॥

अथ षष्ठी—

एवापुनानोअपःस्व१र्गाअस्मभ्यंतोकातनयानिभूरि ।
शंनःक्षेत्रमुरुज्योतींषिसोमज्योङ्नःसूर्यंदृशयेरिरीहि ॥ ६ ॥ १ ॥

एव । पुनानः । अपः । स्वः । गाः । अस्मभ्यम् । तोका । तनयानि ।
भूरि । शम् । नः । क्षेत्रम् । उरु । ज्योतींषि । सोम । ज्योक् ।
नः । सूर्यम् । दृशये । रिरीहि ॥ ६ ॥ १ ॥

हे सोम एव एवं पुनानः पूयमानः पवित्रादिभिः अस्मभ्यं रिरीहि प्रापय प्रयच्छ । किं तत् अपः अपइत्यन्तरिक्षनाम आप्नोति सर्वमपि अन्तरिक्षं स्वः स्वर्गं द्युलोकं गाः सर्वैर्गम्यते अत्रेतिगावः पृथिव्यः ताः पृथिवीश्च भूरि सुपांसुलुगिति द्वितीयायालुक् । बहून् तोका तोकान् तनयानि तन्वन्ति कुलमिति तनयाः पौत्राः तांश्च तथा नोस्मभ्यं क्षेत्रं शं सुखकरं कुरु । हेसोम ज्योतींषि नक्षत्राणि उरु उरूणि अन्तरिक्षे विस्तीर्णानिकुरु । तथा नोस्मभ्यं सूर्यमादित्यं ज्योक् चिरनामैतत् चिरकालं दृशये द्रष्टुं कुरु ॥ ६ ॥

॥ इति सप्तमस्य चतुर्थे प्रथमोवर्गः ॥ १ ॥

परिसुवानइति षळृचंसप्तमंसूक्तं मारीचस्यकश्यपस्यार्षं त्रैष्टुभं पवमानसोमदेवताकं । परिसुवानइत्यनुक्रान्तं गतोविनियोगः ।

तत्र प्रथमा—

परिसुवानोहरिरंशुःपवित्रेरथोनसर्जिसनयेहियानः ।
आपच्छ्लोकमिन्द्रियंपूयमानःप्रतिदेवाँअजुषतप्रयोभिः ॥ १ ॥

परि । सुवानः । हरिः । अंशुः । पवित्रे । रथः । न । सर्जि ।
सनये । हियानः । आपत् । श्लोकम् । इन्द्रियम् । पूयमानः ।
प्रति । देवान् । अजुषत । प्रयःऽभिः ॥ १ ॥

सुवानः अभिषूयमाणः हियानः ऋत्विग्भिः प्रेर्यमाणः हरिर्हरितवर्णःअंशुः सोमः पवित्रे अविवालेन कृतेदशापवित्रे परिसर्जि परिसृज्यते। किमर्थं सनये धनलाभाय देवानां संभजनाय वा।तत्रदृष्टान्तः—रथोन रथोयथा युद्धे शत्रुवधार्थं शत्रुधनहरणार्थंवा सृज्यते तद्वत् । किंच पूयमानः पवित्रेण सोयंसोमः इन्द्रियं इन्द्रलिंगं इन्द्रस्य पर्याप्तं वा श्लोकं स्तोत्रमापत्आप्नोति आपृव्याप्तौलेटचडागमः । तथासःसोमः प्रयोभिः प्रीणयितृभिः हवीरूपैः अन्नैर्देवान् प्रत्यजुषत प्रतिसेवते जुषीप्रीतिसेवनयोः ॥ १ ॥

अथ द्वितीया—

अच्छाँनृचक्षाअसरत्पवित्रेनामदधानःकविरस्ययोनौ ।
सीदन्होतेवसदनेचमूषूपेमग्मन्नृषयःसप्तविप्राः ॥ २ ॥

अच्छ । नृऽचक्षाः । असरत् । पवित्रे । नाम । दधानः । कविः । अस्य । योनौ । सीदन् । होताऽइव । सदने । चमूषु । उप । ईम् । अग्मन् । ऋषयः । सप्त । विप्राः ॥ २ ॥

नृचक्षाः नृणांद्रष्टा कविः क्रान्तप्रज्ञः सोमः नाम वसतीवर्याख्यमुदकं दधानोधारयन् अस्य एतादृशस्यात्मनः योनौ स्थाने पवित्रे अच्छासरत् अभितः सरति ततः सदने सीदंत्यत्रेति सदनोयज्ञः तस्मिन् होतेव होतायथा देवान्स्तोतुमुपविशति तद्वत् देवानागन्तुं सीदन् उपविशन् सोमः चमूषु चमन्ति चम्वोग्रहादयः तेषु अभिसर । अनंतरं सप्त सप्तसंख्याका विप्रामेधाविनः भरद्वाजः कश्यपोगोतमोत्रिर्विश्वामित्रोजमदग्निर्वसिष्ठइत्येतेऋषयः ईमेनंसोमं उपाग्मन् स्तोत्रैरुपगच्छन्ति ॥ २ ॥

अथ तृतीया—

प्रसुमेधागातुविद्विश्वदेवःसोमःपुनानःसदएतिनित्यम् ।
भुवद्विश्वेषुकाव्येषुरन्तानुजनान्यततेपञ्चधीरः ॥ ३ ॥

प्र । सुऽमेधाः । गातुऽवित् । विश्वऽदेवः । सोमः । पुनानः । सदः । एति । नित्यम् । भुवत् । विश्वेषु । काव्येषु । रन्ता । अनु । जनान् । यतते । पञ्च । धीरः ॥ ३ ॥

सुमेधाः। नित्यमसिच्प्रजामेधयोरिति असिच् समासान्तः। शोभनप्रज्ञः गातुवित् मार्गस्यवेत्ता यद्वा गातवः स्तोतारः तेषां धनस्यलंभयितावा विश्वदेवः सर्वदेवोपगतः यद्वादेवो देवनं दीप्तिः व्यापकदीप्तियुक्तः एतादृशः सोमः पुनानः पूयमानः सन् नित्यमविनश्वरं सदः स्थानं द्रोणकलशं प्रैति प्रगच्छति अतः विश्वेषु सर्वेषु काव्येषु कविकर्मसु स्तोत्रेषु रन्ताभुवत् रमणशीलोभवति रमेस्ताच्छीलिकस्तृन्। तथा धीरः प्राज्ञः सोयंपंचजनान् निषादपंचमान् चतुरोवर्णान् अनुयतते अनुगन्तुं प्रयत्नंकरोति अनुगच्छतीतियावत् ॥ ३ ॥

अथ चतुर्थी—

तवत्येसोमपवमाननिण्येविश्वेदेवास्त्रयएकादशासः।
दशस्वधाभिरधिसानोअव्येमृजन्तित्वानद्यःसप्तयह्वीः ॥ ४ ॥

तव। त्ये। सोम। पवमान। निण्ये। विश्वे। देवाः। त्रयः।
एकादशासः। दश। स्वधाभिः। अधि। सानौ। अव्ये।
मृजन्ति। त्वा। नद्यः। सप्त। यह्वीः ॥ ४ ॥

हे पवमान पूयमान हेसोम तवस्वभूताः त्ये ते प्रसिद्धाः त्रयएकादशासः पूरणार्थेडट्प्रत्ययः। त्रयस्त्रिंशत्संख्याका विश्वेसर्वेदेवाः निण्ये अन्तर्हितनामैतत्। अंतर्हिते स्थाने द्युलोकेवर्तन्ते तादृशं त्वां दशसंख्याका अंगुलयः अधिसानौ अधिकं समुच्छ्रिते अव्ये अविमये पवित्रे स्वधाभिरुदकैर्वा मृजन्ति शोधयन्ति। किंच यह्वीः वाछन्दसीति पूर्वसवर्णदीर्घः। यह्व्योमहत्यः सप्तसंख्याकागंगाद्यानद्यः त्वा त्वां मृजन्ति वसतीवर्यात्मकैरेकधनात्मकैश्च स्वीयैरुदकैस्त्वां मार्जयन्ति इत्यर्थः ॥ ४ ॥

अथ पंचमी—

तन्नुसत्यंपवमानस्यास्तुयत्रविश्वेकारवःसंनसन्त।
ज्योतिर्यदह्नेअकृणोदुलोकंप्रावन्मनुंदस्यवेकरभीकम् ॥ ५ ॥

तत्। नु। सत्यम्। पवमानस्य। अस्तु। यत्र। विश्वे। कारवः।
सम्ऽनसन्त। ज्योतिः। यत्। अह्ने। अकृणोत्। ऊँ इति।
लोकम्। प्र। आवत्। मनुम्। दस्यवे। करः। अभीकम् ॥ ५ ॥

सत्यं सत्यभूतं तत्प्रसिद्धस्य पवमानस्य सोमस्यस्थानं नुक्षिप्रं अस्माकमस्तु यत्र यस्मिन्स्थाने विश्वेसर्वे कारवः स्तोतारः संनसन्त स्तोतुं संगच्छंते ततस्थानमस्तु । अस्यसोमस्य यत् ज्योतिः अह्ने दिवसाय लोकमालोकं प्रकाशं अकृणोत् करोति । उइत्यवधारणे । तत् ज्योतिः मनुं एतन्नामानं राजर्षिं प्रावत् प्रकर्षेणारक्षत् । तथा सोमः स्वीयंतेजः दस्यवे सर्वस्योपक्षपयित्रे असुराय अभीकं अभिगमनशीलं कःअकार्षीत् करोतेर्लुङि मंत्रेघसेति च्लेर्लुक् ॥५॥

अथ षष्ठी—

परिसद्मेवपशुमान्तिहोताराजानसत्यःसमितीरियानः ।
सोमःपुनानःकलशाँअयासीत्सीदन्मृगोनमहिषोवनेषु ॥ ६ ॥ २॥

परि । सद्मंऽइव । पशुऽमन्ति । होता । राजा । न । सत्यः ।
समऽइतीः । इयानः । सोमः । पुनानः । कलशान् ।
अयासीत् । सीदन् । मृगः । न । महिषः । वनेषु ॥ ६ ॥ २ ॥

होता देवानामाह्वाता ऋत्विक् पशुमन्ति पशुमतः सद्मेव यज्ञगृहान् यथापरिगच्छते । किंच राजा न यथाराजा सत्यः सत्यकर्मासन् समितीः संग्रामनामैतत् सम्यक्प्राप्यते योद्धृभिरत्रेतितान् संग्रामान् इयानोगच्छन् भवति । तथा पुनानः सोमोवनेषु वननीयेषु वसतीवयाख्येषूदकेषुसीदन् मृगोन महिषः महिषाख्योमृगइव उदकेषुतिष्ठन् कलशान् द्रोणाभिधानान् अयासीत् परियाति । यद्वा महिषोमहान् पूज्योवा सोमः कलशान् परिगच्छतीति ॥ ६ ॥

॥ इति सप्तमस्य चतुर्थे द्वितीयोवर्गः ॥ २ ॥

साकमुक्षइति पंचर्चमष्टमंसूक्तं गौतमस्यनोधसआर्षं पूर्ववच्छंदोदेवते । तथाचानुक्रम्यते । साकमुक्षःपंचनोधाइति । गतोविनियोगः ।

तत्र प्रथमा—

साकमुक्षोमर्जयन्तस्वसारोदशधीरस्यधीतयोधनुत्रीः ।
हरिःपर्यद्रवज्जाःसूर्यस्यद्रोणंननक्षेअत्योनवाजी ॥ १ ॥

साकम्ऽउक्षः । मर्जयन्त । स्वसारः । दश । धीरस्य ।
धीतयः । धनुत्रीः । हरिः । परि । अद्रवत् । जाः । सूर्यस्य ।
द्रोणम् । ननक्षे । अत्यः । न । वाजी ॥ १ ॥

साकमुक्षः सहयुगपत्सिंचंत्यः उक्षसेचने क्विपिरूपं । तादृश्यः स्वसारः कर्मकरणार्थं इतस्ततः सुष्ठुगच्छंत्योंगुलयः मर्जयंत सोमंशोधयन्ति । मृजूशौचालंकारयोः । तथा दश दशसंख्याकाः धीतयः अंगुलिनामैतत् । अंगुलयः धीरस्य समर्थस्य प्राज्ञस्यवा देवैर्ध्यातव्यस्य काम्यमानस्यवा सोमस्य धनुत्रीः प्रेरयित्र्योभवन्ति ततः हरिर्हरितवर्णः सोमः सूर्यस्यजाः प्रादुर्भूता जायादिशः ताः पर्यद्रवत् परितोगच्छति । सूर्यतेजसाहि आविर्भवन्तीति दिशां तस्यजात्वं । अत्यः अतनशीलोवाजीन अश्वइव स्थितः सोमः द्रोणं कलशं ननक्षे व्याप्नोति । नक्षतिर्व्याप्तिकर्मा ॥ १ ॥

अथ द्वितीया—

संमातृभिर्नशिशुर्वावशानोवृषादधन्वेपुरुवारोअद्भिः ।
मर्योनयोषामभिनिष्कृतंयन्त्सङ्गच्छतेकलशउस्रियाभिः ॥ २ ॥

सम् । मातृऽभिः । न । शिशुः । वावशानः । वृषा । दधन्वे ।
पुरुऽवारः । अत्ऽभिः । मर्यः । न । योषाम् । अभि ।
निःऽकृतम् । यत् । सम् । गच्छते । कलशे । उस्रियाभिः ॥ २ ॥

वावशानः देवान्कामयमानः वृषा कामानांवर्षकः अतएव पुरुवारः बहुभिर्वरणीयःसोमः अद्भिः मातृभूताभिः वसतीवरीभिः संदधन्वे संधार्यते । तत्रदृष्टान्तः—मातृभिर्नशिशुः कामयमानः पुत्रोयथा मातृभिः पयःप्रदानेन संधार्यते । धविर्गत्यर्थः कर्मणिलिटिरूपं । मर्योन मनुष्योयथा योषां युवतिं अभिगच्छति तद्वत् निष्कृतं संस्कृतं स्वस्थानं अभियन् अभिगच्छन् कलशे द्रोणाभिधाने उस्रियाभिरद्भिः गोविकारैः क्षीरादिभिर्वासंगच्छते । गमेरकर्मकात् समोगम्यृच्छीत्यात्मनेपदं ॥ २ ॥

अथ तृतीया—

उत प्र पिप्य ऊधरघ्न्याया इन्दुर्धाराभिः सचते सुमेधाः ।
मूर्धानं गावः पयसा चमूष्वभि श्रीणन्ति वसुभिर्न निक्तैः ॥ ३ ॥

उत । प्र । पिप्ये । ऊधः । अघ्न्यायाः । इन्दुः । धाराभिः ।
सचते । सुऽमेधाः । मूर्धानम् । गावः । पयसा । चमूषु ।
अभि । श्रीणन्ति । वसुऽभिः । न । निक्तैः ॥ ३ ॥

उतापिच अघ्न्यायाः अघ्न्येतिगोनाम अहंतव्यायागोरूधः पयःस्थानं सोमः प्रपिप्ये ओषध्यादिषु सोमः प्रविश्य प्रकर्षेणाप्याययति । प्यायतेर्लिटिलिडयङोश्चेतिपीभावः । सुमेधाः शोभनप्रज्ञः सोयं इन्दुः सोमः धाराभिः सचते समवैति संगच्छते । ततोगावः चमूषु चमन्ति भक्षयंत्यत्रसोममिति चम्वोग्रहादयः तेषुस्थितं मूर्धानं समुच्छ्रितमिमंसोमं पयसा श्वेतेन अभिश्रीणंति अभितआच्छादयन्ति । तत्रदृष्टान्तः—निक्तैः प्रक्षालितैर्वसुभिर्न वस्त्रैर्यथा आच्छादयन्ति तद्वत् ॥ ३ ॥

अथ चतुर्थी—

स नो देवेभिः पवमान रदेन्दो रयिमश्विनं वावशानः ।
रथिरायतामुशती पुरंधिरस्मद्र्य१गा दावने वसूनाम् ॥ ४ ॥

सः । नः । देवेभिः । पवमान । रद । इन्दो इति । रयिम् ।
अश्विनम् । वावशानः । रथिरऽयताम् । उशती ।
पुरम्ऽधिः । अस्मद्र्यक् । आ । दावने । वसूनाम् ॥ ४ ॥

हे पवमान पूयमानसोम सतादृशः त्वं नोस्मभ्यं देवेभिर्देवैःसह रद प्रयच्छ । किंतत् उच्यते हेइन्दो पात्रेषु क्षरन् सोम वावशानः कामयमानः सन् अश्विनं अश्ववन्तं रयिं धनं प्रयच्छेति । किंच रथिरायतां रथोयेषामस्तीति रथिराः । मेधारथाभ्यामितीरचूप्रत्ययः। तद्वदाचरतः तानिच्छतोवा पुरुषान् उशती कामयमाना पुरंधिः त्वदीया बहुविधाधीः वसूनां धनानां दावने दानाय अस्मद्र्यक् अस्मदभिमुख्यागच्छतु यद्वा रथिरायतामिति धनानांविशेषणं बलवतां

धनानामिति। अस्मद्र्यक् विष्वग्देवयोश्चटेरद्र्यञ्चतावप्रत्ययइति अद्र्यादेशः अद्रिसध्र्योरन्तोदा-त्तत्वनिपातनात् उदात्तस्वरितयोर्यणइतितिस्वरितः ॥ ४ ॥

अथ पंचमी—

नूनोरयिमुपमास्वनृवन्तंपुनानोवाताप्यंविश्वश्चन्द्रम्।
प्रवन्दितुरिन्दोतार्यायुःप्रातर्मक्षूधियावसुर्जगम्यात् ॥ ५ ॥ ३ ॥

नु । नः । रयिम् । उप । मास्व । नृऽवन्तम् । पुनानः ।
वाताप्यम् । विश्वऽचन्द्रम् । प्र । वन्दितुः । इन्दो इति । तारि ।
आयुः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ ५ ॥ ३॥

हे सोम पुनानः पूयमानस्त्वं नोस्मभ्यं नुक्षिप्रं नृवन्तं मनुष्यैर्युक्तं। छान्दसंमतुपोवत्वं। ता-दृशं रयिं धनं उपमास्व उपनिर्मिमीष्व उपकुर्वित्यर्थः। किंच विश्वचन्द्रं सर्वेषामाह्लादकं वाता-प्यं उदकनामैतत् उदकंचकुरु। तथा हे इन्दो सोम वन्दितुस्तवस्तोतुःआयुर्जीवनं प्रतारि त्वया वर्धितमस्तु सोयंसोमः धियावसुः बुध्याकर्मणावा प्राप्तधनः प्रातः काले वा सवने वा मक्षु शी-घ्रं अस्मदीयं यज्ञं प्रति जगम्यादागच्छेत् गमेर्लिङि बहुलंछन्दसीतिशपःश्लुः ॥ ५ ॥

॥ इति सप्तमस्य चतुर्थे तृतीयोवर्गः ॥ ३ ॥

अधियदिति पंचर्चंनवमंसूक्तं आंगिरसस्यकण्वस्यार्षं तथाचानुक्रम्यते—अधियत्कण्वइ-ति। पूर्ववच्छन्दोदेवते गतोविनियोगः।

तत्र प्रथमा—

अधियदस्मिन्वाजिनीवशुभःस्पर्धन्तेधियःसूर्येनविशः।
अपोवृणानःपवतेकवीयन्व्रजंनपशुवर्धनायमन्म ॥ १ ॥

अधि । यत् । अस्मिन् । वाजिनीऽइव । शुभः । स्पर्धन्ते ।
धियः । सूर्ये । न । विशः । अपः । वृणानः । पवते ।
कविऽयन् । व्रजम् । न । पशुऽवर्धनाय । मन्म ॥ १ ॥

यद्यदास्मिन्सोमे वाजिनीव शुभः अश्वेयथा वस्त्रप्रभृत्यलंकाराभवन्ति । यदावास्मिन् सोमे सूर्येन यथासूर्ये विशोरश्मयउदिताभवन्ति तदा धियोंगुलयः अधिस्पर्धन्ते अहंपुरस्ताच्छोधयामि अहंपुरस्ताच्छोधयामीत्यहमहमिकया उपतिष्ठन्ति । ततोयंसोमः अपोवसतीवरीर्वृणानः आच्छादयन् पवते पात्रेषु क्षरति कलशानि अधिगच्छति । कीदृशः कवीयन् कविरिवाचरन् । यद्वा कवयःस्तोतारः तानिच्छन् तत्रदृष्टान्तः—व्रजं न मन्म मननीयं गवां गोष्ठं पशुवर्धनाय पशूनां वर्धनाय गोपालः परिगच्छति तथा देवानां प्रीणनाय पात्राणिप्रति पवतइति ॥ १ ॥

अथ द्वितीया—

द्विता॒व्यू॒र्ण्वन्न॒मृत॑स्य॒धाम॑स्व॒र्विदे॒भुव॑नानि॒प्रथन्त ।
धियः॑पिन्वा॒नाः॒स्वस॑रे॒नगाव॑ऋता॒यन्ती॑र॒भिवा॑वश्र॒इन्दु॑म् ॥ २ ॥

द्विता । वि॒ऽऊ॒र्ण्वन् । अ॒मृत॑स्य । धाम॑ । स्वः॒ऽविदे॑ । भुव॑नानि । प्रथ॒न्त॒ । धियः॑ । पि॒न्वा॒नाः । स्वस॑रे । न । गावः॑ । ऋ॒त॒ऽयन्तीः॑ । अ॒भि । वा॒व॒श्रे॒ । इन्दु॑म् ॥ २ ॥

अमृतस्योदकस्यधाम धारकंस्थानमन्तरिक्षं सोमोद्विता द्विधा व्यूर्ण्वन् उभयतः स्वतेजसाच्छादयन् मध्येनगच्छति । ततः स्वर्विदे सर्वज्ञाय तस्मै सोमाय भुवनानि प्रथन्त विस्तीर्णानिभवन्ति । तस्यरश्मीनां संचरणार्थं प्रथन्तइत्यर्थः । अथ पिन्वानाः प्रीणयित्र्यः धियः स्तुतिलक्षणावाचः ऋतायन्तीर्यज्ञमिच्छंत्यः सत्यः तमिममिंदुं सोममभिलक्ष्य स्वसरे यागाहनि वावश्रे शब्दायन्ते । यद्वा सोमं कामयन्ते । तत्रदृष्टान्तः—गावोन यथापिन्वमानाः पयः क्षरंत्योगावः स्वसरे सुष्ठु अस्यन्ते प्रेर्यंते गावोत्रेति स्वसरोगोष्ठं तस्मिन्नच्छाभिलक्ष्य शब्दंकुर्वन्ति तद्वत् ॥ २ ॥

अथ तृतीया—

परि॒यत्क॒विः॒काव्या॒भर॑ते॒शूरो॒नरथो॒भुव॑नानि॒विश्वा॑ ।
दे॒वेषु॒यशो॒मर्ता॑य॒भूष॒न्दक्षा॑यरा॒यः॒पु॑रु॒भूषु॒नव्यः॑ ॥ ३ ॥

परि । यत् । कविः । काव्या । भरते । शूरः । न । रथः ।
भुवनानि । विश्वा । देवेषु । यशः । मर्ताय । भूषन् ।
दक्षाय । रायः । पुरुऽभूषु । नव्यः ॥ ३ ॥

कविः क्रान्तप्रज्ञः सोमः काव्या काव्यानि कवेः कर्माणि स्तोत्राणि यद्यदा परिभरते परितोबिभर्ति परिगच्छतीतियावत् । कथमिव शूरोन यथाशूरः शत्रूणांबाधकोरथस्तदीयः विश्वा भुवनानि सांग्रामिकानि भूतानि परियाति तद्वत् तदानीं देवेषुस्थितं यशोव्यापकं धनं मर्ताय मनुष्याय स्तोत्रे भूषन् भवतेरन्तर्भावितण्यर्थात् सनिरूपं भावयितुमिच्छन् सोमः रायः आत्मना दत्तस्यधनस्य दक्षाय वृध्यर्थं पुरुभूषु बहुषुयज्ञभवनेषु नव्यः स्तोतव्योभवति । णु स्तुतौ अचोयत् ॥ ३ ॥

अथ चतुर्थी—

श्रियेजातःश्रियआनिरियायश्रियंवयोजरितृभ्योदधाति ।
श्रियंवसानाअमृतत्वमायन्भवन्तिसत्यासमिथामितद्रौ ॥ ४ ॥

श्रिये । जातः । श्रिये । आ । निः । इयाय । श्रियम् ।
वयः । जरितृऽभ्यः । दधाति । श्रियम् । वसानाः । अमृतऽत्वम् ।
आयन् । भवन्ति । सत्या । सम्ऽइथा । मितऽद्रौ ॥ ४ ॥

ससोमः श्रियेजातः संपदर्थं प्रादुर्भूतोभवति । तदेवाह श्रिये श्र्यर्थएव आनिरियाय अंशुभ्य आभिमुख्येन निर्गच्छति निर्गतश्च ससोमः जरितृभ्यः स्तोतृभ्यः श्रियं वयोन्नं जीवनं चादधाति विदधाति प्रयच्छति । तेन दत्तांश्रियं वसाना आच्छादयन्तः स्तोतारः अमृतत्वं देवत्वं अमरणत्वं वा आयन् प्राप्नुवन् तस्मिन् मितद्रौ मितगमने सोमे समिथा युद्धनामैतत् सम्यक्प्राप्यते अत्रेति समीणइति । एतेः सम्पूर्वस्यथक्प्रत्ययः । तानि युद्धानि सत्या सत्यानि यथार्थानिभवन्ति नतुवितथानि तेनसोमेन पराजितानिभवन्तीत्यर्थः ॥ ४ ॥

अथ पञ्चमी—

इषमूर्जमभ्य१र्षाश्वंगामुरुज्योतिःकृणुहिमत्सिदेवान् ।
विश्वानिहिसुषहातानितुभ्यंपवमानबाधसेसोमशत्रून् ॥ ५ ॥ ४ ॥

इषम् । ऊर्जम् । अभि । अर्ष । अश्वम् । गाम् । उरु । ज्योतिः ।
कृणुहि । मत्सि । देवान् । विश्वानि । हि । सुऽसहा । तानि ।
तुभ्यम् । पवमान । बाधसे । सोम । शत्रून् ॥ ५ ॥ ४ ॥

हे सोम इषं अन्नं ऊर्जमन्नरसंच अस्मभ्यमभ्यर्ष अभिगमय । किंच अश्वं वाहनं गां पयःप्रदानेन यज्ञस्यसाधनभूतां गां च तथा उरु महत् ज्योतिः सूर्याख्यं कृणुहि जगदालोकनार्थंकुरु । किंच देवानिन्द्रादीन् मत्सि सोमेन तर्पय मदेर्लेटि बहुलंछन्दसीति विकरणस्यलुक् वाक्यभेदाददनिघातः । अपिच हेसोम तुभ्यं तानि विश्वानि सर्वाणि रक्षांसि सुषहा सुसहानि अनायासेनैव अभिभवितुं शक्यानि भवन्ति । हिरवधारणे। अतएव हे पवमान पूयमान हेसोम सर्वान् शत्रून् बाधसे जहि ॥ ५ ॥

॥ इति सप्तमस्य चतुर्थे चतुर्थोवर्गः ॥ ४ ॥

कनिक्रन्तीति पंचर्चंदशमंसूक्तं कण्वपुत्रस्य प्रस्कण्वस्यार्षं । तथानुक्रम्यते । कनिक्रन्तिप्रस्कण्वइति । पूर्ववच्छन्दोदेवते । गतोविनियोगः ।

तत्र प्रथमा—

कनिक्रन्तिहरिरासृज्यमानःसीदन्वनस्यजठरेपुनानः ।
नृभिर्यतःकृणुतेनिर्णिजंगाअतोमतीर्जनयतस्वधाभिः ॥ १ ॥

कनिक्रन्ति । हरिः । आ । सृज्यमानः । सीदन् । वनस्य ।
जठरे । पुनानः । नृऽभिः । यतः । कृणुते । निःऽनिजम् ।
गाः । अतः । मतीः । जनयत । स्वधाभिः ॥ १ ॥

आसृज्यमान आसमन्तात् विसृज्यमानोभिपूयमाणः हरिर्हरितवर्णः सोमः कनिक्रन्ति पुनःपुनः शब्दायते क्रन्दतेर्यङ्लुकि तिपीडभावे दाधर्तिदर्धर्ति इत्यादिनानिपातनादभ्यासस्य निगागमः अभ्यस्तस्वरः । तथा पुनानः पूयमानः वनस्य वननीयस्य द्रोणकलशस्य जठरे सीदन्नुपविशन् शब्दायते । किंच नृभिः कर्मनेतृभिर्ऋत्विग्भिः यतः संयतः सोमः गागोविकारान् क्षीरादीनि आच्छादयन् निर्निजं आत्मनोरूपं । कृणुते ग्रहादिषु करोति अतोस्मै सोमाय मती मननीयाः स्तुतीः स्वधाभिर्हविर्भिः सह जनयत स्तोतारोजनयन् । ह्रस्यान्तादेशाभावश्छान्दसः । यद्वा हे स्तोतारः अस्मै सोमाय स्तुतीर्जनयत उत्पादयत कुरुतेतियावत् ॥ १ ॥

अथ द्वितीया—

हरिःसृजानःपथ्यामृतस्येयर्तिवाचमरितेवनावम् ।
देवोदेवानांगुह्यानिनामाविष्कृणोतिबर्हिषिप्रवाचे ॥ २ ॥

हरिः । सृजानः । पथ्याम् । ऋतस्य । इयर्ति । वाचम् ।
अरिताऽइव । नावम् । देवः । देवानाम् । गुह्यानि । नाम ।
आविः । कृणोति । बर्हिषि । प्रऽवाचे ॥ २ ॥

सृजानः सृज्यमानः हरिर्हरितवर्णः सोमः ऋतस्य सत्यभूतस्य पथ्यां पथिभवांवाचं देवीं इयर्ति प्रेरयति । तत्रदृष्टान्तः—अरितेव जनान् तीरंप्रापयन् नाविकोयथा नावं प्रेरयति तद्वत् ऋगतौ जौहोत्यादिकः अर्तिपिपर्त्योरित्यभ्यासस्येत्वं । ततः देवोदीप्यमानः सोमः देवानां इन्द्रादीनां गुह्यानि अन्तर्हितानि नाम नामानि शरीराणि प्रवाचे प्रकर्षेणवाचयित्रे स्तोत्रे बर्हिषियज्ञे आविष्कृणोति स्तोतुमाविष्करोति ॥ २ ॥

अथ तृतीया—

अपामिवेदूर्मयस्तर्तुराणाःप्रमनीषाईरतेसोममच्छ ।
नमस्यन्तीरुपचयंतिसंचाचविशन्त्युशतीरुशन्तम् ॥ ३ ॥

अपाम्ऽइव । इत् । ऊर्मयः । तर्तुराणाः । प्र । मनीषाः । ईरते ।
सोमम् । अच्छ । नमस्यन्तीः । उप । च । यन्ति । सम् ।
च । आ । च । विशन्ति । उशतीः । उशन्तम् ॥ ३ ॥

अपामिव यथाउदकानामूर्मयस्त्वरन्ते इदितिपूरणः तद्वत् तर्तुराणाः कर्मणि देवान्स्तोतुं त्वरमाणाः । तुरत्वरणे जौहोत्यादिकः यङ्लुगन्तस्यशानचिरूपं अभ्यासस्यअवर्णश्च रेफादेशश्छान्दसः अभ्यस्तस्वरः । तादृशाऋत्विजः मनीषामनसईशित्रीः स्तुतीः सोममच्छ सोमं प्रतिप्रेरते प्रेरयन्ति । नमस्यन्तीः नमस्यन्त्यः सोमं पूजयंत्यः सत्यः तमुपयन्तिच उपगच्छन्ति तमेवसंयन्तिच । चवायोगेप्रथमेतिननिघातः । ततउशतीः कामयमानाः स्तुतयः उशन्तंकामयमानंसोमं आविशंति च प्रविशन्ति च ॥ ३ ॥

अथ चतुर्थी—

तंमर्मृजानंमहिषंनसानावंशुंदुहन्त्युक्षणंगिरिष्ठाम् ।
तंवावशानंमतयःसचन्तेत्रितोबिभर्तिवरुणंसमुद्रे ॥ ४ ॥

तम् । मर्मृजानम् । महिषम् । न । सानौ । अंशुम् । दुहन्ति ।
उक्षणम् । गिरिऽस्थाम् । तम् । वावशानम् । मतयः ।
सचन्ते । त्रितः । बिभर्ति । वरुणम् । समुद्रे ॥ ४ ॥

मर्मृजानं यष्टृभिःपरिचर्यमाणं महिषंन महिषाख्यंमृगमिव सानौ समुच्छ्रितेदेशे वर्तमानं उक्षणं कामानांसेक्तारं गिरिष्ठां अभिषवार्थं ग्रावसुनिष्ठितं तं तादृशं प्रसिद्धं अंशुं सोमं दुहन्ति ऋत्विजोदुहते । ग्रावाणंवत्साः ऋत्विजोदुहन्तीति तैत्तिरीयब्राह्मणं । तं तादृशं वावशानं कामयमानं सोमं मतयोमन्तव्याः स्तुतयः सचन्ते समवयन्ति सेवन्तेइतियावत् । ततः त्रितः त्रिषुस्थानेषु वर्तमानः इन्द्रः वरुणं शत्रूणांनिवारकमेनंसोमं समुद्रे अन्तरिक्षे बिभर्ति शत्रुवधार्थं धारयति यद्वा त्रितः त्रिषु स्थानेषु द्रोणाधवनीयपूतभृदाख्येषु कलशेषुस्थितःसोमः शत्रूणांनिवारकमिन्द्रं द्युलोकेबिभर्ति पोषयति ॥ ४ ॥

अथ पञ्चमी—

इष्यन्वाचमुपवक्तेवहोतुःपुनानइन्दोविष्यामनीषाम् ।
इन्द्रश्चयत्क्षयथःसौभगायसुवीर्यस्यपतयःस्याम ॥ ५ ॥ ५ ॥

इष्यन् । वाचम् । उपवक्ताऽइव । होतुः । पुनानः । इन्दो इति । वि । स्य । मनीषाम् । इन्द्रः । च । यत् । क्षयथः ।
सौभगाय । सुऽवीर्यस्य । पतयः । स्याम ॥ ५ ॥ ५ ॥

हे इन्दो सोम वाचं स्तुतिमिष्यन् प्रेरयन् होतुरुपवक्तेव यथा अध्वर्युः प्रतिगरंकुर्वन् प्रोत्साहयति तद्वत् स्तोतॄणां शंसनाय प्रोत्साहंकुर्वन् पुनानः पूयमानस्त्वं मनीषांबुद्धिं विष्य विमुंच । किंतु बुद्धिं धनप्रदानाभिमुखीं कुरु । किंच यद्यदाइन्द्रश्च त्वं सह यज्ञे क्षयथः निवसथः तदा

१ तै० सं० ६. २. ११. ।

स्तोतारोवयंसौभगाय सौभाग्याय स्याम। किंच सुवीर्यस्य शोभनवीर्योपेतस्य धनस्य पतयः स्वामिनः स्याम भवेम ॥ ५ ॥

॥ इति सप्तमस्य चतुर्थे पञ्चमोवर्गः ॥ ५ ॥

प्रसेनानीरिति चतुर्विंशत्यृचमेकादशंसूक्तं दिवोदासपुत्रस्य प्रतर्दनाख्यस्य राजर्षेरिदं त्रैष्टुभं पवमानसोमदेवताकं। तथाचानुक्रम्यते—प्रसेनानीश्चतुर्विंशतिर्दैवोदासिःप्रतर्दनइति। गतः सूक्तविनियोगः।

तत्र प्रथमा—

प्रसेनानीःशूरोअग्रेरथानांगव्यन्नेतिहर्षतेअस्यसेना।
भद्रान्कृण्वन्निन्द्रहवान्त्सखिभ्यआसोमोवस्त्रारभसानिदत्ते ॥ १॥

प्र। सेनाऽनीः। शूरः। अग्रे। रथानाम्। गव्यन्। एति।
हर्षते। अस्य। सेना। भद्रान्। कृण्वन्। इन्द्रऽहवान्। सखिऽभ्यः।
आ। सोमः। वस्त्रा। रभसानि। दत्ते ॥ १ ॥

सेनानीः सेनानामग्रे उपनेताशूरः शत्रूणांबाधकः सोमः गव्यन् शत्रूणांगाइच्छन् यद्वा यजमानानां पश्वादिकमिच्छन् रथानामग्रे रथानांपुरतः प्रैति प्रकर्षेण संग्रामं गच्छति। अस्यसोमस्य सेनाच हर्षते हृष्यति वाक्यभेदादनिघातः। किंच सखिभ्यः समानख्यानेभ्यः यजमानेभ्यः इन्द्रहवान् तैःकृतान् इन्द्रस्याह्वानानि भद्रान् कल्याणानि यथार्थानिकृण्वन् कुर्वन् आहूतोहीन्द्रः सोमंपीत्वा कामान् प्रयच्छतीति। रभसानि इन्द्रस्य वेगेनागमनेनिमित्तानि वस्त्रा वस्त्राणि आच्छादकानि पयःप्रभृतीन्याश्रयणानि आदत्ते आगृह्णाति ॥ १ ॥

अथ द्वितीया—

समस्यहरिंहरयोमृजन्त्यश्वहयैरनिशितंनमोभिः।
आतिष्ठतिरथमिन्द्रस्यसखाविद्वाँएनासुमतिंयात्यच्छ ॥ २ ॥

सम्। अस्य। हरिम्। हरयः। मृजन्ति। अश्वऽहयैः।
अनिऽशितम्। नमःऽभिः। आ। तिष्ठति। रथम्। इन्द्रस्य।
सखा। विद्वान्। एन। सुऽमतिम्। याति। अच्छ ॥ २ ॥

हरयः हरंत्यभिषुण्वन्ति सोममित्यृत्विजोंगुल्योवा हरिं हरितवर्णमस्य सोमस्य कारणमंशुं संमृजन्ति सम्यगभिषुण्वंति । ततः सोमः नमोभिः नामयितृभिः अश्वहयैर्व्याप्तैरपि अनिशितं असंस्कृतं अयुक्तमननुगतं रथं रमणसाधनमात्मीयं दशापवित्रं आतिष्ठति आसीदति । अनन्तरं इन्द्रस्य सखा सखिभूतः विद्वान् प्राज्ञः सोमः एना एतेन रथेन पवित्रेण सुमतिं शोभनस्तुतिकं स्तोतारं अच्छयाति अभिगच्छति अस्मिन् काले तेनक्रियमाणां स्तुतिमभिगच्छतीत्यर्थः ॥२॥

अथ तृतीया—

सनोदेवदेवतातेपवस्वमहेसोमप्सरसइन्द्रपानः ।
कृण्वन्नपोवर्षयन्द्यामुतेमामुरोरानोवरिवस्यापुनानः ॥ ३ ॥

सः । नः । देव । देवऽताते । पवस्व । महे । सोम । प्सरसे ।
इन्द्रऽपानः । कृण्वन् । अपः । वर्षयन् । द्याम् । उत । इमाम् ।
उरोः । आ । नः । वरिवस्य । पुनानः ॥ ३ ॥

हे देव द्योतमान हे सोम सतादृश इन्द्रपानः इन्द्रेणपातव्यस्त्वं नोस्माकं स्वभूते देवताते देवैस्तते वितते यज्ञे महे महते प्सरसे भक्षणाय इन्द्रस्य पानाय पवस्व ग्रहादिषुक्षर । किंच अपउदकानि कृण्वन् कुर्वन् उतापिच द्यामिमां द्यावापृथिव्यौ वर्षयन् भूमिं पर्जन्यरूपेण तर्पयति द्युलोकमग्निरूपेणेति । भूमिंपर्जन्याजिन्वंतिदिवंजिन्वंत्यग्नयइतिश्रवणात् । उरोः विस्तीर्णादन्तरिक्षात् आगच्छंस्त्वं पुनानः पूयमानःसन् नोस्मान् वरिवस्य धनादिप्रदानेन परिचरेति॥३॥

अथ चतुर्थी—

अजीतयेहतयेपवस्वस्वस्तयेसर्वतातयेबृहते ।
तदुशन्तिविश्वइमेसखायस्तदहंवश्मिपवमानसोम ॥ ४ ॥

अजीतये । अहतये । पवस्व । स्वस्तये । सर्वऽतातये ।
बृहते । तत् । उशन्ति । विश्वे । इमे । सखायः । तत् ।
अहम् । वश्मि । पवमान । सोम ॥ ४ ॥

---

१ ऋ० सं० २. ३. २३. ।

हे सोम अजीतये यथा वयंशत्रुभिरजिताभवेम तथा तेषामजयाय अहतये यथा तैरहताःस्याम तस्यैच अतएव स्वस्तये अविनाशाय । किंच बृहते सर्वतातये सर्वैरिन्द्रादिभिर्देवैःस्तूयमानाय यज्ञाय एतदर्थं पवस्व अस्मदभिमुखमागच्छ । पविर्गतिकर्मा । विश्वे सर्वे इमे मदीयाः सखायः स्तोतारः तत् त्वदीयं रक्षणमुशन्ति कामयन्ते । हे पवमानसोम तद्रक्षणं अहमपि वश्मि कामये ॥ ४ ॥

अथ पंचमी—

सोमः॑पवतेज॒नि॒ता म॑ती॒नां ज॑नि॒ता दि॒वो ज॑नि॒ता पृ॑थि॒व्याः ।
ज॒नि॒ताग्नेर्ज॑नि॒ता सूर्य॑स्य ज॒नि॒तेन्द्र॑स्य ज॒नि॒तोत विष्णोः॑ ॥ ५ ॥ ६॥

सोमः॑ । प॒व॒ते॒ । ज॒नि॒ता । म॒ती॒नाम् । ज॒नि॒ता । दि॒वः ।
ज॒नि॒ता । पृ॒थि॒व्याः । ज॒नि॒ता । अ॒ग्नेः । ज॒नि॒ता । सूर्य॑स्य ।
ज॒नि॒ता । इन्द्र॑स्य । ज॒नि॒ता । उ॒त । विष्णोः॑ ॥ ५ ॥ ६ ॥

सोमः अभिषूयमाणः पवते पात्रेषु क्षरति । कीदृशः मतीनां बुद्धीनां यद्वा मननीयानां स्तुतीनां जनिता जनयिता । जनितामंत्रइति निपातनाण्णिलोपः । किंच दिवोद्युलोकस्य जनिता प्रादुर्भावयिता । तथा पृथिव्या जनयिता अग्नेर्जनयिता प्रकाशयिता सूर्यस्य सर्वस्यप्रेरकस्यादित्यस्य जनिता इन्द्रस्यजनिता पानेन मदस्य जनयिता । उतापिच विष्णोः व्यापकस्य जनिता जनयिता एतत्सर्वं सोमेभिषूयमाणे भवतीति सोमोहि देवानाप्याययतीति ॥ ५ ॥

॥ इति सप्तमस्य चतुर्थे षष्ठोवर्गः ॥ ६ ॥

देवसुवां हविष्षु सोमस्य वनस्पतेर्ब्रह्मादेवानामितियाज्या । सूत्र्यतेच—त्वंचसोमनोवशो ब्रह्मादेवानांपदवीःकवीनामिति ।

सैषा सूक्ते षष्ठी—

ब्र॒ह्मा दे॒वानां॑ पद॒वीः क॑वी॒नामृषि॒र्विप्रा॑णां महि॒षो मृ॒गाणा॑म् ।
श्ये॒नो गृध्रा॑णां॒ स्वधि॑ति॒र्वना॑नां॒ सोमः॑ प॒वित्र॒मत्ये॑ति॒ रेभ॑न् ॥ ६ ॥

ब्रह्मा । देवानाम् । पद्ऽवीः । कवीनाम् । ऋषिः । विप्राणाम् ।
महिषः । मृगाणाम् । श्येनः । गृध्राणाम् । स्वऽधितिः । वनानाम् ।
सोमः । पवित्रम् । अति । एति । रेभन् ॥ ६ ॥

सोमएवंरूपोभवति देवानां स्तोत्रकारिणामृत्विजां ब्रह्मा ब्रह्माख्यर्त्विक्स्थानीयोभवति यद्वा देवानां द्योतमानानामिन्द्रादीनां ब्रह्मा राजाभवति । तथा कवीनां क्रान्तप्रज्ञानां पदवीः स्खलन्ति पदानि साधुत्वेन योयोजयति सपदवीः । वीगत्यादिष्वित्येतस्मात्क्विपि रूपं । तथा विप्राणां मेधाविनांमध्ये ऋषिर्भवति । यः परोक्षंपश्यति सऋषिः । ऋषिर्दर्शनादिति । मृगाणां महिषोभवति महिषाख्योबलवान् राजाभवति । तथा गृध्राणां पक्षिविशेषाणां श्येनः शंसनीयः पक्षिराजोभवति । वनानां वनतिर्हिंसाकर्मा । हिंसकानां छेदकानांमध्ये स्वधितिः एतन्नामकः छेदकोसि । एवंप्रभावः सोमः रेभन् शब्दायमानःसन् पवित्रमूर्णास्तुकेन कृतमत्येति अतिगच्छति ॥ ६ ॥

अथ सप्तमी—

प्रावीविपद्वाचऊर्मिंनसिन्धुर्गिरःसोमःपवमानोमनीषाः ।
अन्तःपश्यन्वृजनेमावराण्यातिष्ठतिवृषभोगोषुजानन् ॥ ७ ॥

प्र । अवीविपत् । वाचः । ऊर्मिम् । न । सिन्धुः । गिरः । सोमः ।
पवमानः । मनीषाः । अन्तरिति । पश्यन् । वृजना । इमा ।
अवराणि । आ । तिष्ठति । वृषभः । गोषु । जानन् ॥ ७ ॥

पवमानः सोमः मनीषाः मनसईशिताः हृदयंगमाः गिरः स्तुतीः प्रावीविपत् प्रकर्षेणावपयति प्रेरयति । कथमिव सिन्धुः स्यन्दमानानदीव वाचः शब्दस्य ऊर्मिंन संघंयथा प्रेरयति तद्वत् । किंच वृषभः कामानामुदकानांवा वर्षकः सोमः अन्तः अन्तर्हितं वस्तुजातं पश्यन् अवराणि दुर्बलैर्वारयितुमशक्यानि इमा वृजना इमानि बलानि आतिष्ठति आसीदति । किंकुर्वन् गोषुजानन् गवांजानानःसन् परबलानि प्रविशति ॥ ७ ॥

अथाष्टमी—

समत्सरःपृत्सुवन्वन्नवातःसहस्ररेताअभिवाजमर्ष ।
इन्द्रायेन्दोपवमानोमनीष्यं१शोरूर्मिमीरयगाइषण्यन् ॥ ८ ॥

सः । मत्सरः । पृत्ऽसु । वन्वन् । अवातः । सहस्रऽरेताः । अभि ।
वाजम् । अर्ष । इन्द्राय । इन्दो इति । पवमानः । मनीषी ।
अंशोः । ऊर्मिम् । ईरय । गाः । इषण्यन् ॥ ८ ॥

मत्सरोमदकरः पृत्सुसंग्रामेषु वन्वन् शत्रून्हिंसन् अतएव अवातः अन्यैर्गन्तुमशक्यः सहस्ररेताः सहस्रोदकधारोपेतः ससोमः वाजं शत्रूणांबलमभ्यर्ष अभिगच्छ । हे इन्दो सोम पवमानः पूयमानः मनीषी प्राज्ञस्त्वं गाइषण्यन् शब्दान् प्रेरयन् । यद्वा यजमानानां यज्ञसाधनभूताः गाःप्रेरयन् इन्द्राय इन्द्रार्थं अंशोरभिषूयमाणस्यसोमस्य ऊर्मिं संघमीरय प्रेरय ॥ ८ ॥

अथ नवमी—

परिप्रियःकलशेदेववातइन्द्रायसोमोरण्योमदाय ।
सहस्रधारःशतवाजइन्दुर्वाजीनसप्तिःसमनाजिगाति ॥ ९ ॥

परि । प्रियः । कलशे । देवऽवातः । इन्द्राय । सोमः । रण्यः ।
मदाय । सहस्रऽधारः । शतऽवाजः । इन्दुः । वाजी ।
न । सप्तिः । समना । जिगाति ॥ ९ ॥

प्रियः प्रीणयिता अतएव देववातः देवैरभिगतः रण्यः रमणीयः सोमः इन्द्राय इन्द्रस्य मदाय मदार्थं कलशे द्रोणाभिधाने परिजिगाति परिगच्छति । कीदृशः सहस्रधारोबहुविधधारोपेतः शतवाजः बहुबलः इन्दुः पात्रेषु क्षरन् । तत्रदृष्टान्तः—वाजीन यथावाजी बलवान् सप्तिरश्वः समना संग्रामनामैतत् समष्टमअवैक्लव्ये । समन्ति धृष्टाभवन्ति योद्धारोत्रेति तस्मिन्संग्रामे यथाश्वोजिगाति गच्छति तद्वत् ॥ ९ ॥

अथ दशमी—

सपूर्व्योवसुविज्जायमानोमृजानोअप्सुदुदुहानोअद्रौ ।
अभिशस्तिपाभुवनस्यराजाविदद्गातुंब्रह्मणेपूयमानः ॥ १० ॥ ७ ॥

सः । पूर्व्यः । वसुऽवित् । जायमानः । मृजानः । अप्ऽसु ।
दुदुहानः । अद्रौ । अभिशस्तिऽपाः । भुवनस्य । राजा ।
विदत् । गातुम् । ब्रह्मणे । पूयमानः ॥ १० ॥ ७ ॥

पूर्व्यः पुराणः यद्वा पूर्वैः कृतोभिषुतः वसुवित् धनानांलंभकः जायमानः अप्सु वसतीवर्याख्येषूदकेषु मृजानोमृज्यमानःअद्रौ अभिषवग्रावणि दुदुहानोदुह्यमानः अभिशस्तिपाः अभितः शस्तिर्हिंसा येषां तेअभिशस्तयः शत्रवः तेभ्यः परिरक्षकः भुवनस्य भूतजातस्य राजा स्वामी एवंविधः सतादृशः सोमः ब्रह्मणे कर्मार्थं पूयमानः सन् गातुं मार्गं समीचीनं विदत् यजमानेभ्यः प्रयच्छति ॥ १० ॥

॥ इति सप्तमस्य चतुर्थे सप्तमोवर्गः ॥ ७ ॥

महापितृयज्ञेपितरः सोमवन्तइत्यस्य द्वितीयानुवाक्या त्वयाहिनःपितरइत्येषा । सूत्रितंच— पितरोग्निष्वात्तायम उदीरतामवरउत्परासस्त्वयाहिनःपितरःसोमपूर्वइति ।

सैषा सूक्ते एकादशी—

त्वयाहिनःपितरःसोमपूर्वेकर्माणिचक्रुःपवमानधीराः ।
वन्वन्नवातःपरिधीँरपोर्णुवीरेभिरश्वैर्मघवाभवानः ॥ ११ ॥

त्वया । हि । नः । पितरः । सोम । पूर्वे । कर्माणि । चक्रुः ।
पवमान । धीराः । वन्वन् । अवातः । परिऽधीन् । अप । ऊर्णु ।
वीरेभिः । अश्वैः । मघऽवा । भव । नः । ॥ ११ ॥

हे पवमान पूयमानसोम धीराः कर्मणिकुशलाः प्राज्ञाः नोस्माकं पितरः पूर्वे पुरातनाः अंगिरसस्त्वया हिरवधारणे त्वयासहायेनैवकर्माणि अग्निष्टोमादीनि चक्रुः कृतवन्तः । किंच वन्वन् स्तोतॄन् संभजन् । यद्वा वनतिर्हिंसार्थः । शत्रून् हिंसन् अवातः तैरभिगतस्त्वंवीरेभिर्वेगवद्भिः अश्वैः व्यापकैः परिधीन् परिधीयते एभिः सर्वमिति परिधयोराक्षसाः तान् अपोर्णु अपोर्णुहि अपच्छादय जहीतियावत् । ऊर्णोतेर्लोटिछान्दसोहेर्लुक् । एतादृशस्त्वं नोस्माकं मघवा इन्द्रोभव भूयाः । पुत्रादियुक्तं धनं प्रयच्छेत्यर्थः ॥ ११ ॥

अथ द्वादशी—

यथापूर्वथामनवेवयोधाअमित्रहावरिवोविद्धविष्मान् ।
एवापवस्वद्रविणंदधानइन्द्रेसंतिष्ठजनयायुधानि ॥ १२ ॥

यथा । अपवथाः । मनवे । वयःऽधाः । अमित्रऽहा । वरिवःऽवित् ।
हविष्मान् । एव । पवस्व । द्रविणम् । दधानः । इन्द्रे ।
सम् । तिष्ठ । जनय । आयुधानि ॥ १२ ॥

हे सोम यथा पुरा त्वं मनवेराज्ञे वयोधाः अन्नस्यधाता तथा अमित्रहा शत्रूणांहन्ता वरिवोवित् धनस्यलंभयिता हविष्मान् पुरोडाशादियुक्तःसन् अपवथाः तस्मैधनादिकं प्रदातुंयथागच्छः एव एवमस्मभ्यमपि द्रविणं धनं दधानः प्रयच्छन् पवस्व अस्मदभिमुखमागच्छ। किंच अस्माभिर्दीयमानस्त्वं इन्द्रेसन्तिष्ठ सम्यकृतिष्ठ । अपिच आयुधानि त्वदीयानि जनय तस्मै प्रकाशय वाक्यभेदादनिघातः ॥ १२ ॥

अथ त्रयोदशी—

पवस्वसोममधुमाँऋतावापोवसानोअधिसानोअव्ये ।
अवद्रोणानिघृतवान्तिसीदमदिन्तमोमत्सरइन्द्रपानः ॥ १३ ॥

पवस्व । सोम । मधुऽमान् । ऋतऽवा । अपः । वसानः ।
अधि । सानौ । अव्ये । अव । द्रोणानि । घृतऽवन्ति ।
सीद । मदिन्ऽतमः । मत्सरः । इन्द्रऽपानः ॥ १३ ॥

हे सोम मधुमान् मदकररसोपेतः ऋतावा यज्ञवान् छन्दसीवनिपाविति वनिप् मत्वर्थीयः तादृशस्त्वं अपोवसतीवरीरेकधनाश्च वसानः आच्छादयन् अधि अधिकं सानौ समुच्छ्रिते अव्ये अविमये पवित्रे पवस्व क्षर। ततोमदिन्तमः अतिशयेनमदकरः इन्द्रपानः इन्द्रेणपातव्यो- मत्सरोमादयिता सोमः घृतवन्ति उदकवन्ति द्रोणानि द्रोणकलशान् अवसीद अवतिष्ठस्व॥ १३॥

अथ चतुर्दशी—

वृष्टिंदिवःशतधारःपवस्वसहस्रसावाजयुर्देववीतौ ।
संसिन्धुभिःकलशेवावशानःसमुस्रियाभिःप्रतिरन्नआयुः ॥ १४ ॥

वृष्टिम् । दिवः । शतऽधारः । पवस्व । सहस्रऽसाः । वाजऽयुः ।
देवऽवीतौ । सम् । सिन्धुऽभिः । कलशे । वावशानः ।
सम् । उस्रियाभिः । प्रऽतिरन् । नः । आयुः ॥ १४ ॥

हेसोम शतधारः बहुधोदकधारोपेतस्त्वं दिवोन्तरिक्षादादित्याद्वा वृष्टिंपवस्व कुरु । यद्वा शतधारः बहुधात्मीयधारोपेतस्त्वं दिवोद्योतमानात् पवित्रात् वृष्टिमविच्छिन्नधारां पवस्व पात्रेषुकुरु । कीदृशः देववीतौ देवानांवीतिः हविर्भक्षणं यस्मिन् सदेववीतिर्यज्ञः । तस्मिन् सहस्रसाः यजमानानां सहस्रस्य धनस्यदाता वाजयुः तेषामन्नंकामयमानस्त्वं सिन्धुभिः स्यन्दमानाभिः वसतीवरीभिः कलशेद्रोणाभिधानेसंवावशानः संगच्छस्व । तथात्वं नोस्माकमायुर्जीवनं प्रतिरन्वर्धयन् उस्रियाभिः गोविकारैः क्षीरादिभिश्च कलशे संगच्छस्व ॥ १४ ॥

अथ पंचदशी—

**एषस्यसोमोमतिभिःपुनानोत्योनवाजीतरतीदरातीः ।**
**पयोनदुग्धमदितेरिषिरमुर्विवगातुःसुयमोनवोह्ला ॥ १५ ॥ ८ ॥**

एषः । स्यः । सोमः । मतिऽभिः । पुनानः । अत्यः । न । वाजी ।
तरति । इत् । अरातीः । पयः । न । दुग्धम् । अदितेः । इषिरम् ।
उरुऽइव । गातुः । सुऽयमः । न । वोह्ला ॥ १५ ॥ ८ ॥

एषस्यः एतादृशः सोमः मतिभिर्मननसाधनैः स्तोत्रैः पुनानः पूयमानोभवति । यः सोमः अत्योन अतनशीलोवाजी अश्वइव संग्रामे अरातीः अरातीन् शत्रून् तरति इदवधारणे तरत्येव हिनस्त्येव । यद्वृत्तयोगादनिघातः । किंच अदितेर्गोर्नामैतत् अदीनायाः गोः इषिरं अन्वेषणीयं दुग्धंपयोन क्षीरं यथा पूतं भवति एवं सोमः परिशुद्धः । अपिच उर्वीव सुपांसुलुगिति सोर्लुक् । उरुविस्तीर्णो गातुः मार्गइव सर्वैः समाश्रयणीयः तथा वोह्लान वोढाअश्वइव सुयमः सुष्ठुनियन्तुं शक्योयथाभवति तद्वदयंसोमः सोतृभिर्नियन्तव्योभवति ॥१५॥

॥ इति सप्तमस्य चतुर्थेष्टमोवर्गः ॥ ८ ॥

अथ षोडशी—

स्वायुधःसोतृभिःपूयमानोभ्यर्षगुह्यंचारुनाम ।
अभिवाजंसप्तिरिवश्रवस्याभिवायुमभिगादेवसोम ॥ १६ ॥

सुऽआयुधः । सोतृऽभिः । पूयमानः । अभि । अर्ष । गुह्यम् ।
चारु । नाम । अभि । वाजम् । सप्तिःऽइव । श्रवस्या ।
अभि । वायुम् । अभि । गाः । देव । सोम ॥ १६ ॥

स्वायुधः शोभनायुधोपेतः । यद्वा यज्ञे स्फ्यकपालादीनि दशायुधानिसन्ति तद्वान् सोतृभिरभिषुण्वद्भिः पूयमानस्त्वं गुह्यं गुहायांनिहितं चारु कमनीयंनाम त्वदीयं रसात्मकंशरीरं स्तुतिभिः सहाभ्यर्ष कलशादीन्यभिगमय । किंच सप्तिरिव अश्वइव वर्तमानस्त्वं श्रवस्या । सुपांसुलुगिति सप्तम्याआजादेशः । अस्मदीयायामन्नेच्छायां वाजं अन्नमस्मभ्यमभिगमय । अपिच हेदेवस्तोतव्य हेसोम वायुं प्राणं जीवनं अभिगमय गाः पशूंश्च अस्मभ्यमभिगमय॥१६॥

अथ सप्तदशी—

शिशुंजज्ञानंहर्यतंमृजन्तिशुंभन्तिवह्निंमरुतोगणेन ।
कविर्गीर्भिःकाव्येनाकविःसन्त्सोमःपवित्रमत्येतिरेभन् ॥ १७ ॥

शिशुम् । जज्ञानम् । हर्यतम् । मृजन्ति । शुंभन्ति । वह्निम् ।
मरुतः । गणेन । कविः । गीःऽभिः । काव्येन । कविः । सन् ।
सोमः । पवित्रम् । अति । एति । रेभन् ॥ १७ ॥

शिशुं इदानीमुत्पन्नत्वात् शिशुवत्तिष्ठन्तं यद्वा पापानि तनूकुर्वन्तं विनाशयन्तंजज्ञानं प्रादुर्भूतं अतएवहर्यतं हर्यगतिकान्त्योः । भृमृदृशीत्यादिनाअतच् । सर्वैःकाम्यमानं सोमं मृजन्ति मरुतः शोधयन्ति । किंच वह्निं वोढारं सोमं गणेनात्मीयेन सप्तसंख्याकेनगणेन शुंभन्ति अलंकुर्वन्ति । ततः कविः क्रान्तप्रज्ञः सोमः काव्येन कविकर्मणैव कविः शब्दोपेतःसन् रेभन् शब्दायमानः गीर्भिः स्तुतिभिः सह पवित्रं अत्येति अतीत्यगच्छति ॥ १७॥

अथाष्टादशी—

ऋषिमनायऋषिकृत्स्वर्षाःसहस्रणीथःपदवीःकवीनाम् ।
तृतीयंधाममहिषःसिषासन्त्सोमोविराजमनुराजतिष्टुप् ॥ १८ ॥

ऋषिऽमनाः । यः । ऋषिऽकृत् । स्वःऽसाः । सहस्रऽनीथः ।
पदऽवीः । कवीनाम् । तृतीयम् । धाम । महिषः । सिसासन् ।
सोमः । विऽराजम् । अनु । राजति । स्तुप् ॥ १८ ॥

ऋषिमनाः सर्वदर्शनशीलमनस्कः अतएव ऋषिकृत् सर्वस्य दर्शनकर्ता प्रकाशनस्यकर्ता स्वर्षाः सर्वस्यसूर्यस्य वा संभक्ता सहस्रणीथः नीथा स्तुतिः बहुविधस्तुतिकः कवीनां क्रान्तप्रज्ञानांमध्ये पदवीः स्खलतांपदानां साधुत्वेन संयोजयिता यः सोमोविद्यते समहिषो महान् पूज्योवा सोमः तृतीयंधाम द्युलोकं सिषासन् संभक्तुमिच्छन् स्तुप् स्तूयमानःसन् विराजं विशेषेणराजन्तं दीप्यमानमिन्द्रं अनुराजति प्रकाशयति ॥ १८ ॥

अथैकोनविंशी—

चमूषच्छ्येनःशकुनोविभृत्वागोविन्दुर्द्रप्सआयुधानिबिभ्रत् ।
अपामूर्मिंसचमानःसमुद्रंतुरीयंधाममहिषोविवक्ति ॥ १९ ॥

चमूऽसत् । श्येनः । शकुनः । विऽभृत्वा । गोऽविन्दुः ।
द्रप्सः । आयुधानि । बिभ्रत् । अपाम् । ऊर्मिम् । सचमानः ।
समुद्रम् । तुरीयम् । धाम । महिषः । विवक्ति ॥ १९ ॥

चमूषत् चमन्ति भक्षयंत्यत्रेति चम्वश्चमसाः तेषु सीदन् यद्वा चम्वौ अधिषवणफलके तयोर्वर्तमानः श्येनः शंसनीयः शकुनः शक्तः सामर्थ्यकारी विभृत्वा हरतेः आतोमनिन्क्वनिब्वनिपश्चेत्यादिनाक्वनिप् । पात्रेषु विहरणशीलः गोविन्दुः यजमानानां गवां लंभकः विन्दुरिच्छुरिति उप्रत्ययान्तत्वेननिपातितः द्रप्सः द्रवणशीलः आयुधानि स्फ्यकपालादीनि बिभ्रत् धारयन् अपामुदकानामूर्मिं प्रेरकं समुद्रं अन्तरिक्षनामैतत् अन्तरिक्षलोकं सचमानः सेवमानः महिषोमहान् यएवंविधः सोमः ससोमः तुरीयं चतुर्थंधाम चान्द्रमसंस्थानं विवक्ति सेवते । सूर्यलोकस्योपरि

चंद्रमसोलोकोविद्यतेइति—यमःपृथिव्याअधिपतिःसमावत्वित्यादिभिः चन्द्रमानक्षत्राणामधिपतिः समावत्वित्यन्तैर्मंत्रैर्ज्ञायते ॥ १९ ॥

अथ विंशी—

मर्योनशुभ्रस्तन्वंमृजानोत्योनसृत्वासनयेधनानाम् ।
वृषेवयूथापरिकोशमर्षन्कनिक्रदच्चम्वो३रा विवेश ॥ २० ॥ ९ ॥

मर्यः । न । शुभ्रः । तन्वम् । मृजानः । अत्यः । न । सृत्वा । सनये ।
धनानाम् । वृषाऽइव । यूथा । परि । कोशम् । अर्षन् ।
कनिक्रदत् । चम्वोः । आ । विवेश ॥ २० ॥ ९ ॥

शुभ्रोदीप्यमानोलंकृतः मर्योन मनुष्यइव तन्वमात्मीयंशरीरं मृजानः वसतीवरीभिःशोधयन् किंच धनानां सनये संभजनाय लाभाय अत्योन अतनशीलोश्वइव सृत्वा सरणशीलः अपिच वृषेव वृषा यथा यूथा यूथानि प्रतिगच्छन् शब्दंकरोति तद्वत् कोशं अधिषवणचर्मणा कृतंपात्रं परि अर्षन् प्रतिगच्छन् सोमः कनिक्रदत् पुनःपुनः शब्दं कुर्वन् चम्वोः अधिषवणफलकयोराविवेश आविशति। कनिक्रदत् क्रदेर्यङ्लुकि दाधर्तिदर्धर्तीत्यादिनानिपातनादभ्यासस्य निगागमः तस्यशतरि अभ्यस्तानामादिरित्याद्युदात्तत्वं ॥ २० ॥

॥ इति सप्तमस्य चतुर्थे नवमोवर्गः ॥ ९ ॥

अथैकविंशी—

पवस्वेन्दोपवमानोमहोभिःकनिक्रदत्परिवाराण्यर्ष ।
क्रीळञ्चम्वो३रा विशपूयमानइन्द्रंतेरसोमदिरोममत्तु ॥ २१ ॥

पवस्व । इन्दो इति । पवमानः । महःऽभिः । कनिक्रदत् । परि ।
वाराणि । अर्ष । क्रीळन् । चम्वोः । आ । विश । पूयमानः ।
इन्द्रम् । ते । रसः । मदिरः । ममत्तु ॥ २१ ॥

---

१ तै० सं० ३. ४. ५.।

हे इन्दो सोम महोभिः पूजकैर्ऋत्विग्भिः पवमानः पूयमानस्त्वं पवस्व । ततः कनिक्रदत् भृशंशब्दंकुर्वन् वाराणि अवेर्वालानि पवित्राणि पर्यर्ष परिगच्छ ।किंच पूयमानस्त्वं चम्वोरधिष-वणफलकयोः क्रीळन् संक्रीडमानःसन् आविश पात्राणि प्रविश । अनन्तरं मदिरः मदकरस्ते त्वदीयोरसःइन्द्रं ममत्तु मोदयतु माद्यतेः बहुलंछन्दसीतिश्लुः ॥ २१ ॥

अथ द्वाविंशी—

**प्रास्यधाराबृहतीरसृग्रन्नक्तोगोभिःकलशाँआविवेश ।**
**सामंकृण्वन्त्सामन्योविपश्चित्क्रन्दन्नेत्यभिसख्युर्नजामिम् ॥२२॥**

प्र । अस्य । धाराः । बृहतीः । असृग्रन् । अक्तः । गोभिः । कलशान् ।
आ । विवेश । साम । कृण्वन् । सामन्यः । विपःऽचित् । क्रन्दन् ।
एति । अभि । सख्युः । न । जामिम् ॥ २२ ॥

अस्य सोमस्य बृहतीर्बृहत्योमहत्योधाराः प्रासृग्रन् प्रसृज्यन्ते सृजेः कर्मार्थेलङि व्यत्ययेन झेरनादेशः बहुलंछन्दसीति रुडागमः ।ततः सोयंसोमः गोभिर्गोविकारैः क्षीरादिभिः अक्तःसन् कलशान् द्रोणाभिधानान् आविवेश आविशति । साम सामानि कृण्वन् कुर्वन् सोमः सामन्यः सामगानकुशलः सुष्ठुशब्दायमानइत्यर्थः विपश्चित् सर्वंजानानः सोमः क्रन्दन् देवानाह्वयन् अभ्येति ग्रहादीनि त्वरया अभिगच्छति । तत्रदृष्टान्तः—सख्युर्न सख्युर्जामिं जायां यथा इतरो-लंपटोवेगेनाभिगच्छति तद्वत् ॥ २२ ॥

अथ त्रयोविंशी—

**अपघ्नन्नेषिपवमानशत्रून्प्रियांनजारोअभिगीतइन्दुः ।**
**सीदन्वनेषुशकुनोनपत्वासोमःपुनानःकलशेषुसत्ता ॥ २३ ॥**

अपऽघ्नन् । एषि । पवमान । शत्रून् । प्रियाम् । न । जारः ।
अभिऽगीतः । इन्दुः । सीदन् । वनेषु । शकुनः । न । पत्वा ।
सोमः । पुनानः । कलशेषु । सत्ता ॥ २३ ॥

हे पवमान पूयमान सोम अभिगीतः सोतृभिरभिष्टुतः इन्दुः पात्रेषु क्षरन् त्वंशत्रूनपघ्नन् अपहिंसन् एषि आगच्छसि । कथमिव जारः प्रियांन प्रियतमामसतींस्त्रीं अन्यान् बाध-

मानःसन् यथाभिगच्छति तद्वत् । पत्वा पतनशीलः शकुनोन यथा शकुनोवनेषु वृक्षेषु सीदन् भवति तद्वत् पतनशीलः पुनानः पूयमानः सोमः कलशेषु सत्ता सदनशीलो निषण्णोभवति । सदेस्ताच्छीलिकस्तृन् एकाचइतीट्प्रतिषेधः ॥ २३ ॥

अथ चतुर्विंशी—

आतेरुचःपवमानस्यसोमयोषेवयन्तिसुदुघाःसुधाराः ।
हरिरानीतःपुरुवारोअप्स्वचिक्रदत्कलशेदेवयूनाम् ॥ २४ ॥ १०॥

आ । ते । रुचः । पवमानस्य । सोम । योषाऽइव । यन्ति ।
सुऽदुघाः । सुऽधाराः । हरिः । आऽनीतः । पुरुऽवारः । अप्ऽसु ।
अचिक्रदत् । कलशे । देवऽयूनाम् ॥ २४ ॥ १० ॥

हे सोम पवमानस्य पूयमानस्य ते तव स्वभूताः योषेव स्त्रीयथा पुत्राणां पयोदोग्धि तद्वत् यजमानानां धनादिकस्य सुदुघाः सुष्ठुदोग्ध्यः सुधाराः शोभनधारोपेताः रुचोदीप्तयः आयन्तिपात्रादीन्यागच्छन्ति । किंच हरिर्हरितवर्णः आनीतः ऋत्विग्भिः पुरुवारः बहुधावरणीयः सोमः अप्सु वसतीवरीषु देवयूनां देवानिच्छतां यजमानानां स्वभूते कलशे द्रोणाख्येच अचिक्रदत् पुनःपुनः क्रन्दते शब्दायते ॥ २४ ॥

॥ इति सप्तमस्य चतुर्थे दशमोवर्गः ॥ १० ॥

॥ इति नवमे मंडले पंचमोनुवाकः ॥ ५ ॥

षष्ठेनुवाके सप्तसूक्तानि । तत्र अस्यप्रेषेत्यष्टापंचाशदृचं प्रथमंसूक्तं त्रैष्टुभं पवमानसोमदेवताकं ततः आद्यस्यतृचस्य मैत्रावरुणोवसिष्ठऋषिः द्वितीयस्येन्द्रप्रमतिर्नाम तृतीयस्यवृषगणाः चतुर्थस्यमन्युः पंचमस्योपमन्युः षष्ठस्यव्याघ्रपात् सप्तमस्यशक्तिः अष्टमस्यकर्णश्रुत् नवमस्य मृळीकः दशमस्यवसुक्रः एतेसर्वेवसिष्ठगोत्राः एवंत्रिंशदृचोगताः अथ चतुर्दशानामृचां शक्तिपुत्रः पराशरऋषिः शिष्टानामांगिरसःकुत्सः । तथानुक्रम्यते—अस्यप्रेषाष्टापंचाशदाद्यंतृचंवसिष्ठोपश्यदुत्तरान्नव पृथग्वसिष्ठाः इन्द्रप्रमतिर्वृषगणोमन्युरुपमन्युर्व्याघ्रपाच्छक्तिःकर्णश्रुन्मृळीकोवसुक्रइति चतुर्दशपराशरोंत्याःकुत्सइति । गतोविनियोगः ।

तत्र प्रथमा—

अस्यप्रेषाहेमनापूयमानोदेवोदेवेभिःसमपृक्तरसम् ।
सुतःपवित्रंपर्येतिरेभन्मितेवसद्मपशुमान्तिहोता ॥ १ ॥

अस्य । प्रेषा । हेमना । पूयमानः । देवः । देवेभिः । सम् ।
अपृक्त । रसम् । सुतः । पवित्रम् । परि । एति । रेभन् ।
मिताऽइव । सद्म । पशुऽमन्ति । होता ॥ १ ॥

अस्य सोमस्य प्रेषा प्रेषतिर्गत्यर्थः क्विपिरूपं सावेकाचइतिविभक्तेरुदात्तत्वं । प्रेषा प्रेरकेण हेमना हिरण्येन पूयमानः हिरण्यपाणिरभिषुणोतीति हिरण्यसंबन्धः । तादृशः देवोदीप्यमानांशुः रसमात्मीयं देवेभिःदेवैः सह समपृक्त संपर्चयति संयोजयति । पृचीसंपर्के ततः सुतोभिषुतः सोमः रेभन् शब्दायमानःसन् पवित्रं ऊर्णास्तुकेननिर्मितं पर्येति परिगच्छति । कथमिव होता देवानामाह्वाता ऋत्विक् मितेव निर्मितान् पशुमन्ति बद्धपशून् सद्म सदनानि यज्ञगृहान् यथा पर्येति तद्वत् ॥ १ ॥

अथ द्वितीया—

भद्रावस्त्रासमन्याऽवसानोमहान्कविर्निवचनानिशंसन् ।
आवच्यस्वचम्वोःपूयमानोविचक्षणोजागृविर्देववीतौ ॥ २ ॥

भद्रा । वस्त्रा । समन्या । वसानः । महान् । कविः । निऽवचनानि ।
शंसन् । आ । वच्यस्व । चम्वोः । पूयमानः । विऽचक्षणः ।
जागृविः । देवऽवीतौ ॥ २॥

भद्रा भद्राणि कल्याणानि समन्या समनमिति संग्रामनाम तत्र साधुरिति यत् संग्रामयोग्यानि वस्त्रा वस्त्राणि आच्छादकानि तेजांसि वसानः आच्छादयन् महान् पूज्यः कविः क्रान्तदर्शी अतएव निवचनानि नितरांवक्तव्यानि ऋत्विक्कृतानि स्तोत्राणि शंसन् विचक्षणः विशेषेण सर्वस्यद्रष्टा जागृविर्जागरणशीलः सोमः त्वं देववीतौ देवानांवीतिर्भक्षणं यस्मिन्त्सदेववीतिर्यज्ञः तस्मिन् चम्वोरधिषवणफलकयोः आवच्यस्व पात्राण्याविश । वचिर्गत्यर्थः व्यत्ययेन श्यन् पूयमानः सन् ॥ २ ॥

अथ तृतीया—

समुंप्रियोमृंज्यतेसानोअव्येंयशस्तंरोयशसांक्षैतोंअस्मे ।
अभिस्वरधन्वांपूयमांनोयूयंपांतस्वस्तिभिःसदांनः ॥ ३ ॥

सम् । ऊँ इतिं । प्रियः । मृज्यते । सानौं । अव्यें । यशःऽतंरः ।
यशसांम् । क्षैतंः । अस्मे इतिं । अभि । स्वर । धन्वं ।
पूयमांनः । यूयम् । पात । स्वस्तिऽभिः । सदां । नः ॥ ३ ॥

यशसां यशस्विनांमध्ये यशस्तरः अतिशयेनयशस्वी क्षैतः क्षितौभवः प्रियः प्रीणयिता सोमः सानौ समुच्छ्रिते अव्ये अविमये पवित्रे अस्मे अस्मदर्थं संमृज्यते ऋत्विग्भिः परिपूयते । उ अवधारणे । पूयमानस्त्वं धन्वान्तरिक्षे अभिस्वर अभितः शब्दय यूयं पूजायां बहुवचनं हे सोम त्वं नोस्मान् स्वस्तिभिः कल्याणतमैः पालनैः सदा सर्वदा पात रक्षत पालयत ॥ ३ ॥

अथ चतुर्थी—

प्रगांयताभ्यंर्चामदेवान्त्सोमंहिनोतमहतेधनांय ।
स्वादुःपंवातेअतिवारमव्यमासींदातिकलशंदेवयुर्नः ॥ ४ ॥

प्र । गायत । अभि । अर्चाम । देवान् । सोमंम् । हिनोत ।
महते । धनांय । स्वादुः । पवाते । अतिं । वारंम् । अव्यंम् ।
आ । सीदाति । कलशंम् । देवऽयुः । नः ॥ ४ ॥

हेस्तोतारः प्रगायत सोमं प्रकर्षेणाभिष्टुत । तथा देवान् अभ्यर्चाम अभ्यर्चत पुरुषव्यत्ययः । यद्वा वयं देवानभिष्टुमः यूयं सोमंस्तुतेति । किंच महते महत् प्रभूतधनाय धनं प्राप्तुं सोमं हिनोत अभिषवार्थं प्रेरयत । क्रियार्थोपपदस्यचकर्मणिस्थानिनइति धनशब्दस्य चतुर्थी । ततः स्वादुः स्वादुकरः सोमः अव्यमविभवं वारं वालं पवित्रमतिपवाते अतीत्यपवते । किंच देवयुः देवानकामयमानः नोस्मदीयः सोमः कलशं पात्रमासीदाति आसीदति प्रविशति । उभयत्रलेटचडागमः ॥ ४ ॥

अथ पञ्चमी–

इन्दुर्देवानामुपसख्यमायन्त्सहस्रधारःपवतेमदाय ।
नृभिःस्तवानोअनुधामपूर्वमगन्निन्द्रंमहतेसौभगाय ॥ ५ ॥११॥

इन्दुः । देवानाम् । उप । सख्यम् । आऽयन् । सहस्रऽधारः ।
पवते । मदाय । नृऽभिः । स्तवानः । अनु । धाम । पूर्वम् ।
अगन् । इन्द्रम् । महते । सौभगाय ॥ ५ ॥ ११ ॥

देवानामिन्द्रादीनां सख्यं सखिभावं उपायन् उपगच्छन् सहस्रधारः बहुविधधारः इन्दुः सोमः मदाय देवानांमदार्थं पवते कलशादिषुक्षरति । नृभिः कर्मनेतृभिः स्तवानः स्तूयमानः सोमः पूर्वं पुरातनं धाम द्युलोकमनुगच्छति । तदेवाह–महते प्रभूताय सौभगाय सौभाग्याय इन्द्रं अगन् गच्छति । सोमे इन्द्रेण पीते सति यजमानानां महासौभाग्यं भवति खलु । अगन् गमेर्लुङि वसेति च्लेर्लुक् मोनोधातोरिति नत्वं ॥ ५ ॥

॥ इति सप्तमस्य चतुर्थे एकादशोवर्गः ॥ ११ ॥

अथ षष्ठी–

स्तोत्रेरायेहरिरर्षापुनानइन्द्रंमदोगच्छतुतेभराय ।
देवैर्याहिसरथंराधोअच्छायूयंपातस्वस्तिभिःसदानः ॥ ६ ॥

स्तोत्रे । राये । हरिः । अर्ष । पुनानः । इन्द्रम् । मदः । गच्छतु ।
ते । भराय । देवैः । याहि । सऽरथम् । राधः । अच्छ ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥

हे सोम हरिर्हरितवर्णः पुनानः पूयमानस्त्वं स्तोत्रे अस्माभिः क्रियमाणेसति रायेधनार्थं अर्ष आगच्छ । ततस्ते त्वदीयोमदोमदकरोरसः भराय भर्त्सने । भर्त्सयन्ति शत्रूनत्रयोद्धारइति भरःसंग्रामः । तदर्थमिन्द्रंगच्छतु । किंच सरथं देवैःसमानरथमास्थाय राधः अच्छ अस्माकं धनार्थंयाहि आगच्छ । यूयं नोस्मान् स्वस्तिभिः सदा पात त्वं रक्ष ॥ ६ ॥

अथ सप्तमी—

प्रकाव्यमुशनेवब्रुवाणोदेवोदेवानांजनिमाविवक्ति ।
महिव्रतःशुचिबन्धुःपावकःपदावराहोअभ्येतिरेभन् ॥ ७ ॥

प्र । काव्यम् । उशनाऽइव । ब्रुवाणः । देवः । देवानाम् ।
जनिम । विवक्ति । महिऽव्रतः । शुचिऽबन्धुः । पावकः ।
पदा । वराहः । अभि । एति । रेभन् ॥ ७ ॥

उशनेव एतन्नामकऋषिरिव काव्यं कविकर्म स्तोत्रं ब्रुवाणः उच्चारयन् देवःस्तोता अयमृषिः वृषगणोनाम देवानामिन्द्रादीनां जनिम जन्मानि प्रविवक्ति प्रकर्षेण ब्रवीति । वचपरिभाषणे व्यत्ययेनविकरणस्य श्लुः बहुलंछंदसीतिअभ्यासस्येत्वं । महिव्रतः प्रभूतकर्मा शुचिबन्धुः बध्नन्तिशत्रूनिति बन्धूनि तेजांसि बलानिवा दीप्ततेजस्कः पावकः पापानां शोधकः वराहः वरं च तदहः वराहः राजाहःसखिभ्यष्टजिति टच्समासान्तः । तस्मिन्नहनि अभिषूयमाणत्वेन तद्वान् अर्शआदित्वान्मत्वर्थीयःअच् तादृशःसोमः रेभन् शब्दंकुर्वन् पदा पदानि स्थानानि पात्राणि अभ्येति अभिगच्छति । यद्वा यथाकश्चनवराहः पदा पादेन भूमिं विक्रममाणः शब्दंकरोति तद्वत् ॥ ७ ॥

अथाष्टमी—

प्रहंसासस्तृपलंमन्युमच्छामादस्तंवृषगणाअयासुः ।
आङ्गूष्यं[1]पवमानंसखायोदुर्मर्षंसाकंप्रवदन्तिवाणम् ॥ ८ ॥

प्र । हंसासः । तृपलम् । मन्युम् । अच्छ । अमात् । अस्तम् ।
वृषऽगणाः । अयासुः । आङ्गूष्यम् । पवमानम् । सखायः ।
दुःऽमर्षम् । साकम् । प्र । वदन्ति । वाणम् ॥ ८ ॥

हंसासः शत्रुभिर्हन्यमानाः हंसाइव चरन्तोवावृषगणाः एतन्नामकाऋषयः अमात् शत्रूणां बलात् त्रासिताःसन्तः तृपलं तृपलशब्दःक्षिप्रचारी तदुक्तंयास्केन—तृपलप्रभर्माक्षिप्रप्रहारीति । क्षि-

1 नि० ५. १२. ।

प्रमहारिणंमन्युं शत्रूनभिहन्यमानं सोमं अच्छ अभिलक्ष्य अस्तं यज्ञगृहं प्रायासुः प्रयासिषुः प्रगच्छन्ति । ततः सखायः स्तुत्यस्तोतृत्वलक्षणेन संबन्धेन सखिभूताः स्तोतारः आंगूष्यं सर्वैरभिगंतव्यं यद्वा घोषशब्दस्य पृषोदरादित्वादांगूषइत्यादेशः आङ्अनुनासिकश्छान्दसः स्तोत्रार्हं दुर्मर्षं शत्रुभिर्दुर्धरं दुःसहं एवंविधंसोमं पवमानमुद्दिश्य वाणं वाद्यविशेषं साकं सहैवप्रवदन्ति प्रवादयन्ति तदुपलक्षितं गानंकुर्वन्तीत्यर्थः ॥ ८ ॥

अथ नवमी—

सरंहतउरुगायस्यजूतिंवृथाक्रीळन्तंमिमतेनगावः ।
परीणसंकृणुतेतिग्मशृङ्गोदिवाहरिर्ददृशेनक्तमृज्रः ॥ ९ ॥

सः । रंहते । उरुऽगायस्य । जूतिम् । वृथा । क्रीळन्तम् ।
मिमते । न । गावः । परीणसम् । कृणुते । तिग्मऽशृङ्गः ।
दिवा । हरिः । ददृशे । नक्तम् । ऋज्रः ॥ ९ ॥

ससोमः रंहते अतिशीघ्रं गच्छतीत्यर्थः। उरुगायस्य बहुभिःस्तुत्यस्यात्मनोजूतिं गतिमनुसरन् तंवृथा अनायासेन क्रीळंतं विहरन्तं गच्छन्तंसोमं गावः अन्येगन्तारः नमिमते नपरिच्छिन्दन्ति तमनुगन्तुं नशक्नुवन्तीत्यर्थः । किंच तिग्मशृंगः शृणन्तिहिंसन्ति तमांसीति शृंगाणि तेजांसि तीक्ष्णतेजस्कः परीणसं बहुनामैतत् बहुविधतेजः कृणुते करोति अन्तरिक्षे वर्तमानोयः सोमः दिवा अहनि हरिर्हरितवर्णः ददृशे दृश्यते नप्रकाशतेइत्यर्थः । नक्तं रात्रौतु ऋज्रः ऋजुगामी विस्पष्टः प्रकाशयुक्तोदृश्यते दृशेः कर्मणिलिटिरूपं ॥ ९ ॥

अथ दशमी—

इन्दुर्वाजीपवतेगोन्योघाइन्द्रेसोमःसहइन्वन्मदाय ।
हन्तिरक्षोबाधतेपर्यरातीर्वरिवःकृण्वन्वृजनस्यराजा ॥ १० ॥ १२ ॥

इन्दुः । वाजी । पवते । गोऽन्योघाः । इन्द्रे । सोमः । सहः ।
इन्वन् । मदाय । हन्ति । रक्षः । बाधते । परि । अरातीः ।
वरिवः । कृण्वन् । वृजनस्य । राजा ॥ १० ॥ १२ ॥

इन्दुः क्षरणशीलः वाजी बलवान् गोन्योघाः गमनशीलनीचीनाग्ररससंघातः इन्द्रे स-होबलकररसं इन्वन् प्रेरयन् सोमः मदाय तस्यमदार्थं पवते क्षरति । किंच रक्षःकुलं हन्ति हिनस्ति । किंच अरातीः अरातीन् शत्रून्परिबाधते परितः संहरति । कीदृशः वरिवोवरणीयं धनं कृण्वन् स्तोतॄणां कुर्वन् वृजनस्य बलस्यराजा ईशितासोमइति ॥ १० ॥

॥ इति सप्तमस्य चतुर्थे द्वादशोवर्गः ॥ १२ ॥

अथैकादशी—

**अधधारयामध्वापृचानस्तिरोरोमपवतेअद्रिदुग्धः ।**
**इन्दुरिन्द्रस्यसख्यंजुषाणोदेवोदेवस्यमत्सरोमदाय ॥ ११ ॥**

अध । धारया । मध्वा । पृचानः । तिरः । रोम । पवते । अद्रिऽदुग्धः ।
इन्दुः । इन्द्रस्य । सख्यम् । जुषाणः । देवः । देवस्य । मत्सरः । मदाय ॥ ११ ॥

अधाथानन्तरं अद्रिदुग्धाः ग्रावभिर्दुग्धोभिषुतः सोमः मध्वा मदकारिण्याधारया पृचानः देवान्संपर्चयन् संयोजयन् रोम अविरोमभिः कृतं पवित्रं तिरस्तिरस्कृत्य व्यवधायकंकृत्वा पवते कलशेषु क्षरति । किंच इन्द्रस्यसख्यं सखिभावंकर्मवा जुषाणः सेवमानः देवोद्योतमानः मत्सरोमदकरइन्दुः सोमः देवस्येन्द्रस्य मदाय मदार्थं पवते क्षरति ॥ ११ ॥

अथ द्वादशी—

**अभिप्रियाणिपवतेपुनानोदेवोदेवान्त्स्वेनरसेनपृञ्चन् ।**
**इन्दुर्धर्माण्यृतुथावसानोदशक्षिपोअव्यतसानोअव्ये ॥ १२ ॥**

अभि । प्रियाणि । पवते । पुनानः । देवः । देवान् । स्वेन । रसेन ।
पृञ्चन् । इन्दुः । धर्माणि । ऋतुऽथा । वसानः । दश ।
क्षिपः । अव्यत । सानौ । अव्ये ॥ १२ ॥

प्रियाणि प्रीणयितॄणि धर्माणि धारकाणि तेजांसि ऋतुथा कालेकाले वसान आच्छादय-न् इन्दुः सोमः पुनानः पूयमानः सन् अभिपवते कलशानभिलक्ष्य क्षरति । कीदृशः देवः संक्री-डनशीलः स्वेन आत्मीयेनरसेन देवानिन्द्रादीन् पृंचन् संपर्चयन् संयोजयन् तमिमं दश दशसं-ख्याकाः क्षिपः अंगुलिनामैतत् कर्मार्थं प्रेर्यंतइति तत्संख्याकाअंगुलयः सानौ समुच्छ्रिते अव्ये

अविभवेपवित्रे अव्यत गमयन्ति यद्वा अत्र पवित्रे पूयमानंसोमं अव्यत गच्छन्ति वीगत्यादिषु लङिव्यत्ययेनात्मनेपदं ॥ १२ ॥

अथ त्रयोदशी—

वृषाशोणोअभिकनिक्रदद्गानदयन्नेतिपृथिवीमुतद्याम् ।
इन्द्रस्येववग्नुराशृण्वआजौप्रचेतयन्नर्षतिवाचमेमाम् ॥ १३ ॥

वृषा । शोणः । अभिऽकनिक्रदत् । गाः । नदयन् । एति । पृथिवीम् ।
उत । द्याम् । इन्द्रस्यऽइव । वग्नुः । आ । शृण्वे । आजौ ।
प्रऽचेतयन् । अर्षति । वाचम् । आ । इमाम् ॥ १३ ॥

शोणः शोणवर्णोवृषा कश्चिद्वृषभः गाः पशून् अभिकनिक्रदत् अभिलक्ष्य शब्दंकरोति । एवं गाः स्तुतीः विश्रयणार्थं पयसोदोग्ध्रीर्धेनूः वा अभिकनिक्रदत् अभिशब्दायमानः तदेवाह नदयन् शब्दमुत्पादयन् सोमः पृथिवीं उतापिच द्यां एतौलोकौ एति गच्छति । किंच वग्नुः वाङ्नामैतत् तस्य वाक् सुशब्दः आजौ संग्रामे इन्द्रस्येव इन्द्रस्यशब्दइव आशृण्वे सर्वैः श्रूयते । ततः प्रचेतयन् आत्मानं सर्वेषां प्रज्ञापयन् इमां वाचमार्षति समंतादूमयति उच्चैः शब्दायतेइत्यर्थः ॥ १३ ॥

अथ चतुर्दशी—

रसाय्यःपयसापिन्वमानईरयन्नेषिमधुमन्तमंशुम् ।
पवमानःसन्तनिमेषिकृण्वन्निन्द्रायसोमपरिषिच्यमानः ॥ १४ ॥

रसाय्यः । पयसा । पिन्वमानः । ईरयन् । एषि । मधुऽमन्तम् ।
अंशुम् । पवमानः । सम्ऽतनिम् । एषि । कृण्वन् ।
इन्द्राय । सोम । परिऽसिच्यमानः ॥ १४ ॥

हे सोम रसाय्यः रसेरौणादिकआय्यप्रत्ययः । आस्वाद्यः पयसायुक्तः पिन्वमानः क्षरन् त्वं ईरयन् शब्दंप्रेरयन् मधुमन्तं माधुर्योपेतं अंशुं रसभावं एषि प्राप्नोषि । अंशुःशमष्टमात्रोभवतीतियास्कः । अनेन सोमरसोभिधीयते । किंच हेसोम परिषिच्यमानः अद्भिः परिषिक्तस्त्वं प-

१ नि० २. ५. ।

वमानः पवित्रेपूयमानःसन् संतनिं तनुविस्तारे इप्रत्ययः संततांधारां कृण्वन्कुर्वन्निन्द्राय इंद्रार्थं एषि गच्छसि ॥ १४ ॥

अथ पंचदशी—

एवापंवस्वमदिरोमदायोदग्राभस्यंनमयंन्वधस्नैः ।
परिवर्णंभरमाणोरुशन्तंगव्युर्नोअर्षपरिसोमसिक्तः ॥ १५ ॥ १३॥

एव । पवस्व । मदिरः । मदाय । उदऽग्राभस्य । नमयन् ।
वधऽस्नैः । परि । वर्णम् । भरमाणः । रुशन्तम् । गव्युः ।
नः । अर्ष । परि । सोम । सिक्तः ॥ १५ ॥ १३ ॥

हेसोम मदिरोमदकरस्त्वं उदग्राभस्य क्रियाग्रहणंकर्तव्यमिति कर्मणःसंप्रदानसंज्ञा चतुर्थ्यर्थेबहुलमितिषष्ठी । उदग्राभं उदकग्राहिणंमेघं वधस्नैः हननसाधनैरायुधैः नमयन् वृष्ट्यर्थंप्रह्वीकुर्वन् मदाय मदार्थंमेव पवस्व एवं पात्रेषुक्षर । किंच रुशंतं आरोचमानं श्वेतं वर्णं परिभरमाणः परितोबिभ्रत् सिक्तः पवित्रेसिच्यमानस्त्वं गव्युः नोस्माकं गाइच्छन् पर्यर्ष परिगच्छ॥ १५॥

॥ इति सप्तमस्य चतुर्थे त्रयोदशोवर्गः ॥ १३ ॥

अथ षोडशी—

जुष्ट्वीनंइन्दोसुपथासुगान्युरौपंवस्ववरिवांसिकृण्वन् ।
घनेवविष्वंग्दुरितानिविघ्नन्नधिष्णुनांधन्वसानोअव्ये ॥ १६ ॥

जुष्ट्वी । नः । इन्दो इति । सुऽपथा । सुऽगानि । उरौ । पवस्व ।
वरिवांसि । कृण्वन् । घनाऽइव । विष्वक् । दुःऽइतानि ।
विऽघ्नन् । अधि । स्नुना । धन्व । सानौ । अव्ये ॥ १६ ॥

हे इन्दो दीप्त पवमान जुष्ट्वी स्नात्व्यादयश्चेतिनिपातितः स्तुतिभिः प्रीतोभूत्वा नोस्माकं सुपथा सुपथानि वैदिकमार्गान् तथा वरिवांसि वरणीयानि धनानि सुगानि सुगमनानि सुप्राप्तव्यानि कृण्वन् कुर्वन् । उरौ विस्तीर्णे द्रोणकलशे पवस्व क्षर । किंच घनेव घनीभूतेन लोहमयेनायुधेनेव विष्वक् सर्वतोदुरितानि दुःप्राप्तव्यानि रक्षांसि विघ्नन् हिंसन् सानौ समुच्छ्रितेदेशे अव्येअविभवे स्नुना स्रवता धारासंघेन अधिधन्व अधिगच्छ । धविर्गत्यर्थः ॥१६॥

अथ सप्तदशी—

वृष्टिंनोअर्षदिव्यांजिगत्नुमिळावतींशंगयींजीरदानुम् ।
स्तुकेववीताधन्वाविचिन्वन्बन्धूँरिमाँअवराँइन्दोवायून् ॥ १७ ॥

वृष्टिम् । नः । अर्ष । दिव्याम् । जिगत्नुम् । इळाऽवतीम् ।
शम्ऽगयींम् । जीरऽदानुम् । स्तुकाऽइव । वीता । धन्व । विऽचिन्वन् ।
बन्धून् । इमान् । अवरान् । इन्दो इति । वायून् ॥ १७ ॥

हे सोम नोस्माकं वृष्टिं अर्ष गमय। कीदृशीं दिव्यां दिविभवां जिगत्नुं गमनशीलां इरावतीं अन्नवतीं शंगयीं सुखस्यनिवासभूतां जीरदानुं क्षिप्रदानोपेतां। किंच हे इन्दो त्वं स्तुकेववीता कांतानि स्तुकशब्दोपत्यवचनः अपत्यानि यथाविचिनोषि तद्वत् बन्धून् स्तुत्यस्तोतृत्वेन बन्धुभूतान् अवरान् अवरदेशेस्थितान् पार्थिवान् वायून् त्वां अभिगच्छत इमानस्मान्विचिन्वन् धनादिप्रदानार्थं गवेषमाणःसन् धन्व गच्छ ॥ १७ ॥

अथाष्टादशी—

ग्रन्थिंनविष्यग्रथितंपुनानऋजुंचगातुंवृजिनंचसोम ।
अत्योनक्रदोहरिरासृजानोमर्योदेवधन्वपस्त्यावान् ॥ १८ ॥

ग्रन्थिम् । न । वि । स्य । ग्रथितम् । पुनानः । ऋजुम् । च ।
गातुम् । वृजिनम् । च । सोम । अत्यः । न । क्रदः । हरिः ।
आ । सृजानः । मर्यः । देव । धन्व । पस्त्यऽवान् ॥ १८ ॥

पुनानः पूयमानस्त्वं ग्रथितं पापैर्बद्धं मां विष्य मुंच पापेभ्योविश्लेषय। कथमिव ग्रंथिंन यथाकश्चित् ग्रंथिंविश्लेषयति षोन्तकर्मणीति अस्यलोटिरूपं । किंच हेसोम त्वं ऋजुं अवक्रं गातुं मार्गं च वृजिनं बलं च मह्यं देहि । हरिर्हरितवर्णस्त्वं आसृजानः पात्रेष्वासृज्यमानःसन् अत्योन अतनशीलोश्वइव क्रदः क्रंदसि शब्दायसे । किंच हेदेव मर्त्योमनुष्यहितो मारकोहिंसकोवा शत्रूणां पस्त्यवान् पस्त्यंगृहं तद्वांस्त्वं धन्व मामभिगच्छ कलशान्वा ॥ १८ ॥

अथैकोनविंशी–

जुष्टोमदायदेवतातइन्दोपरिष्णुनाधन्वसानोअव्ये ।
सहस्रधारःसुरभिरदब्धःपरिस्रववाजसातौनृषह्ये ॥ १९ ॥

जुष्टः । मदाय । देवऽताते । इन्दो इति । परि । स्नुना ।
धन्व । सानौ । अव्ये । सहस्रऽधारः । सुरभिः । अदब्धः ।
परि । स्रव । वाजऽसातौ । नृऽसह्ये ॥ १९ ॥

हेइन्दो मदाय जुष्टः पर्याप्तस्त्वं देवताते देवैस्तततेयज्ञे सानौ समुच्छ्रिते अव्ये अविभवे स्नुनाश्रयणशीलेन धारासंघेन सह परिधन्व परिगच्छ सहस्रधारः बहुधारोपेतः सुरभिः सुगन्धिभिः त्वं अदब्धः नकैश्चित् हिंसितः सन् वाजसातौ अन्नलाभाय निमित्ते नृसह्ये नृभिः सोढव्येयुद्धे परिस्रव परितोगच्छ ॥ १९ ॥

अथ विंशी–

अरश्मानोयेरथाअयुक्ताअत्यासोनसंसृजानासआजौ ।
एतेशुक्रासोधन्वन्तिसोमादेवासस्ताँउपयातापिबध्यै ॥ २०॥१४॥

अरश्मानः । ये । अरथाः । अयुक्ताः । अत्यासः । न ।
ससृजानासः । आजौ । एते । शुक्रासः । धन्वन्ति । सोमाः ।
देवासः । तान् । उप । यात । पिबध्यै ॥ २० ॥ १४ ॥

अरश्मानोरश्मिवर्जिता रज्जुवर्जिताइतियावत् अरथारथवर्जिताः अयुक्ताः कुत्रापिननियुक्ताः अबद्धाइत्यर्थः एतादृशाये आजौ युद्धे ससृजानासः सृज्यमानाः अत्यासोन अश्वायथा त्वरयालक्ष्यं गच्छन्ति तद्वत् आजौ अजन्ति कर्मकरणार्थमृत्विजोत्रेति आजिर्यज्ञस्तस्मिन् सृज्यमानाः शुक्रासः शुक्रादीप्यमाना एतेसोमाः धन्वन्ति क्षिप्रं कलशानभिगच्छन्ति । अथप्रत्यक्षः हेदेवासोदेवाः तानागच्छतः सोमान्पिबध्यैपानायउपयातउपगच्छत ॥ २० ॥

॥ इति सप्तमस्य चतुर्थे चतुर्दशोवर्गः ॥ १४ ॥

अथैकविंशी—

एवानंइन्दोअभिदेववीतिंपरिस्रवनभोअर्णश्चमूषु ।
सोमोअस्मभ्यंकाम्यंबृहन्तंरयिंददातुवीरवन्तमुग्रम् ॥ २१ ॥

एव । नः । इन्दो इति । अभि । देवऽवीतिम् । परि । स्रव ।
नभः । अर्णः । चमूषु । सोमः । अस्मभ्यम् । काम्यम् । बृहन्तम् ।
रयिम् । ददातु । वीरऽवन्तम् । उग्रम् ॥ २१ ॥

हे इन्दो सोम नोस्मदीयमेव देववीतिं देवानांवीतिर्भक्षणं गमनंवा यस्मिन् देववीतिर्यज्ञः तमभिलक्ष्य नभोनभसोद्युलोकात् अर्णउदकं अनेनपवित्रान्निर्गतः सोमरसोभिधीयते तं रसं चमूषु चमसेषु परिस्रव परितःक्षर । ततः सोमः काम्यं काम्यमानं बृहन्तं प्रवृद्धं वीरवन्तं पुत्रयुक्तं उग्रमुद्गूर्णबलं रयिं धनं अस्मभ्यं ददातु प्रयच्छतु ॥ २१ ॥

अथ द्वाविंशी—

तक्षद्यदीमनसोवेनतोवाग्ज्येष्ठस्यवाधर्मणिक्षोरनीके ।
आदीमायन्वरमावावशानाजुष्टंपतिंकलशेगावइन्दुम् ॥ २२ ॥

तक्षत् । यदि । मनसः । वेनतः । वाक् । ज्येष्ठस्य । वा । धर्मणि ।
क्षोः । अनीके । आत् । ईम् । आयन् । वरम् । आ । वावशानाः ।
जुष्टम् । पतिम् । कलशे । गावः । इन्दुम् ॥ २२ ॥

वेनतः वेनोवेनतेःकान्तिकर्मणइतियास्कः[1] । कामयमानस्य मनसः मन्यतेःस्तुतिकर्मणः स्तोतुर्वाक् स्तुतिलक्षणायद्येनंतक्षत् संस्करोति वाशब्दउपमार्थे यथा धर्मणि निमित्तात्कर्मसंयोगइतिसप्तमी धारकं योगक्षेमविषयं कर्मोद्दिश्य क्षोःशब्दायमानस्य अनीके संग्राममुखे तत्र स्थितस्य जानपदिकस्य वाक् ज्येष्ठस्य द्वितीयार्थेषष्ठी प्रशस्यतमं राजानं यथास्तौति तथास्तोतुर्वाक् सोमंस्तौतीत्यर्थः । आदनंतरमेव वरं वरणीयं जुष्टं देवानां मदायपर्याप्तं पतिं सर्वस्य पालकं कलशे स्थितं इन्दुं ईमेनं सोमं वावशानाः कामयमानाः गावआयन् पयसा स्वीये नमि श्रयितुमागच्छंति ॥ २२ ॥

---

1 नि० १०. ३८.

अथैकोनविंशी—

जुष्टोमदायदेवतातइन्दोपरिष्णुनाधन्वसानोअव्ये ।
सहस्रधारःसुरभिरदब्धःपरिस्रववाजसातौनृषह्ये ॥ १९ ॥

जुष्टः । मदाय । देवऽताते । इन्दो इति । परि । स्नुना ।
धन्व । सानौ । अव्ये । सहस्रऽधारः । सुरभिः । अदब्धः ।
परि । स्रव । वाजऽसातौ । नृऽसह्ये ॥ १९ ॥

हेइन्दो मदाय जुष्टः पर्याप्तस्त्वं देवताते देवैस्ततेयज्ञे सानौ समुच्छ्रिते अव्ये अविभवे स्नुनाश्रयणशीलेन धारासंघेन सह परिधन्व परिगच्छ सहस्रधारः बहुधारोपेतः सुरभिः सुगन्धिभिः त्वं अदब्धः नकैश्चित् हिंसितः सन् वाजसातौ अन्नलाभाय निमित्ते नृसह्ये नृभिः सोढव्येयुद्धे परिस्रव परितोगच्छ ॥ १९ ॥

अथ विंशी—

अरश्मानोयेरथाअयुक्ताअत्यासोनसस्रजानासआजौ ।
एतेशुक्रासोधन्वन्तिसोमादेवासस्ताँउपयातापिबध्यै ॥ २० ॥ १४ ॥

अरश्मानः । ये । अरथाः । अयुक्ताः । अत्यासः । न ।
ससृजानासः । आजौ । एते । शुक्रासः । धन्वन्ति । सोमाः ।
देवासः । तान् । उप । यात । पिबध्यै ॥ २० ॥ १४ ॥

अरश्मानोरश्मिवर्जिता रज्जुवर्जिताइतियावत् अरथारथवर्जिताः अयुक्ताः कुत्रापिननियुक्ताः अबद्धाइत्यर्थः एतादृशाये आजौ युद्धे ससृजानासः सृज्यमानाः अत्यासोन अश्वायथा त्वरयालक्ष्यं गच्छन्ति तद्वत् आजौ अजन्ति कर्मकरणार्थमृत्विजोत्रेति आजिर्यज्ञस्तस्मिन् सृज्यमानाः शुक्रासः शुक्रादीप्यमाना एतेसोमाः धन्वन्ति क्षिप्रं कलशानभिगच्छन्ति । अथप्रत्यक्षः हेदेवासोदेवाः तानागच्छतः सोमान्पिबध्यैपानायउपयातउपगच्छत ॥ २० ॥

॥ इति सप्तमस्य चतुर्थे चतुर्दशोवर्गः ॥ १४ ॥

अथैकविंशी—

एवानंइन्दोअभिदेववीतिंपरिस्रवनभोअर्णश्चमूषुं ।
सोमोअस्मभ्यंकाम्यंबृहन्तंरयिंददातुवीरवंन्तमुग्रम् ॥ २१ ॥

एव । नः । इन्दो इति । अभि । देवऽवीतिम् । परि । स्रव ।
नभः । अर्णः । चमूषु । सोमः । अस्मभ्यम् । काम्यम् । बृहन्तम् ।
रयिम् । ददातु । वीरऽवन्तम् । उग्रम् ॥ २१ ॥

हे इन्दो सोम नोस्मदीयमेव देववीतिं देवानांवीतिर्भक्षणं गमनंवा यस्मिन् देववीतिर्यज्ञः तमभिलक्ष्य नभोनभसोद्युलोकात् अर्णउदकं अनेनपवित्रान्निर्गतः सोमरसोभिधीयते तं रसं चमूषु चमसेषु परिस्रव परितःक्षर । ततः सोमः काम्यं काम्यमानं बृहन्तं प्रवृद्धं वीरवन्तं पुत्रयुक्तं उग्रमुद्गूर्णबलं रयिं धनं अस्मभ्यं ददातु प्रयच्छतु ॥ २१ ॥

अथ द्वाविंशी—

तक्षद्यदीमनंसोवेनंतोवाग्ज्येष्ठंस्यवाधर्मंणिक्षोरनींके ।
आदींमायन्वरमावांवशानाजुष्टंपतिंकलशेगावइन्दुंम् ॥ २२ ॥

तक्षंत् । यदि । मनंसः । वेनंतः । वाक् । ज्येष्ठंस्य । वा । धर्मंणि ।
क्षोः । अनींके । आत् । ईम् । आयन् । वरंम् । आ । वावशानाः ।
जुष्टंम् । पतिंम् । कलशे । गावंः । इन्दुंम् ॥ २२ ॥

वेनतः वेनोवेनतेःकान्तिकर्मणइतियास्कः[1] । कामयमानस्य मनसः मन्यतेःस्तुतिकर्मणः स्तोतुर्वाक् स्तुतिलक्षणायद्येनंतक्षत् संस्करोति वाशब्दउपमार्थे यथा धर्मणि निमित्तात्कर्मसंयोगइतिसप्तमी धारकं योगक्षेमविषयं कर्मोद्दिश्य क्षोःशब्दायमानस्य अनीके संग्राममुखे तत्र स्थितस्य जानपदिकस्य वाक् ज्येष्ठस्य द्वितीयार्थेषष्ठी प्रशस्यतमं राजानं यथास्तौति तथास्तोतुर्वाक् सोमंस्तौतीत्यर्थः । आदनंतरमेव वरं वरणीयं जुष्टं देवानां मदायपर्याप्तं पतिं सर्वस्य पालकं कलशे स्थितं इन्दुं ईमेनं सोमं वावशानाः कामयमानाः गावआयन् पयसा स्वीये नमि श्रयितुमागच्छंति ॥ २२ ॥

---

1 नि० १०. ३८.

अथ त्रयोविंशी—

प्रदानुदोदिव्योदानुपिन्वऋतमृतायपवतेसुमेधाः ।
धर्माभुवद्वृजन्यस्यराजाप्ररश्मिभिर्दशभिर्भारिभूम ॥ २३ ॥

प्र । दानुऽदः । दिव्यः । दानुऽपिन्वः । ऋतम् । ऋताय । पवते ।
सुऽमेधाः । धर्मा । भुवत् । वृजन्यस्य । राजा । प्र ।
रश्मिऽभिः । दशऽभिः । भारि । भूम ॥ २३ ॥

दिव्योदिविभवः दानुदः दातृभ्योधनादीनांदाता तदेवाह दानुपिन्वः पिविसेचने कर्मण्यणित्यण् दातृभ्यः कामानां रक्षयिता सुमेधाः शोभनप्रज्ञः सोमः ऋताय सत्यभूतायेन्द्राय तं सत्यभूतमात्मीयं रसंपवते प्रकर्षेण क्षरति । राजा दीप्यमानः सोमः वृजन्यस्य साधुबलस्य धर्मा धारयिता भुवद्भवति । किंच दशभिः एतत्संज्ञकाभीरश्मिभिः कर्मकरणार्थमश्नुवानाभिः अंगुलिभिः भूम प्रभूतं प्रभारि प्रभार्यते चिणिरूपं ॥ २३ ॥

अथ चतुर्विंशी—

पवित्रेभिःपवमानोनृचक्षाराजादेवानामुतमर्त्यानाम् ।
द्विताभुवद्रयिपतीरयीणामृतंभरत्सुभृतंचार्विन्दुः ॥ २४ ॥

पवित्रेभिः । पवमानः । नृऽचक्षाः । राजा । देवानाम् । उत ।
मर्त्यानाम् । द्विता । भुवत् । रयिऽपतिः । रयीणाम् ।
ऋतम् । भरत् । सुऽभृतम् । चारु । इन्दुः ॥ २४ ॥

पवित्रेभिः पवित्रैः पवमानः पूयमानः नृचक्षाः नृणांफलाफलयोः द्रष्टा अथ देवानामिन्द्रादीनां उतापिच मर्त्यानां मनुष्याणां एवमुभयेषां जनानां राजा रयिपतिः धनस्यपतिः नत्वल्पस्यपतिः किंतु रयीणां बहूनां धनानांस्वामी । वृत्यवृत्तिभ्यांस्वामित्वं बाहुल्यंच विवक्ष्यते । ईदृशः सोमः द्विता द्विधा देवेष्वपिच मनुष्येषु भुवत् भवति । सोयमिन्दुः सोमः सुभृतं संभृतं चारु कल्याणं ऋतमुदकं भरत् बिभर्ति ॥ २४ ॥

अथ पंचविंशी—

अर्वाँइववश्रवसेसातिमच्छेन्द्रस्यवायोरभिवीतिमर्ष ।
सनःसहस्राबृहतीरिषोदाभवासोमद्रविणोवित्पुनानः ॥ २५॥१५॥

अर्वान्ऽइव । श्रवसे । साृतिम् । अच्छ । इन्द्रस्य । वायोः । अभि । वीतिम् । अर्ष । सः । नः । सहस्रा । बृहतीः । इषः । दाः । भव । सोम । द्रविणःऽवित् । पुनानः ॥ २५ ॥ १५ ॥

हेसोम अन्नार्थं युद्धे अर्वानिव अश्वोयथा गच्छति तद्वत् त्वं श्रवसे अस्माकमन्नार्थं तथा सातिमच्छ धनलाभंप्रति इन्द्रस्य वायोश्चवीतिं पानमभ्यर्ष अभिगच्छ । ऐन्द्रवायवग्रहे हि इन्द्रवायू सह सोमंपिबतइति सहोपादानं । सत्वं सहस्रा सहस्राणि बहुविधानि बृहतीः बृंहितानि प्रवृद्धानि इषोन्नानि नोस्मभ्यं दाः प्रयच्छ । हे सोम पुनानः पूयमानस्त्वं नोस्मभ्यं द्रविणोवित् धनस्य लंभयिता भव । द्रविणशब्दात्सर्वप्रातिपदिकेभ्योलालसायांसुग्वक्तव्यइति सुगागमः ॥ २५ ॥

॥ इति सप्तमस्य चतुर्थे पंचदशोवर्गः ॥ १५ ॥

अथ षड्विंशी—

देवाव्योनःपरिषिच्यमानाःक्षयंसुवीरंधन्वन्तुसोमाः ।
आयज्यवःसुमतिंविश्ववाराहोतारोनदिवियजोमन्द्रतमाः॥ २६॥

देवऽअव्यः । नः । परिऽसिच्यमानाः । क्षयम् । सुऽवीरम् । धन्वन्तु । सोमाः । आऽयज्यवः । सुऽमतिम् । विश्वऽवाराः । होतारः । न । दिविऽयजः । मन्द्रऽतमाः ॥ २६ ॥

देवाव्यः अवतेस्तर्पणार्थस्य अवितृस्तृतन्त्रिभ्यईरिति ईप्रत्ययः । उदात्तस्वरितयोर्यणइति जसःस्वरितत्वं । देवानां तर्पयितारः परिषिच्यमानाः परितः पात्रेषु सिच्यमानाः सोमाः नोस्माकं सुवीरंशोभनपुत्रं क्षयं गृहं धन्वन्तु प्रेरयन्तु । कीदृशाः सुमतिं शोभनमतिं यजमानं आयज्यवः यष्टुमिच्छवः विश्ववाराः विश्वैर्वरणीयाः होतारोन होतारोयथा देवानिन्द्रादीन् स्तुवन्ति एवं दिवियजः दिवि द्युलोकस्थितानिन्द्रादीन् देवान् यजन्तः । दिव्शब्दे तत्पुरुषेकृतिबहुलमिति सप्तम्याअलुक् । मन्द्रतमाः अत्यन्तंमदकराः ॥ २६ ॥

अथ सप्तविंशी—

एवादेवदेवतातेपवस्वमहेसोमप्सरसेदेवपानः ।
महश्चिद्धिष्मसिहिताःसमर्येकृधिसुष्ठानेरोदसीपुनानः ॥ २७ ॥

एव । देव । देवऽताते । पवस्व । महे । सोम । प्सरसे । देवऽपानः ।
महः । चित् । हि । स्मसि । हिताः । सऽमर्ये । कृधि ।
सुस्थाने इति सुऽस्थाने । रोदसी इति । पुनानः ॥ २७ ॥

हेदेव द्योतमान स्तोतव्य वा हेसोम देवपानः देवैःपातव्यस्त्वं देवताते देवैस्तते वितते यज्ञे महे महते प्सरसे भक्षणाय देवानांपानाय एव एवं पवस्व क्षर । ततोवयं हिताः त्वयाप्रेरिताःसन्तः समर्ये मरणधर्मरहिते संग्रामे महश्चित् महतोबलाधिकानपि शत्रून् स्मसिहि अभिभवेम खलु । किंच पुनानः पूयमानस्त्वं रोदसी द्यावापृथिव्यौ सुस्थाने अस्माकं शोभनावासस्थाने सत्यौ कृधि कुरु ॥ २७ ॥

अथाष्टाविंशी—

अश्वोनक्रदोवृषभिर्युजानःसिंहोनभीमोमनसोजवीयान् ।
अर्वाचीनैःपथिभिर्येरजिष्ठाआपवस्वसौमनसंनइन्दो ॥ २८ ॥

अश्वः । न । क्रदः । वृषऽभिः । युजानः । सिंहः । न । भीमः ।
मनसः । जवीयान् । अर्वाचीनैः । पथिऽभिः । ये । रजिष्ठाः ।
आ । पवस्व । सौमनसम् । नः । इन्दो इति ॥ २८ ॥

हेसोम वृषभिर्ऋत्विग्भिः सोममभिषुण्वद्भिः युजानोयोज्यमानस्त्वं अश्वोन अश्वइव क्रदः क्रन्दसि शब्दायसे । कीदृशः सिंहोन सिंहइव भीमः शत्रूणां भयंकरः तथा मनसोपि जवीयान् वेगवत्तरः अर्वाचीनैः अभिमुखैः पथिभिर्मार्गैः येमार्गाः रजिष्ठाः अत्यन्तमृजवोभवन्ति विभाषर्जोश्छन्दसीतिऋकारस्यरादेशः । हेइन्दो दीप्यमान सोम तैर्मार्गैः नोस्माकं सौमनसं सौमनस्यं आपवस्व आप्रापय ॥ २८ ॥

अथैकोनत्रिंशी—

शतंधारादेवजाताअसृग्रन्त्सहस्रमेनाःकवयोमृजन्ति ।
इन्दोसनित्रंदिवआपवस्वपुरएतासिमहतोधनस्य ॥ २९ ॥

शतम् । धाराः । देवऽजाताः । असृग्रन् । सहस्रम् । एनाः ।
कवयः । मृजन्ति । इन्दो इति । सनित्रम् । दिवः । आ ।
पवस्व । पुरःऽएता । असि । महतः । धनस्य ॥ २९ ॥

हे सोम देवजाताः देवार्थं प्रादुर्भूताः शतं शतसंख्याकाः त्वदीयाधाराः असृग्रन् सृज्यन्ते । ततः कवयः क्रान्तदर्शिनः ऋत्विजः सहस्रं बहुविधाः एनाः त्वदीयाधाराः मृजन्ति अलंकुर्वन्ति यद्वा सहस्रमनेकधामृजन्ति शोधयन्ति । हेइन्दो सनित्रं भजनसाधनं दिवोद्युलोकात् अस्माकं पुत्रादीनांच आपवस्व आप्रापय । कुतोस्यधनमितिचेत् तत्राह महतः प्रभूतधनस्य पुरएता पुरोगंतासि भवसि तस्माद्देहि इति ॥ २९ ॥

अथ त्रिंशी—

दिवोनसर्गाअससृग्रमह्नांराजानमित्रंप्रमिनातिधीरः ।
पितुर्नपुत्रःक्रतुभिर्यतानआपवस्वविशेअस्याअजीतिम् ॥ ३० ॥ १६ ॥

दिवः । न । सर्गाः । अससृग्रम् । अह्नाम् । राजा । न । मित्रम् ।
प्र । मिनाति । धीरः । पितुः । न । पुत्रः । क्रतुऽभिः । यतानः ।
आ । पवस्व । विशे । अस्यै । अजीतिम् ॥ ३० ॥ १६ ॥

दिवोन यथादिवोद्योतमानस्य आदित्यस्याह्नां संबन्धिनः सर्गारश्मयः अससृग्रं विसृज्यन्ते तद्वत् सोमस्य सर्गाः सृज्यन्ते इतिसर्गाधाराः विसृज्यन्ते सृजेर्व्यत्ययेनकर्मार्थेलङ्बिहुलंछन्दसीतिशस्यश्लुः झेरमादेशश्छांदसः । धीरः प्राज्ञोराजा अयंसोमः मित्रं सखायं नप्रमिनाति नहिनस्ति क्रतुभिः कर्मभिर्यतानोयतमानः पुत्रः पितुर्न पितुर्यथा अपराभवंकरोति तद्वत् कर्मभिर्यतमानस्त्वं अस्यै विशे प्रजायै अजीतिं अपराजितिं अपराभवं आपवस्व आप्रापय यथा नपराजिताभवन्ति तथाकुर्वित्यर्थः ॥ ३० ॥

॥ इति सप्तमस्य चतुर्थे षोडशोवर्गः ॥ १६ ॥

अथैकत्रिंशी—

प्रतेधारामधुमतीरसृग्रन्वारान्यत्पूतोअत्येष्यव्यान् ।
पवमानपवसेधामगोनांजज्ञानःसूर्यमपिन्वोअर्कैः ॥ ३१ ॥

प्र । ते । धाराः । मधुऽमतीः । असृग्रन् । वारान् । यत् । पूतः ।
अतिऽएषि । अव्यान् । पवमान । पवसे । धाम । गोनाम् ।
जज्ञानः । सूर्यम् । अपिन्वः । अर्कैः ॥ ३१ ॥

ते तव स्वभूता मधुमतीः मधुमत्योधाराः प्रासृग्रन् तदाप्रसृज्यन्ते यद्यदा पूतोवसतीवरीभिः त्वं अव्यानविभवान् वारान् वालान् पवित्राण्यत्येषि अतीत्य गच्छसि । किंच हेपवमान गोनां गवांधाम धारकं पयोलक्षीकृत्य पवसे ततः जज्ञानः जायमानस्त्वं अर्कैरर्चनीयैः स्वतेजोभिः सूर्यमादित्यमपिन्वः पूरयसि ॥ ३१ ॥

अथ द्वात्रिंशी—

कनिक्रददनुपन्थामृतस्यशुक्रोविभास्यमृतस्यधाम ।
सइन्द्रायपवसेमत्सरवान्हिन्वानोवाचंमतिभिःकवीनाम् ॥ ३२ ॥

कनिक्रदत् । अनु । पन्थाम् । ऋतस्य । शुक्रः । वि । भासि ।
अमृतस्य । धाम । सः । इन्द्राय । पवसे । मत्सरऽवान् ।
हिन्वानः । वाचम् । मतिऽभिः । कवीनाम् ॥ ३२ ॥

अभिषूयमाणः सोमः ऋतस्य सत्यभूतस्य यज्ञस्य पंथां पंथानं मार्गमनु कनिक्रदत् पुनःपुनः शब्दायते । अथप्रत्यक्षः अमृतस्यामरणधर्मस्य धाम स्थानभूतः मरणरहितइत्यर्थः । तादृशः शुक्रः शुक्लवर्णः त्वं विभासि विशेषेणराजसि मत्सरवान् मदकररसयुक्तः सत्वं इन्द्रायेन्द्रार्थं पवसे क्षरसि । कीदृशः कवीनां स्तोतृणां मतिभिः सह वाचं शब्दं हिन्वानः प्रेरयन् पवसे ॥ ३२ ॥

अथ त्रयस्त्रिंशी—

दिव्यःसुपर्णोवचक्षिसोमपिन्वन्धाराःकर्मणादेववीतौ ।
एन्दोविशकलशंसोमधानंक्रन्दन्निहिसूर्यस्योपरश्मिम् ॥ ३३ ॥

दि॒व्यः । सु॒ऽप॒र्णः । अव॑ । च॒क्षि॒ । सो॒म॒ । पिन्व॑न् । धारा॑ः ।
कर्म॑णा । दे॒व॒ऽवी॑तौ । आ । इ॒न्दो॒ इति॑ । वि॒श॒ । क॒लश॑म् ।
सो॒म॒ऽधान॑म् । क्रन्द॑न् । इ॒हि॒ । सूर्य॑स्य । उप॑ । र॒श्मिम् ॥ ३३ ॥

हे सोम दिव्योदिविभवः सुपर्णः सुपतनस्त्वं अवचक्षि अवस्तात् पश्य च । चष्टेर्लेटिसिपिव्यत्ययेनपरस्मैपदं । किंकुर्वन् देववीतौ देवानां हविर्भक्षणस्थानेयज्ञे कर्मणा धाराः पिन्वन् क्षरन् । किंच हे इन्दो सोमधानं कलशं आविश क्रन्दन्शब्दायमानस्त्वं सूर्यस्य प्रेरकस्यादित्यस्य रश्मिकान्तिमुपोहि उपगच्छ ॥ ३३ ॥

अथ चतुस्त्रिंशी—

ति॒स्रोवाच॑ईरयति॒प्रव॒ह्नि॑र्ऋ॒तस्य॑धी॒तिंब्रह्म॑णोमनी॒षाम् ।
गावो॑यन्ति॒गोप॑तिंपृ॒च्छमा॑ना॒ःसोमं॑यन्तिम॒तयो॑वावशा॒नाः ॥ ३४ ॥

ति॒स्रः । वाचः॑ । ई॒र॒य॒ति॒ । प्र । व॒ह्निः॑ । ऋ॒तस्य॑ । धी॒तिम् ।
ब्रह्म॑णः । म॒नी॒षाम् । गाव॑ः । य॒न्ति॒ । गोऽप॑तिम् । पृ॒च्छमा॑नाः ।
सोम॑म् । य॒न्ति॒ । म॒तयः॑ । वा॒व॒शा॒नाः ॥ ३४ ॥

वह्निर्वोढा यजमानः तिस्रोवाचः ऋग्यजुःसामात्मिकाः स्तुतीः प्रेरयति । तथा ऋतस्य यज्ञस्यधीतिं धारयित्रीं ब्रह्मणःपरिवृढस्य सोमस्य मनीषां मनसईशित्रीं कल्याणीं वाचं च प्रेरयति । किंच गोपतिं वृषभंयथा गावोभिगच्छन्ति तद्वत् । गवांस्वामिनं सोमं गावः पृच्छमानाः पृच्छंत्यः सत्योयन्ति स्वपयसामिश्रयितुमभिगच्छन्ति । तथा वावशानाः कामयमानाः मतयः स्तोतारः सोमं यन्ति स्तोतुमभिगच्छन्ति ॥ ३४ ॥

अथ पंचत्रिंशी—

सोमं॒गावो॑धे॒नवो॑वावशा॒नाःसोमं॒विप्रा॑म॒तिभि॑ःपृ॒च्छमा॑नाः ।
सोम॑ःसु॒तःपू॑यतेअ॒ज्यमा॑न॒ःसोमे॑अ॒र्का॑स्त्रि॒ष्टुभ॒ःसंन॑वन्ते ॥ ३५ ॥ १७ ॥

सोम॑म् । गाव॑ः । धे॒नव॑ः । वा॒व॒शा॒नाः । सोम॑म् । विप्रा॑ः ।
म॒तिऽभि॑ः । पृ॒च्छमा॑नाः । सोम॑ः । सु॒तः । पू॒य॒ते॒ । अ॒ज्यमा॑नः ।
सोमे॑ । अ॒र्काः । त्रि॒ऽस्तुभ॑ः । सम् । न॒व॒न्ते॒ ॥ ३५ ॥ १७ ॥

धेनवः प्रीणयित्र्योगावः सोमं वावशानाः कामयमानाभवन्तिविप्रामेधाविनःस्तोतारः मतिभिः पृच्छमानाः पृच्छन्तोभवन्ति । अज्यमानः गोभिः सिच्यमानः सुतोभिषुतः सोमः ऋत्विग्भिः परिपूयते । तथा त्रिष्टुभः त्रिष्टुब्रूपाः अर्काः अस्माभिः क्रियमाणाः एतेमंत्राः सोमे संनवन्ते संगच्छन्ते ॥ ३५ ॥

॥ इति सप्तमस्य चतुर्थे सप्तदशो वर्गः ॥१७॥

अथ षट्त्रिंशी—

एवानःसोमपरिषिच्यमानआपवस्वपूयमानःस्वस्ति ।
इन्द्रमाविशबृहतारवेणवर्धयावाचंजनयापुरंन्धिम् ॥ ३६ ॥

एव । नः । सोम । परिऽसिच्यमानः । आ । पवस्व । पूयमानः ।
स्वस्ति । इन्द्रम् । आ । विश । बृहता । रवेण । वर्धय ।
वाचम् । जनय । पुरम्ऽधिम् ॥ ३६ ॥

हेसोम परिषिच्यमानः परितः पात्रेषु सिच्यमानः पूयमानस्त्वं नोस्माकमेव स्वस्ति अविनाशमापवस्व आपापय । किंच बृहता महता रवेण शब्देनसह इन्द्रमाविश प्रविश तथा वाचं स्तुतिलक्षणां वर्धय । किंच पुरंधिं बहुधियं प्रज्ञानं जनय अस्मभ्यं उत्पादय । वाक्यभेदादनिघातः ॥ ३६ ॥

अथ सप्तत्रिंशी—

आजागृविर्विप्रऋतामतीनांसोमःपुनानोअसदच्चमूषु ।
सपन्तियंमिथुनासोनिकामाअध्वर्यवोरथिरासःसुहस्ताः ॥ ३७ ॥

आ । जागृविः । विप्रः । ऋता । मतीनाम् । सोमः । पुनानः ।
असदत् । चमूषु । सपन्ति । यम् । मिथुनासः । निऽकामाः ।
अध्वर्यवः । रथिरासः । सुऽहस्ताः ॥ ३७ ॥

जागृविर्जागरणशीलः ऋता सुपांसुलुगितिषष्ठ्याआकारः । ऋतानां सत्यानां मतीनां स्तुतीनां विप्रोज्ञाता ससोमः पुनानः पूयमानःसन् चमूषु चमसेष्वासदत् आसीदति । मिथुनासः

परस्परंसंगताः निकामाः नितरांकामयमानाः रथिरासः यज्ञस्यनेतारः सुहस्ताः कल्याणपाणयः अध्वर्यवः पवित्रे यं सोमंसपन्ति स्पृशन्ति । षपसमवाये। सपतिःस्पृशतिकर्मेतिनैरुक्ताः ॥३७॥

अथाष्टात्रिंशी—

सपुंनानउपसूरेनधातोभेअंप्रारोदसीविषआंवः ।
प्रियाचिद्यस्यंप्रियसासंऊतीसतूधनंकारिणेनप्रयंसत् ॥ ३८ ॥

सः । पुनानः । उपं । सूरें । न । धातां । आ । उभे इतिं । अप्राः ।
रोदंसी इतिं । वि । सः । आवरित्यांवः । प्रिया । चित् । यस्यं ।
प्रियसासंः । ऊती । सः । तु । धनंम् । कारिणें । न । प्र । यंसत् ॥३८॥

पुनानः पूयमानः ससोमः इन्द्रे उपगच्छति । तत्रदृष्टान्तः—सूरेन यथा सूर्यं धाता संवत्सरउपगच्छति । ससंवत्सरोविधातारं । संवत्सरेणैवास्मैप्रजाःप्रजनयतीत्याम्नानात् । किंचोभेरोदसी द्यावापृथिव्यौ आप्राः स्वमहिम्ना आपूरयति । तथा ससोमः व्यावः स्वतेजसा तमांसि विवृणोति । वृणोतेर्मंत्रेघसेतिच्लेर्लुक् छन्दस्यपिदृश्यतेइत्यडागमः पूर्वपदादितिसइत्यस्यसांहितिकंषत्वं । प्रिया षष्ठ्याआकारः प्रियस्य यस्यसोमस्य यद्वा प्रियाणि प्रयच्छतः यस्यसोमस्य प्रियसासः अत्यन्तं प्रियतमाधाराः ऊती ऊत्यै रक्षणाय भवन्ति स तु क्षिप्रं अस्मभ्यं धनं प्रयंसत् प्रयच्छतु । यच्छतेर्लेटिसिप्यडागमः । तत्रदृष्टान्तः—कारिणेन यथा कारिणे च कृतकाय भृतिं प्रयच्छन्ति तद्वत् ॥३८॥

अथैकोनचत्वारिंशी—

सवर्धितावर्धनःपूयमानःसोमोमीढ्वाँअभिनोज्योतिषावीत् ।
येनानःपूर्वेपितरःपदज्ञाःस्वर्विदोअभिगाअद्रिमुष्णन् ॥ ३९ ॥

सः । वर्धिता । वर्धनः । पूयमानः । सोमः । मीढ्वान् । अभि । नः ।
ज्योतिषा । आवीत् । येन । नः । पूर्वे । पितरः । पदऽज्ञाः ।
स्वःऽविदः । अभि । गाः । अद्रिम् । उष्णन् ॥ ३९ ॥

---

१ नि०५. १६. ।    २ तै० ब्रा० १. ७. २ ।

वर्धिता देवानां स्वकलाप्रदानेन वर्धयिता वर्धनः स्वयंवर्धमानः पवित्रेण पूयमानः मीढ्वान् कामानांसेक्ता ससोमः नोस्माकं ज्योतिषा स्वतेजसा अभ्यावीत् अभिरक्षतु। येन सोमेन पदज्ञाः पणिभिरपहृतानां गवांपदानि जानन्तः स्वर्विदः सर्वज्ञाः सूर्यंजानन्तोवा नोस्माकंपूर्वे चिरन्तनाः पितरोंगिरसःगाः पशूनभिलक्ष्य अद्रिमुष्णन् शिलोच्चयमुष्णन् सोमतेजसा अंधकारावृतं शिलोच्चयंगत्वा पशूनाहरन्नित्यर्थः। उषिरिहमुष्णातिसमानकर्मा। यद्वा मुष्णातेर्लङि वर्णलोपः॥ ३९॥

अथ चत्वारिंशी—

अक्रान्त्समुद्रःप्रथमेविधर्मञ्जनयन्प्रजाभुवनस्यराजा।
वृषापवित्रेअधिसानोअव्येबृहत्सोमोवावृधेसुवानइन्दुः॥४०॥१८॥

अक्रान्। समुद्रः। प्रथमे। विऽधर्मन्। जनयन्। प्रऽजाः।
भुवनस्य। राजा। वृषा। पवित्रे। अधि। सानौ। अव्ये।
बृहत्। सोमः। वावृधे। सुवानः। इन्दुः॥ ४०॥ १८॥

समुद्रः यस्मादापः समुद्रवन्ति ससमुद्रः अपांवर्षकोराजासोमः प्रथमे विस्तृते भुवनस्योदकस्य विधर्मन् विधारकेन्तरिक्षे प्रजा जनयन्। उत्पादयन् अक्रान् सर्वमतिक्रामति। क्रमतेर्लुङि तिपीडभावे वृद्धौ च कृतायां सिज्लोपे मकारस्य मोनोधातोरितिनकारेरूपं। वृषा कामानां वर्षिता सुवानोभिषूयमाणः इन्दुर्दीप्तः ससोमः अधि अधिकं सानौ समुच्छ्रिते अव्ये अविमये पवित्रे बृहत् प्रभूतं ववृधे वर्धते॥ ४०॥

॥ इति सप्तमस्य चतुर्थेष्टादशोवर्गः॥ १८॥

अथैकचत्वारिंशी—

महत्तत्सोमोमहिषश्चकारापांयद्गर्भोवृणीतदेवान्।
अदधादिन्द्रेपवमानओजोजनयत्सूर्येज्योतिरिन्दुः॥ ४१॥

महत्। तत्। सोमः। महिषः। चकार। अपाम्। यत्। गर्भः।
अवृणीत। देवान्। अदधात्। इन्द्रे। पवमानः। ओजः।
अजनयत्। सूर्ये। ज्योतिः। इन्दुः॥ ४१॥

महिषो महान्पूज्योवा सोमो महत्प्रभूतं तत्कर्म चकार अकरोत्। किंतत् अपांगर्भः उदकानांगर्भभूतः जनयितृत्वाज्जन्यत्वाच्च ससोमः देवानवृणीत समभजतेतियत् तत्कृतवानिति। किंच पवमानः पूयमानः सोमः ओजः सोमपानेन जन्यं बलं इन्द्रे अदधात् व्यदधात्। तथा इन्दुः सोमः सूर्येज्योतिस्तेजःअजनयत्॥ ४१॥

अथ द्विचत्वारिंशी–

मत्सिवायुमिष्टयेराधसेचमत्सिमित्रावरुणापूयमानः।
मत्सिशर्धोमारुतंमत्सिदेवान्मत्सिद्यावापृथिवीदेवसोम॥ ४२॥

मत्सि। वायुम्। इष्टये। राधसे। च। मत्सि। मित्रावरुणा।
पूयमानः। मत्सि। शर्धः। मारुतम्। मत्सि। देवान्। मत्सि।
द्यावापृथिवी इति। देव। सोम॥ ४२॥

हे सोम त्वं वायुं मत्सि मादय। किमर्थं इष्टये अस्माकमेषणाय अन्नाय राधसे धनाय च। तथा पूयमानः पवित्रेण त्वं मित्रावरुणा मित्रावरुणौ च मत्सि तर्पयसि। किंच मारुतं मरुतां स्वभूतं शर्धोबलं च मत्सि। तथा देवानिन्द्रादीन् मत्सि हर्षयसि। हेदेव स्तोतव्य हेसोम द्यावापृथिवी द्यावापृथिव्यौ च मत्सि मादय एतान् हर्षयुक्तान् कृत्वास्मभ्यंधनं प्रयच्छेत्यर्थः॥४२॥

अथ त्रिचत्वारिंशी–

ऋजुःपवस्ववृजिनस्यहन्तापामीवांबाधमानोमृधश्च।
अभिश्रीणन्पयःपयसाभिगोनामिन्द्रस्यत्वंतववयंसखायः॥४३॥

ऋजुः। पवस्व। वृजिनस्य। हन्ता। अप। अमीवाम्।
बाधमानः। मृधः। च। अभिऽश्रीणन्। पयः। पयसा।
अभि। गोनाम्। इन्द्रस्य। त्वम्। तव। वयम्। सखायः॥ ४३॥

हेसोम ऋजुः ऋजुगमनःसन् पवस्व क्षर। किंकुर्वन् वृजिनस्य उपद्रवस्य हन्ता अमीवां रोगरूपं राक्षसं अपबाधमानः तथा अस्मदीयान् मृधोहिंसकान् शत्रूंश्च बाधमानः सन् प-

वस्व ततः पयआत्मीयंरसं गोनां गवांपयसाक्षीरेण अभिश्रीणन् अभिसंयोजयन् पात्राण्यभिगच्छसि । अपिच त्वं इन्द्रस्य सखासि हेसोम तव वयं सखायः स्तुत्यस्तोतृत्वयष्टृयष्टव्यत्वलक्षणेन सखिभूताः स्मः ॥ ४३ ॥

अथ चतुश्चत्वारिंशी—

मध्वः॑सू॒दंप॑वस्व॒वस्व॒उत्सं॑वी॒रंच॑न॒आप॑वस्वा॒भगं॑च ।
स्वद॒स्वेन्द्रा॑य॒पव॑मानइन्दोर॒यिंच॑न॒आप॑वस्वासमु॒द्रात् ॥ ४४ ॥

मध्वः॑ । सू॒दम् । प॒व॒स्व॒ । वस्वः॑ । उत्स॑म् । वी॒रम् । च॒ । नः॒ । आ ।
प॒व॒स्व॒ । भग॑म् । च॒ । स्वद॑स्व । इन्द्रा॑य । पव॑मानः ।
इ॒न्दो॒ इति॑ । र॒यिम् । च॒ । नः॒ । आ । प॒व॒स्व॒ । स॒मु॒द्रात् ॥ ४४ ॥

हे सोम मध्वोमाधुर्यस्य सूदं क्षारयितारं घनीभूतं आपवस्व । वस्वो वसु धनस्य उत्सं उत्स्यन्दकं रसं पवस्व । किंच नोस्मभ्यं वीरं पुत्रं आपवस्व आगमय । तथा भगं भजनीयं धनंच देहि । हेइन्दो पवमानः पूयमानः सन् इन्द्राय स्वदस्व रुचितोभव । ततस्त्वं नोस्मभ्यं समुद्रादन्तरिक्षात् रयिं धनं पुत्रंवा राति ददाति क्षीरमिति रयिर्गौर्वा तांवा पवस्व देहि ॥४४॥

अथ पञ्चचत्वारिंशी—

सोमः॑सु॒तोधार॒यात्यो॒नहि॒त्वा॒सिन्धु॒र्ननि॒म्नम॒भिवा॒ज्य॑क्षाः ।
आयोनिं॒वन्य॑मसदत्पुना॒नःसमिन्दु॒र्गोभि॑रसरत्सम॒द्भिः ॥४५॥१९॥

सोमः॑ । सु॒तः । धार॑या । अत्यः॑ । न । हि॒त्वा । सिन्धुः॑ । न ।
नि॒म्नम् । अ॒भि । वा॒जी । अ॒क्षा॒रि॒ति॑ । आ । योनि॑म् । वन्य॑म् ।
अ॒स॒द॒त् । पु॒ना॒नः । सम् । इन्दुः॑ । गोभिः॑ । अ॒स॒र॒त् ।
सम् । अ॒त्ऽभिः ॥ ४५ ॥ १९ ॥

सुतोभिषुतः सोमोधारयास्वीयया अत्योनअतनशीलोश्वइव हित्वागत्वा हिनोतेः क्तिनि रूपं । किंच वाजी बलवान् सोमः सिन्धुर्न यथासिन्धुः स्यन्दमाना नदी निम्नं प्रदेशमभिगच्छति तद्वत् निम्नमधरभाविनं कलशमभ्यक्षाः अभिक्षरति । ततः पुनानः पूयमानः सोमः वन्यं

वृक्षभवं योनिं योनिस्थानं कलशं आसदत् आसीदति । सोयमिन्दुः सोमः गीर्भिर्गोविकारैः क्षीरादिभिः श्रयणैः सं असरत् संसरति तथा अद्भिर्वसतीवरीभिश्च संगच्छते ॥ ४५ ॥

॥ इति सप्तमस्य चतुर्थे एकोनविंशोवर्गः ॥ १९ ॥

अथ षट्चत्वारिंशी–

एषस्यतेपवतइन्द्रसोमश्चमूषुधीरउशतेतवस्वान् ।
स्वर्चक्षारथिरःसत्यशुष्मःकामोनयोदेवयतामसर्जि ॥ ४६ ॥

एषः । स्यः । ते । पवते । इन्द्र । सोमः । चमूषु । धीरः ।
उशते । तवस्वान् । स्वःऽचक्षाः । रथिरः । सत्यऽशुष्मः ।
कामः । न । यः । देवऽयताम् । असर्जि ॥ ४६ ॥

हे इन्द्र उशते कामयमानाय ते तुभ्यं त्वदर्थं धीरः प्राज्ञः तवस्वान् वेगवान् स्यः सएषसोमः चमूषु चमसेषु पवते क्षरति स्वर्चक्षाः सर्वदर्शिनः रथिरोरथवान् सत्यशुष्मः यथार्थबलोयः सोमः देवयतां देवानिच्छतां यजमानानां कामोन कामइवासर्जि असृज्यत अदीयतइत्यर्थः ॥ ४६ ॥

अथ सप्तचत्वारिंशी–

एषप्रत्नेनवयसापुनानस्तिरोवर्पांसिदुहितुर्दधानः ।
वसानःशर्मत्रिवरूथमप्सुहोतेवयातिसमनेषुरेभन् ॥ ४७ ॥

एषः । प्रत्नेन । वयसा । पुनानः । तिरः । वर्पांसि । दुहितुः ।
दधानः । वसानः । शर्म । त्रिऽवरूथम् । अप्ऽसु ।
होताऽइव । याति । समनेषु । रेभन् ॥ ४७ ॥

प्रत्नेन पूर्वकालीनेन वयसा अन्नेन पुनानः पूयमानः अन्नात्मिकया धारया क्षरन्नित्यर्थः तादृशः दुहितुः सर्वस्यदोग्ध्र्याः पृथिव्याः वर्पांसि वर्पइतिरूपनाम वृणोति शरीरमिति रूपाणि तिरोदधानः स्वतेजसा तिरस्कुर्वन् आच्छादयन् तथा त्रिवरूथं त्रिभूमिकोपेतं यद्वा त्रयः शीतातपवर्षाः तेषां निवारकं शर्म यज्ञगृहं वसानः आच्छादयन् अप्सु वसतीवरीषुस्थि-

तः एषसोमः होतेव यथाहोता स्तुतिध्वनिं कुर्वन् यज्ञेषु याति तद्वत् रेभन् शब्दायमानःसन् समनेषु समन्ति कर्माणिधृष्टाः प्रगल्भायंत्यत्रेति समना यज्ञाः तेषु याति गच्छति ॥ ४७ ॥

अथाष्टाचत्वारिंशी—

नूनस्त्वंरथिरोदेवसोमपरिस्रवचम्वोःपूयमानः ।
अप्सुस्वादिष्ठोमधुमाँऋतावादेवोनयःसवितासत्यमन्मा ॥ ४८ ॥

नु । नः । त्वम् । रथिरः । देव । सोम । परि । स्रव ।
चम्वोः । पूयमानः । अप्ऽसु । स्वादिष्ठः । मधुऽमान् ।
ऋतऽवा । देवः । न । यः । सविता । सत्यऽमन्मा ॥ ४८ ॥

हे देव काम्यमान हेसोम रथिरोरथवांस्त्वं नोस्माकं स्वभूतेयज्ञे चम्वोरधिषवणफलकयोः पूयमानः सन् अप्सु वसतीवरीषु नुक्षिप्रं परिस्रव परितः क्षर । स्वादिष्ठः स्वादुतमः अतएव मधुमान् माधुर्ययुक्तः ऋतावा ऋतवान् यज्ञवान् सविता सर्वस्यप्रेरकोयस्त्वं देवोन देवइव सत्यमन्मा सत्यस्तुतिकोभवसि सत्वं परिस्रवेति ॥ ४८ ॥

अथैकोनपंचाशी—

अभिवायुंवीत्यर्षागृणानोऽभिमित्रावरुणापूयमानः ।
अभीनरंधीजवनंरथेष्ठामभीन्द्रंवृषणंवज्रबाहुम् ॥ ४९ ॥

अभि । वायुम् । वीती । अर्ष । गृणानः । अभि ।
मित्रावरुणा । पूयमानः । अभि । नरम् । धीऽजवनम् ।
रथेऽस्थाम् । अभि । इन्द्रम् । वृषणम् । वज्रऽबाहुम् ॥ ४९ ॥

हेसोम गृणानः स्तूयमानः त्वं वीती सुपांसुलुगिति चतुर्थ्याःपूर्वसवर्णदीर्घः । वीत्यै पानाय वायुमभ्यर्ष अभिगच्छ । तथा पवित्रेण पूयमानस्त्वं मित्रावरुणा मित्रावरुणौच पानायाभिगच्छ । किंच नरं सर्वस्यनेतारं धीजवनं बुध्यासमंवेगं कुर्वाणं रथेष्ठां रथेस्थां रथेतिष्ठन्तं अनेनाश्विनावभिधीयेते । एकवचनं प्रत्येकविवक्षया समुदायविवक्षयावा। एतादृशावश्विनौचाभिगच्छ । तथा वृषणं कामानां वर्षकं वज्रबाहुं वज्रयुक्तबाहुं इन्द्रंच त्वंपानायाभिगच्छ॥४९॥

अथ पंचाशी—

अभिवस्त्रासुवसनान्यर्षाभिधेनूःसुदुघाःपूयमानः ।
अभिचन्द्राभर्तवेनोहिरण्याभ्यश्वान्रथिनोदेवसोम ॥ ५०॥२०॥

अभि । वस्त्रा । सुऽवसनानि । अर्ष । अभि । धेनूः । सुऽदुघाः ।
पूयमानः । अभि । चन्द्रा । भर्तवे । नः । हिरण्या ।
अभि । अश्वान् । रथिनः । देव । सोम ॥ ५० ॥ २० ॥

हेसोम त्वमस्माकं सुवसनानि सुपरिधानानि वस्त्रा वस्त्राणि अभ्यर्ष अभिगमय । यद्वा सुवसनानि शोभनवस्त्रसहितानि वस्त्रा आच्छादकानि धनान्यभिगमय । किंच पूयमानः पवित्रेण त्वं सुदुघाः सुष्ठुपयसोदोग्ध्रीः धेनूः नवप्रसूतिकागाः अभिप्रापय । अपिच चन्द्रा चन्द्राण्याह्लादकानि हिरण्या हिरण्यानि भर्तवे भरणाय पोषणाय नोस्माकमभिगमय । तथा हेदेव स्तोतव्य हेसोम रथिनोरथवतोश्वान् अस्माकमभिप्रापय ॥ ५० ॥

॥ इति सप्तमस्य चतुर्थे विंशोवर्गः ॥ २० ॥

अथैकपंचाशी—

अभीनोअर्षदिव्यावसून्यभिविश्वापार्थिवापूयमानः ।
अभियेनद्रविणमश्नवामाभ्यार्षेयंजमदग्निवन्नः ॥ ५१॥

अभि । नः । अर्ष । दिव्या । वसूनि । अभि । विश्वा । पार्थिवा ।
पूयमानः । अभि । येन । द्रविणम् । अश्नवाम ।
अभि । आर्षेयम् । जमदग्निऽवत् । नः ॥ ५१ ॥

हे सोम पवित्रेण पूयमानस्त्वं दिव्या दिव्यानि दिविभवानि वसूनि धनानि नोस्माकमभ्यर्ष अभिगमय । तथा पार्थिवा पार्थिवानि पृथिव्यांभवानि विश्वा सर्वाणि धनान्यभिगमय । तथा येन त्वदीयेन सामर्थ्येन द्रविणं धनं वयमभ्यश्नवाम अभिव्याप्नुयाम तत्सामर्थ्यमभिगमय । किंच आर्षेयं आर्षाणामृषिपुत्राणां योग्यंधनं जमदग्निवत् जमदग्नेर्यथा त्वंप्रापयः एवं नोस्माकमपि अभ्यर्ष । यद्वा आर्षेयं आर्षाणां योग्यं मंत्रं जमदग्नेःस्वभूतंमंत्रं यथा स्वादुतममकार्षीः एवमस्माकं तादृशंमंत्रं स्वादुतमंकुर्विति कुत्सोनामऋषिःप्रार्थयते ॥ ५१ ॥

अथ द्विपंचाशी—

अयापवापवस्वैनावसूनिमांश्चत्वइन्दोसरसिप्रधन्व ।
ब्रध्नश्चिदत्रवातोनजूतःपुरुमेधश्चित्तकवेनरंदात् ॥ ५२ ॥

अया । पवा । पवस्व । एना । वसूनि । मांश्चत्वे । इन्दो
इति । सरसि । प्र । धन्व । ब्रध्नः । चित् । अत्र । वातः ।
न । जूतः । पुरुऽमेधः । चित् । तकवे । नरम् । दात् ॥ ५२ ॥

हे सोम अया अनया पवा पवमानया धारया सह एना एनानि वसूनि धनानि पवस्व क्षर । पवा पूङ्पवने अन्येभ्योदृश्यन्तइतिविच्प्रत्ययः आर्धधातुकलक्षणोगुणः सावेकाचइतितृतीयायाउदात्तत्वं । तथा हेइन्दो तथा त्वं मांश्चत्वे मन्यमानानां चातके सरसि उदके वसतीवर्याख्ये प्रधन्व प्रगच्छ । ततः अत्र अस्मिन्सोमे पूयमानेसति ब्रध्नःचित् सर्वेषां प्रज्ञापकः मूलभूतोवा आदित्योपि वातोन वातइव जूतः वेगितःसन् किंच पुरुमेधःचित् बहुविधयज्ञइन्द्रश्चित् इन्द्रोपि तकवे तकतिर्गतिकर्मसुपठितः अस्मादौणादिकऊनप्रत्ययः सोममभिगच्छते स्तुतिभिः मह्यं नरं कर्मनेतारं पुत्रं दात् प्रयच्छतु हेसोम त्वया तर्पितौ सन्ताविन्द्रादित्यौ मह्यं पुत्रं प्रयच्छतामित्यर्थः ॥ ५२ ॥

अथ त्रिपंचाशी—

उतनएनापवयापवस्वाधिश्रुतेश्रवाय्यस्यतीर्थे ।
षष्टिंसहस्रानैगुतोवसूनिवृक्षंनपक्वंधूनवद्रणाय ॥ ५३ ॥

उत । नः । एना । पवया । पवस्व । अधि । श्रुते । श्रवाय्यस्य ।
तीर्थे । षष्टिम् । सहस्रा । नैगुतः । वसूनि । वृक्षम् । न ।
पक्वम् । धूनवत् । रणाय ॥ ५३ ॥

हेसोम उतापिच श्रवाय्यस्य सर्वैः श्रवणीयस्य सोमस्य तव श्रुते प्रसिद्धौ यद्वा षष्ठ्यर्थेचतुर्थी श्रुतः शब्दस्य तीर्थे स्थाने नोस्माकं स्वभूतेयज्ञे एना अनया पवया पूयमानया धारया अधि अधिकं पवस्व क्षर। नैगुतः नीचीनं गवन्ते शब्दायन्तइति निगुतः शत्रवः। तेषां

हन्तृत्वेन संबन्धी सोयंसोमः षष्टिं सहस्रा षष्टिसंख्याकानि सहस्राणि वसूनि धनानि रणाय शत्रूणां जयार्थं धूनवत् अस्माकमकंपयत् प्रायच्छदितियावत्। कथमिव वृक्षंनपक्वं पक्वफलं वृक्षं यथा कंपयति फलार्थी तद्वत्॥ ५३ ॥

अथ चतुःपंचाशी–

महीमेअस्यवृषनामंशूषेमांश्चत्वेवापृशनेवावधत्रे।
अस्वापयन्निगुतःस्नेहयच्चापामित्राँअपाचितोअचेतः॥ ५४ ॥

महि। इमे इति। अस्य। वृषनाम। शूषे इति। मांश्चत्वे।
वा। पृशने। वा। वधत्रे इति। अस्वापयत्। निऽगुतः।
स्नेहयत्। च। अप। अमित्रान्। अप। अचितः। अच। इतः॥५४॥

महि महती प्रभूते वृषनाम सुपांसुलुगितिसुपोलुक् वृषनामनी वर्षणनमने शराणां वर्षणं शत्रूणां नमनं इमे एते द्वेकर्मणी अस्यसोमस्य शूषे सुखकरेभवतः। येच कर्मणी मांश्चत्वे अश्वनामैतत्। मक्षू चरतीति अश्वैःक्रियमाणेयुद्धे तत्साध्यत्वात् युद्धमिहगृह्यते। वा अपिवा पृशने स्पर्शनसाध्ये बाहुयुद्धे वधत्रे शत्रूणांहिंसनशीले भवतः सोयं निगुतः नीचैः शब्दायमानान् शत्रून् अस्वापयत् ताभ्यामसूषुपत्। अवधीदित्यर्थः। किंच स्नेहयत् प्राद्रवयत् संग्रामाच्छत्रून्। अथप्रत्यक्षकृतः हेसोम सत्वं अमित्रान् शत्रून् अपाच अपागमय। तथा अचितः अग्निचयनमकुर्वतो नास्तिकांश्च इतोस्मत्सकाशात् अपाच अपगमय अचतिर्गतिकर्मा॥ ५४ ॥

अथ पंचपंचाशत्तमी–

संत्रीपवित्राविततान्येष्यन्वेकंधावसिपूयमानः।
असिभगोअसिदात्रस्यदातासिमघवामघवद्भ्यइन्दो॥५५॥२१॥

सम्। त्री। पवित्रा। विऽततानि। एषि। अनु। एकम्।
धावसि। पूयमानः। असि। भगः। असि। दात्रस्य।
दाता। असि। मघऽवा। मघवत्ऽभ्यः। इन्दो इति॥ ५५॥ २१॥

हेसोम विततानि विस्तृतानि त्री त्रीणि पवित्रा अग्निवायुसूर्यात्मकानि पवित्राणि समेषि सम्यक्प्राप्नोषि। किंच पूयमानस्त्वं एकमविवालकृतंपवित्रं अनुधावसि अनुगच्छसि। किंच त्वं भगोभजनीयोसि तथा दात्रस्यदेयस्यधनस्य दातासि । कथमस्यधनदत्वमितिचेत्तदुच्यते। हेइन्दो सोम मघवद्भ्योन्येभ्योपित्वं मघवासि अतिशयेन धनवान्भवसि ॥ ५५॥

॥ इतिसप्तमस्य चतुर्थे एकविंशोवर्गः॥ २१॥

अथ षट्पंचाशत्तमी—

एषविंश्ववित्पवतेमनीषीसोमोविश्वंस्यभुवंनस्यराजा।
द्रप्साँईरयन्विदथेष्विन्दुर्विवारमव्यंसमयातियाति ॥ ५६ ॥

एषः। विश्वऽवित्। पवते। मनीषी। सोमः। विश्वंस्य।
भुवंनस्य। राजा। द्रप्सान्। ईरयन्। विदथेषु। इन्दुः।
वि। वारंम्। अव्यंम्। समया। अति। याति ॥ ५६ ॥

विश्ववित् सर्वस्यवेत्ता अतएव मनीषी मेधावी विश्वस्य भुवनस्य सर्वस्य लोकस्य राजा स्वामी एषसोमः पवते क्षरति। एतदेव विवृणोति। विदथेषु विन्दन्ति जानंत्यत्रदेवानिति। यद्वा विन्दन्ति लभन्ते विदथायज्ञास्तेषु द्रप्सान् रसकणान् ईरयन् प्रेरयन्। इन्दुः सोमः अव्यं अविभवं वारं वालं पवित्रं समया उभयतः व्यतियाति व्यतीत्यगच्छति ॥५६॥

अथ सप्तपंचाशत्तमी—

इन्दुंरिहन्तिमहिषाअदंब्धाःपदेरेभन्तिकवयोनगृध्राः।
हिन्वन्तिधीरादशभिःक्षिपाभिःसमंञ्जतेरूपमपांरसेन ॥ ५७॥

इन्दुंम्। रिहन्ति। महिषाः। अदंब्धाः। पदे। रेभन्ति।
कवयः। न। गृध्राः। हिन्वन्ति। धीराः। दशऽभिः।
क्षिपाभिः। सम्। अञ्जते। रूपम्। अपाम्। रसेन ॥ ५७॥

महिषा महान्तः पूज्यावा अतएवादब्धाः कैश्चिदप्यहिंसिता देवा इन्दुं सोमं रिहन्ति लिहंत्यास्वादयन्ति । किंच देवाः सोममुशन्तः सन्तः पदे तस्यास्य सोमस्य धारास्थाने रेभन्ति शब्दायन्ते । तत्र दृष्टान्तः—कवयोनगृध्राः धनमभिकांक्षमाणाः कवयः स्तोतारोयथा स्तुवन्तः शब्दायन्ते तद्वत् धीराः कर्मणिकुशला ऋत्विजः दशभिः एतत्संख्याकाभिः क्षिपाभिरंगुलीभिः तमिमंसोमं हिन्वंति अभिषवार्थं प्रेरयन्ति । अपिच रूपं अंशुं अपां वसतीवर्याख्यानां रसेन समंजते सम्यक्सेवयन्ति ॥ ५७ ॥

अथाष्टापंचाशत्तमी—

त्वयां॒व॒यंपव॑मानेन॒सोम॒भरें॑कृ॒तंवि॒चिं॑नु॒या॒म॒शश्वं॑त् ।
तन्नो॑मि॒त्रोवरु॑णो॒माम॒हन्ता॒मदि॑ति॒ःसिन्धु॑ःपृथि॒वीउ॒तद्यौः ॥५८॥२२॥

त्वया॑ । व॒यम् । पव॑मानेन । सो॒म॒ । भरें॑ । कृ॒तम् । वि । चि॒नु॒या॒म॒ ।
शश्वं॑त् । तत् । न॒ः । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः ।
सिन्धु॑ः । पृ॒थि॒वी । उ॒त । द्यौः ॥ ५८ ॥ २२ ॥

हेसोम पवमानेन पवित्रेण पूयमानेन त्वया सहायेन भरे संग्रामनाम संग्रामे शश्वद्बहु कृतं कर्तव्यं वयं विचिनुयाम विशेषेणकुर्याम । यस्मात्त्वसहायेन कर्माणिकुर्मः तत्तस्मात् नोस्मान् मित्रोवरुणः अदितिः एतन्नामका सिंधुः एतदभिधानाच पृथिवी उतापिच द्यौः एतेमित्रादयोनोस्मान् मामहंतां पूजयन्तु धनादिदानेन ॥ ५८ ॥

॥ इति सप्तमस्य चतुर्थे द्वाविंशोवर्गः ॥ २२ ॥

अभिनइति द्वादशर्चं द्वितीयंसूक्तं वृषागिरोराज्ञःपुत्रअंबरीषः भरद्वाजपुत्रऋजिश्वाच उभौसहितावस्यऋषी इदमुत्तराणिचत्रीण्यानुष्टुभानि अत्रत्वेकादशीबृहती पवमानःसोमोदेवता । तथाचानुक्रम्यते—अभिनोद्वादशांबरीषऋजिश्वाचानुष्टुभंह बृहत्युपांत्येति । गतोविनियोगः ।

तत्र प्रथमा—

अ॒भिनो॑वाज॒सात॑मंर॒यिम॑र्षपुरु॒स्पृह॑म् ।
इन्दो॑स॒हस्र॑भर्णसंतुविद्यु॒म्नंवि॑भ्वा॒सह॑म् ॥ १ ॥

अभि । नः । वाजऽसातमम् । रयिम् । अर्ष । पुरुऽस्पृहम् ।
इन्दो इति । सहस्रऽभर्णसम् । तुविऽद्युम्नम् । विभ्वऽसहम् ॥ १ ॥

हे इन्दो दीप्त वाजसातमं अत्यन्तं बलप्रदं अन्नप्रदंवा रयिं धनं पुत्रंवानोस्माकमभ्यर्ष अभिगमय । कीदृशं पुरुस्पृहं बहुभिःस्पृहणीयं सहस्रभर्णसं बहुविधभरणं अनेकपोषणयुक्त-मित्यर्थः । तुविद्युम्नं द्युम्नंद्योततेर्यशोवान्नंवेतियास्कः[1] । बह्वन्नं बहुयशोयुक्तंवा विभ्वसहं वि-भ्वइतिमहन्नाम महतोभिभवितारं ॥ १ ॥

अथ द्वितीया—

परिष्यसुवानोअव्ययंरथेनवर्माव्यत ।
इन्दुरभिद्रुणाहितोहियानोधाराभिरक्षाः ॥ २ ॥

परि । स्यः । सुवानः । अव्ययम् । रथे । न । वर्म । अव्यत ।
इन्दुः । अभि । द्रुणा । हितः । हियानः । धाराभिः । अक्षारिति ॥२॥

सुवानः सूयमानः स्यः ससोमः अव्ययमविमयं पवित्रं परिपवते । तत्रदृष्टान्तः—रथे-न यथा रथेस्थितः पुरुषः वर्मकवचमव्यत परिव्ययति । व्ययतेर्लुङिवर्णलोपश्छान्दसः । अ-भिहितः अभितः प्रेरितः । यद्वा स्तोतृभिरभिष्टुतः सइन्दुः सोमः द्रुणा द्रुममयेन द्रोणकलशेन हियानः हि गतौवृद्धौच तेन पूर्यमाणःसन् धाराभिः अक्षाः क्षरति । क्षरतेर्लुङिरूपं ॥ २ ॥

अथ तृतीया—

परिष्यसुवानोअक्षाइन्दुरव्येमदच्युतः ।
धारायऊर्ध्वोअध्वरेभ्राजानैतिगव्ययुः ॥ ३ ॥

परि । स्यः । सुवानः । अक्षारिति । इन्दुः । अव्ये । मदऽच्युतः ।
धारा । यः । ऊर्ध्वः । अध्वरे । भ्राजा । न । एति । गव्यऽयुः ॥ ३ ॥

---

[1] नि० ५. ५.

सुवानः सूयमानः स्यः सइन्दुः सोमः मदच्युतः मदार्थं देवैः प्रेरितःसन् अव्ये अविभवे पवित्रे पर्यक्षाः परितःक्षरति अध्वरे । ऊर्ध्वः समुच्छ्रितः सर्वेषांमुख्योयः सोमः गव्ययुः गोकामः । यद्वाक्षीरादिकं कामयमानःसन् धारा धारया सह एति गच्छति । भ्राजा न भ्राजमानया दीप्त्या यथान्तरिक्षे गच्छति तद्वत् ॥ ३ ॥

अथ चतुर्थी–

सहित्वंदेवशश्वंतेवसुमर्तायदाशुषे ।
इन्दोसहस्रिणंरयिंशतात्मानंविवाससि ॥ ४ ॥

सः । हि । त्वम् । देव । शश्वते । वसु । मर्ताय । दाशुषे । इन्दो इति । सहस्रिणम् । रयिम् । शतऽआत्मानम् । विवाससि ॥ ४ ॥

हे देव सोम सत्वं शश्वते पुत्रादिमत्वेन बहवे मर्ताय मनुष्याय दाशुषे हविर्दत्तवते यजमानाय वसु धनं विवाससि । हेइन्दो सोम त्वं सहस्रिणं सहस्रसंख्याकं रयिं धनं शतात्मानं अपरिमितपुत्रपौत्राद्युपेतं मह्यंच विवाससि प्रेरयसि । एकवाक्यतापक्षेहि तिङन्तस्यहियोगादनिघातः स्यात् ॥ ४ ॥

अथ पंचमी–

वयंतेअस्यवृत्रहन्वसोवस्वःपुरुस्पृहः ।
निनेदिष्ठतमाइषःस्याममुम्नस्याध्रिगो ॥ ५ ॥

वयम् । ते । अस्य । वृत्रऽहन् । वसो इति । वस्वः । पुरुऽस्पृहः ।
नि । नेदिष्ठऽतमाः । इषः । स्याम । सुम्नस्य । अध्रिगो इत्यध्रिऽगो ॥ ५ ॥

हे वृत्रहन् शत्रूणांहन्तः सोम अस्यैतादृशस्य ते तव स्वभूतावयं स्मः । ततः हेवसो वासयितः पुरुस्पृहः बहुभिः स्पृहणीयस्य वस्वोवसुनोधनस्य त्वयादीयमानस्य वयं नितरां नेदिष्ठतमाः अत्यंतमन्तिकतमाः स्याम । तथा इषोन्नस्य । किंच हे अध्रिगो अवृतगमनसोम सुम्नस्य सुखस्य वयमन्तिकतमाः स्याम भवेम ॥ ५ ॥

अभि । नः । वाजऽसातमम् । रयिम् । अर्ष । पुरुऽस्पृहम् ।
इन्दो इति । सहस्रऽभर्णसम् । तुविऽद्युम्नम् । विभ्वऽसहम् ॥ १ ॥

हे इन्दो दीप्त वाजसातमं अत्यन्तं बलप्रदं अन्नप्रदंवा रयिं धनं पुत्रंवानोस्माकमभ्यर्ष अभिगमय । कीदृशं पुरुस्पृहं बहुभिःस्पृहणीयं सहस्रभर्णसं बहुविधभरणं अनेकपोषणयुक्तमित्यर्थः । तुविद्युम्नं द्युम्नंद्योततेर्यशोवान्नंवेतियास्कः । बह्वन्नं बहुयशोयुक्तंवा विभ्वसहं विभ्वइतिमहन्नाम महतोभिभवितारं ॥ १ ॥

अथ द्वितीया—

परिष्यसुवानोअव्ययंरथेनवर्माव्यत ।
इन्दुरभिद्रुणाहितोहियानोधाराभिरक्षाः ॥ २ ॥

परि । स्यः । सुवानः । अव्ययम् । रथे । न । वर्म । अव्यत ।
इन्दुः । अभि । द्रुणा । हितः । हियानः । धाराभिः । अक्षारिति ॥२॥

सुवानः सूयमानः स्यः ससोमः अव्ययमविमयं पवित्रं परिपवते । तत्रदृष्टान्तः—रथेन यथा रथेस्थितः पुरुषः वर्मकवचमव्यत परिव्ययति । व्ययतेर्लुङिवर्णलोपश्छान्दसः । अभिहितः अभितः प्रेरितः । यद्वा स्तोतृभिरभिष्टुतः सइन्दुः सोमः द्रुणा द्रुममयेन द्रोणकलशेन हियानः हि गतौवृद्धौच तेन पूयमानःसन् धाराभिः अक्षाः क्षरति । क्षरतेर्लुङिरूपं ॥ २ ॥

अथ तृतीया—

परिष्यसुवानोअक्षाइन्दुरव्येमदच्युतः ।
धारायऊर्ध्वोअध्वरेभ्राजानैतिगव्ययुः ॥ ३ ॥

परि । स्यः । सुवानः । अक्षारिति । इन्दुः । अव्ये । मदऽच्युतः ।
धारा । यः । ऊर्ध्वः । अध्वरे । भ्राजा । न । एति । गव्यऽयुः ॥ ३ ॥

१ नि० ५. ५.

सुवानः सूयमानः स्यः सइन्दुः सोमः मदच्युतः मदार्थं देवैः प्रेरितःसन् अव्ये अविभवे पवित्रे पर्यक्षाः परितःक्षरति अध्वरे। ऊर्ध्वः समुच्छ्रितः सर्वेषांमुख्योयः सोमः गव्ययुः गोकामः। यद्वाक्षीरादिकं कामयमानःसन् धारा धारया सह एति गच्छति। भ्राजा न भ्राजमानया दीप्त्या यथान्तरिक्षे गच्छति तद्वत् ॥ ३ ॥

अथ चतुर्थी—

सहित्वंदेवशश्वतेवसुमर्तायदाशुषे।
इन्दोसहस्रिणंरयिंशतात्मानंविवाससि ॥ ४ ॥

सः। हि। त्वम्। देव। शश्वते। वसु। मर्ताय। दाशुषे। इन्दो इति। सहस्रिणम्। रयिम्। शतऽआत्मानम्। विवाससि ॥ ४ ॥

हे देव सोम सत्वं शश्वते पुत्रादिमत्वेन बहवे मर्ताय मनुष्याय दाशुषे हविर्दत्तवते यजमानाय वसु धनं विवाससि। हेइन्दो सोम त्वं सहस्रिणं सहस्रसंख्याकं रयिं धनं शतात्मानं अपरिमितपुत्रपौत्राद्युपेतं मह्यंच विवाससि प्रेरयसि। एकवाक्यतापक्षेहि तिङन्तस्यहियोगादनिघातः स्यात् ॥ ४ ॥

अथ पंचमी—

वयंतेअस्यवृत्रहन्वसोवस्वःपुरुस्पृहः।
निनेदिष्ठतमाइषःस्यामसुम्नस्याध्रिगो ॥ ५ ॥

वयम्। ते। अस्य। वृत्रऽहन्। वसो इति। वस्वः। पुरुऽस्पृहः। नि। नेदिष्ठऽतमाः। इषः। स्याम। सुम्नस्य। अध्रिगो इत्यध्रिऽगो ॥ ५ ॥

हे वृत्रहन् शत्रूणांहन्तः सोम अस्यैतादृशस्य ते तव स्वभूतावयं स्मः। ततः हेवसो वासयितः पुरुस्पृहः बहुभिः स्पृहणीयस्य वस्वोवसुनोधनस्य त्वयादीयमानस्य वयं नितरां नेदिष्ठतमाः अत्यंतमन्तिकतमाः स्याम। तथा इषोन्नस्य। किंच हे अध्रिगो अवृतगमनसोम सुम्नस्य सुखस्य वयमन्तिकतमाः स्याम भवेम ॥ ५ ॥

अथ षष्ठी—

द्विर्यंपञ्चस्वयशसंस्वसारोअद्रिसंहतम् ।
प्रियमिन्द्रस्यकाम्यंप्रस्नापयन्त्यूर्मिणम् ॥ ६ ॥ २३ ॥

द्विः । यम् । पञ्च । स्वऽयशसम् । स्वसारः । अद्रिऽसंहतम् । प्रियम् । इन्द्रस्य । काम्यम् । प्रऽस्नापयन्ति । ऊर्मिणम् ॥ ६ ॥ २३ ॥

द्विः पञ्च दशसंख्याकाः स्वसारः कर्मकरणार्थमितस्ततोगच्छंत्योंगुलयः स्वयशसं स्वभूतयशस्कं अद्रिसंहतं ग्रावभिरभिषुतं इन्द्रस्य प्रियं काम्यं सर्वैःकाम्यमानं ऊर्मिणं धाराभिस्तद्वन्तं यं सोमं प्रस्नापयन्ति वसतीवरीभिः प्रकर्षेण सेवयन्ति यजमानाः तं पुनन्तीत्युत्तरत्रसंबन्धः ॥ ६ ॥

॥ इति सप्तमस्य चतुर्थे त्रयोविंशोवर्गः ॥ २३ ॥

अथ सप्तमी—

परित्यंहर्यतंहरिंबभ्रुंपुनन्तिवारेण ।
योदेवान्विश्वाँइत्परिमदेनसहगच्छति ॥ ७ ॥

परि । त्यम् । हर्यतम् । हरिम् । बभ्रुम् । पुनन्ति । वारेण । यः । देवान् । विश्वान् । इत् । परि । मदेन । सह । गच्छति ॥ ७ ॥

हर्यतं सर्वैःस्पृहणीयं हरिं हरितवर्णं बभ्रुं बभ्रुवर्णंच त्यं तं सोमं वारेण वालेन पवित्रेण परिपुनन्ति परिशोधयन्ति । यः सोमः विश्वान् सर्वानिन्द्रादीन् देवानित् देवानेव मदेन मादकेन रसेन सह परिगच्छति ॥ ७ ॥

अथाष्टमी—

अस्यवोह्यवसापान्तोदक्षसाधनम् ।
यःसूरिषुश्रवोबृहद्दधेस्व१र्णहर्यतः ॥ ८ ॥

अस्य । वः । हि । अवसा । पान्तः । दक्षऽसाधनम् । यः । सूरिषु । श्रवः । बृहत् । दधे । स्वः । न । हर्यतः ॥ ८ ॥

वः इति छान्दसोवसादेशः हिरवधारणे वोयूयं अस्यसोमस्य अवसा रक्षणेन दक्षसाधनं बलस्यसाधनं रसं पान्तः पिबन्तोभवथ। स्वर्ण आदित्यइव हर्यतः सर्वैःकाम्यमानोयोयंसोमः सूरिषु स्तोत्राणि प्रेरयत्सु स्तोतृषु बृहन्महत् प्रभूतं श्रवोन्नं दधे विदधे स्थापयन्तीतियावत् ॥८॥

अथ नवमी—

सवांयज्ञेषुमानवीइन्दुर्जनिष्टरोदसी।
देवोदेवीगिरिष्ठाअस्रेधन्तंतुविष्वणिं ॥ ९ ॥

सः। वाम्। यज्ञेषु। मानवी इति। इन्दुः। जनिष्ट।
रोदसी इति। देवः। देवी इति। गिरिऽस्थाः। अस्रेधन्।
तम्। तुविऽस्वनिं ॥ ९ ॥

हे मानवी मानव्यौ मनोःस्वभूते हेदेवी द्योतमाने हे रोदसी द्यावापृथिव्यौ वां युवयोः यज्ञेषुसइन्दुः सोमः जनिष्ट अजनि अन्तरिक्षे देवः स्वतेजसा सर्वंप्रकाशयन् पृथिव्यां गिरिष्ठाः ग्रावसुतिष्ठन् तंजातं सोमं तुविस्वनि बहुस्वने उपरे यज्ञेवा अस्रेधन् ऋत्विजोग्रावभिः अघ्नन् अभ्यषुण्वन्नितियावत् ॥ ९ ॥

अथ दशमी—

इन्द्रायसोमपातवेवृत्रघ्नेपरिषिच्यसे।
नरेचदक्षिणावतेदेवायसदनासदे ॥ १० ॥

इन्द्राय। सोम। पातवे। वृत्रऽघ्ने। परि। सिच्यसे। नरे।
च। दक्षिणाऽवते। देवाय। सदनऽसदे ॥ १० ॥

हे सोम वृत्रघ्ने वृत्रस्यहंत्रे इन्द्राय षष्ठयर्थेचतुर्थी इन्द्रस्य पातवे पानार्थं परिषिच्यसे परितः पात्रेषु सिच्यसे। वसतीवरीभिर्वा। किंच दक्षिणावते ऋत्विग्भ्योदक्षिणादानेन तद्वते देवाय देवार्थं हवींषिदातुं सदनसदे यज्ञगृहे सीदते नरे मनुष्याय यजमानाय तस्मै फलदानार्थंपरिषिच्यसे ॥ १० ॥

अथैकादशी—

तेप्रत्नासोव्युंष्टिषुसोमाःपवित्रेअक्षरन् ।
अपप्रोथंन्तःसनुतर्हुंरश्चितंःप्रातस्ताँअप्रंचेतसः ॥ ११ ॥

ते । प्रत्नासंः । विऽउंष्टिषु । सोमाः । पवित्रे । अक्षरन् ।
अपऽप्रोथंन्तः । सनुतः । हुरःऽचितंः । प्रातरितिं ।
तान् । अप्रंऽचेतसः ॥ ११ ॥

व्युष्टिषु उषसां व्युच्छनेषु प्रकाशनेषु प्रत्नासः प्रत्नाः ते सोमाः पवित्रे अक्षरन् क्षरन्ति । येसोमाःसनुतःअन्तर्हितान् अप्रचेतसः प्रज्ञारहितान् हुरश्चितः स्तेननामैतत् कौटिल्येन चिन्वन्तीति तान् मायाविनः स्तेनान् प्रातः प्रातःकालएव अपप्रोथन्तः अपप्रोथनं चापप्रेरणं अपप्रेरयन्तः शब्देननिराकुर्वन्तोभवन्ति तेक्षरन्तीतिसमन्वयः ॥ ११ ॥

अथ द्वादशी—

तंसंखायःपुरोरुचंयूयंवयंचंसूरयंः ।
अश्यामवाजंगन्ध्यंसनेमवाजंपस्त्यम् ॥ १२ ॥ २४ ॥

तम् । सखायः । पुरःऽरुचंम् । यूयम् । वयम् । च । सूरयंः । अश्यामं ।
वाजंऽगन्ध्यम् । सनेमं । वाजंऽपस्त्यम् ॥ १२ ॥ २४ ॥

हे सखायः स्तोतारः सूरयः प्राज्ञा यूयं वयंच यजमानाः पुरोरुचं पुरतोरोचमानं वाजगंध्यं बलकरसाधुगंधोपेतं तत्रभवं सोमं अश्याम अश्नीम पिबेम । किंच वाजपस्त्यं अन्नयुक्तगृहसहितं । यद्वा बलकरं सोमं सनेम संभजेमहि सोमेन बलान्नगृहादीनि भवन्तीत्यर्थः॥१२॥

॥ इति सप्तमस्य चतुर्थे चतुर्विंशोवर्गः ॥ २४ ॥

आहर्यंतायेत्यष्टर्चं तृतीयंसूक्तं कश्यपगोत्रौरेभसूनू एतत्संज्ञौ द्वावृषी आद्याबृहती सप्तानुष्टुभः पवमानःसोमोदेवता । तथाचानुक्रान्तं—आहर्यंतायाष्टौ रेभसूनूकाश्यपौबृहत्याद्येति । गतो विनियोगः ।

तत्र प्रथमा—

आहर्यतायधृष्णवेधनुस्तन्वन्तिपौंस्यम् ।
शुक्रांवयन्त्यसुरायनिर्णिजंविपामग्रेमहीयुवः ॥ १ ॥

आ । हर्यताय । धृष्णवे । धनुः । तन्वन्ति । पौंस्यम् । शुक्राम् ।
वयन्ति । असुराय । निःऽनिजम् । विपाम् । अग्रे । महीयुवः ॥ १॥

हर्यताय सर्वैःस्पृहणीयाय धृष्णवे शत्रूणांधर्षणशीलाय सोमाय पौंस्यं पुंस्त्वस्याभिव्यंजकं धनुरातन्वंति धनुषि ज्यांकुर्वन्तीति सोमस्य धाराविसर्गार्थं वितायमानं पवित्रमभिधीयते। तदेव विवृणोति महीयुवः पूजाकामा ऋत्विजः विपां मेधाविनां देवानामग्रे पुरस्तात् शुक्रां शुक्लवर्णां निर्णिजं ययासोमोनिर्णिज्यते तां असुराय बलवते वयन्ति वितन्वंति। दशापवित्रं विस्तारयन्तीत्यर्थः । वयतिर्गतिकर्मा ॥ १ ॥

अथ द्वितीया—

अधक्षपापरिष्कृतोवाजाँअभिप्रगाहते ।
यदीविवस्वतोधियोहरिंहिन्वन्तियातवे ॥ २ ॥

अध । क्षपा । परिऽकृतः । वाजान् । अभि । प्र । गाहते ।
यदि । विवस्वतः । धियः । हरिम् । हिन्वन्ति । यातवे ॥ २ ॥

क्षपा सुपांसुलुगितिपंचम्याआकारः क्षपाया रात्रेः अध अनन्तरं प्रातःकाले परिष्कृतः भूषणार्थे संपर्युपेभ्यइति करोतेःसुडागमः। अद्भिरलंकृतः यद्वा क्षपयित्र्यां सेनायां अलंकृतः सोमः वाजान् अन्नानि बलानिवा अभिलक्ष्य प्रगाहते प्रगच्छति । विवस्वतः परिचरणवतोयजमानस्य धियः कर्मसाधनभूता अंगुलयः हरिं हरितवर्णं एतमंशुं यातवे पात्राण्यभिगमनाय यदि हिन्वन्ति प्रेरयन्ति तर्हि सवनानि गच्छतीति ॥ २ ॥

अथ तृतीया—

तमस्यमर्जयामसिमदोयइन्द्रपातमः ।
यंगावआसभिर्दधुःपुरानूनंचसूरयः ॥ ३ ॥

तम् । अस्य । मर्जयामसि । मदः । यः । इन्द्रऽपातमः ।
यम् । गावः । आसऽभिः । दधुः । पुरा । नूनम् । च । सूरयः ॥ ३ ॥

अस्य सोमस्य तं रसं मर्जयामसि मर्जयामः अलंकुर्मोवा योमदोमदकरोरसः इन्द्रपातमः इन्द्रेणात्यन्तं पातव्योभवति । किंच गावोगन्तारः सूरयः स्तोतारः पुराच नूनमिदानींच यंसोमरसं आसभिः आस्यैः दधुर्धारयन्ति पिबन्तीतियावत् । यद्वा गावोधेनवः यंसोमं तृणादिष्ववस्थितमासभिरास्यैः दधुर्धारयन्ति तृणरूपेण भक्षयन्ति ॥ ३ ॥

अथ चतुर्थी—

तंगाथयापुराण्यापुनानमभ्यनूषत ।
उतोकृपन्तधीतयोदेवानांनामबिभ्रतीः ॥ ४ ॥

तम् । गाथया । पुराण्या । पुनानम् । अभि । अनूषत ।
उतो इति । कृपन्त । धीतयः । देवानाम् । नाम । बिभ्रतीः ॥ ४ ॥

पुनानं पूयमानं तं सोमं पुराण्या पुराकृतया गाथया स्तुत्या अभ्यनूषत स्तोतारोभिष्टुवन्ति । नुस्तवने लुङिरूपं । उतो अपिच नामकर्माथं नमनं बिभ्रतीर्बिभ्राणाः धीतयोंगुलयः देवानां सोमरूपहविःप्रदानाय कृपन्त कल्पयन्ति समर्थाभवन्ति । कृपूसामर्थ्ये ॥ ४ ॥

अथ पंचमी—

तमुक्षमाणमव्ययेवारेपुनन्तिधर्णसिम् ।
दूतंनपूर्वचित्तयआशासतेमनीषिणः ॥ ५ ॥ २५ ॥

तम् । उक्षमाणम् । अव्यये । वारे । पुनन्ति । धर्णसिम् । दूतम् ।
न । पूर्वऽचित्तये । आ । शासते । मनीषिणः ॥ ५ ॥ २५ ॥

उक्षमाणं अद्भिःसिच्यमानं धर्णसिं सर्वस्यधारकं सोमं अव्यये अविमये वारे वाले पवित्रे पुनन्ति शोधयन्ति । ततः मनीषिणोमेधाविनोयजमानाः तमिमंसोमं दूतंन दूतमिव पूर्वचित्तये देवानां पूर्वमेव प्रज्ञापनाय आशासते प्रार्थयते ॥ ५ ॥

॥ इति सप्तमस्य चतुर्थे पंचविंशोवर्गः ॥ २५ ॥

अथ षष्ठी—

सपुनानोमदिन्तमःसोमश्चमूषुसीदति ।
पशौनरेतआदधत्पतिर्वचस्यतेधियः ॥ ६ ॥

सः । पुनानः । मदिन्ऽतमः । सोमः । चमूषु । सीदति । पशौ ।
न । रेतः । आऽदधत् । पतिः । वचस्यते । धियः ॥ ६ ॥

मदिन्तमः अत्यन्तं मादयितासस्सोमः पुनानः पूयमानःसन् चमूषु चमसेषु सीदति । ततः पशौन यथापशौ कश्चिद्वृषभोरेतआदधत् आदधाति तद्वच्चमसादिषु रेतः स्वीयंरसं आदधत् आदधानः धियः कर्मणः पतिः पालयिता यं सोमोवचस्यते अभिषूयते ॥ ६ ॥

अथ सप्तमी—

समृज्यतेसुकर्मभिर्देवोदेवेभ्यःसुतः ।
विदेयदासुसंददिर्महीरपोविगाहते ॥ ७ ॥

सः । मृज्यते । सुकर्मऽभिः । देवः । देवेभ्यः । सुतः । विदे ।
यत् । आसु । सम्ऽददिः । महीः । अपः । वि । गाहते ॥ ७ ॥

देवेभ्योदेवार्थं सुतोभिषुतः देवोद्योतमानः स्तोतव्योवा ससोमः सुकर्मभिः ऋत्विग्भिः मृज्यते परिपूयते यद्यदायंसोमः आसु प्रजासु संददिः सम्यग्धनदानशीलइति विदे ज्ञायते तदानीं महीर्महतीरपोवसतीवरीः विगाहते विशेषेणाभिगच्छति यदासोममभिषुण्वन्ति तदा तेभ्योधनं प्रयच्छतीत्यर्थः ॥ ७ ॥

अथाष्टमी—

सुतइन्दोपवित्रआनृभिर्यतोविनीयसे ।
इन्द्रायमत्सरिन्तमश्चमूष्वानिषीदसि ॥ ८ ॥ २६ ॥

सुतः । इन्दो इति । पवित्रे । आ । नृऽभिः । यतः । वि । नीयसे ।
इन्द्राय । मत्सरिन्ऽतमः । चमूषु । आ । नि । सीदसि ॥ ८ ॥ २६ ॥

हे इन्दो सुतोभिषुतः यतः आयतः सर्वतोविस्तृतस्त्वं नृभिः कर्मनेतृभिर्ऋत्विग्भिः पवित्रे विनीयसे विशेषेण नीयमानोभवसि । ततः मत्सरिन्तमः अतिशयेन मादयिता त्वं इन्द्रायेन्द्रार्थं चमूषु चमसेष्वानिषीदसि ॥ ८ ॥

॥ इति सप्तमस्य चतुर्थे षड्विंशोवर्गः ॥ २६ ॥

अभीनवन्तइति नवर्चंचतुर्थंसूक्तं पूर्ववदृषिदेवते सर्वाअनुष्टुभः । तथाचानुक्रम्यते—अभीनवन्तेनवेति । गतोविनियोगः ।

तत्र प्रथमा—

अ॒भीन॑वन्तेअ॒द्रुहः॑प्रि॒यमिन्द्र॑स्य॒काम्य॑म् ।
व॒त्संनपूर्व॒आयु॑निजा॒तंरि॑हन्तिमा॒तरः॑ ॥ १ ॥

अ॒भि । न॒व॒न्ते॒ । अ॒द्रुहः॑ । प्रि॒यम् । इन्द्र॑स्य । काम्य॑म् । व॒त्सम् ।
न । पूर्वे॑ । आयु॑नि । जा॒तम् । रि॒ह॒न्ति॒ । मा॒तरः॑ ॥ १ ॥

यथा मातरोगावः पूर्वे प्रथमे आयुनि वयसि जातंवत्सं रिहंतिलिहन्ति तथा अद्रुहः अद्रोहाः वसतीवर्याख्याः आपः इन्द्रस्यप्रियं काम्यं सर्वैःकाम्यमानं सोममभिनवन्ते अभिगच्छन्ति ॥ १ ॥

अथ द्वितीया—

पु॒ना॒नइ॑न्द॒वाभ॑र॒सोम॑द्वि॒बर्ह॑सं॒र॒यिम् ।
त्वंवसू॑निपुष्यसि॒विश्वा॑निदा॒शुषो॑गृ॒हे ॥ २ ॥

पु॒ना॒नः । इ॒न्दो॒ इति॑ । आ । भ॒र॒ । सोम॑ । द्वि॒ऽबर्ह॑सम् । र॒यिम् ।
त्वम् । वसू॑नि । पु॒ष्य॒सि॒ । विश्वा॑नि । दा॒शुषः॑ । गृ॒हे ॥ २ ॥

हे इन्दो दीप्यमान हे सोम पुनानः पूयमानस्त्वं द्विबर्हसं द्वयोःस्थानयोः परिबृंहणशीलं रयिं धनं अस्मभ्यमाभराहर देहि त्वं हि दाशुषोहविर्दत्तवतोयजमानस्य गृहेस्थित्वा विश्वानि सर्वाणि वसूनि धनानि पुष्यसि पोषयसि ॥ २ ॥

अथ तृतीया—

त्वं धियं मनोयुजं सृजा वृष्टिं न तन्यतुः ।
त्वं वसूनि पार्थिवा दिव्या च सोम पुष्यसि ॥ ३ ॥

त्वम् । धियम् । मनःऽयुजम् । सृज । वृष्टिम् । न । तन्यतुः ।
त्वम् । वसूनि । पार्थिवा । दिव्या । च । सोम । पुष्यसि ॥ ३ ॥

हे सोम त्वं मनोयुजं मनसा युज्यमानां मनोवेगां धियं ध्यातव्यां धारां सृज पात्रेषु विसृज । तत्रदृष्टान्तः—वृष्टिंन तन्यतुः तनुविस्तारे ऋतन्यञ्जीत्यादिनायतुच्प्रत्ययः तनोति विस्तारयतीति तन्यतुर्मेघः यथा मेघोवृष्टिं सृजति तद्वत् । ततोहेसोम त्वं पार्थिवा पृथिव्यांभवानि वसूनि धनानि तथा दिव्यानि दिविभवानि धनानिच पुष्यसि अस्मभ्यं पोषयसि प्रयच्छसीत्यर्थः ॥३॥

अथ चतुर्थी—

परि ते जिग्युषो यथा धारा सुतस्य धावति ।
रंहमाणा व्य१व्ययं वारं वाजीव सानसिः ॥ ४ ॥

परि । ते । जिग्युषः । यथा । धारा । सुतस्य । धावति । रंहमाणा ।
वि । अव्ययम् । वारम् । वाजीऽइव । सानसिः ॥ ४ ॥

सुतस्य ते त्वदीया सानसिः संभजनशीला यद्वा स्तोतृभिः संभजनीया रंहमाणा वेगंकुर्वाणा धारा अव्ययं अविमयं वारं वालं पवित्रं विपरिधावति विशेषेणपरितोगच्छति तत्रदृष्टान्तः—जिग्युषः शत्रूणांजेतुः वीरस्य वाजीव अश्वोयथा युद्धं परितोधावति तद्वत् । जयतेः क्वसौ सनलिटोर्जेरिति कुत्वं यथेतिपूरकः ॥ ४ ॥

अथ पंचमी—

क्रत्वे दक्षाय नः कवे पवस्व सोम धारया ।
इन्द्राय पातवे सुतो मित्राय वरुणाय च ॥ ५ ॥ २७ ॥

क्रत्वे । दक्षाय । नः । कवे । पवस्व । सोम । धारया । इन्द्राय ।
पातवे । सुतः । मित्राय । वरुणाय । च ॥ ५ ॥ २७ ॥

हे कवे क्रान्तदर्शन हे सोम नोस्मभ्यं क्रत्वे प्रज्ञानाय दक्षाय बलाय च त्वं धारया पवस्व क्षर। कीदृशः इन्द्राय पातवे पानार्थं तथा मित्राय वरुणायच सुतोभिषुतः खलु ॥ ५ ॥

॥ इति सप्तमस्य चतुर्थे सप्तविंशोवर्गः ॥ २७ ॥

अथ षष्ठी—

पवस्ववाजसातमःपवित्रेधारयासुतः ।
इन्द्रायसोमविष्णवेदेवेभ्योमधुमत्तमः ॥ ६ ॥

पवस्व । वाजऽसातमः । पवित्रे । धारया । सुतः । इन्द्राय ।
सोम । विष्णवे । देवेभ्यः । मधुमत्ऽतमः ॥ ६ ॥

हे सोम वाजसातमः अतिशयेनान्नस्यदाता सुतोभिषुतस्त्वं पवित्रे धारयासह पवस्व क्षर । ततः हे सोम त्वं इन्द्राय विष्णवेच अन्येभ्योमित्रादिभ्योदेवेभ्यश्च मधुमत्तमः अतिशयेन माधुर्योपेतोभव ॥ ६ ॥

अथ सप्तमी—

त्वांरिहन्तिमातरोहरिंपवित्रेअद्रुहः ।
वत्संजातंनधेनवःपवमानविधर्मणि ॥ ७ ॥

त्वाम् । रिहन्ति । मातरः । हरिम् । पवित्रे । अद्रुहः । वत्सम् ।
जातम् । न । धेनवः । पवमान । विऽधर्मणि ॥ ७ ॥

हे पवमानसोम विधर्मणि विविधं हविषांधारके यज्ञे अद्रुहः द्रोहवर्जितः मातरोमातृभूता वसतीवर्यः हरिं हरितवर्णं त्वां पवित्रे स्थितं रिहन्ति लिहन्ति आस्वादयन्ति । कथमिव यथा धेनवोजातंवत्सं लिहन्ति तथा ॥ ७ ॥

अथाष्टमी—

पवमानमहिश्रवश्चित्रेभिर्यासिरश्मिभिः ।
शर्धन्तमांसिजिघ्नसेविश्वानिदाशुषोगृहे ॥ ८ ॥

पर्वमान । महिं । श्रवंः । चित्रेभिंः । यासि । रश्मिऽभिंः । शर्धन् ।
तमांसि । जिघ्नसे । विश्वांनि । दाशुषंः । गृहे ॥ ८ ॥

हे पवमान महि महत् अवः श्रवणीयमन्तरिक्षं चित्रेभिश्चित्रैर्नानाविधैश्चायनीयैर्वा रश्मिभिः परियासि परिगच्छसि । तथा शर्धन् वेगंकुर्वंस्त्वं दाशुषो हविर्दत्तवतोयजमानस्यगृहे स्थित्वा विश्वानि सर्वाणि तमांसि तमोरूपाणि रक्षांसि जिघ्नसे हंसि एवं द्यावापृथिव्योः वर्तसे इत्यर्थः ॥ ८ ॥

अथ नवमी—

त्वंद्यांचंमहिव्रतपृथिवींचातिजभ्रिषे ।
प्रतिंद्रापिमंमुञ्चथाःपर्वमानमहित्वना ॥ ९ ॥ २८ ॥

त्वम् । द्याम् । च । महिऽव्रत । पृथिवीम् । च । अति । जभ्रिषे ।
प्रति । द्रापिम् । अमुञ्चथाः । पर्वमान । महिऽत्वना ॥ ९ ॥ २८ ॥

हे महिव्रत महाकर्मन् बहुविधकर्मन् सोम त्वं द्यां द्युलोकंचपृथिवींच अतिजभ्रिषे अत्यन्तंबिभर्षि । डुभृञ्धारणपोषणयोः । तस्यछन्दसिलिटि सर्वेविधीनांछन्दसिविकल्पितत्वादत्र इडागमः । अन्तरिक्षे सोमात्मनेति पृथिव्यां लतारूपेणेति एवंलोकद्वयवर्तित्वं । हे पवमान क्षरन् सोम त्वं महित्वना महत्त्वेनयुक्तःसन् द्रापिं कवचं प्रत्यमुंचथाः प्रतिमुंचसि संवृणोषि ॥ ९ ॥

॥ इति सप्तमस्य चतुर्थे अष्टाविंशोवर्गः ॥ २८ ॥

वेदार्थस्यप्रकाशेन तमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके चतुर्थोध्यायः ॥ ४ ॥

---

## ॥ श्रीगणेशायनमः ॥



यस्यनिःश्वसितंवेदा योवेदेभ्योखिलंजगत् । निर्ममे तमहंवन्दे विद्यातीर्थंमहेश्वरं ॥ १ ॥

विज्ञातवेदगांभीर्यस्तुर्यं व्याख्यायसप्तमे । सायणार्यस्ततोध्यायं पंचमंव्याचिकीर्षति ॥२॥

तत्र पुरोजितीवइति षोडशर्चं अनुवाकापेक्षया पंचमंसूक्तं आद्यस्यतृचस्य श्यावाश्वपुत्रा-अंधीगुर्नामर्षिः द्वितीयस्य नहुषस्यराज्ञःपुत्रोययातिर्नाम तृतीयस्य मनोःपुत्रोनहुषोनामराजर्षिः चतुर्थस्य संवरणाख्यस्यराज्ञःपुत्रोमनुः एवं द्वादशगताः शिष्टस्यचतुर्ऋचस्य वाचःपुत्रोवैश्वामित्रोवा प्रजापतिर्ऋषिः द्वितीयातृतीयेगायत्र्यौ शिष्टाश्चतुर्दशानुष्टुभः । तथाचानुक्रम्यते—पुरोजिती-षोळशांधीगुः श्यावाश्विर्ययातिर्नाहुषो नहुषोनाममानवो मनुःसांवरणइतितृचाः शेषेप्रजापतिरु-पाद्येगायत्र्याविति गतःसूक्तविनियोगः ।

तत्र प्रथमा—

ॐम् पुरोजितीवोअन्धसःसुतायमादयित्नवे ।<br>अपश्वानंश्नथिष्टनसखायोदीर्घजिह्व्यम् ॥ १ ॥

पुरःऽजिती । वः । अन्धसः । सुताय । मादयित्नवे । अप ।<br>श्वानम् । श्नथिष्टन । सखायः । दीर्घऽजिह्व्यम् ॥ १ ॥

हे सखायः सखिभूताः समानख्यानावा हे स्तोतारः वो यूयं पुरोजिती षष्ठ्याःपूर्वसवर्ण-दीर्घः पुरःस्थितस्य जयस्य अंधसो अदनीयस्य सोमस्य स्वभूताय सुतायाभिषुताय मादयित्न-वे अत्यन्तं मदकराय रसाय दिर्घजिह्वं दीर्घाजिह्वा यस्यसः दीर्घजिह्वीचच्छंदसीतिङीषंतत्वेन निपातितः तादृशं श्वानंच अपश्नथिष्टन अपश्नथयत अपबाधध्वं यथा श्वा राक्षसावा सुतं सोमं नलिहन्ति तथाकुरुतेत्यर्थः ॥ १ ॥

पवित्रेष्ट्यां द्वितीयस्याज्यभागस्य योधारयेत्येषानुवाक्या सूत्रितंच—पावकवन्तावाज्यभा-गावग्नीरक्षांसिसेधतियोधारयापावकयेति ।

सैषा सूक्ते द्वितीया—

योधारयापावकयापरिप्रस्यन्दतेसुतः । इन्दुरश्वोनकृत्व्यः ॥२ ॥

यः । धारया । पावकया । परिऽप्रस्यन्दते । सुतः ।
इन्दुः । अश्वः । न । कृत्व्यः ॥ २ ॥

सुतोभिषुतः कृत्व्यः कृत्वीति कर्मनाम कर्मणि साधुर्यइन्दुः सोमः पावकया पापानां शोधकया धारया परिप्रस्यन्दते परितः प्रक्षरति । कथमिव अश्वोन अश्वोयथा वेगेन प्रगच्छंति तद्वत् ॥ २ ॥

अथ तृतीया—

तंदुरोषमभीनरःसोमंविश्वाच्याधिया । यज्ञंहिन्वन्त्यद्रिभिः ॥ ३ ॥

तम् । दुरोषम् । अभि । नरः । सोमम् । विश्वाच्या ।
धिया । यज्ञम् । हिन्वन्ति । अद्रिऽभिः ॥ ३ ॥

नरः कर्मनेतार ऋत्विजः दुरोषं रोषतेर्हिंसार्थस्यरेफलोपे दीर्घाभावे ओषतेर्दाहार्थस्य वा खलु रूपमितिसंदेहादनवग्रहः ।तं दुर्दहं दुर्वधंवा यज्ञं यष्टव्यं तंवा सोमं विश्वाच्या सर्वान् कामानंचित्र्या धिया बुध्या अद्रिभिर्ग्रावभिरभिहिन्वन्ति अभिप्रेरयन्ति अभिषुण्वन्तीति यावत् ॥३॥

पृष्ठ्यस्य षष्ठेहनि ब्राह्मणाच्छंसिशस्त्रे सुतासइति तिस्रः । सूत्रितंच—दधिक्राव्णोअकारिषमित्यनुष्टुप् सुतासोमधुमत्तमाइति च तिस्रइति ।

तत्र प्रथमा सूक्ते चतुर्थी—

सुतासोमधुमत्तमाःसोमाइन्द्रायमन्दिनः ।
पवित्रवन्तोअक्षरन्देवान्गच्छन्तुवोमदाः ॥ ४ ॥

सुतासः । मधुमत्ऽतमाः । सोमाः । इन्द्राय । मन्दिनः । पवित्रऽवन्तः ।
अक्षरन् । देवान् । गच्छन्तु । वः । मदाः ॥ ४ ॥

मधुमत्तमाः अतिशयेन माधुर्योपेताः अतएव मंदिनोमदकराः सुतासोभिषुताः सोमाः पवित्रवन्तः पवित्रे वर्तमानाः सन्तः इन्द्राय इन्द्रार्थं अक्षरन् पात्रेषु क्षरन्ति । अथ प्रत्यक्षकृतः वोयुष्माकं मदामदकरारसाः देवानिन्द्रादीनागच्छन्तु ॥ ४ ॥

अथ पञ्चमी—

इन्दुरिन्द्रायपवतइतिदेवासोअब्रुवन् ।
वाचस्पतिर्मखस्यतेविश्वस्येशानओजसा ॥ ५ ॥ १ ॥

इन्दुः । इन्द्राय । पवते । इति । देवासः । अब्रुवन् । वाचः ।
पतिः । मखस्यते । विश्वस्य । ईशानः । ओजसा ॥ ५ ॥ १ ॥

इन्दुः सोमः इन्द्राय इन्द्रार्थं पवते कलशे क्षरति इति देवासः स्तुतिकारिणः स्तोतारोब्रुवन् वदन्ति । यदा स्तोतार एवंवदन्ति तदानीं वाचः स्तुतेः पतिः पालयिता यद्वा शब्दस्य स्वामी अत्यन्तं शब्दायमानइत्यर्थः । तादृशः सोमः मखस्यते स्तुतिभिः पूजामिच्छति लालसायां सुगागमः । कीदृशः ओजसा बलेन विश्वस्य सर्वस्येशानः प्रभुः ॥ ५ ॥

॥ इति सप्तमस्य पंचमे प्रथमोवर्गः ॥ १ ॥

अथ षष्ठी—

सहस्रधारःपवतेसमुद्रोवाचमीङ्खयः ।
सोमःपतीरयीणांसखेन्द्रस्यदिवेदिवे ॥ ६ ॥

सहस्रऽधारः । पवते । समुद्रः । वाचम्ऽईङ्खयः । सोमः ।
पतिः । रयीणाम् । सखा । इन्द्रस्य । दिवेऽदिवे ॥ ६ ॥

सहस्रधारः बहुविधधारोपेतः सोमः पवते क्षरति । कीदृशः समुद्रः यस्मात्समुद्रवन्ति रसाः रसस्थानीयः वाचमीङ्खयः ईखतेर्ण्यन्तस्य सुप्युपपदे खच्प्रत्ययः । स्तुतीनां प्रेरयिता रयीणां धनानां पतिः प्रभुः यद्वा रयीणां हविषोदातॄणां यजमानानां पतिः पालयिता दिवेदिवे प्रत्यहं इन्द्रस्य सखामित्रभूतः सोमः पवते ॥ ६ ॥

अथ सप्तमी—

अयंपूषारयिर्भगःसोमःपुनानोअर्षति ।
पतिर्विश्वस्यभूमनोव्यख्यद्रोदसीउभे ॥ ७ ॥

अयम् । पूषा । रयिः । भगः । सोमः । पुनानः । अर्षति । पतिः ।
विश्वस्य । भूमनः । वि । अख्यत् । रोदसी इति । उभे इति ॥ ७ ॥

पूषा पोषकः सर्वेषां भगोभजनीयः रयिर्धनहेतुः अयं सोमः पुनानः पूयमानः सन् अर्षति कलशे गच्छति । तथा विश्वस्य सर्वस्य भूमनोभूतजातस्य पतिः पालयिता सोमः उभे रोदसी द्यावापृथिव्यौ व्यख्यत् स्वतेजसा प्रकाशयति । अनेन लोकद्वयवर्तित्वं सूचितं ॥ ७ ॥

अथाष्टमी—

समुप्रियाअनूषतगावोमदायघृष्वयः ।
सोमासःकृण्वतेपथःपवमानासइन्दवः ॥ ८ ॥

सम् । ऊँ इति । प्रियाः । अनूषत । गावः । मदाय । घृष्वयः ।
सोमासः । कृण्वते । पथः । पवमानासः । इन्दवः ॥ ८ ॥

प्रियाः प्रियतमाः घृष्वयः अत्यन्तदीप्ताः यद्वा अहं प्रथमतः स्तौमि अहं पुरस्तात् स्तौमीति परस्परं स्पर्धमानाः गावः स्तुतिलक्षणावाचः सोमस्य मदाय मदार्थं समनूषत संस्तुवन्ति । उःप्रसिद्धौ । यद्वा गावोधेनवः सोमस्य मदाय शब्दायन्ते ततः पवमानासः पूयमानाः इन्दवो-दीप्ताः सोमासः सोमाः पथोमार्गान् कृण्वते रक्षणार्थं कुर्वन्ति ॥ ८ ॥

अथ नवमी—

यओजिष्ठस्तमाभरपवमानश्रवाय्यम् ।
यःपञ्चचर्षणीरभिरयिंयेनवनामहै ॥ ९ ॥

यः । ओजिष्ठः । तम् । आ । भर । पवमान । श्रवाय्यम् । यः ।
पञ्च । चर्षणीः । अभि । रयिम् । येन । वनामहै ॥ ९ ॥

हे पवमान पूयमान सोम ओजिष्ठः ओजस्वितमो यस्त्वदीयो रसोस्ति तं श्रवाय्यं श्रवणीयं रसं आभर अस्मभ्यमाभर। किंच योरसः पञ्चचर्षणीः पञ्चजनान् निषादपञ्चमान् चतुरोवर्णान् अभितिष्ठति। अपिच येन रसेन वयं रयिं धनं च वनामहै संभजामहै यद्वा येन त्वां रयिं याचामहै तमाभर ॥ ९ ॥

अथ दशमी—

सोमाः पवन्त इन्दवोस्मभ्यं गातुवित्तमाः ।
मित्राः सुवाना अरेपसः स्वाध्यः स्वर्विदः ॥ १० ॥ २ ॥

सोमाः । पवन्ते । इन्दवः । अस्मभ्यम् । गातुवित्ऽतमाः । मित्राः ।
सुवानाः । अरेपसः । सुऽआध्यः । स्वःऽविदः ॥ १० ॥ २ ॥

गातुवित्तमाः अतिशयेन मार्गस्य लंभकाः इन्दवोदीप्ताः सोमाः पवन्ते अस्मभ्यं अस्मदर्थं क्षरन्ति आगच्छन्तिवा। कीदृशाः मित्रादेवानां सखिभूताः सुवानाः अभिषूयमाणाः अरेपसः पापरहिताः अतएव स्वाध्यः शोभनध्यानाः स्वर्विदः सर्वज्ञाः सर्वप्रापकावा ॥ १० ॥

॥ इति सप्तमस्य पञ्चमे द्वितीयोवर्गः ॥ २ ॥

अथैकादशी—

सुष्वाणासो व्यद्रिभिश्चिताना गोरधित्वचि ।
इषमस्मभ्यमभितः समस्वरन्वसुविदः ॥ ११ ॥

सुस्वानासः । वि । अद्रिऽभिः । चितानाः । गोः । अधि । त्वचि ।
इषम् । अस्मभ्यम् । अभितः । सम् । अस्वरन् । वसुऽविदः ॥ ११ ॥

गोः अनडुहः अधित्वचि अधिषवणचर्मणि चितानाः ज्ञायमानाः अद्रिभिर्ग्रावभिः विविधं सुष्वाणासः सूयमानाः वसुविदोवसुनोलंभकाः एते सोमाः अस्मभ्यमिषमन्नमभितः समस्वरन् सम्यक्शब्दयन्ति प्रयच्छन्तीतियावत् ॥ ११ ॥

अथ द्वादशी–

एतेपूताविपश्चितःसोमासोदध्याशिरः ।
सूर्यासोनदर्शतासोजिगत्नवोध्रुवाघृते ॥ १२ ॥

एते । पूताः । विपःऽचितः । सोमासः । दधिऽआशिरः । सूर्यासः ।
न । दर्शतासः । जिगत्नवः । ध्रुवाः । घृते ॥ १२ ॥

पूताः पवित्रेण परिपूताः विपश्चितोमेधाविनोदध्याशिरः दध्यामिश्रणाः घृते वसतीवर्याख्ये उदके जिगत्नवोगमनशीला ध्रुवाः तत्र स्थैर्येण वर्तमानाः एते सोमासः सोमाः सूर्यासोन सूर्याइव दर्शतासः पात्रेषु सर्वैर्दर्शनीया भवन्ति ॥ १२ ॥

अथ त्रयोदशी–

प्रसुन्वानस्यान्धसोमर्तोनवृत्तद्वचः ।
अपश्वानमराधसंहतामखंनभृगवः ॥ १३ ॥

प्र । सुन्वानस्य । अन्धसः । मर्तः । न । वृत । तत् । वचः ।
अप । श्वानम् । अराधसम् । हत । मखम् । न । भृगवः ॥ १३ ॥

सुन्वानस्याभिषूयमाणस्य अन्धसोदनीयस्य सोमस्य तत्प्रसिद्धं वचः वचनं घोषं मर्तोमारकः कर्मविघ्नकारी श्वा न प्रवृत नभजतां नश्रृणोत्विति यावत् । तथा हे स्तोतारः अराधसं राधककर्मरहितं तं श्वानं अपहत । तत्र दृष्टान्तः–मखं न यथा पुरा अपराद्धमखं एतन्नामानं भृगवोपहतवन्तः तथा अपहतेत्यर्थः ॥ १३ ॥

अथ चतुर्दशी–

आजामिरत्केअव्यतभुजेनपुत्रओण्योः ।
सरज्जारोनयोषणांवरोनयोनिमासदम् ॥ १४ ॥

आ । जामिः । अत्के । अव्यत । भुजे । न । पुत्रः । ओण्योः ।
सरत् । जारः । न । योषणाम् । वरः । न । योनिम् । आऽसदम् ॥ १४ ॥

जामिर्बंधुभूतो देवानां सोमः अत्के आच्छादके पवित्रे आव्यत आवृणोति संबद्धोभवति। तत्र दृष्टान्तः—भुजेन यथा ओण्योः रक्षकयोः मातापित्रोर्भुजे पुत्र आवृणोति तद्वत्। ततः सोयं सोमः योनिं स्वस्थानभूतं कलशमासदं आसत्तुं सरत् सरति। तत्र दृष्टान्तद्वयं—जारोन यथा जारोयोषणां असतीं स्त्रियं प्राप्तुं सरति यथावा वरः कन्यां प्राप्तुं गच्छति तद्वत्॥ १४॥

अथ पंचदशी—

सवीरोदक्षसाधनोवियस्तस्तम्भरोदसी।
हरिःपवित्रेअव्यतवेधानयोनिमासदम्॥ १५॥

सः। वीरः। दक्षऽसाधनः। वि। यः। तस्तम्भ। रोदसी इति।
हरिः। पवित्रे। अव्यत। वेधाः। न। योनिम्। आऽसदम्॥ १५॥

दक्षसाधनः बलसाधनः ससोमः वीरः समर्थो भवति। यः सोमः रोदसी द्यावापृथिव्यौ वितस्तंभ स्वतेजसा व्यस्तभ्नात् आच्छादयतीत्यर्थः। किंच हरिर्हरितवर्णः सोमः वेधान विधाता यजमानः यथा स्वगृहं आसीदति तद्वत् योनिं स्वस्थानं कलशमासदं आसत्तुं पवित्रे अव्यत आवृणोति संबद्धोभवति॥ १५॥

अथ षोडशी—

अव्योवारेभिःपवतेसोमोगव्येअधित्वचि।
कनिक्रदद्वृषाहरिरिन्द्रस्याभ्येतिनिष्कृतम्॥ १६॥ ३॥

अव्यः। वारेभिः। पवते। सोमः। गव्ये। अधि। त्वचि। कनिक्रदत्।
वृषा। हरिः। इन्द्रस्य। अभि। एति। निःऽकृतम्॥ १६॥ ३॥

अयं सोमः अव्यः अवेर्वारेभिः वालैः पवित्रैः तेभ्यः पवते कलशं प्रति क्षरति। गव्ये आनडुहे अधित्वचि चर्मणि कनिक्रदत् शब्दायमानः वृषा कामानां वर्षकः हरिर्हरितवर्णः सोमः इन्द्रस्य स्वभूतं निष्कृतं संस्कृतं स्थानं अभ्येति अभिगच्छति॥ १६॥

॥ इति सप्तमस्य पंचमे तृतीयोवर्गः॥ ३॥

क्राणाशिशुरित्यष्टर्चं षष्ठं सूक्तं। आप्त्यस्य त्रितस्यार्षं। इदमुत्तराणि चत्वारिसूक्तानि औष्णिहानि। पवमानः सोमोदेवता। तथाचानुक्रम्यते—क्राणाष्टौत्रितऔष्णिहंवैइति। गतोविनियोगः।

तत्र प्रथमा—

क्राणाशिशुर्महीनांहिन्वन्नृतस्यदीधितिम् ।
विश्वापरिप्रियाभुवदधद्विता ॥ १ ॥

क्राणा । शिशुः । महीनाम् । हिन्वन् । ऋतस्य । दीधितिम् ।
विश्वा । परि । प्रिया । भुवत् । अध । द्विता ॥ १ ॥

क्राणा करोतेः शानचि बहुलं छन्दसीति विकरणस्य लुक् सुपांसुलुगिति सुपआकारादेशः । यज्ञं कुर्वाणः महीनां महतीनां मंहनीयानांवा अपां शिशुः पुत्रस्थानीयः सोमः ऋतस्य यज्ञस्य दीधितिं प्रकाशकं धारकं वा स्वीयं रसं हिन्वन् प्रेरयन् विश्वा सर्वाणि प्रिया प्रियाणि हवींषि परिभुवत् परिभवति व्याप्नोति । अधापिच द्विता द्विधाभवति दिविच पृथिव्यां च वर्ततइत्यर्थः ॥ १ ॥



अथ द्वितीया—

उपत्रितस्यपाष्योरभक्तयद्गुहापदम् ।
यज्ञस्यसप्तधामभिरधप्रियम् ॥ २ ॥

उप । त्रितस्य । पाष्योः । अभक्त । यत् । गुहा । पदम् । यज्ञस्य ।
सप्त । धामऽभिः । अध । प्रियम् ॥ २ ॥

त्रितस्य मम यज्ञे गुहा गुहायां हविर्धाने वर्तमानयोः पाष्योः पाषाणवत् दृढयोः अधिषवणफलकयोः पदं स्थानं सोमो यद्यदा उपाभक्त समभजत । अथानन्तरं यज्ञस्य धामभिर्धारकैः सप्त सप्तभिः छन्दोभिः गायत्र्यादिभिः प्रियं प्रीणयितारं सोममभिष्टुवन्ति ऋत्विजः । अपिवा सप्तसर्पणशीलैः वसतीवर्यादिभिरुदकैः सोममभिषुण्वन्ति ॥ २ ॥

अथ तृतीया—

त्रीणित्रितस्यधारयापृष्ठेष्वेरयारयिम् ।
मिमीतेअस्ययोजनाविसुक्रतुः ॥ ३ ॥

त्रीणि । त्रितस्य । धारया । पृष्ठेषु । आ । ईरय । रयिम् ।
मिमीते । अस्य । योजना । वि । सुऽक्रतुः ॥ ३ ॥

हे सोम त्रितस्य मम यज्ञस्य स्वभूतानि त्रीणिसवनानि धारया आत्मीयया विधारय । किंच पृष्ठेषु सामसु रयिं दातारमिन्द्रं एरय आगमय सुक्रतुः सुप्रज्ञः स्तोता अस्येन्द्रस्य योजना योजनानि योजनकारीणि स्तोत्राणि विमिमीते करोति यस्मादेवं तस्मादिन्द्रं सामसु प्रेरयेत्यर्थः ॥३॥

अथ चतुर्थी—

जज्ञानंसप्तमातरोवेधामशासतश्रिये ।
अयंध्रुवोरयीणांचिकेतयत् ॥ ४ ॥

जज्ञानम् । सप्त । मातरः । वेधाम् । अशासत । श्रिये । अयम् ।
ध्रुवः । रयीणाम् । चिकेत । यत् ॥ ४ ॥

जज्ञानं प्रादुर्भूतं वेधां कर्मणोविधातारं सोमं सप्त सप्तसंख्याकामातरो गंगाद्यानद्यः सप्तच्छंदांसिवा श्रिये यजमानानां ऐश्वर्यार्थं आशासत अनुशासन्ति अनुशासनं कुर्वन्ति । शास्तेर्लङि व्यत्ययेनात्मनेपदं । यद्यस्मात् ध्रुवोयं सोमः रयीणां धनानि चिकेत जानाति । तस्मादस्यानुशासने कृते यजमानानां धनादिसमृद्धिर्भवति ॥ ४ ॥

अथपंचमी—

अस्यव्रतेसजोषसोविश्वेदेवासोअद्रुहः ।
स्पार्हाभवन्तिरन्तयोजुषन्तयत् ॥ ५ ॥ ४ ॥

अस्य । व्रते । सऽजोषसः । विश्वे । देवासः । अद्रुहः । स्पार्हाः ।
भवन्ति । रन्तयः । जुषन्त । यत् ॥ ५ ॥ ४ ॥

अद्रुहोद्रोहवर्जिताः विश्वे सर्वे देवासोदेवाः अस्य सोमस्य व्रते कर्मणि सजोषसः संगताः सन्तः स्पार्हाः स्पृहणीयाभवन्ति । रन्तयो रमणशीलाः देवाः सुतमेनं सोमं यद्यदि जुषन्त सेवन्ते तर्हि स्पृहणीया भवन्ति ॥ ५ ॥

॥ इति सप्तमस्य पंचमे चतुर्थोवर्गः ॥ ४ ॥

अथ षष्ठी–

यमींगर्भमृतावृधोदृशेचारुमजीजनन् ।
कविंमंहिष्ठमध्वरेपुरुस्पृहम् ॥ ६ ॥

यम् । ईम् । गर्भम् । ऋतऽवृधः । दृशे । चारुम् । अजीजनन् ।
कविम् । मंहिष्ठम् । अध्वरे । पुरुऽस्पृहम् ॥ ६ ॥

ऋतावृधः यज्ञस्यवर्धयित्र्यः वसतीवर्याख्याआपः गर्भं गर्भस्थानीयं ईमेनं यं सोमं अध्वरे यज्ञे दृशे दर्शनाय अजीजनन् उदपादयन् । कीदृशं चारुं सर्वेषां कल्याणरूपं कविं क्रान्तप्रज्ञं मंहिष्ठं पूज्यतमं दातृतमंवा । अतएव पुरुस्पृहं बहुभिः स्पृहणीयं सोमं देवाः सेवन्तइति पूर्वेण समन्वयः ॥ ६ ॥

अथ सप्तमी–

समीचीनेअभित्मनायह्वीऋतस्यमातरा ।
तन्वानायज्ञमानुषग्यदंजते ॥ ७ ॥

समीचीने इति सम्ऽईचीने । अभि । त्मना । यह्वी इति । ऋतस्य ।
मातरा । तन्वानाः । यज्ञम् । आनुषक् । यत् । अञ्जते ॥ ७ ॥

ससोमः समीचीने परस्परं संगते यह्वी महत्यौ ऋतस्य यज्ञस्य मातरा निर्मात्र्यौ द्यावापृथिव्यौ त्मना आत्मना स्वयमेव तदाभिगच्छति । यद्यदा यज्ञं तन्वानाः अध्वर्यव आनुषक् अनुषक्तं च वसतीवरीभिरंजते सोमं मिश्रयन्ति तदा स्वयमभिगच्छति ॥ ७ ॥

अथाष्टमी–

क्रत्वाशुक्रेभिरक्षभिर्ऋणोरपव्रजंदिवः ।
हिन्वन्नृतस्यदीधितिंप्राध्वरे ॥ ८ ॥ ५ ॥

क्रत्वा । शुक्रेभिः । अक्षऽभिः । ऋणोः । अप । व्रजम् । दिवः ।
हिन्वन् । ऋतस्य । दीधितिम् । प्र । अध्वरे ॥ ८ ॥ ५ ॥

हे सोम त्वं क्रत्वा कर्मणा ज्ञानेनवा शुक्रेभिः शुक्रैर्दीप्यमानैः अक्षभिरक्षैः इन्द्रियैरिवाश्नुवानैः स्वतेजोभिः व्रजं अंधकारसमूहं दिवोन्तरिक्षात् अपऋणोः अपगमय विनाशय । ऋणुगतौ तानादिकः । किंकुर्वन् अध्वरे हिंसारहिते यज्ञे ऋतस्य यज्ञस्य दीधितिं धारकं स्वीयं रसं प्रहिन्वन् प्रेरयन् अनेन लोकद्वयवर्तित्वमभिहितं ॥ ८ ॥

॥ इति सप्तमस्य पञ्चमे पञ्चमोवर्गः ॥ ५ ॥

प्रपुनानायेति षळृचं सप्तमं सूक्तं । आप्त्यस्य द्वितस्यार्षं पूर्ववत् छंदोदेवते । तथाचानुक्रम्यते—प्रपुनानायषट्द्वितआप्त्यइति । गतोविनियोगः ।

तत्र प्रथमा—

प्रपुंनानायवेधसेसोमांयवचउद्यंतम् ।
भृतिंनभंरामतिभिर्जुजोंषते ॥ १ ॥

प्र । पुनानायं । वेधसें । सोमाय । वचंः । उत्ऽयंतम् । भृतिम् ।
न । भर । मतिऽभिः । जुजोंषते ॥ १ ॥

द्वितोनामऋषिः स्वात्मानं प्रत्याह । पुनानाय पवित्रेण पूयमानाय वेधसे कर्मणोविधात्रे मतिभिर्जुजोषते प्रीयमाणाय । यद्वा मतिभिः स्तुतिभिः स्तोतृभिः सह जुजोषते प्रीणयित्रे सोमाय उद्यतमुद्युक्तं वचः प्रभर प्रकर्षेण संपादय अभिष्टुहीत्यर्थः। तत्र दृष्टान्तः—भृतिंन यथा भृतकाभृतिं संपादयन्ति तद्वत् ॥ १ ॥

अथ द्वितीया—

परिवारांण्यव्ययागोभिरञ्जानोअंर्षति ।
त्रीषधस्थांपुनानःकृणुतेहरिंः ॥ २ ॥

परिं । वारांणि । अव्ययां । गोभिंः । अञ्जानः । अर्षति । त्री ।
सधऽस्थां । पुनानः । कृणुते । हरिंः ॥ २ ॥

गोभिर्गोविकारैः क्षीरादिभिः अंजानः अज्यमानः सोमः अव्यया अविमयानि वाराणि वालानि पवित्राणि पर्यर्षति परिगच्छति । अपिच हरिर्हरितवर्णः सोमः पुनानः पूयमानः सन्

त्री त्रीणि सधस्था सहतिष्ठंत्यत्रेति सधस्थं स्थानं द्रोणकलशाधवनीयपूतभृदात्मकानि त्रीणि स्थानानि कृणुते करोति ॥ २ ॥

अथ तृतीया—

परि॒कोशं॑मधु॒श्चुत॑म॒व्यये॒वारे॑अर्षति ।
अ॒भिवाणी॒र्ऋषी॑णांस॒प्तनू॑षत ॥ ३ ॥

परि॑ । कोश॑म् । म॒धु॒ऽश्चुत॑म् । अ॒व्यये॑ । वारे॑ । अ॒र्ष॒ति॒ । अ॒भि । वाणीः॑ । ऋषी॑णाम् । स॒प्त । नू॒ष॒त॒ ॥ ३ ॥

ससोमः अव्यये अविमये वारे वाले पवित्रे मधुश्चुतं मधुररसस्य च्यावयितारं कोशं द्रोणकलशं प्रति आत्मीयं रसं पर्यर्षति गमयति तमिमं सोमं ऋषीणां सप्तवाणीः छन्दांसि अभिनूषत अभिष्टुवन्ति । नूस्तवने कुटादिः ॥ ३ ॥

अथ चतुर्थी—

परि॑णे॒ताम॑ती॒नांवि॒श्वदे॑वो॒अदा॑भ्यः ।
सोमः॑पुना॒नश्च॒म्वो॑र्विश॒द्धरिः॑ ॥ ४ ॥

परि॑ । ने॒ता । म॒ती॒नाम् । वि॒श्वऽदे॑वः । अदा॑भ्यः । सोमः॑ । पु॒ना॒नः । च॒म्वोः॑ । वि॒श॒त् । हरिः॑ ॥ ४ ॥

हरिर्हरितवर्णः ससोमः पुनानः पूयमानः सन् चम्वोरधिषवणफलकयोः परिविशत् परिविशति। कीदृशः मतीनां स्तुतीनां नेता यद्वा मतीनां स्तोतॄणां स्वकर्मणि उपनेता विश्वदेवः सर्वदेवः सोमेभिषूयमाणे सति इन्द्रादयः सर्वेदेवाः सोमं प्रत्यागच्छन्तिखलु तस्मात् सर्वदेवोपेतः अतएव अदाभ्यः अहिंस्यः कैश्चिदपि ॥ ४ ॥

अथ पंचमी—

परि॒दैवी॒रनु॑स्व॒धाइन्द्रे॑णयाहि॒सर॒थम् ।
पु॒ना॒नोवा॒घद्वा॒घद्भि॒रम॑र्त्यः ॥ ५ ॥

परि॑ । दे॒वीः । अनु॑ । स्व॒धाः । इन्द्रे॑ण । या॒हि॒ । स॒ऽरथ॑म् ।
पु॒ना॒नः । वा॒घ॒त् । वा॒घत्ऽभिः॑ । अम॑र्त्यः ॥ ५ ॥

हे सोम त्वं इन्द्रेण सरथं समानं रथमारुह्य दैवीः देवानां संबन्धीनि स्वधाः बलानि अनु देवसेनाः परियाहि परिगच्छ । कीदृशः पुनानः पूयमानः वाघद्भिः वाघतइति ऋत्विङ्नाम हविषां प्रेरकैर्ऋत्विग्भिर्वाघत् ऊह्यमानां अमर्त्यः मनुष्यधर्मरहितः यद्वा वाघद्भिर्ऋत्विग्भिः पुनानः पूयमानः वाघत् स्तोतृणां यष्टृणां धनादीनि प्रापयन् परिगच्छ ॥ ५ ॥

अथ षष्ठी—

परि॒ सप्ति॒र्न वा॑ज॒युर्दे॒वो दे॒वेभ्यः॑ सु॒तः । व्या॒न॒शिः पव॑मानो॒ वि धा॑वति ॥ ६ ॥ ६ ॥

परि॑ । सप्तिः॑ । न । वा॒ज॒ऽयुः । दे॒वः । दे॒वेभ्यः॑ । सु॒तः ।
वि॒ऽआ॒न॒शिः । पव॑मानः । वि । धा॒व॒ति॒ ॥ ६ ॥ ६ ॥

सप्तिर्न अश्वइव वाजयुः युद्धमिच्छन् देवो दीप्यमानः देवेभ्योदेवार्थं सुतोभिषुतः व्यानशिः पात्रेषु व्यापी पवमानः पवित्रेण पूयमानः एतादृशः सोमः विविधं परिधावति परितः पात्राण्यभिगच्छति । व्यानशिः अशूव्याप्तौ आदृगमहनेत्यत्र उत्सर्गश्छन्दसि सदादिभ्यो दर्शनादिति कित् प्रत्ययः अश्नोतेश्चेति नुडागमः ॥ ६ ॥

॥ इति सप्तमस्य पंचमे षष्ठोवर्गः ॥ ६ ॥

॥ इति नवमे मंडले षष्ठोनुवाकः ॥ ६ ॥

सप्तमेनुवाके एकादशसूक्तानि तत्र सखायइति षळृचं प्रथमं सूक्तं काण्वौ पर्वतनारदावृषी । अथवा कश्यपस्यपुत्र्यौ शिखंडिन्याख्ये द्वे अप्सरसावस्य सूक्तस्य द्रष्ट्र्यौ पूर्ववच्छन्दोदेवते । तथानुक्रम्यते—सखायः पर्वतनारदौ काश्यपौ द्वेशिखंडिन्यौ वाप्सरसाविति । गतः सूक्तविनियोगः ।

तत्र प्रथमा—

सखा॑य॒ आ नि षी॑दत पुना॒नाय॒ प्र गा॑यत । शिशुं॒ न य॒ज्ञैः परि॑ भूषत श्रि॒ये ॥ १ ॥

सखा॑यः । आ । नि । सी॒द॒त॒ । पु॒ना॒नाय॑ । प्र । गा॒य॒त॒ ।
शिशु॑म् । न । य॒ज्ञैः । परि॑ । भू॒ष॒त॒ । श्रि॒ये ॥ १ ॥

हे सखायः सखिभूताः स्तोतारऋत्विजः आनिषीदत स्तोतुं उपविशत । अथ पुनानाय पूयमानाय सोमाय प्रगायत प्रकर्षेण गायत तमभिष्टुत । ततः अभिषुतं सोमं यज्ञैर्यजनीयैः हविर्भिः मिश्रणैश्च श्रिये शोभनार्थं परिभूषत परितोऽलंकुरुत । तत्र दृष्टान्तः—शिशुंन यथा शिशुं बालं पुत्रं पितर आभरणैरलंकुर्वन्ति तद्वत् ॥ १ ॥

प्रवर्ग्येऽभिष्टवे समीवत्समित्येका । सूत्रितंच—समीवत्संनमातृभिःसंवत्सइवमातृभिरिति ।

सैषा द्वितीया—

समीवत्संनमातृभिःसृजतांगयसाधंम् ।
देवाव्यं१मदंमभिद्विशंवसम् ॥ २ ॥

सम् । ईम् इति । वत्सम् । न । मातृऽभिः । सृजत । गयऽसाधनम् ।
देवऽअव्यम् । मदम् । अभि । द्विऽशवसम् ॥ २ ॥

हे ऋत्विजः गयसाधनं गृहस्य साधनं ईमेनं सोमं मातृभिर्मातृभूताभिर्वसतीवरीभिः संसृजत संमिश्रयत । कथमिव वत्सं न यथावत्सं मातृभिर्गोभिः संयोजयन्ति तद्वत् । कीदृशं देवाव्यं देवानां रक्षकं मदं मदनहेतुं द्विशवसं द्विगुणवेगं अतिशयितबलंवा यद्वा द्वयोर्लोकयोः तत्र स्थितादेवमनुष्याइत्यर्थः । तेषां हविर्धनप्रदानेन वर्धयितारं तं सोममभिसंसृजत ॥ २ ॥

अथ तृतीया—

पुनातांदक्षसाधंनंयथाशर्धांयवीतयें ।
यथांमित्रायवरुंणायशंतंमः ॥ ३ ॥

पुनात । दक्षऽसाधनम् । यथा । शर्धाय । वीतये । यथा ।
मित्राय । वरुणाय । शम्ऽतमः ॥ ३ ॥

दक्षसाधनं बलस्य साधनं धनादिवृद्धेर्वा साधकं सोमं पुनात पवित्रेण पुनीत । पूञ् पवने क्र्यादिः तस्माल्लोटि तप्तनप्तनथनाश्चेति तस्य तबादेशः पित्वादीत्वाभावः । असौ सोमः शर्धाय वेगार्थं वीतये देवानां पानार्थं यथा भवति यथावा मित्राय वरुणायच शंतमः अतिशयेन सुखं करोति तथा पुनीतेत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

अस्मभ्यंत्वावसुविदंमभिवाणीरनूषत ।
गोभिष्टेवर्णमभिवासयामसि ॥ ४ ॥

अस्मभ्यम् । त्वा । वसुऽविदम् । अभि । वाणीः । अनूषत ।
गोभिः । ते । वर्णम् । अभि । वासयामसि ॥ ४ ॥

हे सोम वसुविदं धनस्य दातारं त्वा त्वामस्मभ्यं धनादिप्रदानार्थं वाणीः अस्मदीयावाचो अभ्यनूषत अभिष्टुवन्ति नूस्तवने । वयं ते तव वर्णं आवरकं रसं गोभिर्गोविकारैः क्षीरादिभिः अभिवासयामसि अभिवासयामः अभितआच्छादयामः ॥ ४ ॥

अथ पञ्चमी—

सनोमदानांपतइन्दोदेवप्सराअसि ।
सखेवसख्येगातुवित्तमोभव ॥ ५ ॥

सः । नः । मदानाम् । पते । इन्दो इति । देवऽप्सराः । असि ।
सखाऽइव । सख्ये । गातुवित्ऽतमः । भव ॥ ५ ॥

नः अस्मदादीनां मदानां मदकानां पते स्वामिन् हे इन्दो सोम सत्वं देवप्सराअसि प्सरइति रूपनाम दीप्तरूपोभवसि । सत्वं सखेव यथा सखा सुहृत् सख्ये मित्राय सत्यं मार्गं ज्ञापयति तद्वत् अस्माकमपि गातुवित्तमःअत्यन्तं मार्गस्य लंभकोभव ज्ञापकोभव ॥ ५ ॥

अथ षष्ठी—

सनेमिकृध्य१स्मदारक्षसंकंचिदत्रिणम् ।
अपादेवंद्वयुमंहोयुयोधिनः ॥ ६ ॥ ७ ॥

सनेमि । कृधि । अस्मत् । आ । रक्षसम् । कम् । चित् । अत्रिणम् ।
अप । अदेवम् । द्वयुम् । अंहः । युयोधि । नः ॥ ६ ॥ ७ ॥

हे सोम अस्मत् अस्मासु सनेमि पुराणनामैतत् पुराणं सख्यं कृधि कुरु। आ अपिच अत्रिणमदनशीलं कंचिद्रक्षसं अपयुध्यस्व । कीदृशं अदेवं अदेवनशीलं द्वयुंद्वयवन्तं सत्यानृतयुक्तंबाह्याभ्यन्तरमायायुक्तंवा । किंच नोस्माकमंहः पापंच अपयुयोधि संप्रहर युध्यतेर्बहुलंछन्दसीति शपःश्लुः वाछन्दसीति हेर्ङित्त्वाद्गुणः धलोपश्छान्दसः यौतेर्वाश्लौ पूर्ववद्रूपं ॥ ६ ॥

॥ इति सप्तमस्य पंचमे सप्तमोवर्गः ॥ ७ ॥

तंवइति षळृचं द्वितीयंसूक्तं पर्वतनारदयोरार्षं अन्यत्पूर्ववत् । तंवइत्यनुक्रान्तं । गतः सूक्तविनियोगः ।

तत्र प्रथमा—

तंवः॑सखायो॒मदा॑यपुना॒नम॒भिगा॑यत ।
शिशुं॒नय॒ज्ञैः स्व॑दयन्तगू॒र्तिभिः॑ ॥ १ ॥

तम् । वः॒ । स॒खा॒यः॒ । मदा॑य । पु॒ना॒नम् । अ॒भि । गा॒य॒त॒ ।
शिशु॑म् । न । य॒ज्ञैः । स्व॒द॒य॒न्त॒ । गू॒र्तिऽभिः॑ ॥ १ ॥

हे सखायः ऋत्विजोवोयूयं मदाय देवानां मदार्थं पुनानं पूयमानं तं सोममभिगायत अभिष्टुत तमिमं सोमं शिशुंन शिशुमिवालंकारैः क्षीरादिभिश्च यथा स्वादूकुर्वन्ति तद्वत्। यज्ञैर्हविर्भिर्मिश्रणैः गूर्तिभिः स्तुतिभिश्च स्वदयन्त स्वादूकुर्वन्ति ॥ १ ॥

प्रवर्ग्येभिष्टवे संवत्सइवमातृभिरित्येका । सूत्रंच—समीवत्समित्यनया सहोक्तं ।

सैषा सूक्ते द्वितीया—

संव॒त्सइ॑वमा॒तृभि॒रिन्दु॑र्हि॒न्वा॒नोअ॑ज्यते ।
दे॒वा॒वीर्मदो॑म॒तिभिः॒परि॑ष्कृतः ॥ २ ॥

सम् । व॒त्सःऽइ॑व । मा॒तृऽभिः॑ । इन्दुः॑ । हि॒न्वा॒नः । अ॒ज्य॒ते॒ ।
दे॒व॒ऽअ॒वीः । मदः॑ । म॒तिऽभिः॑ । परि॑ऽकृतः ॥ २ ॥

हिन्वानः प्रेर्यमाणः इंदुःसोमः वसतीवरीभिः समज्यते सम्यक्सिक्तोभवति । तत्र दृष्टान्तः—वत्सइव वत्सोयथा मातृभिः गोभिः समक्तोभवति तद्वत् । कीदृशः देवावीः देवानां र-

क्षकः मदोमदकरः मतिभिः स्तुतिभिः परिष्कृतोलंकृतः भूषणार्थे संपर्युपेभ्यइति सुडागमः परिनिविभ्यइतिसुटः षत्वं ॥ २ ॥

अथ तृतीया—

अयंदक्षायसाधनोयंशर्धायवीतये ।
अयंदेवेभ्योमधुमत्तमःसुतः ॥ ३ ॥

अयम् । दक्षाय । साधनः । अयम् । शर्धाय । वीतये ।
अयम् । देवेभ्यः । मधुमत्ऽतमः । सुतः ॥ ३ ॥

अयं सोमः दक्षाय बलाय वर्धनाय वा साधनः साधयिता भवति । तथा यं सोमः शर्धाय वेगार्थं वीतये देवानां भक्षणार्थंच भवति सुतः अभिषुतोयं सोमः देवेभ्यइन्द्रादिभ्योमधुमत्तमः अतिशयेन माधुर्ययुक्तोभवति । अत्यन्तं मदकरोभवतीतिवा ॥ ३ ॥

अथ चतुर्थी—

गोमन्नइन्दोअश्ववत्सुतःसुदक्षधन्व ।
शुचिंतेवर्णमधिगोषुदीधरम् ॥ ४ ॥

गोऽमत् । नः । इन्दो इति । अश्वऽवत् । सुतः । सुऽदक्ष ।
धन्व । शुचिम् । ते । वर्णम् । अधि । गोषु । दीधरम् ॥ ४ ॥

हे सुदक्ष सुबल हे इन्दो सोम सुतोभिषुतस्त्वं नोस्माकं गोमत् यज्ञसाधनगोयुक्तं अश्ववदश्वयुक्तं धनं धन्व गमय धविर्गत्यर्थः भूवादिः । ततोहं शुचिं पूतं दीप्यमानंवा ते तव वर्णं रसं गोषु गव्येषुक्षीरादिषु अधिदीधरं अधिधारयामि मिश्रयामि ॥ ४ ॥

अथ पंचमी—

सनोहरीणांपतइन्दोदेवप्सरस्तमः ।
सखेवसख्येनर्योरुचेभव ॥ ५ ॥

सः । नः । हरीणाम् । पते । इन्दो इति । देवप्सरःऽतमः ।
सखाऽइव । सख्ये । नर्यः । रुचे । भव ॥ ५ ॥

हे हरीणां पते नः अस्मदीयानां हरितवर्णानां पशूनां स्वामिन् हे इन्दो सोम देवप्सरस्तमः अतिशयेन दीप्तरूपोपेतः सत्वं नर्यः कर्मनेतृभ्यः ऋत्विग्भ्यः हितः सत्वं नोस्माकं रुचे भव दीप्तिकरोभव । किमिव सखेव यथा सखासख्ये मित्राय दीप्तिकरोभवति तद्वत् ॥ ५ ॥

अथ षष्ठी—

सनेमित्वमस्मदाँअदेवंकंचिदत्रिणम् ।
साह्वाँइन्दोपरिबाधोअपद्वयुम् ॥ ६ ॥ ८ ॥

सनेमि । त्वम् । अस्मत् । आ । अदेवम् । कम् । चित् । अत्रिणम् ।
सह्वान् । इन्दो इति । परि । बाधः । अप । द्वयुम् ॥ ६ ॥ ८ ॥

हे सोम त्वं सनेमि पुराणं सख्यं अस्मदस्मासु कुरु । आ अपिच अदेवं अदेवनशीलं कंचिदपि अत्रिणमदनशीलं राक्षसं अस्मदस्मत्तोपगमय । किंच हे इन्दो साह्वान् शत्रूनभिभवन् बाधोबाधमानान् परिजहि । तथा द्वयुं द्वयवंतं सत्यानृतयुक्तं बाह्याभ्यन्तरमायाद्वयोपेतं वा राक्षसं अस्मत्तोपगमय ॥ ६ ॥

॥ इति सप्तमस्य पंचमेष्टमोवर्गः ॥ ८ ॥

इन्द्रमच्छेति चतुर्दशर्चं तृतीयं सूक्तं औष्णिहं पवमानसोमदेवताकं । प्रथमतृचस्य चक्षुराख्यपुत्रोग्निर्ऋषिः द्वितीयस्य मनुपुत्रश्चक्षुर्नामा अप्सुनाम्नः पुत्रोमनुस्तृतीयस्य एवंनवर्चोगताः शिष्टानामपि पंचानां चाक्षुषोग्निः । तथाचानुक्रम्यते—इन्द्रमच्छषळूनाग्निश्चाक्षुषश्चक्षुर्मानवोमनुराप्सवइति तृचाः पंचाग्निरिति । गतोविनियोगः ।

तत्र प्रथमा—

इन्द्रमच्छसुताइमेवृषणंयन्तुहरयः ।
श्रुष्टीजातासइन्दवःस्वर्विदः ॥ १ ॥

इन्द्रम् । अच्छ । सुताः । इमे । वृषणम् । यन्तु । हरयः ।
श्रुष्टी । जातासः । इन्दवः । स्वः ऽविदः ॥ १ ॥

श्रुष्टी श्रुष्टीति क्षिप्रनाम क्षिप्रं जातासोजाताः इन्दवः पात्रेषु क्षरन्तः स्वर्विदः सर्वज्ञाः हरयोहरितवर्णाः सुताअभिषुताः इमे सोमाः वृषणं कामानां सेक्तारमिन्द्रं अच्छयन्तु अभिगच्छन्तु ॥ १ ॥

अथ द्वितीया—

अयंभरायसानसिरिन्द्रायपवतेसुतः ।
सोमोजैत्रस्यचेततियथाविदे ॥ २ ॥

अयम् । भराय । सानसिः । इन्द्राय । पवते । सुतः ।
सोमः । जैत्रस्य । चेतति । यथा । विदे ॥ २ ॥

भराय संग्रामाय तदर्थं सानसिर्भजनीयः सुतोभिषुतोयं सोमः इन्द्रायेन्द्रार्थं पवते ग्रहादिषु क्षरति । ततः सोमः जैत्रस्य क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानसंज्ञा चतुर्थ्यर्थे बहुलमिति षष्ठी । जयशीलमिन्द्रं चेतति जानाति यथा इन्द्रोविदे लोकैर्ज्ञायते तथा जानाति ॥२॥

अथ तृतीया—

अस्येदिन्द्रोमदेष्वाग्राभंगृभ्णीतसानसिम् ।
वज्रंचवृषणंभरत्समप्सुजित् ॥ ३ ॥

अस्य । इत् । इन्द्रः । मदेषु । आ । ग्राभम् । गृभ्णीत । सानसिम् ।
वज्रम् । च । वृषणम् । भरत् । सम् । अप्सुऽजित् ॥ ३ ॥

आअनन्तरं इन्द्रः अस्येत् अस्य सोमस्यैव मदेषु संजातेषु सानसिं सर्वैः संभजनीयं ग्राभं ग्राहं गृहीतव्यं धनुर्गृभ्णीत गृह्णाति हृग्रहोर्भइति भत्वं । किंच अप्सुजित् उदकार्थंवृत्रस्य जेता । यद्वा आपइत्यन्तरिक्षनाम अन्तरिक्षे अहिनामकस्य जेता इन्द्रः वृषणं वर्षितारं वज्रं च संभरत् संबिभर्तु बिभर्तेर्लेट्यडागमः ॥ ३ ॥

अथ चतुर्थी—

प्रधन्वासोमजागृविरिन्द्रायेन्दोपरिस्रव ।
द्युमन्तंशुष्ममाभरास्वर्विदम् ॥ ४ ॥

प्र । धन्व । सोम । जागृविः । इन्द्राय । इन्दो इति । परि । स्रव ।
द्युऽमन्तम् । शुष्मम् । आ । भर । स्वःऽविदम् ॥ ४ ॥

हे सोम जागृविर्जागरणशीलस्त्वं प्रधन्व प्रक्षर । हे इन्दो सोम इन्द्राय परिस्रव परितः पात्रेषु क्षर । किंच द्युमन्तं दीप्तियुक्तं स्वर्विदं सर्वस्य लंभकं शुष्मं शत्रूणां शोषकं बलं आभराहर ॥ ४ ॥

अथ पंचमी—

इन्द्रायवृषणंमदंपवस्वविश्वदर्शतः ।
सहस्रयामापथिकृद्विचक्षणः ॥ ५ ॥ ९ ॥

इन्द्राय । वृषणम् । मदम् । पवस्व । विश्वऽदर्शतः ।
सहस्रऽयामा । पथिऽकृत् । विऽचक्षणः ॥ ५ ॥ ९ ॥

हे सोम त्वं वृषणं वर्षितारं मदं मदहेतुं रसं इन्द्रायेन्द्रार्थं पवस्व क्षर । कीदृशः विश्वदर्शतः सर्वैर्दर्शनीयः सहस्रयामा बहुमार्गः पथिकृत यजमानानां सन्मार्गकरणशीलः विचक्षणः सर्वस्य विद्रष्टा ॥ ५ ॥

॥ इति सप्तमस्य पंचमे नवमोवर्गः ॥ ९ ॥

अथ षष्ठी—

अस्मभ्यंगातुवित्तमोदेवेभ्योमधुमत्तमः ।
सहस्रंयाहिपथिभिःकनिक्रदत् ॥ ६ ॥

अस्मभ्यम् । गातुवित्ऽतमः । देवेभ्यः । मधुमत्ऽतमः ।
सहस्रम् । याहि । पथिऽभिः । कनिक्रदत् ॥ ६ ॥

हे सोम अस्मभ्यं गातुवित्तमः अत्यन्तं मार्गस्य लंभकः तथा देवेभ्यश्च मधुमत्तमः अत्यन्तं स्वादुकारी त्वं कनिक्रदत शब्दंकुर्वन् सहस्रं पथिभिर्बहुभिर्मार्गैः याहि कलशमागच्छ ॥६॥

अथ सप्तमी—

पवस्वदेववीतयइन्दोधाराभिरोजसा ।
आकलशंमधुमान्त्सोमनःसदः ॥ ७ ॥

पवस्व । देवऽवीतये । इन्दो इति । धाराभिः । ओजसा । आ ।
कलशम् । मधुऽमान् । सोम । नः । सदः ॥ ७ ॥

हे इन्दो सोम देववीतये देवानां भक्षणार्थं ओजसा बलेन धाराभिरात्मीयाभिः पवस्व क्षर । हे सोम मधुमान् मदकररसवांस्त्वं नोस्मदीयं कलशं द्रोणाभिधानं आसदः । सदेर्लुङि रूपं । आसीद ॥ ७ ॥

अथाष्टमी—

तवद्रप्साउदप्रुतइन्द्रंमदायवावृधुः ।
त्वांदेवासोअमृतायकंपपुः ॥ ८ ॥

तव । द्रप्साः । उदऽप्रुतः । इन्द्रम् । मदाय । ववृधुः । त्वाम् ।
देवासः । अमृताय । कम् । पपुः ॥ ८ ॥

उदप्रुतः वसतीवर्याख्यमुदकं प्रति गच्छंतः यद्वा उदकस्य निर्गमयितारः तव स्वभूताद्रप्साः द्रुतगामिनोरसाः मदाय मदार्थं इन्द्रं वावृधुर्वर्धयन्ति । ततः देवासोदेवाः इन्द्रादयः कं सुखकरं त्वां अमृताय अमरणार्थं पपुः पिबन्ति ॥ ८ ॥

अथ नवमी—

आनःसुतासइन्दवःपुनानाधावतारयिम् ।
वृष्टिद्यावोरीत्यापःस्वर्विदः ॥ ९ ॥

आ । नः । सुतासः । इन्दवः । पुनानाः । धावत । रयिम् ।
वृष्टिऽद्यावः । रीतिऽआपः । स्वःऽविदः ॥ ९ ॥

हे सुतासः अभिषूयमाणाः हे इन्दवः दीप्ताः पात्रेषु क्षरन्तोवा हे रीत्यापः यैः पृथिवीं प्रति स्रवणशीलाआपः कृताः तादृशाः हे सोमाः पुनानाः पूयमानाः यूयं नोस्मभ्यं रयिं आधा-

वत आगमयत। कीदृशाः वृष्टिद्यावः वृष्टिभिर्द्यौः यैः क्रियते वृष्ट्यभिमुखद्युलोकवन्तः स्व-र्विदः सर्वस्य लंभकाः ॥ ९ ॥

अथ दशमी—

सोमः पुनान ऊर्मिणाऽव्यो वारं वि धावति।
अग्रे वाचः पवमानः कनिक्रदत् ॥ १० ॥ १० ॥

सोमः। पुनानः। ऊर्मिणा। अव्यः। वारम्। वि। धावति।
अग्रे। वाचः। पवमानः। कनिक्रदत् ॥ १० ॥ १० ॥

पुनानः पूयमानः सोमः ऊर्मिणा स्वीयया धारया अव्यः अवेर्वारं वालं पवित्रं विधावति विविधं गच्छति। कीदृशः पवमानः पूतः वाचः स्तोत्रस्याग्रे कनिक्रदत् पुनःपुनः शब्दं कुर्वन् विधावति ॥ १० ॥

॥ इति सप्तमस्य पञ्चमे दशमोवर्गः ॥ १० ॥

अथैकादशी—

धीभिर्हिन्वन्ति वाजिनं वने क्रीळन्तमत्यविम्।
अभि त्रिपृष्ठं मतयः समस्वरन् ॥ ११ ॥

धीभिः। हिन्वन्ति। वाजिनम्। वने। क्रीळन्तम्। अतिऽअविम्।
अभि। त्रिऽपृष्ठम्। मतयः। सम्। अस्वरन् ॥ ११ ॥

वाजिनं बलवन्तं वननीये वसतीवर्याख्ये उदके क्रीळन्तं संक्रीडमानं अत्यविं अविशब्देन तद्रोमकृतं पवित्रमभिधीयते अतिक्रान्तपवित्रं सोमं ऋत्विजोधीभिः स्तुतिभिः हिन्वन्ति वर्धयन्ति। यद्वा धीभिर्वर्णलोपश्छान्दसः धीतिभिरंगुलीभिः हिन्वन्ति प्रेरयन्ति। हिगतौ वृद्धौच स्वादिः। किंच त्रिपृष्ठं त्रीणि पवित्राणि द्रोणकलशाधवनीयपूतभृदात्मकानि पात्राणि त्रीणि सवनानि वा स्पृशतीति सतथोक्तः तं सोमं मतयः स्तुतयः अभिसमस्वरन् अभितः संस्तुवन्ति ॥ ११ ॥

अथ द्वादशी—

असर्जि कलशाँ अभि मीळ्हे सप्तिर्न वाजयुः।
पुनानो वाचं जनयन्नसिष्यदत् ॥ १२ ॥

असर्जि । कलशान् । अभि । मीळ्हे । सप्तिः । न । वाजऽयुः ।
पुनानः । वाचम् । जनयन् । असिस्यदत् ॥ १२ ॥

वाजयुः यजमानानामन्नमिच्छन् ससोमः कलशानभिलक्ष्य कलशेषु असर्जि सृज्यते । तत्र दृष्टान्तः—सप्तिर्न यथा अश्वोमीळ्हे संग्राममनामैतत्र संग्रामे सृज्यतेतद्वत् । ततः पुनानः पूयमानः सोमः वाचं शब्दं जनयन् उत्पादयन् असिष्यदत् पात्रेषु स्यन्दते ॥ १२ ॥

अथ त्रयोदशी—

पवतेहर्यतोहरिरतिह्वरांसिरंह्या ।
अभ्यर्षन्स्तोतृभ्योवीरवद्यशः ॥ १३ ॥

पवते । हर्यतः । हरिः । अति । ह्वरांसि । रंह्या ।
अभिऽअर्षन् । स्तोतृऽभ्यः । वीरऽवत् । यशः ॥ १३ ॥

हर्यतः स्पृहणीयः हरिर्हरितवर्णः सोमः रंह्या तृतीयाया आकारः साधुवेगेनह्वरांसि कुटिलानि अनृजूनि पवित्राणि अतिपवते अतीत्यगच्छति । किंकुर्वन् स्तोतृभ्यो वीरवत् पुत्रयुक्तं यशः अभ्यर्षन् अभिगमयन् पवते ॥ १३ ॥

अथ चतुर्दशी—

अयापवस्वदेवयुर्मधोर्धाराअसृक्षत ।
रेभन्पवित्रंपर्येषिविश्वतः ॥ १४ ॥ ११ ॥

अया । पवस्व । देवऽयुः । मधोः । धाराः । असृक्षत । रेभन् ।
पवित्रम् । परि । एषि । विश्वतः ॥ १४ ॥ ११ ॥

हे सोम देवयुर्देवान् कामयमानस्त्वं अया अनया धारया पवस्व क्षर । ततः मधोर्मदकरस्य तव धाराआत्मीयाः असृक्षत सृज्यन्ते । अनन्तरं रेभन् शब्दायमानः पवित्रं विश्वतः पर्येषि सर्वतः परिगच्छसि ॥ १४ ॥

॥ इति सप्तमस्य पंचमे एकादशोवर्गः ॥ ११ ॥

परीतइति षड्विंशत्यृचंचतुर्थं सूक्तं ।त्वंसोमासीत्यत्रउक्ताभरद्वाजकश्यपाद्याः सप्तर्षयः।आद्याबृहती द्वितीयासतोबृहती अयमेकः प्रगाथः परिस्रुवानइत्येषा तृतीया एकविंशत्यक्षरा भुरिक्विराट् द्विपदा नृभिर्येमानइति षोडशो विंशत्यक्षराद्विपदाविराट् चतुर्थ्यादिद्वौ प्रगाथौ दशम्यादित्रयः सप्तदश्यादिपंचप्रगाथाः पवमानसोमोदेवता । तथाचानुक्रम्यते—परितः षड्विंशतिः सप्तऋषयः प्रागाथं तृतीयाषोडश्यौ द्विपदे अष्टम्याद्येबृहत्याविति । गतः सूक्तविनियोगः ।

तत्र प्रथमा—

परीतोषिंचतासुतंसोमोयउत्तमंहविः ।
दधन्वाँयोनर्योअप्स्व१न्तरासुषावसोममद्रिभिः ॥ १ ॥

परि । इतः । सिञ्चत । सुतम् । सोमः । यः । उत्ऽतमम् । हविः ।
दधन्वान् । यः । नर्यः । अप्ऽसु । अन्तः । आ । सुसाव ।
सोमम् । अद्रिऽभिः ॥ १ ॥

हेऋत्विजः सुतमभिषुतं सोमं इतः अस्मात्कर्मणऊर्ध्वं अथवा अस्मात् प्रदेशादूर्ध्वं परिषिंचत वसतीवरीभिः । इतोषिंचतेत्यत्र संहितायां छन्दसीति रोरुत्वं । यः सोमः देवानामुत्तमं प्रशस्यं हविर्भवति । आ अपिच नर्योमनुष्यहितोयश्चसोमः अप्सु वसतीवरीषु अन्तरिक्षेवा अन्तर्दधन्वान् गच्छन् भवति तं सोममद्रिभिर्ग्रावभिः अध्वर्युः सुषाव अभिषुतं चकार तं परिषिंचतेति समन्वयः ॥ १ ॥

अथ द्वितीया—

नूनंपुनानोविभिःपरिस्रवादब्धःसुरभिंतरः ।
सुतेचित्त्वाप्सुमदामोअन्धसाश्रीणन्तोगोभिरुत्तरम् ॥ २ ॥

नूनम् । पुनानः । अविऽभिः । परि । स्रव । अदब्धः ।
सुरभिम्ऽतरः । सुते । चित् । त्वा । अप्ऽसु । मदामः । अन्धसा ।
श्रीणन्तः । गोभिः । उत्ऽतरम् ॥ २ ॥

हे सोम अदब्धः कैश्चिदप्यहिंसितः सुरभिन्तरः अत्यन्तं सुगन्धिः त्वं नूनमिदानीं पुनानः पूयमानः सन् अविभिरविवालकृतैः पवित्रैः तेभ्यः परिस्रव परितः क्षर सुतेचित् अभिषुते सति अंधसा सक्तुलक्षणेनान्नेन गोभिर्गोविकारैःक्षीरादिभिः श्रीणन्तः मिश्रयन्तोवयं उत्तरमुद्गततरं अप्सु वसतीवरीषु संस्थितं त्वां मदामः मंदामहे स्तुमः ॥ २ ॥

अथ तृतीया—

परिंसुवानश्चक्षसेदेवमादनःक्रतुरिन्दुर्विचक्षणः ॥ ३ ॥

परिं । सुवानः । चक्षसे । देवऽमादनः । क्रतुः । इन्दुः ।
विऽचक्षणः ॥ ३ ॥

सुवानोभिषूयमाणःसोमः चक्षसे सर्वेषां दर्शनाय परिस्रवति । कीदृशः देवमादनः देवानां तर्पयिता क्रतुः कर्ता इन्दुः पात्रेषु क्षरणशीलः दीप्तोवा विचक्षणः सर्वस्य विद्रष्टा ॥ ३ ॥

अथ चतुर्थी—

पुनानःसोमधारयापोवसानोअर्षसि ।
आरत्नधायोनिमृतस्यसीदस्युत्सोदेवहिरण्ययः ॥ ४॥

पुनानः । सोम । धारया । अपः । वसानः । अर्षसि । आ ।
रत्नऽधाः । योनिम् । ऋतस्य । सीदसि । उत्सः ।
देव । हिरण्ययः ॥ ४ ॥

हे सोम पुनानः पूयमानस्त्वं अपउदकानि वसतीवर्याख्यानि वसानः आच्छादयन् धारया अर्षसि पवित्रं गच्छसि । ततः रत्नधाः रत्नानां दाता त्वं ऋतस्य सत्यभूतस्य यज्ञस्य योनिं स्थानमासीदसि हे देव द्योतमान सोम उत्सः प्रस्यन्दनशीलस्त्वं हिरण्ययः हिरणमयः हिरण्यस्योत्पत्तिस्थानं खलु यद्वा देवानां हितरमणीयोभवसि ॥ ४ ॥

अथ पंचमी—

दुहानऊधर्दिव्यंमधुप्रियंप्रत्नंसधस्थमासदत् ।
आपृच्छ्यंधरुणंवाज्यर्षतिनृभिर्धूतोविचक्षणः ॥५॥१२॥

दुहानः । ऊधः । दिव्यम् । मधु । प्रियम् । प्रत्नम् । सधऽस्थम् ।
आ । असदत् । आऽपृच्छ्यम् । धरुणम् । वाजी । अर्षति ।
नृऽभिः । धूतः । विऽचक्षणः ॥ ५ ॥ १२ ॥

मधु मदकरं प्रियं प्रीणनकारि दिव्यं दिविभवं ऊधः सोमवल्लीलक्षणं दुहानः सोमः प्रत्नं पुरातनं सधस्थं सहतिष्ठन्तं स्थानमन्तरिक्षमासदद आसीदति सदेर्लुङि रूपं । अतः आपृच्छ्यं कर्मण्याप्रष्टव्यं धरुणं कर्मणोधारयितारं यजमानं वाजी अन्नवान् सोमःअर्षति तस्मै अन्नं दातुमभिगच्छति । कीदृशः नृभिः कर्मनेतृभिः ऋत्विग्भिः धूतः अदाभ्यः ग्रहे परिशोधितः । तैरेनं चतुराधूनोति पंचकृत्वः सप्तकृत्वोवेति आपस्तंबेन सूत्रितं । विचक्षणः सर्वस्य विद्रष्टा ॥ ५ ॥

॥ इति सप्तमस्य पंचमे द्वादशोवर्गः ॥ १२ ॥

अथ षष्ठी—

पुनानःसोमजागृविरव्योवारेपरिप्रियः ।
त्वंविप्रोअभवोङ्गिरस्तमोमध्वायज्ञंमिमिक्षनः ॥ ६ ॥

पुनानः । सोम । जागृविः । अव्यः । वारे । परि । प्रियः ।
त्वम् । विप्रः । अभवः । अङ्गिरःऽतमः । मध्वा ।
यज्ञम् । मिमिक्ष । नः ॥ ६ ॥ ॥

हे सोम जागृविर्जागरणशीलः प्रियः प्रीणयिता त्वं पुनानः पूयमानः सन् अव्यः अवेर्वारे वाले पवित्रे परिक्षरसि । किंच विप्रोमेधावी त्वं अंगिरस्तमः अंगिरसां वरिष्ठः पितॄणां नेता अभवोभवसि सत्वं नोस्मदीयं यज्ञं मध्वा मधुना आत्मीयेन रसेन मिमिक्ष सिंच मिहिः सेचनार्थस्य सनि रूपं ॥ ६ ॥

अथ सप्तमी—

सोमोमीढ्वान्पवतेगातुवित्तमऋषिर्विप्रोविचक्षणः ।
त्वंकविरभवोदेववीतमआसूर्यंरोहयोदिवि ॥ ७॥

सोम॑ः । मी॒ढ्वान् । प॒व॒ते॒ । गा॒तु॒वित्ऽत॑मः । ऋषि॑ः । विप्र॑ः ।
वि॒ऽच॒क्ष॒णः । त्वम् । क॒विः । अ॒भ॒वः । दे॒व॒ऽवीत॑मः । आ ।
सूर्य॑म् । रो॒ह॒यः॒ । दि॒वि ॥ ७ ॥

मीढ्वान् कामानां सेक्ता सोमोभवन् पवते क्षरति । कीदृशः गातुवित्तमः अत्यन्तं मार्गस्य लंभकः ऋषिः सर्वस्य प्रदर्शकः विप्रोमेधावी विचक्षणोविद्रष्टा । किंच कविः क्रान्तप्रज्ञस्त्वं देववीतमः अत्यन्तं देवकामो भवोभवसि । अपिच दिवि द्युलोके सूर्यमारोहयः प्रादुर्भावयसि ॥७॥

अथाष्टमी—

सोम॑उषुवा॒णःसो॒तृभि॒रधि॒ष्णुभि॒रवी॑नाम् ।
अश्व॑येवह॒रिता॑याति॒धार॑याम॒न्द्रया॑याति॒धार॑या ॥ ८ ॥

सोम॑ः । ऊँ इति॑ । सु॒वा॒नः । सो॒तृऽभि॑ः । अधि॑ । स्नुऽभि॑ः । अवी॑नाम् ।
अश्व॑याऽइव । ह॒रिता॑ । या॒ति॒ । धार॑या । म॒न्द्रया॑ । या॒ति॒ । धार॑या ॥ ८ ॥

सोतृभिरभिषुण्वद्भिर्ऋत्विग्भिः सुवानोभिषूयमाणः सोमः अवीनां स्नुभिः । मांस्पृत्स्नूनामुपसंख्यानमिति सानुशब्दस्य स्नुभावः समुच्छ्रितैर्वालैः पवित्रैरधियाति अधिकं गच्छति । उइति प्रसिद्धौ । अश्वयेव वडवयेव हरिता हरितवर्णया धारया याति मन्द्रया मदकारिण्या- धारया द्रोणकलशमधिगच्छति ॥ ८ ॥

अथ नवमी—

अ॒नू॒पेगोमा॒न्गोभि॑रक्षा॒ःसोमो॑दु॒ग्धाभि॑रक्षाः ।
स॒मु॒द्रंनसं॒वर॑णान्यग्मन्म॒न्दीमदा॑यतोशते ॥ ९ ॥

अ॒नू॒पे । गोऽमा॑न् । गोभि॑ः । अ॒क्षा॒रि॒ति॑ । सोम॑ः । दु॒ग्धाभि॑ः ।
अ॒क्षा॒रि॒ति॑ । स॒मु॒द्रम् । न । स॒म्ऽवर॑णानि । अ॒ग्म॒न् ।
म॒न्दी । मदा॑य । तो॒श॒ते॒ ॥ ९ ॥

गोमान् गोयुक्तः सोमः अनूपे निम्ने देशे कलशे गोभिर्गोविकारैः क्षीरादिभिः सह अक्षाः क्षरति । तदेवोच्यते ससोमः आत्मनोमिश्रणार्थं दुग्धाभिर्गोभिः सह अक्षाः क्षरति क्षर-

तेर्लुङि रूपं । किंच समुद्रं न यथा समुद्रमुदकानि गच्छन्ति तद्वत्संवरणानि संभजनीयानि रसरूपाण्यन्नानि द्रोणकलशमग्मन् गच्छन्ति गमेर्लुङि च्लेर्लुकि रूपं । किंच मन्दी मदकरः सोमः मदाय मदार्थं तोशते हन्यते अभिषूयते तोशतिर्वधकर्मा ॥ ९ ॥

अथ दशमी—

आसोमसुवानोअद्रिभिस्तिरोवाराण्यव्यया ।
जनोनपुरिचम्वोर्विशद्धरिःसदोवनेषुदधिषे ॥१०॥१३॥

आ । सोम । सुवानः । अद्रिऽभिः । तिरः । वाराणि ।
अव्यया । जनः । न । पुरि । चम्वोः । विशत् । हरिः ।
सदः । वनेषु । दधिषे ॥ १० ॥ १३ ॥

हे सोम अद्रिभिर्ग्रावभिः सुवानोभिषूयमाणस्त्वं अव्यया अविमयानि वाराणि वालानि पवित्राणि तिरस्कुर्वन् व्यवधायकानि कुर्वाणः सन् आपवसे इतिशेषः । हरिर्हरितवर्णः ससोमः चम्वोरधिषवणफलकयोः उपरिस्थिते कलशे विशत् प्रविशति । तत्र दृष्टान्तः—जनोन यथाजनः पुरि पुरे प्रविशति । सत्वं वनेषु काष्ठनिर्मितेषु पात्रेषु सदः स्थानं दधिषे करोषि ॥ १० ॥

॥ इति सप्तमस्य पञ्चमे त्रयोदशोवर्गः ॥१३॥

अथैकादशी—

समामृजेतिरोअण्वानिमेष्योमीळ्हेसप्तिर्नवाजयुः ।
अनुमाद्यःपवमानोमनीषिभिःसोमोविप्रेभिर्ऋक्वभिः ॥११॥

सः । मम्टजे । तिरः । अण्वानि । मेष्यः । मीळ्हे । सप्तिः ।
न । वाजऽयुः । अनुऽमाद्यः । पवमानः । मनीषिऽभिः ।
सोमः । विप्रेभिः । ऋक्वऽभिः ॥ ११ ॥

वाजयुरन्नकामः अण्वानि अणूनि सूक्ष्माणि मेष्यः मेष्याःअवेः रोमाणि पवित्राणि तिरस्कुर्वन् व्यवधायकानि कुर्वाणः सन् आपवसे इतिशेषः।हरिर्हरितवर्णः ससोमः मम्टजे परिशोध्यते अलंक्रियतेवा । तत्र दृष्टान्तः—सप्तिर्न यथा जयकामैः अश्वोमीळ्हे संग्रामे अलंक्रियते ।

कीदृशः अनुमाद्यः अनुमोदनीयः सर्वैः पवमानः मनीषिभिः ऋत्विग्भिः पूयमानः तथा ऋक्भिःछन्दसि वनिपाविति वनिप् स्तुतिमद्भिः विप्रैर्मेधाविभिः अभिष्टुतः मृज्यते ॥ ११ ॥

अथ द्वादशी—

प्रसोमदेववीतयेसिन्धुर्नपिप्ये अर्णसा ।
अंशोःपयसामदिरोनजागृविरच्छाकोशंमधुश्चुतम् ॥१२॥

प्र । सोम । देवऽवीतये । सिन्धुः । न । पिप्ये । अर्णसा ।
अंशोः । पयसा । मदिरः । न । जागृविः । अच्छ ।
कोशम् । मधुऽश्चुतम् ॥ १२ ॥

हे सोम देववीतये देवानां पानाय तदर्थं अर्णसा वसतीवर्याख्येनोदकेन प्रपिप्ये प्रप्यायसे। तत्रदृष्टान्तः—सिन्धुर्न यथा सिन्धुरुदकेनप्रपिप्ये प्रप्यायते तद्वत्। प्यायतेर्लिटि लिड्यङोश्चेति पीभावः। ततः सत्वं मदिरोन मदकरः सुरादिरिव जागृविर्जागरणशीलः यद्वा नः संप्रत्यर्थे इदानीं मदकरोजागरणशीलस्त्वं अंशोः लताखंडस्य पयसा रसेन मधुश्चुतं रसस्य क्षारयितारं कोशं द्रोणकलशं अच्छाभिगच्छसि ॥ १२ ॥

अथ त्रयोदशी—

आहर्यतोअर्जुनेअत्केअव्यतप्रियःसूनुर्नमर्ज्यः ।
तमींहिन्वन्त्यपसोयथारथंनदीष्वागभस्त्योः ॥ १३ ॥

आ । हर्यतः । अर्जुने । अत्के । अव्यत । प्रियः । सूनुः ।
न । मर्ज्यः । तम् । ईम् । हिन्वन्ति । अपसः । यथा । रथम् ।
नदीषु । आ । गभस्त्योः ॥ १३ ॥

हर्यतः स्पृहणीयः प्रियः प्रीणयितासूनुर्न सूनुरिव मर्ज्योमार्जनीयः सोमः अर्जुने अर्जुनवर्णे अत्के रूपे पवित्रे आव्यत आवृणोति तमीमेनं सोमं अंगुलयः नदीषु नदमानासु वसतीवरीषु गभस्त्योर्बाह्वोराभिमुख्येन हिन्वन्ति प्रेरयन्ति । तत्र दृष्टान्तः—अपसो यथा वेगवन्तोजना रथं संग्रामेषु प्रेरयन्ति तद्वत् ॥१३॥

अथ चतुर्दशी—

अभिसोमासआयवःपवन्तेमद्यंमदम् ।
समुद्रस्याधिविष्टपिमनीषिणोमत्सरासःस्वर्विदः ॥ १४ ॥

अभि । सोमासः । आयवः । पवन्ते । मद्यम् । मदम् । समुद्रस्य ।
अधि । विष्टपि । मनीषिणः । मत्सरासः । स्वःऽविदः ॥ १४ ॥

आयवः गमनशीलाः सोमासः सोमाः मद्यं मदकरं मदंआत्मीयं रसं ग्रामेषु प्रेरयन्ति अभिपवन्ते अभितोनिर्गमयन्ति । कुत्रेत्युच्यते—समुद्रस्य अन्तरिक्षस्य अधि विष्टपि अधिकं समुच्छ्रिते पवित्रे यद्वा समुद्रस्य यस्मात्समुद्रवन्ति रसास्तस्य कलशस्य अधिउपरि विष्टपि स्थाने पवित्रे निर्गमयन्ति । कीदृशाः मनीषिणः मनसईशितारः मत्सरासः मदकराः स्वर्विदः सर्वस्य लंभकाः ॥ १४ ॥

अथ पञ्चदशी—

तरत्समुद्रंपवमानऊर्मिणाराजादेवऋतंबृहत् ।
अर्षन्मित्रस्यवरुणस्यधर्मणाप्रहिन्वानऋतंबृहत् ॥ १५॥१४॥

तरत् । समुद्रम् । पवमानः । ऊर्मिणा । राजा । देवः ।
ऋतम् । बृहत् । अर्षन् । मित्रस्य । वरुणस्य । धर्मणा ।
प्र । हिन्वानः । ऋतम् । बृहत् ॥ १५ ॥ १४ ॥

पवमानः पूयमानः देवोद्योतमानः बृहत् अत्यन्तं ऋतं सत्यभूतं राजा सोमः समुद्रमन्तरिक्षं कलशंवा ऊर्मिणा धारया तरत् तरति । हिन्वानः प्रेर्यमाणः ऋतं बृहत् अत्यन्तं सत्यभूतः ससोमः मित्रस्य वरुणस्य मित्रावरुणयोः धर्मणा धारणार्थं प्रार्षन् प्रगच्छति ॥ १५ ॥

॥ इति सप्तमस्य पंचमे चतुर्दशोवर्गः ॥ १४ ॥

अथ षोडशी—

नृभिर्येमानोहर्यतोविचक्षणोराजादेवःसमुद्रियः ॥ १६ ॥

अथैकोनविंशी—

तवाहंसोमरारणसख्यइन्दोदिवेदिवे ।
पुरूणिबभ्रोनिचरन्तिमामवपरिधींरतिताँइहि ॥ १९ ॥

तव । अहम् । सोम । ररण । सख्ये । इन्दो इति । दिवेऽदिवे ।
पुरूणि । बभ्रो इति । नि । चरन्ति । माम् । अव ।
परिऽधीन् । अति । तान् । इहि ॥ १९ ॥

हे इन्दो हे सोम तव सख्ये सखिकर्मण्यहं दिवेदिवे अन्वहं रारण रमे रणेर्लिटउत्तमे णलि रूपं । हे बभ्रो बभ्रुवर्ण सोम पुरूणि बहूनि रक्षांसि मां तव सख्ये स्थितं न्यवचरन्ति नीचीनं चरन्ति बाधन्ते ये मां बाधन्ते तान् परिधीन् राक्षसांस्त्वं अतीहि अतीत्य गच्छ जहीति यावत् ॥१९॥

अथ विंशी—

उताहंनक्तमुतसोमतेदिवासख्यायबभ्रऊधनि ।
घृणातपन्तमतिसूर्यंपरःशकुनाइवपप्तिम ॥ २० ॥ १५ ॥

उत । अहम् । नक्तम् । उत । सोम । ते । दिवा । सख्याय ।
बभ्रो इति । ऊधनि । घृणा । तपन्तम् । अति । सूर्यम् ।
परः । शकुनाःऽइव । पप्तिम । २० ॥ १५ ॥

हे बभ्रो बभ्रुवर्ण हे सोम उतापिच नक्तं उतापिच दिवा अहोरात्रयोः सख्याय सख्यार्थं तव ऊधनि समीपे अहं रमइति शेषः । ते वयं घृणा दीप्त्या तपन्तं ज्वलन्तं परः परमस्थानस्थितं सूर्यं तदात्मकं त्वां प्राप्तुं अतिपप्तिम । कथमिव शकुनाइव यथा सुपर्णादयः पक्षिणः सूर्यं अतिगच्छन्ति तद्वत् पतॢगतौ अस्माच्छान्दसे लिटि तनिपत्योश्छन्दसीत्युपधालोपः ॥ २० ॥

॥ इति सप्तमस्य पंचमे पंचदशोवर्गः ॥ १५ ॥

ग्रावस्तोत्रेभिरूपकरणे सोमेमृज्यामनेएकस्तृचः तत्र मृज्यमानइत्येषा तृतीया । सूत्रितंच—मृज्यमानःसुहस्त्यादशभिर्विवस्वतइति ।

सैषा सूक्ते एकविंशी—

मृज्यमानःसुहस्त्यसमुद्रेवाचमिन्वसि ।
रयिंपिशङ्गंबहुलंपुरुस्पृहंपवमानाभ्यर्षसि ॥ २१ ॥

मृज्यमानः । सुऽहस्त्य । समुद्रे । वाचम् । इन्वसि । रयिम् ।
पिशङ्गम् । बहुलम् । पुरुऽस्पृहम् । पवमान । अभि । अर्षसि ॥२१॥

हे सुहस्त्य हस्ते भवाहस्त्या अंगुलयः शोभनांगुलिक सोम मृज्यमानः शोध्यमानस्त्वं समुद्रेन्तरिक्षे कलशे वा वाचं शब्दमिन्वसि प्रेरयसि । किंच हे पवमान पूयमान सोम पिशंगं हिरण्यैः पिशंगवर्णं बहुलं प्रभूतं पुरुस्पृहं बहुभिः स्पृहणीयं रयिं धनं अभ्यर्षसि स्तोतॄणांअभिक्षरसि प्रयच्छसि ॥ २१ ॥

अथ द्वाविंशी—

मृजानोवारेपवमानोअव्ययेवृषावचक्रदोवने ।
देवानांसोमपवमाननिष्कृतंगोभिरञ्जानोअर्षसि ॥ २२ ॥

मृजानः । वारे । पवमानः । अव्यये । वृषा । अव । चक्रदः । वने ।
देवानाम् । सोम । पवमान । निःऽकृतम् । गोभिः ।
अञ्जानः । अर्षसि ॥ २२ ॥

हे सोम वृषा वर्षिता त्वं मृजानः वसतीवरीभिर्मृज्यमानः अलंक्रियमाणः अव्यये अविमये वारे वाले पवित्रे पवमानः पूयमानः सन् वने वननीये उदके काष्ठे कलशेवा अवचक्रदः अवक्रन्दसि शब्दायसे । ततो हे सोम हे पवमान त्वं गोभिर्गव्यैः क्षीरादिभिः अंजानःअज्यमानः सन् निःकृतं संस्कृतं देवानां स्थानं अर्षसि गच्छसि ॥ २२ ॥

अथ त्रयोविंशी—

पवस्ववाजसातयेभिविश्वानिकाव्या ।
त्वंसमुद्रंप्रथमोविधारयोदेवेभ्यःसोममत्सरः ॥ २३ ॥

पवस्व । वाजऽसातये । अभि । विश्वानि । काव्या । त्वम् ।
समुद्रम् । प्रथमः । वि । धारयः । देवेभ्यः । सोम । मत्सरः ॥ २३ ॥

हे सोम विश्वानि सर्वाणि काव्या कविकर्माणि स्तोत्राणि अभिलक्ष्य वाजसातये अन्नलाभाय पवस्व क्षर । हे सोम देवेभ्यः देवानां मत्सरोमदकरः प्रथमः सर्वदेवानां मुख्यः त्वं समुद्रं अन्तरिक्षं कलशं वा विधारयः विशेषेण धारयसि ॥ २३ ॥

अथ चतुर्विंशी—

सतूपवस्वपरिपार्थिवंरजोदिव्याचसोमधर्मभिः ।
त्वांविप्रासोमतिभिर्विचक्षणशुभ्रंहिन्वन्तिधीतिभिः॥२४

सः । तु । पवस्व । परि । पार्थिवम् । रजः । दिव्या ।
च । सोम । धर्मऽभिः । त्वाम् । विप्रासः । मतिऽभिः । विऽचक्षण ।
शुभ्रम् । हिन्वन्ति । धीतिऽभिः ॥ २४ ॥

हे सोम सतादृशस्त्वं पार्थिवं रजोलोकं प्रति दिव्या दिव्यानि च रक्षांसि प्रति धर्मभिर्धारकैः सह तुक्षिप्रं परिपवस्व परितः क्षर । हे विचक्षण विद्रष्टः सोम विप्रासोविप्रामेधाविनोमतिभिः स्तुतिभिः धीतिभिरंगुलीभिश्च शुभ्रं श्वेतवर्णं त्वां हिन्वन्ति प्रेरयन्ति ॥२४ ॥

अथ पंचविंशी—

पवमानाअसृक्षतपवित्रमतिधारया ।
मरुत्वन्तोमत्सराइन्द्रियाहयामेधामभिप्रयांसिच ॥२५॥

पवमानाः । असृक्षत । पवित्रम् । अति । धारया । मरुत्वन्तः ।
मत्सराः । इन्द्रियाः । हयाः । मेधाम् । अभि । प्रयांसि । च ॥२५॥

पवमानाः पूयमानाः सोमाः धारया आत्मीयया पवित्रं अतीत्यासृक्षत सृज्यन्ते । कीदृशामरुत्वन्तः मरुद्भिर्युक्तामत्सराः मदकराः इन्द्रियाः इन्द्रजुष्टाः मेधां स्तुतिं प्रयांस्यन्नानिच अभिलक्ष्य स्तोतृभ्यउभयं कर्तुं वा हयाः गन्तारः एते सृज्यन्ते ॥ २५ ॥

अथ षड्विंशी—

अपो॒वसा॑नः॒परि॒कोश॑मर्ष॒तीन्दु॑र्हिया॒नःसो॒तृभिः॑ ।
ज॒नय॒ञ्ज्योति॑र्म॒न्दना॑अवीवश॒द्गाःकृ॑ण्वा॒नोननि॒र्णिज॑म् ॥ २६ ॥ १६ ॥

अ॒पः । वसा॑नः । परि॑ । कोश॑म् । अ॒र्ष॒ति॒ । इन्दुः॑ । हि॒या॒नः ।
सो॒तृऽभिः॑ । ज॒नय॑न् । ज्योतिः॑ । म॒न्दनाः॑ । अ॒वी॒व॒श॒त् । गाः ।
कृ॒ण्वा॒नः । न । नि॒ःऽनिज॑म् ॥ २६ ॥ १६ ॥

अपोवसतीवरीर्वसानआच्छादयन् सोतृभिरभिषुण्वद्भिर्हियानः प्रेर्यमाणइन्दुः सोमः कोशं कलशं पर्यर्षति प्रतिगच्छति । किंच ज्योतिर्दीप्तिं जनयन् उत्पादयन् गाः गव्यानि क्षीरादीनि निर्णिजं आत्मानं रूपं कृण्वानः कुर्वन् मिश्रयन् सोयं सोमः नः संप्रत्यर्थे इदानीं मन्दानाः स्तुतीः अवीवशत् कामयते । वशकान्तौ लुङि चङि रूपं ॥ २६ ॥

॥ इति सप्तमस्य पंचमे षोडशोवर्गः ॥ १६ ॥

पवस्वेति षोडशर्चं पंचमं सूक्तं । आद्यद्वृचस्य गौरिवीतिर्नामशक्तिपुत्रऋषिः तृतीयायाः शक्तिर्नामवासिष्ठः ततः पंचानां द्वृचानां ऊरुर्नामांगिरसः ऋजिश्वानाम भारद्वाजः ऊर्ध्वसद्मानामांगिरसः कृतयशानामकश्चित् सोप्यांगिरसः ऋणंचयोनामराजर्षिः इत्येते क्रमेण ऋषयः । एवं त्रयोदशगताः । ततस्तिसृणां वासिष्ठः शक्तिः प्रथमातृतीयाद्ययुजः ककुभः द्वितीयाचतुर्थ्याद्यायुजः सतोबृहत्यः । ससुन्वेयोवसूनामित्येषातु यवमध्या गायत्री । पवमानः सोमोदेवता । तथाचानुक्रम्यते—पवस्वषोळशगौरिवीति द्वृचं शक्तिरेकामूरुर्ऋजिश्वोर्ध्वसद्माकृतयशाऋणंचयइत्यृषयोद्वृचास्तिस्रः शक्तिः काकुभाः प्रगाथाः ससुन्वे गायत्रीयवमध्येति । गतोविनियोगः ।

तत्र प्रथमा—

पव॑स्व॒मधु॑मत्तम॒इन्द्रा॑यसोमक्रतु॒वित्त॑मो॒मदः॑ । महि॑द्यु॒क्षत॑मो॒मदः॑ ॥ १ ॥

पव॑स्व । मधु॑मत्ऽतमः । इन्द्रा॑य । सो॒म॒ । क्र॒तु॒वित्ऽत॑मः ।
मदः॑ । महि॑ । द्यु॒क्षऽत॑मः । मदः॑ ॥ १ ॥

हे सोम मधुमत्तमः अत्यन्तं माधुर्योपेतः त्वं इन्द्राय इन्द्रार्थं मदोमदकरः सन् पवस्व क्षर। कोदृशः क्रतुवित्तमः अत्यन्तं प्रज्ञायाः कर्मणोवा लंभकः महि महान् मंहनीयोवा द्युक्षतमः अत्यन्तं दीप्तः मदः मदहेतुः ॥ १ ॥

अथ द्वितीया—

यस्यंतेपीत्वावृंषभोवृंषायतेस्यपीतास्वर्विदः ।
ससुप्रकेतोअभ्यंक्रमीदिषोच्छावाजंनैतंशः ॥ २ ॥

यस्यं । ते । पीत्वा । वृषभः । वृषऽयते । अस्य । पीता । स्वःऽविदः । सः । सुऽप्रकेतः । अभि । अक्रमीत् । इषः । अच्छं । वाजंम् । न । एतंशः ॥ २ ॥

वृषभः कामानां वर्षकइन्द्रः यस्य ते त्वां पीत्वा वृषायते वृषभइवाचरति। किंच स्वर्विदः सर्वस्य दर्शकस्यास्य ते तव पीता पानेसति सुप्रकेतः सुप्रज्ञः सइन्द्रः इषः शत्रूणामन्नानि अभ्यक्रमीत् अभिक्रामति। तत्र दृष्टान्तः—वाजं नैतशः एतशः इत्यश्वनाम यथाश्वोवाजं संग्रामं अभिगच्छति तद्वत् ॥ २ ॥

अथ तृतीया—

त्वंह्यं१ङ्गदैव्यापवंमानजनिमानिद्युमत्तंमः ।
अमृतत्वायंघोषयंः ॥ ३ ॥

त्वम् । हि । अङ्ग । दैव्यां । पवंमान । जनिमानि । द्युमत्ऽतंमः । अमृतऽत्वायं । घोषयंः ॥ ३ ॥

हे पवमान पूयमान सोम द्युमत्तमः अतिशयेन दीप्तिमान् त्वं हि त्वमेव दैव्या देवसंबन्धीनि जनिमानि जन्मानि देवानित्यर्थः तानभिलक्ष्य अमृतत्वाय तेषाममरणाय अंग क्षिप्रं घोषयः शब्दायसे। घुषिरविशब्दने ण्यन्तस्य लेटि रूपं हियोगादनिघातः ॥ ३ ॥

अथ चतुर्थी—

येनानवंग्वोदध्यङ्ङंपोर्णुतेयेनविप्रांसआपिरे ।
देवानांसुम्नेअमृतंस्यचारुंणोयेनश्रवांस्यानशुः ॥ ४ ॥

येन॑ । नव॑ऽग्वः । द॒ध्यङ् । अ॒प॒ऽऊ॒र्णु॒ते । येन॑ । विप्रा॑सः ।
आ॒पि॒रे । दे॒वाना॑म् । सु॒म्ने । अ॒मृत॑स्य । चारु॑णः । येन॑ ।
श्रवां॑सि । आ॒न॒शुः ॥ ४ ॥

नवग्वोनवनीयगतिः यद्वा नवभिर्मासैः सत्रस्यानुष्ठाता दध्यङ् एतन्नामकोंगिरा येन सोमेन पणिभिरपहृतानां गवां द्वारमपोर्णुते अपाच्छादयति विवृतमकार्षीत् विप्रासः तन्मुखाः सर्वे मेधाविनोंगिरसः येनवा सोमेनापिरे एतैरपहृतागाः आप्नुवन् । किंच देवानामिन्द्रादीनां सुम्ने सुखे यज्ञेन संजाते सति चारुणः कल्याणस्य अमृतस्योदकस्य संबन्धीनि श्रवांस्यन्नानि येन सोमेन यजमानाः आनशुः अन्नानिव्याप्नुवन् अलभन्त सत्वं देवानाममृतत्वाय शब्दायसइति पूर्वेण समन्वयः ॥ ४ ॥

अथ पञ्चमी—

ए॒षस्यधार॑यासु॒तोऽव्यो॒वारे॑भिः॒पवते॒म॒दिन्त॑मः ।
क्रीळ॑न्नू॒र्मिर॒पामि॑व ॥ ५ ॥ १७ ॥

ए॒षः । स्यः । धार॑या । सु॒तः । अव्यः॑ । वारे॑भिः । प॒व॒ते ।
म॒दि॒न्ऽत॑मः । क्रीळ॑न् । ऊ॒र्मिः । अ॒पाम्ऽइ॑व ॥ ५ ॥ १७ ॥

स्यः सएषसुतोभिषुतः सोमः अव्यः अवेर्वारेभिर्वालैः तेभ्यः पवित्रेभ्यः धारया आत्मीयया पवते कलशमभिलक्ष्य क्षरति। कीदृशः मदिन्तमः मादयितृतमः अपामिव उदकानां ऊर्मिः संघातइव क्रीळन् इतस्ततः संक्रीडमानः पवते ॥ ५ ॥

॥ इति सप्तमस्य पञ्चमे सप्तदशोवर्गः ॥ १७ ॥

अथ षष्ठी—

यउ॒स्रिया॒अप्या॒अन्तरश्म॑नो॒निर्गा॒अकृ॑न्त॒दोज॑सा ।
अ॒भिव्र॒जंत॑त्नि॒षेगव्य॒मश्व्यं॑व॒र्मीवधृष्ण॒वारु॑ज ॥ ६ ॥

यः । उ॒स्रियाः॑ । अप्याः॑ । अ॒न्तः । अश्म॑नः । निः । गाः ।
अकृ॑न्तत् । ओज॑सा । अ॒भि । व्र॒जम् । त॒त्नि॒षे । गव्य॑म् ।
अश्व्य॑म् । व॒र्मीऽइ॑व । धृ॒ष्णो॒ इति॑ । आ । रु॒ज ॥ ६ ॥

यः सोमः उस्रियाः उत्सरणशीलाः अप्याः अपइत्यन्तरिक्षनाम तस्माद्भवेश्छन्दसीति यत् अन्तरिक्षस्थाः अहिप्रभृतिभिरसुरैः अपहृत्य निहितागाः अपः अश्मनः मेघनामैतत् मेघा-दन्तः ओजसा बलेन निरक्तंतत् निरच्छिनत् अन्तरिक्षाद्वृष्टिमकार्षीदित्यर्थः। सत्वं असुरैरपहृतं गव्यं गोसंबन्धिनं अश्व्यं अश्वेषु भवं व्रजं समूहं अभितत्निषे अभितोव्याप्नोषि तनुविस्तारे छान्दसे लिटि तनिपत्योश्छन्दसीत्युपधालोपः। किंच हे धृष्णो शत्रुधर्षणशील सोम सत्वं वर्मीव कवचीव शूरः आरुज असुरानाजहि ॥ ६ ॥

अथ सप्तमी–

आसो॑ता॒परि॑षिञ्च॒ताश्वं॒नस्तोम॑म॒प्तुरं॒रज॒स्तुर॑म्। व॒न॒क्र॒क्षमु॑द॒प्रुत॑म्॥७॥

आ। सो॒त॒। परि॑। सि॒ञ्च॒त॒। अश्व॑म्। न। स्तोम॑म्। अ॒प्ऽतुर॑म्। र॒जः॒ऽतुर॑म्। व॒न॒ऽक्र॒क्षम्। उ॒द॒ऽप्रुत॑म्॥ ७ ॥

हे ऋत्विजः आसोत सोममभिषुणुत षुञ् अभिषवे लोटि छान्दसोविकरणस्य लुक् तप्तनप्तनथनाश्चेति तस्यतबादेशः। किंच परिषिंचत परितस्तं वसतीवर्यादिभिः सिंचत। कीदृशं अश्वंन अश्वमिव वेगिनं स्तोमं स्तव्यं अप्तुरं अन्तरिक्षस्थितानामुदकानांप्रेरकं रजस्तुरं तेजसांच प्रेरकं वनक्रक्षं उदकानां वर्षकं यद्वा काष्ठेषु पात्रेषु विप्रकीर्णं उदप्रुतं उदके गच्छन्तं प्लवमानं सोममभिषुणुत अभिषिंचत ॥ ७ ॥

अथाष्टमी–

स॒हस्र॑धारं॒वृष॒भंप॑यो॒वृधं॑प्रि॒यंदे॒वाय॒जन्म॑ने।
ऋ॒तेन॒यऋ॒तजा॑तोविवावृ॒धेराजा॑दे॒वऋ॒तंबृ॒हत्॥ ८ ॥

स॒हस्र॑ऽधारम्। वृ॒ष॒भम्। प॒यः॒ऽवृध॑म्। प्रि॒यम्। दे॒वाय॑। जन्म॑ने। ऋ॒तेन॑। यः। ऋ॒तऽजा॑तः। वि॒ऽव॒वृ॒धे। राजा॑। दे॒वः। ऋ॒तम्। बृ॒हत्॥ ८ ॥

सहस्रधारं बहुधारोपेतं वृषभं कामानां वर्षकं पयोवृधं उदकानां वर्धकं प्रियं प्रीण-यितारं तं सोमं देवाय देवसंबन्धिने जन्मने देवेभ्यस्तदर्थं अभिषुणुत ऋतजातः उदकाज्जातो-योराजा सोमः ऋतेन वसतीवर्याख्येनोदकेन विववृधे विशेषेण वर्धते। कीदृशः देवोद्योतमानः स्तोतव्योवा ऋतं सत्यभूतः सन् बृहत् महान्तमाप्नुनुतेति पूर्वेण समन्वयः ॥ ८ ॥

अथ नवमी—

अभिद्युम्नंबृहद्यशइषस्पतेदिदीहिदेवदेवयुः । विकोशंमध्यमंयुव ॥९॥

अभि । द्युम्नम् । बृहत् । यशः । इषः । पते । दिदीहि ।
देव । देवऽयुः । वि । कोशम् । मध्यमम् । युव ॥ ९ ॥

हे इषस्पते अन्नस्य पते हे देव स्तोतव्य सोम देवयुः देवकामस्त्वं द्युम्नं द्योतमानं बृहत् प्रभूतं यशोन्नं अस्मभ्यमभिदीदिहि आभिमुख्येन प्रकाशय प्रयच्छेत्यर्थः । आमंत्रितस्याविद्यमानत्वेन पादादित्वादनिघातः । किंच मध्यमं अन्तरिक्षस्थितं कोशं मेघं वियुववृष्ट्यर्थंविगमय विश्लेषय ॥ ९ ॥

अथ दशमी—

आवच्यस्वसुदक्षचम्वोःसुतोविशांवह्निर्नविश्पतिः ।
वृष्टिंदिवःपवस्वरीतिमपांजिन्वागविष्टयेधियः॥१०॥१८॥

आ । वच्यस्व । सुऽदक्ष । चम्वोः । सुतः । विशाम् । वह्निः । न । विश्पतिः ।
वृष्टिम् । दिवः । पवस्व । रीतिम् । अपाम् । जिन्व ।
गोऽइष्टये । धियः ॥ १० ॥ १८ ॥

हे सुदक्ष सुबल सोम चम्वोरधिषवणफलकयोः सुतोभिषुतस्त्वं विशां प्रजानां वह्निर्वोढा विश्पतीराजेव सर्वासां प्रजानां वोढा त्वं आवच्यस्व आगच्छ कलशमापवस्व । वचेर्गत्यर्थस्य व्यत्ययेन श्यनि रूपं । किंच त्वं वृष्टिंवृष्यमाणामपामुदकानां रीतिं गतिं दिवोद्युलोकात् पवस्व कुरु । ततः गविष्टये गामात्मनइच्छते यजमानाय धियः कर्माणि जिन्व पूरय ॥ १० ॥

॥ इति सप्तमस्य पंचमेष्टादशोवर्गः ॥ १८ ॥

अथैकादशी—

एतमुत्यंमदच्युतंसहस्रधारंवृषभंदिवोदुहुः ।
विश्वावसूनिबिभ्रतम् ॥ ११ ॥

एतम् । ऊँ इति॑ । त्यम् । मदऽच्युत॑म् । सहस्र॑ऽधारम् । वृष॒भम् ।
दिवः॑ । दुहुः । विश्वा॑ । वसू॑नि । बिभ्र॑तम् ॥ ११ ॥

दिवः देवान् कामयमानाऋत्विजः एतं त्यं तमिमं सोममेव दुहुः दुदुहुः दुहन्ति । ग्रावाणोवत्साऋत्विजोदुहन्तीतितैत्तिरीयकब्राह्मणं[1] । कीदृशं सोमं मदच्युतं मदस्य प्रेरकं सहस्रधारं बहुधारं वृषभं कामानां वर्षकं विश्वा सर्वाणि वसूनि धनानि बिभ्रतं धारयन्तं सोमं दुहन्ति ॥ ११ ॥

अथ द्वादशी—

वृषा॒विज॑ज्ञेज॒नय॒न्नम॑र्त्यः॑प्र॒तप॒ञ्ज्योति॑षा॒तमः॑ ।
ससुष्टु॑तःक॒विभि॑र्नि॒र्णिजं॑दधेत्रि॒धात्व॑स्य॒दंस॑सा ॥ १२ ॥

वृषा॑ । वि । ज॒ज्ञे । ज॒नय॑न् । अम॑र्त्यः । प्र॒ऽतप॑न् । ज्योति॑षा ।
तमः॑ । सः । सुऽस्तु॑तः । क॒विऽभिः॑ । नि॒ःऽनिज॑म् । द॒धे ।
त्रि॒ऽधातु॑ । अ॒स्य॒ । दंस॑सा ॥ १२ ॥

वृषा कामानां वर्षकः अमर्त्योमनुष्यधर्मरहितः सोमः विजज्ञे विज्ञायते । किंकुर्वन् जनयन् शब्दं ज्योतिर्वा उत्पादयन् ज्योतिषा स्वीयेन तमः प्रतपन् प्रज्वलयन् विनाशयन् प्रादुर्भवति । ततः कविभिर्मेधाविभिः स्तोतृभिः सुष्टुतः ससोमः निर्णिजं निर्णेजनहेतुं मिश्रणं गव्यं दधे धारयति । अथ त्रिधातु त्रिषु सवनेषु देवानां पोषकं यद्वा त्रयः सोमधारकाः द्रोणकलशादयः यस्मिन् तद्यज्ञार्थं कर्म अस्य सोमस्य दंससा कर्मणा ध्रियते खलु ॥ १२ ॥

अथ त्रयोदशी—

ससु॒न्वेयोवसू॑नां॒योरा॒यामा॑ने॒ताय‌इळा॑नाम् । सोमो॒यःसु॑क्षिती॒नाम् ॥ १३ ॥

सः । सु॒न्वे । यः । वसू॑नाम् । यः । रा॒याम् । आ॒ऽने॒ता । यः ।
इळा॑नाम् । सोमः॑ । यः । सु॒ऽक्षि॒ती॒नाम् ॥ १३ ॥

---

१ तै० सं० ६. २. ११. ।

ससोमः सुन्वे अभिसुषुवे ऋत्विग्भिः । यः सोमः वसूनां धनानां आनेता यश्च रायां रांति प्र-
यच्छन्ति क्षीरादिकमिति रायोगावः तेषामानेता यश्च इळानामन्नानां च यश्च सोमः सुक्षितीनां
सुनिवासानां शोभनमनुष्ययुक्तानां गृहाणां आनेता विद्यते सोभिषूतोभूदिति ॥ १३ ॥

अथ चतुर्दशी–

**यस्यंनइन्द्रःपिबाद्यस्यंमरुतोयस्यंवार्यमणाभगः ।**
**आयेनंमित्रावरुणाकरांमहएन्द्रमवसेमहे ॥ १४ ॥**

यस्यं । नः । इन्द्रः । पिबांत् । यस्यं । मरुतंः । यस्यं । वा ।
अर्यमणां । भगः । आ । येनं । मित्रावरुणा । करांमहे ।
आ । इन्द्रम् । अवंसे । महे ॥ १४ ॥

नोस्मदीयं यस्य यं सोमं इन्द्रः पिबात् पिबति । पा पाने लेटचडागमः । यंच सोमं मरुतः
पिबन्ति वा । अपिच अर्यमणा एतन्नामकेन देवेन सह भगोदेवोयं सोमं पिबति । येन सोमेन
मित्रावरुणा मित्रावरुणौ वयमाकरामहे अभिमुखीकुर्महे । तथा महे महते अवसे रक्षणाय येन
च सोमेन इन्द्रमभिमुखीकुर्महे ससोमोभिषूयते ॥ १४ ॥

अथ पंचदशी–

**इन्द्रांयसोमपातंवेनृभिर्यतःस्वांयुधोमदिन्तंमः ।**
**पवंस्वमधुंमत्तमः ॥ १५ ॥**

इन्द्रांय । सोम । पातंवे । नृऽभिः । यतः । सुऽआयुधः ।
मदिन्ऽतंमः । पवंस्व । मधुंमत्ऽतमः ॥ १५ ॥

हे सोम मधुमत्तमः अतिशयेन माधुर्योपेतस्त्वं इन्द्राय पातवे पानार्थं पवस्व कलशे क्षर ।
कीदृशः नृभिः कर्मनेतृभिर्ऋत्विग्भिः यतः संयतः स्वायुधः शोभनस्फ्यकपालाद्यायुधोपेतः म-
दिन्तमः मादयितृतमः ॥ १५॥

अथ षोडशी–

**इन्द्रंस्यहार्दिसोमधानमाविंशसमुद्रमिंवसिन्धंवः ।**
**जुष्टोमित्रायवरुणायवायवेंदिवोविष्टंभउत्तमः ॥१६॥१९॥**

इन्द्रस्य । हार्दि । सोमऽधानम् । आ । विश । समुद्रम्ऽइव ।
सिन्धवः । जुष्टः । मित्राय । वरुणाय । वायवे । दिवः ।
विष्टम्भः । उत्ऽतमः ॥ १६ ॥ १९ ॥

हे सोम त्वमिन्द्रस्य हार्दि हृदयंगमं हृदयभूतंवा सोमधानं सोमोनिधीयतेस्मिन्निति सोमधानः कलशः तमाविश प्रविश । तत्र दृष्टान्तः—समुद्रमिव यथा समुद्रं सिन्धवोनद्यः प्रविशन्ति तद्वत् । कीदृशः त्वं मित्राय वरुणाय वायवे तेभ्यो जुष्टः दिवोद्युलोकस्य विष्टंभः विष्टंभयिता स्थापयिता उत्तमः सर्वेषामुत्कृष्टतमः त्वं कलशमाविश ॥ १६ ॥

॥ इति सप्तमस्य पंचमे एकोनविंशोवर्गः ॥ १९ ॥

परिप्रेति द्वाविंशत्यृचं द्वैपदं षष्ठं सूक्तं यज्ञे सदस्यवस्थितहोत्रीयादिधिष्ण्योपेताअग्नयोनामईश्वरपुत्राऋषयः विंशतिकाद्विपदाविराजः पवमानःसोमोदेवता । तथाचानुक्रान्तं—परिप्रद्व्यधिकाग्नयोधिष्ण्याऐश्वराद्वैपदमिति । गतोविनियोगः ।

तत्र प्रथमा—

परिप्रधन्वेन्द्रायसोमस्वादुर्मित्रायपूष्णेभगाय ॥ १ ॥

परि । प्र । धन्व । इन्द्राय । सोम । स्वादुः । मित्राय ।
पूष्णे । भगाय ॥ १ ॥

हे सोम स्वादुः स्वादुरसः त्वं इन्द्राय मित्राय पूष्णे भगाय एतेभ्योदेवेभ्यः परिप्रधन्व परितः पात्रेषु क्षर ॥ १ ॥

अथ द्वितीया—

इन्द्रस्तेसोमसुतस्यपेयाःक्रत्वेदक्षायविश्वेचदेवाः ॥ २ ॥

इन्द्रः । ते । सोम । सुतस्य । पेयाः । क्रत्वे । दक्षाय । विश्वे ।
च । देवाः ॥ २ ॥

हे सोम सुतस्याभिषुतस्य ते तव स्वं भागं इन्द्रः पेयाः पेयात् पिबतु पातेराशीर्लिङि रूपं पुरुषव्यत्ययः । किमर्थं क्रत्वे क्रतवे प्रज्ञानाय दक्षाय बलायच । किंच अमी सर्वे विश्वेदेवाश्च त्वदीयमंशं पिबंतु ॥ २ ॥

अथ तृतीया—

एवामृतायमहेक्षयायसशुक्रोअर्षदिव्यःपीयूषः ॥ ३ ॥

एव । अमृताय । महे । क्षयाय । सः । शुक्रः । अर्ष ।
दिव्यः । पीयूषः ॥ ३ ॥

हे सोम शुक्रोदीप्तः दिव्योदिविभवः पीयूषः देवैः पातव्यः सत्वं अमृताय अमरणाय महे महते क्षयाय निवासायच एवार्ष एवं पवस्व क्षर ॥ ३ ॥

अथ चतुर्थी—

पवस्वसोममहान्त्समुद्रःपितादेवानांविश्वाभिधाम ॥ ४ ॥

पवस्व । सोम । महान् । समुद्रः । पिता । देवानाम् ।
विश्वा । अभि । धाम ॥ ४ ॥

हे सोम महान् देवेभ्योदीयमानत्वेन महत्त्वयुक्तः समुद्रः समुन्दनः यस्मात् समुद्रवन्ति रसास्तादृशः पिता सर्वेषां पालयिता त्वं देवानां विश्वा विश्वानि सर्वाणि धाम धामानि शरीराणि अभिलक्ष्य पवस्व ॥ ४ ॥

अथ पञ्चमी—

शुक्रःपवस्वदेवेभ्यःसोमदिवेपृथिव्यैशंचप्रजायै ॥ ५ ॥

शुक्रः । पवस्व । देवेभ्यः । सोम । दिवे । पृथिव्यै ।
शम् । च । प्रऽजायै ॥ ५ ॥

हे सोम शुक्रोदीप्तस्त्वं देवेभ्योदेवार्थं पवस्व क्षर । किंच दिवे पृथिव्यैच द्यावापृथिवीभ्यांच ततः प्रजायै प्रजाभ्यश्च शं सुखं च कुरु ॥ ५ ॥

अथ षष्ठी—

दिवोधर्तासिशुक्रःपीयूषःसत्येविधर्मन्वाजीपवस्व ॥ ६ ॥

दिवः । धर्ता । असि । शुक्रः । पीयूषः । सत्ये ।
विऽधर्मन् । वाजी । पवस्व ॥ ६ ॥

हे सोम शुक्रोदीप्तः पीयूषः पातव्यस्त्वं दिवोद्युलोकस्य धर्ता धारकोसि । वाजी बलवान् सत्वं सत्ये सत्यभूते विधर्मन् विधर्मणि विविधकर्माणः ऋत्विजोयस्मिन् यद्वा विविधसोमादिहविषां धारकेस्मिन्यज्ञे पवस्व क्षर ॥ ६ ॥

अथ सप्तमी--

**पवस्वसोमद्युम्नीसुधारोमहामवीनामनुपूर्व्यः ॥ ७ ॥**

**पवस्व । सोम । द्युम्नी । सुऽधारः । महाम् । अवीनाम् । अनु । पूर्व्यः ॥ ७ ॥**

हेसोम द्युम्नी । द्युम्नं द्योततेर्यशोवान्नंवेतियास्कः । अन्नवान् यशस्वी वा सुधारः शोभनधारायुक्तः पूर्व्यः पुरातनस्त्वं महां महांतं अवीनां रोम्णां रोमभ्यः सकाशादनुक्रमेण पवस्व क्षर ॥ ७ ॥

अथाष्टमी--

**नृभिर्येमानोजज्ञानःपूतःक्षरद्विश्वानिमन्द्रःस्वर्वित् ॥ ८ ॥**

**नृऽभिः । येमानः । जज्ञानः । पूतः । क्षरत् । विश्वानि ।**
**मन्द्रः । स्वःऽवित् ॥ ८ ॥**

नृभिः कर्मनेतृभिर्ऋत्विग्भिः येमानोनियम्यमानः जज्ञानः जायमानः पूतः पवित्रेण शोधितः मन्द्रोमोदमानः स्वर्वित् सर्वज्ञः एतादृशः सोमः विश्वानि सर्वाणि धनान्यस्मभ्यं क्षरत् क्षरतु ददातु ॥ ८ ॥

अथ नवमी--

**इन्दुःपुनानःप्रजामुराणःकरद्विश्वानिद्रविणानिनः ॥ ९ ॥**

**इन्दुः । पुनानः । प्रऽजाम् । उराणः । करत् । विश्वानि ।**
**द्रविणानि । नः ॥ ९ ॥**

---

१ नि० ५. ५. ।

पुनानः पूयमानः। उराणः उरुकुर्वाणइतियास्कः। देवान् बहुकुर्वाणः इन्दुः सोमः नोस्माकं प्रजामपत्यादिकां विश्वानि व्याप्तानि द्रविणानि धनानि करत् करोतु। करोतेर्लेङि रूपं॥ ९॥

अथ दशमी—

**पर्वस्वसोमक्रत्वेदक्षायाश्वोननिक्तोवाजीधनाय॥ १०॥ २०॥**

**पर्वस्व। सोम। क्रत्वे। दक्षाय। अश्वः। न। निक्तः।**

**वाजी। धनाय॥ १०॥ २०॥**

हे सोम अश्वोन अश्वइव निक्तः वसतीवरीभिरद्भिः निक्तः वाजी वेगवांस्त्वं क्रत्वे क्रतवे प्रज्ञानाय दक्षाय बलाय धनाय धनार्थं च पवस्व क्षर॥ १०॥

॥ इति सप्तमस्य पंचमे विंशोवर्गः॥ २०॥

अथैकादशी—

**तंतेसोतारोरसंमदायपुनन्तिसोमंमहेद्युम्नाय॥ ११॥**

**तम्। ते। सोतारः। रसम्। मदाय। पुनन्ति। सोमम्।**

**महे। द्युम्नाय॥ ११॥**

सोतारः अभिषोतारः ऋत्विजः हे सोम ते तव स्वभूतं रसं मदाय मदार्थं पुनन्ति। तदेवोच्यते—महे महते द्युम्नाय द्युम्नं द्योततेर्यशोवान्नंवा। अन्नाय यशसेवा सोमं पुनन्ति शोधयन्ति। यद्वा सोममभिषूयमाणं तं रसं पुनन्तीति एकवाक्यतया योजनीयं॥ ११॥

अथ द्वादशी—

**शिशुंजज्ञानंहरिंमृजन्तिपवित्रेसोमंदेवेभ्यइन्दुम्॥ १२॥**

**शिशुम्। जज्ञानम्। हरिम्। मृजन्ति। पवित्रे।**

**सोमम्। देवेभ्यः। इन्दुम्॥ १२॥**

शिशुमपां पुत्रभूतं जज्ञानं जायमानं हरिं हरितवर्णं इन्दुं दीप्तं सोमं देवेभ्योदेवार्थं पवित्रे मृजन्ति ऋत्विजोमार्जयन्ति॥ १२॥

---

१ नि० ६. १७.

अथ त्रयोदशी—

इन्दुः पविष्टचारुर्मदायापामुपस्थेकविर्भगाय ॥ १३ ॥

इन्दुः । पविष्ट । चारुः । मदाय । अपाम् । उपऽस्थे ।
कविः । भगाय ॥ १३ ॥

चारुः कल्याणरूपः कविः क्रान्तप्रज्ञः इन्दुः अपामुदकानामुपस्थे उपस्थाने अन्तरिक्षे पवित्रे वा मदाय मदार्थं भगाय भजनीयधनार्थंच पविष्ट पवते ॥ १३ ॥

अथ चतुर्दशी—

बिभर्तिचार्विन्द्रस्यनामयेनविश्वानिवृत्राजघान ॥ १४ ॥

बिभर्ति । चारु । इन्द्रस्य । नाम । येन । विश्वानि ।
वृत्रा । जघान ॥ १४ ॥

ससोमः चारु कल्याणं इन्द्रस्य नाम शरीरं बिभर्ति धारयति पोषयति । तेन शरीरेण इन्द्रः विश्वानि सर्वाणि वृत्रा वृत्राणि पापरूपाणि रक्षांसि जघान हतवान् ॥ १४ ॥

अथ पंचदशी—

पिबन्त्यस्यविश्वेदेवासोगोभिःश्रीतस्यनृभिःसुतस्य ॥ १५ ॥

पिबन्ति । अस्य । विश्वे । देवासः । गोभिः ।
श्रीतस्य । नृऽभिः । सुतस्य ॥ १५ ॥

विश्वे सर्वे देवासोदेवाः गोभिर्गोविकारैः श्रीतस्य मिश्रितं नृभिः कर्मनेतृभिर्ऋत्विग्भिः सुतस्याभिषुतस्यामुं सोमं पिबन्ति । द्वितीयार्थे षष्ठ्यः ॥ १५ ॥

अथ षोडशी—

प्रसुवानोअक्षाःसहस्रधारास्तिरःपवित्रंविवारमव्यम् ॥ १६ ॥

प्र । सुवानः । अक्षारिति । सहस्रऽधारः । तिरः ।
पवित्रम् । वि । वारम् । अव्यम् ॥ १६ ॥

सुवानोभिषूयमाणः अतएव सहस्रधारः बहुधारायुक्तः सोमः अव्यं अविभवं वारं वालं पवित्रं तिरः व्यवधायकं कुर्वन् प्र अक्षाः विविधं प्रक्षरन्ति क्षरतेर्लुङि रूपं ॥ १६ ॥

अथ सप्तदशी—

**सवाज्यक्षाःसहस्ररेताअद्भिर्मृजानोगोभिःश्रीणानः ॥ १७ ॥**

**सः । वाजी । अक्षारिति । सहस्रऽरेताः । अत्ऽभिः ।**

**मृजानः । गोभिः । श्रीणानः ॥ १७ ॥**

वाजी वेगवान् बलवान वा ससोमः अक्षाः क्षरति । कीदृशः सहस्ररेताः बहुरेतस्कः बहूदकः अद्भिर्वसतीवरीभिः मृजानोमृज्यमानोगोभिर्गोविकारैःक्षीरादिभिः श्रीणानःश्रीयमाणः ॥१७॥

अथाष्टादशी—

**प्रसोमयाहीन्द्रस्यकुक्षानृभिर्येमानोअद्रिभिःसुतः ॥ १८ ॥**

**प्र । सोम । याहि । इन्द्रस्य । कुक्षा । नृऽभिः ।**

**येमानः । अद्रिऽभिः । सुतः ॥ १८ ॥**

हे सोम नृभिर्ऋत्विग्भिः येमानोनियम्यमानः अद्रिभिर्ग्रावभिः सुतोभिषुतस्त्वं इन्द्रस्य कुक्षा सप्तम्याडादेशः कुक्षौ उदरभूते कलशेवा प्रयाहि प्रकर्षेण गच्छ ॥ १८ ॥

अथैकोनविंशी—

**असर्जिवाजीतिरःपवित्रमिन्द्रायसोमःसहस्रधारः ॥ १९ ॥**

**असर्जि । वाजी । तिरः । पवित्रम् । इन्द्राय ।**

**सोमः । सहस्रऽधारः ॥ १९ ॥**

वाजी बलवान् वेगवान्वा पवित्रं तिरः तिरस्कुर्वन् सहस्रधारोबहुधारः सोमः इन्द्रायेन्द्रार्थं असर्जि सृज्यते ॥ १९ ॥

अथ विंशी—

**अञ्जन्त्येनंमध्वोरसेनेन्द्रायवृष्णइन्दुंमदाय ॥ २० ॥**

अञ्जन्ति । एनम् । मध्वः । रसेन । इन्द्राय ।
वृष्णे । इन्दुम् । मदाय ॥ २० ॥

वृष्णे कामानां वर्षित्रे इन्द्राय इन्द्रस्य मदाय मदार्थं मध्वोमधुनोरसेन गव्येन एनमिन्दुं सोममृत्विजो अंजन्ति संयोजयन्ति ॥ २०॥

अथैकविंशी—

देवेभ्यस्त्वावृथापाजसेपोवसानंहरिंमृजन्ति ॥ २१ ॥

देवेभ्यः । त्वा । वृथा । पाजसे । अपः ।
वसानम् । हरिम् । मृजन्ति ॥ २१ ॥

हे सोम अपः उदकानि वसानमाच्छादयन्तं हरिं हरितवर्णं त्वा त्वां वृथा अनायासेन ऋत्विजोमृजन्ति शोधयन्ति । किमर्थं देवेभ्यः देवानां पानार्थं पाजसे तेषां बलार्थं ॥ २१ ॥

अथ द्वाविंशी—

इन्दुरिन्द्रायतोशतेनितोशतेश्रीणन्नुग्रोरिणन्नपः ॥ २२ ॥ २१ ॥

इन्दुः । इन्द्राय । तोशते । नि । तोशते । श्रीणन् ।
उग्रः । रिणन् । अपः ॥ २२ ॥ २१ ॥

इन्दुः सोमः इन्द्रायेन्द्रार्थं तोशते हन्यते अभिषूयते नितोशते नितरामभिषूयते तोशतिर्वधकर्मा । कीदृशः श्रीणन् प्रेरयन् उग्रउद्गूर्णः सोमोभिषूयते ॥ २२ ॥

॥ इति सप्तमस्य पञ्चमे एकविंशोवर्गः ॥२१॥

पर्यूष्विति द्वादशर्चं सप्तमं सूक्तं त्र्यरुणत्रसदस्यू राजर्षी अस्यसूक्तस्य द्रष्टारौ आदितस्तिस्रः पिपीलिकमध्याअनुष्टुभः द्वादशकाष्टकद्वादशकवत्यः ततः षडूर्ध्वबृहत्यः द्वादशकत्रयवत्यः अथ दशम्याद्यास्तिस्रोविराजः पवमानः सोमोदेवता।तथाचानुक्रान्तं—पर्यूषु द्वादशत्र्यरुणत्रसदस्यू तिस्रोनुष्टुभः पिपीलिकमध्याः षडूर्ध्वबृहत्यस्तिस्रश्चविराजइति । गतोविनियोगः ।

तत्र प्रथमा—

पर्यू॒षु प्र ध॑न्व॒ वाज॑सातये॒ परि॑ वृ॒त्राणि॑ स॒क्षणि॑ः ।
द्वि॒षस्त॒रध्या॑ ऋण॒या न॑ ईयसे ॥ १ ॥

परि॑ । ऊँ॒ इति॑ । सु । प्र । ध॒न्व॒ । वाज॑ऽसातये । परि॑ । वृ॒त्राणि॑ ।
स॒क्षणि॑ः । द्वि॒षः । त॒रध्यै॑ । ऋ॒ण॒ऽयाः । न॒: । ई॒य॒से॒ ॥ १ ॥

हे सोम सु सुष्ठु वाजसातये अस्मभ्यमन्नदानायैव परिप्रधन्व परितः प्रगच्छ । यद्वा वाजसातये अन्नलाभाय संग्रामं प्रगच्छ । किंच सक्षणिः सहनशीलस्त्वं वृत्राणि शत्रून्परिगच्छ । तदेवोच्यते—नोस्माकं ऋणयाः ऋणानां यापयिता त्वं द्विषः शत्रून् तरध्यै तरीतुं हन्तुं ईयसे परिगच्छसि ॥१॥

अथ द्वितीया—

अनु॒ हि त्वा॑ सु॒तं सो॑म॒ मदा॑मसि म॒हे स॑मर्य॒राज्ये॑ ।
वाजाँ॑ अ॒भि प॑वमान॒ प्र गा॑हसे ॥ २ ॥

अनु॑ । हि । त्वा॒ । सु॒तम् । सो॒म॒ । मदा॑मसि । म॒हे । स॒म॒र्य॒ऽराज्ये॑ ।
वाजा॑न् । अ॒भि । प॒व॒मा॒न॒ । प्र । गा॒ह॒से॒ ॥ २ ॥

हे सोम सुतमभिषुतं त्वा त्वां वयमनुमदामसिहि अनुमदामः अनुक्रमेणाभिष्टुमः खलु । हे पवमानसोम सत्वं महे महति समर्यराज्ये महत् समनुष्यं त्वदीयं राज्यमनुपालयितुं वाजान् शत्रुबलान्यभिलक्ष्य प्रगाहसे प्रगच्छसि ॥ २ ॥

अथ तृतीया—

अजी॑जनो॒ हि प॑वमान॒ सूर्यं॑ वि॒धारे॒ शक्म॑ना॒ पय॑ः ।
गोजी॑रया॒ रंह॑माण॒: पुरं॑ध्या ॥ ३ ॥

अजी॑जनः । हि । प॒व॒मा॒न॒ । सूर्य॑म् । वि॒ऽधारे॑ । शक्म॑ना ।
पय॑ः । गोऽजी॑रया । रंह॑माणः । पुर॑म्ऽध्या ॥ ३ ॥

हे पवमान सोम त्वं पयः पयसउदकस्य विधारे विधारके अन्तरिक्षे शक्मना समर्थेन बलेन सूर्यमजीजनोहि उत्पादितवान् भवसि खलु । कीदृशः गोजीरया स्तोतृभ्योगवां प्रेरकेण स्तोतृणां प्रेरितपशुकेनेत्यर्थः । तादृशेन पुरंध्या बहुविधप्रज्ञानेन युक्तः रंहमाणः वेगं कुर्वाणस्त्वं सूर्यमजीजनः ॥ ३ ॥

अथ चतुर्थी–

अजीजनोअमृतमर्त्येष्वाँऋतस्यधर्मन्नमृतस्यचारुणः ।
सदासरोवाजमच्छासनिष्यदत् ॥ ४ ॥

अजीजनः । अमृत । मर्त्येषु । आ । ऋतस्य । धर्मन् । अमृतस्य ।
चारुणः । सदा । असरः । वाजम् । अच्छ । सनिस्यदत् ॥ ४ ॥

हे अमृत मरणधर्मरहित सोम त्वं ऋतस्य सत्यभूतस्य चारुणः कल्याणस्य अमृतस्योदकस्य धर्मन् धारके अन्तरिक्षे सूर्यमजीजनः किमर्थं मर्त्येष्वामनुष्येष्वभिमुखीभवनाय । किंच सनिष्यदत् संभजन् सत्वं वाजं अच्छ संग्राममभिलक्ष्य सदा असरः सरसि गच्छसि ॥ ४ ॥

अथ पंचमी–

अभ्यभिहिश्रवसाततर्दिथोत्सन्नकंचिज्जनपानमक्षितम् ।
शर्याभिर्नभरमाणोगभस्त्योः ॥ ५ ॥

अभिऽअभि । हि । श्रवसा । ततर्दिथ । उत्सम् । न । कम् । चित् ।
जनऽपानम् । अक्षितम् । शर्याभिः । न । भरमाणः । गभस्त्योः ॥ ५ ॥

हे सोम त्वं श्रवसान्नेन हेतुना अभ्यभि ततर्दिथ हि पवित्रमभितृणवानसि छिन्नवानसि । तत्र दृष्टान्तद्वयं–उत्सं न यथा कश्चित् जनपानं अस्मिन् जनाउदकं पिबन्ति तमक्षितं अक्षीणं कंचित् कंचन उत्सरणशीलं वाप्यादिकं अभितृणत्ति अथवा कश्चित् गभस्त्योर्बाह्वोः शर्याभिरंगुलीभिर्भरमाणउदकं संभरन् कंचिदभितृणत्ति तद्वत् ॥ ५ ॥

अथ षष्ठी–

आदींकेचित्पश्यमानासआप्यंवसुरुचोदिव्याअभ्यनूषत ।
वारंनदेवःसवितान्यूर्णुते ॥ ६ ॥ २२ ॥

आत् । ईम् । के । चित् । पश्यमानासः । आप्यम् । वसुऽरुचः ।
दिव्याः । अभि । अनूषत । वारम् । न । देवः । सविता । वि । ऊर्णुते ॥६॥२२॥

आदनन्तरं पश्यमानास एनं पश्यन्तोदिव्याः दिविभवाः वसुरुचोनामकेचित् आप्यं बन्धुं साधुं ईमेनं सोमं अभ्यनूषत अभ्यस्तुवन्। कस्मादनन्तरमिति उच्यते देवोद्योतमानः सविता सर्वस्य प्रेरकः सूर्यः वारं आवरकं अंधकारं नव्यूर्णुते नापगमयति तदा एनमस्तुवन् सूर्योदयात् प्रागेवहि सोमं स्तुवन्ति खलु ॥ ६ ॥

॥ इति सप्तमस्य पंचमे द्वाविंशोवर्गः ॥ २२ ॥

अथ सप्तमी—

त्वेसोमप्रथमावृक्तबर्हिषोमहेवाजायश्रवसेधियंदधुः ।
सत्वंनोवीरवीर्यायचोदय ॥ ७ ॥

त्वे इति । सोम । प्रथमाः । वृक्तऽबर्हिषः । महे । वाजाय । श्रवसे ।
धियम् । दधुः । सः । त्वम् । नः । वीर । वीर्याय । चोदय ॥ ७ ॥

हे सोम प्रथमाः पुरातनाः यद्वा यष्टृत्वेन सर्वेषां जनानां मुख्याः वृक्तबर्हिषः वृक्तं छिन्नं बर्हिर्यैर्यज्ञार्थमिति वृक्तबर्हिषोयजमानाः महे महते वाजाय बलाय श्रवसेन्नायच धियं बुद्धिं त्वे त्वयि दधुः निहितवन्तः। तस्मात् हे वीर समर्थ सोम सतादृशस्त्वं नोस्मानपि संग्रामे वीर्याय सामर्थ्याय चोदय प्रेरय यद्वा वीर्याय वीरपुत्रे भवाय सुखायास्मान्प्रेरय ॥ ७ ॥

अथाष्टमी—

दिवःपीयूषंपूर्व्यंयदुक्थ्यंमहोगाहाद्दिवआनिरधुक्षत ।
इन्द्रमभिजायमानंसमस्वरन् ॥ ८ ॥

दिवः । पीयूषम् । पूर्व्यम् । यत् । उक्थ्यम् । महः । गाहात् । दिवः । आ ।
निः । अधुक्षत । इन्द्रम् । अभि । जायमानम् । सम् । अस्वरन् ॥८॥

दिवोद्युलोकात् तत्र स्थितैर्देवैः पीयूषं पातव्यं पूर्व्यं प्रत्नं यत्सोमरूपमन्नं उक्थ्यं प्रशस्यमस्ति तं सोमं महो महतोगाहात् गहनात् दिवोद्युलोकात् आनिरधुक्षत आभिमुख्येन निर्दुहन्ति। ततः दुग्धमिन्द्रं अभिलक्ष्य जायमानं तं सोमं समस्वरन् स्तोतारः संस्तुवन्ति ॥ ८ ॥

अथ नवमी—

अधयदिमेपवमानरोदसीइमाचविश्वाभुवनाभिमज्मना
यूथेननिःष्ठावृषभोवितिष्ठसे ॥ ९ ॥

अध । यत् । इमे इति । पवमान । रोदसी इति । इमा । च । विश्वा ।
भुवना । अभि । मज्मना । यूथे । न । निःऽस्थाः । वृषभः । वि । तिष्ठसे ॥ ९

हे पवमान सोम अध अथ अनन्तरं यद्यदा इमे रोदसी द्यावापृथिव्यौ इमा इमानि विश्वा विश्वानि भुवना भूतजातानिच मज्मना बलेन अभितिष्ठसि सत्वं तथाकुर्वन् भुवनेषु वितिष्ठसे । तत्र दृष्टान्तः—यूथे न यथाकश्चिद्वृषभः गवां यूथे वृन्दे निःष्ठाः निःष्ठितोवर्तते तद्वव् यूथस्थानीयेषु भूतजातेषु निःष्ठितोभवसि ॥ ९ ॥

अथ दशमी—

सोमःपुनानोअव्ययेवारेशिशुर्नक्रीळन्पवमानोअक्षाः ।
सहस्रधारःशतवाजइन्दुः ॥ १० ॥

सोमः । पुनानः । अव्यये । वारे । शिशुः । न । क्रीळन् । पवमानः ।
अक्षारिति । सहस्रऽधारः । शतऽवाजः । इन्दुः ॥ १० ॥

पुनानः पूयमानः पवमानः पूतः सोमः अव्यये अविमये वारे वाले पवित्रे शिशुर्न शिशुरिव क्रीळन् इतस्ततः संक्रीडमानः सन् अक्षाः क्षरति । कीदृशः सहस्रधारः बहुधारायुक्तः शतवाजोबहुबलः इन्दुर्दीप्तः ॥ १० ॥

अथैकादशी—

एषपुनानोमधुमाँऋतावेन्द्रायेन्दुःपवतेस्वादुरूर्मिः ।
वाजसनिर्वरिवोविद्वयोधाः ॥ ११ ॥

एषः । पुनानः । मधुऽमान् । ऋतऽवा । इन्द्राय । इन्दुः । पवते ।
स्वादुः । ऊर्मिः । वाजऽसनिः । वरिवःऽवित् । वयःऽधाः ॥ ११ ॥

पुनानः पूयमानः मधुमान् माधुर्योपेतः ऋतावा ऋतवान् यज्ञवान् इंदुः क्षरणशीलः स्वादुः स्वादुकरः ऊर्मिः एषरसधारासंघः इन्द्रायेन्द्रार्थं पवते क्षरति । कीदृशः वाजसनिः अन्नस्य दाता वरिवोवित् धनस्य लंभकः वयोधाः आयुषोदाता ॥ ११ ॥

अथ द्वादशी—

सपवस्वसहमानःपृतन्यून्त्सेधन्नक्षांस्यपदुर्गहाणि ।
स्वायुधःसासह्वान्त्सोमशत्रून् ॥ १२ ॥ २३ ॥

सः । पवस्व । सहमानः । पृतन्यून् । सेधन् । रक्षांसि । अप ।
दुःऽगहानि । सुऽआयुधः । ससह्वान् । सोम । शत्रून् ॥ १२ ॥ २३ ॥

हे सोम तादृशस्त्वं पवस्व किंकुर्वन् पृतन्यून् कव्यध्वरपृतनस्यर्चिलोपइति क्यचि परलोकारलोपः संग्राममकामान् शत्रून् सहमानोभिभवन् तथा दुर्गहाणि कैश्चिदपि दुर्गमानि रक्षांसि अपसेधन् अपगमयन् हिंसन् किंच स्वायुधः शोभनायुधः सन् शत्रून् सासह्वान् अभिभवन् अभितपन् पवस्व ॥ १२ ॥

॥ इति सप्तमस्य पंचमे त्रयोविंशोवर्गः ॥ २३ ॥

अयारुचेति तृचमष्टमं सूक्तं परुच्छेपपुत्रस्य अनानताख्यस्यार्षं अत्यष्टिच्छन्दस्कं पवमानसोमदेवताकं । तथाचानुक्रम्यते—अयारुचातृचमनानतः पारुच्छेपिरात्यष्टमिति । गतोविनियोगः ।

तत्र प्रथमा—

अयारुचाहरिण्यापुनानोविश्वाद्वेषांसितर
तिस्वयुग्वभिःसूरोनस्वयुग्वभिः ।
धारासुतस्यरोचतेपुनानोअरुषोहरिः ।
विश्वायद्रूपापरियात्यृक्वभिःसप्तास्येभिर्ऋक्वभिः ॥ १ ॥

अया । रुचा । हरिण्या । पुनानः । विश्वा । द्वेषांसि । तरति ।
स्वयुग्वऽभिः । सूरः । न । स्वयुग्वऽभिः ।

धारा । सुतस्य । रोचते । पुनानः । अरुषः । हरिः । विश्वा ।
यत् । रूपा । परिऽयाति । ऋक्वऽभिः । सप्तऽआस्येभिः । ऋक्वऽभिः ॥१॥

पुनानः पूयमानः सोमः हरिण्या हरितवर्णया अया अनया रुचा रोचमानया धारया विश्वा सर्वाणि द्वेषांसि द्वेष्टॄणि रक्षांसि तरति विनाशयति । तत्र दृष्टान्तः—सूरोन यथा सूर्यः स्वयुग्वभिः स्वयं युक्तैः रश्मिभिस्तमांसि हिनस्ति तद्वत् स्वयुग्वभिरिति द्विरुक्तिरादरार्था । यद्वा धारया युक्तः सोमः स्वीयैर्युक्तैस्तेजोभिः रक्षांसि तरति तस्य सुतस्याभिषुतस्य सोमस्य धारा रोचते दीप्यते । पुनानः पूयमानः हरिर्हरितवर्णः सोमः अरुषः आरोचमानोभवति यत् यः सोमः सप्तास्येभिः रसहरणशीलास्यैः ऋक्वभिः स्तुतिमद्भिः ऋक्वभिस्तेजोभिः विश्वा विश्वानि व्याप्तानि रूपा रूपाणि नक्षत्राणि परियाति गच्छति व्याप्नोति ॥ १ ॥

अथ द्वितीया—

त्वंत्यत्पणीनांविदोवसुसंमातृभिर्मर्जय
सिस्वआदमऋतस्यधीतिभिर्दमे ।
परावतोनसामतद्यत्रारणन्तिधीतयः ।
त्रिधातुभिररुषीभिर्वयोदधेरोचमानोवयोदधे ॥ २ ॥

त्वम् । त्यत् । पणीनाम् । विदः । वसु । सम् । मातृऽभिः ।
मर्जयसि । स्वे । आ । दमे । ऋतस्य । धीतिऽभिः । दमे । पराऽवतः ।
न । साम । तत् । यत्र । रणन्ति । धीतयः । त्रिधातुऽभिः ।
अरुषीभिः । वयः । दधे । रोचमानः । वयः । दधे ॥ २ ॥

हे सोम त्वं त्यत्पणीनां वसु पणिभिरपहृतं गवात्मकं धनं विदः अलभथाः । आ अपिच ऋतस्य यज्ञस्य धीतिभिः धात्रीभिर्मातृभिः वसतीवरीभिः स्वे आत्मीये दमे गृहभूते दमे यज्ञे संमर्जयसि सम्यक् शुद्धोभवसि । परावतोन दूरस्थाद्देशात् यथा साम सामध्वनिः श्रूयते तथा तव तत्साम ध्वनिः सर्वैः श्रूयते । असौ सोमाभिषवाभिप्रायेणोक्तः । यत्र यस्मिन् शब्दे धीतयः कर्मणोधर्तारोयजमानाः रणंति रमन्ते । रोचमानः सोमः त्रिधातुभिः त्रयाणां लोकानां

धारयित्रीभिः मातृभिः वसतीवरीभिः अरुषीभिः आरोचमानाभिर्दीप्तिभिः वयोन्नं दधे स्तोतृभ्यः प्रयच्छति पुनर्वयोदधइत्यादरार्थे ॥ २ ॥

अथ तृतीया—

पूर्वामनुप्रदिशंयातिचेकितत्संरश्मिभिर्य
ततेदर्शतोरथोदैव्योदर्शतोरथः ।
अग्मन्नुक्थानिपौंस्येन्द्रंजैत्रायहर्षयन् ।
वज्रश्चयद्भवथोअनपच्युतासमत्स्वनपच्युता ॥३॥२४॥

पूर्वाम् । अनु । प्रऽदिशम् । याति । चेकितत् । सम् । रश्मिऽभिः ।
यतते । दर्शतः । रथः । दैव्यः । दर्शतः । रथः । अग्मन् ।
उक्थानि । पौंस्या । इन्द्रम् । जैत्राय । हर्षयन् । वज्रः ।
च । यत् । भवथः । अनपऽच्युता । समत्ऽसु । अनपऽच्युता॥३॥२४॥

चेकितत् जानानः सोमः पूर्वां प्राचीं प्रदिशं प्रकृष्टां दिशं अनुयाति अनुगच्छति । किंच दर्शतः सर्वैर्दर्शनीयः दैव्यः देवेषु भवः तव रथः सूर्यरश्मिभिः संयतते संगच्छते पुनर्दर्शतोरथइत्यादरार्थे।ततः पौंस्या पुंस्त्वावगमानि उक्थानि स्तोत्राण्यग्मन् इन्द्रं गच्छन्ति तथा जैत्राय जयार्थं तानि स्तोत्राणि इन्द्रं हर्षयन् हर्षयन्ति । तथा तस्य वज्रश्च तमिन्द्रं गच्छति । यद्यदा समत्सु संग्रामेषु अनपच्युता अनपच्युतौ शत्रुभिः अपराजितौ सोमश्च त्वंच इन्द्रश्च युवां सहभवथः तदा स्तोत्रागमनादीनि भवन्ति पुनरनपच्युतेत्यादरार्था ॥ ३ ॥

॥ इति सप्तमस्य पंचमे चतुर्विंशोवर्गः ॥ २४ ॥

नानानमिति चतुर्ऋचं नवमं सूक्तं आंगिरसस्य शिशुनाम्नआर्षं पंचपदापंक्तिश्छन्दः पवमानः सोमोदेवता । तथाचानुक्रान्तं—नानानं चतुष्कं शिशुः पांक्तंहीति । गतोविनियोगः ।

तत्र प्रथमा—

नानानंवाउंनोधियोविव्रतानिजनानाम् ।
तक्षारिष्टंरुतंभिषग्ब्रह्मासुन्वन्तमिच्छतीन्द्रायेन्दोपरिस्रव ॥ १ ॥

नानानम् । वै । ऊँ इति । नः । धियः । वि । व्रतानि । जनानाम् ।
तक्षा । रिष्टम् । रुतम् । भिषक् । ब्रह्मा । सुन्वन्तम् ।
इच्छति । इन्द्राय । इन्दो इति । परि । स्रव ॥ १ ॥

ऋषिः एतदादिभिः त्रिभिः सूक्तैः अपरिस्रवतः सोमस्य जामित्वाय मनसोविनोदनं कुर्वन्नाह । हे सोम नोस्माकं धियः कर्माणि नानानं नानाजातीयकानि बहूनि भवन्ति वैशब्दः प्रसिद्धार्थद्योतनार्थः उइति पूरणः । तथा अन्येषामपि जनानां व्रतानि कर्माणि विविधानि भवंति तक्षा त्वष्टा रिष्टं दारुतक्षणमिच्छति तथा भिषक् वैद्यः चिकित्सकः रुतं रोगमिच्छति ब्रह्मा ब्राह्मणः सुन्वन्तं सोमाभिषवं कुर्वन्तं यजमानमिच्छति । तथा अहं त्वत्परिस्रवणं इच्छामि । तस्मात् हे इन्दो सोम इन्द्रायेन्द्रार्थं परिस्रव परितः क्षर ॥ १ ॥

अथ द्वितीया—

जरतीभिरोषधीभिः पर्णेभिः शकुनानाम् ।
कार्मारो अश्मभिर्द्युभिर्हिरण्यवन्तमिच्छतीन्द्रायेन्दो परिस्रव ॥ २ ॥

जरतीभिः । ओषधीभिः । पर्णेभिः । शकुनानाम् । कार्मारः ।
अश्मऽभिः । द्युऽभिः । हिरण्यऽवन्तम् । इच्छति ।
इन्द्राय । इन्दो इति । परि । स्रव ॥ २ ॥

जरतीभिः जीर्णाभिः याभिरोषधीभिः इषवः क्रियन्ते । तथा शकुनानां पर्णेभिः इषूणां पक्षभूतैः पर्णैश्च क्रियन्ते । तथा द्युभिर्दीप्ताभिरिषूणां तेजनार्थाभिरश्मभिः शिलाभिश्च क्रियन्ते तएतैः कार्मारोयस्कारः हिरण्यवन्तं आढ्यं पुरुषमिच्छति तथाहं त्वत्परिस्रवणमिच्छामि । तस्मात् इन्दो इन्द्राय परिस्रव ॥ २ ॥

अथ तृतीया—

कारुरहं ततो भिषगुपलप्रक्षिणी नना ।
नानाधियो वसूयवोऽनु गा इव तस्थिमेन्द्रायेन्दो परिस्रव ॥ ३ ॥

कारुः । अहम् । ततः । भिषक् । उपलऽप्रक्षिणी । नना ।
नानाऽधियः । वसुऽयवः । अनु । गाःऽइव । तस्थिम ।
इन्द्राय । इन्दो इति । परि । स्रव ॥ ३ ॥

ऋषिः प्रवृत्तसोमयागः सन् दशापवित्रात् सोमे क्षरति तत्प्रतिबन्धकपापापनुत्तये पुरश्चरितानुकीर्तनपुरःसरं अध्येषणां चकार । तावदहं कारुः स्तोमानां कर्तास्मि ततइति सन्ताननाम । तन्यतेस्मादिति ततः पिता तन्यते सावितित वा ततः पुत्रः भिषक् भेषजकृत् यज्ञस्य ब्रह्मेत्यर्थः । सर्वं त्रय्या विद्यया भिषज्यतीतिश्रुतेः । तथा उपलप्रक्षिणी उपलेषु वालुकासु प्रक्षिणोति यवान् हिनस्ति भृज्जतीति यद्वा दृषदादिषूपलेषु भृष्टान् यवान् हिनस्ति चूर्णयतीति । अथवा धानासक्तुकरंभादीनां कारिकावा असौ नना माता दुहिता वा नमनक्रियायोग्यत्वात् माता खलु अपत्यं प्रति स्तनपानादिना नमनशीला भवति दुहितावा शुश्रूषार्थं एवं सर्वेषां परिचरणेन नानाधियः नानाकर्माणः वसूयवोधनकामावयं अनुतस्थिम लोकमन्वास्थितास्मः । तत्र दृष्टान्तः—गाइव छान्दसोजसःशसादेशः गावोयथा गोष्ठमनुतिष्ठन्ति स्वपयःप्रदानेन परिचरन्तिवा एवं वयमपि परिचरामः । एतत् ज्ञात्वा हे इन्दो सोम इन्द्राय परिस्रव दशापवित्रात् क्षर एवमेषाध्येषणा सत्कारपूर्विका व्यापारणा । अत्र निरुक्तं[1]—उपलप्रक्षिण्युपलेषु प्रक्षिणात्युपलप्रक्षेपिणीवाकारुरहमस्मिकर्तास्तोमानांततोभिषकूततइतिसंताननामपितुर्वापुत्रस्यवोपलप्रक्षिणीसक्तुकारिकाननानमतेर्मातावादुहितावानानाधियोनानाकर्माणोवसूयवोवसुकामाअन्वास्थितास्मोगावइवलोकमिति ॥ ३ ॥

अथ चतुर्थी—

अश्वो वोळ्हा सुखं रथं हसनामुपमन्त्रिणः ।
शेपो रोमण्वन्तौ भेदौ वारिन्मण्डूक इच्छतीन्द्रायेन्दो परि स्रव ॥ ४ ॥ २५ ॥

अश्वः । वोळ्हा । सुऽखम् । रथम् । हसनाम् । उपऽमन्त्रिणः ।
शेपः । रोमण्ऽवन्तौ । भेदौ । वाः । इत् । मण्डूकः ।
इच्छति । इन्द्राय । इन्दो इति । परि । स्रव ॥ ४ ॥ २५ ॥

---

1 नि० ६. ५.।

वोळ्हा लक्षं देशं प्रापयन्नश्वः सुखं कल्याणं रथमिच्छति उपमंत्रिणः उपमंत्रवन्तो नर्मसचिवाः हसनां उपहसनां वाचमिच्छन्ति तथा शेपः । शेपोवैतसइतिपुंस्प्रजननस्येतियास्कः । यथा शेपः रोमण्वन्तौ भेदाविच्छति । मंडूकः वारित् इदवधारणे उदकमेवेच्छति तथा हं त्वत्परिस्रवणमिच्छामि तस्मादिन्द्रायेन्दोपरिस्रवेति ॥ ४ ॥

॥ इति सप्तमस्य पंचमे पंचविंशोवर्गः ॥ २५ ॥

शर्यणावतीत्येकादशर्चं दशमं सूक्तं मारीचस्य कश्यपस्यार्षं पूर्वत्रहीत्युक्तत्वात् इदमुत्तरंच पांक्तं पवमानसोमदेवताकं । तथाचानुक्रम्यते—शर्यणावत्येकादशकाश्यपइति। गतोविनियोगः।

तत्र प्रथमा—

शर्यणावतिसोममिन्द्रःपिबतुवृत्रहा ।
बलंदधानआत्मनिकरिष्यन्वीर्यंमहदिन्द्रायेन्दोपरिस्रव ॥ १ ॥

शर्यणाऽवति । सोमम् । इन्द्रः । पिबतु । वृत्रऽहा । बलम् ।
दधानः । आत्मनि । करिष्यन् । वीर्यम् । महत् ।
इन्द्राय । इन्दो इति । परि । स्रव ॥ १ ॥

शर्यणावति शर्यणावन्नामकुरुक्षेत्रस्य जघनार्धे सरः तत्र स्थितं सोमं वृत्रहा इन्द्रः पिबतु। कीदृशः आत्मनि बलंदधानः बलं निदधानः अतएव महद्वीर्यं करिष्यन् शत्रून् प्रति तस्मादिन्द्रायेन्दो परिस्रव ॥ १ ॥

अथ द्वितीया—

आपवस्वदिशांपतआर्जीकात्सोममीढ्वः ।
ऋतवाकेनसत्येनश्रद्धयातपसासुतइन्द्रायेन्दोपरिस्रव॥२॥

आ । पवस्व । दिशाम् । पते । आर्जीकात् । सोम । मीढ्वः ।
ऋतऽवाकेन । सत्येन । श्रद्धया । तपसा । सुतः । इन्द्राय ।
इन्दो इति । परि । स्रव ॥ २ ॥

---

१. नि० ३. २१.

हे दिशां पते प्राच्यादीनां दिशां प्रकाशकत्वेन स्वामिन् हे मीढ्वः कामानां सेक्तः हेसोम आर्जीकात् ऋजीकानामदूरभवः आर्जीकोजनपदः तस्मादापवस्व अस्मद्यज्ञं प्रत्यागच्छ। यद्वा आर्जीकात् ऋजोरकुटिलात् पवित्रात् क्षर । कीदृशः ऋतवाकेन ऋतस्य वचनेन सत्येन सत्यर्तयोरल्पोभेदोद्रष्टव्यः श्रद्धया तपसा युक्तैः दीक्षितैः सुतोभिषुतस्त्वं पवस्व ॥ २ ॥

अथ तृतीया—

पर्जन्यवृद्धंमहिषंतंसूर्यस्यदुहिताभरत् ।
तंगन्धर्वाःप्रत्यगृभ्णन्तंसोमेरसमादधुरिन्द्रायेन्दोपरिस्रव ॥ ३ ॥

पर्जन्यऽवृद्धम् । महिषम् । तम् । सूर्यस्य । दुहिता । आ । अभरत् ।
तम् । गन्धर्वाः । प्रति । अगृभ्णन् । तम् । सोमे । रसम् । आ ।
अदधुः । इन्द्राय । इन्दो इति । परि । स्रव ॥ ३ ॥

सूर्यस्य दुहिताश्रद्धावैसूर्यस्य दुहितेति वाजसनेयकं । सा पर्जन्यवृद्धं पर्जन्यवत्समर्थं यद्वा पर्जन्येन तत्कार्यत्वेनोदकेन प्रवृद्धं महिषं महान्तं पूज्यंवा तं सोममाभरत् आहरत् द्युलोकादाहृतवती तमाह्रियमाणं सोमं गंधर्वाः विश्वावसुप्रभृतयः प्रत्यगृभ्णन् प्रत्यगृह्णन् प्रतिगृहीतवन्तः हृग्रहोर्भः । ततः गंधर्वाः प्रतिगृहीतं रसं सोमे प्रत्यक्षमादधुः । दधातेर्लङि । तस्मात् परिस्रव ॥ ३ ॥

अथ चतुर्थी—

ऋतंवदन्नृतद्युम्नसत्यंवदन्त्सत्यकर्मन् ।
श्रद्धांवदन्त्सोमराजन्धात्रासोमपरिष्कृतइन्द्रायेन्दोपरिस्रव ॥ ४ ॥

ऋतम् । वदन् । ऋतऽद्युम्न । सत्यम् । वदन् । सत्यऽकर्मन् । श्रद्धाम् ।
वदन् । सोम । राजन् । धात्रा । सोम । परिऽकृतः । इन्द्राय । इन्दो
इति । परि । स्रव ॥ ४ ॥

हे ऋतद्युम्न ऋतेन द्योतमान सत्ययशस्कवा सत्यकर्मन् हे सोम अभिषूयमाण राजन् सर्वेषां यज्ञनिष्पादकत्वेन स्वामिन् हे सोम ऋतं यज्ञं वदन् सत्यं वदन् उच्चारयन् श्रद्धां य-

जमानानां आत्मनोपेक्षितां वदन् धात्रा कर्मणा धारकेण देवानां पोषकेणवा यजमानेन परिष्कृतोलंकृतस्त्वं इन्द्राय परिस्रव । संपर्युपेभ्यइति भूषणार्थे करोतेः सुट् ॥ ४ ॥

अथ पंचमी—

सत्यमुंग्रस्यबृहतःसंस्रवन्तिसंस्रवाः ।
संयन्तिरसिनोरसाःपुनानोब्रह्मणाहरइन्द्रायेन्दोपरिस्रव ॥५॥२६॥

सत्यम्ऽउंग्रस्य । बृहतः । सम् । स्रवन्ति । सम्ऽस्रवाः ।
सम् । यन्ति । रसिनः । रसाः । पुनानः । ब्रह्मणा । हरे ।
इन्द्राय । इन्दो इति । परि । स्रव ॥ ५ ॥ २६ ॥

सत्यमुग्रस्य संग्रामे सत्येन शत्रूणामुद्गारयितुः यद्वा उद्गूर्णसत्यस्य यद्वा यथार्थभूतमुद्गूर्णं बलं यस्य तस्य पृषोदरादित्वात् रूपसिद्धिः बृहतोमहतः सोमस्य तव संस्रवाः सम्यक् स्रवणशीलाः धाराः संस्रवन्ति सम्यक्गच्छन्ति । किंच रसिनोरसवतस्तव स्वभूतारसाः संयन्ति संगच्छन्ते तस्मात् हे हरे हरितवर्ण सोम ब्रह्मणा ब्राह्मणेन मंत्रेणवा पुनानः पूयमानः सत्वमिन्द्रार्थं परिस्रव ॥ ५ ॥

॥ इति सप्तमस्य पंचमे षड्विंशोवर्गः ॥ २६॥

अथ षष्ठी—

यत्रंब्रह्मापवमानछन्दस्यांऽवाचंवदन् ।
ग्राव्णासोमेमहीयतेसोमेनानन्दंजनयन्निन्द्रायेन्दोपरिस्रव ॥ ६ ॥

यत्र । ब्रह्मा । पवमान । छन्दस्याम् । वाचम् । वदन् ।
ग्राव्णा । सोमे । महीयते । सोमेन । आऽनन्दम् । जनयन् ।
इन्द्राय । इन्दो इति । परि । स्रव ॥ ६ ॥

हे पवमान पूयमान सोम त्वदर्थं छन्दस्यां सप्तच्छन्दोभिः कृतां तेषु भवां वाचं स्तुतिं वदन् उच्चारयन् सोमे सोमाभिषवार्थं ग्राव्णाभिषवं कुर्वतायुक्तः तेनाभिषुतेन सोमेन देवाना-

मानन्दं सन्तोषं जनयन्नुत्पादयन् ब्रह्मा ब्राह्मणः यत्र यस्मिन्देशे महीयते देवैः पूज्यते तत्र हे सोम त्वं परिस्रव ॥ ६ ॥

अथ सप्तमी—

यत्र॒ज्योति॒रज॑स्रं॒यस्मिँ॑ल्लो॒केस्व॑र्हि॒तम् ।
तस्मि॒न्मांधे॑हिपवमाना॒मृते॑लो॒केअक्षि॑त॒इन्द्रा॑येन्दो॒परि॑स्रव ॥ ७॥

यत्र॑ । ज्योतिः॑ । अज॑स्रम् । यस्मि॑न् । लो॒के । स्वः॑ । हि॒तम् ।
तस्मि॑न् । माम् । धे॒हि॒ । प॒व॒मा॒न॒ । अ॒मृते॑ । लो॒के । अक्षि॑ते ।
इन्द्रा॑य । इ॒न्दो॒ इति॑ । परि॑ । स्र॒व॒ ॥ ७ ॥

हे पवमान यत्र यस्मिन्लोके ज्योतिः सर्वं तेजः अजस्रं सर्वदा अविनश्वरं वर्तते । यस्मिंश्च लोके स्वरादित्याख्यं ज्योतिर्हितं निहितमस्ति तस्मिन् अमृते मरणधर्मरहिते अतएव अक्षिते अक्षीणलोके मां सोमाभिषवं कुर्वन्तं धेहि तस्मान्मामुत्तमलोकं प्रापयितुं त्वमिन्द्राय परिस्रव ॥ ७ ॥

अथाष्टमी—

यत्र॒राजा॑वैवस्व॒तोयत्रा॑व॒रोध॑नं॒दि॒वः ।
यत्रा॒मूर्य॒ह्वती॒राप॒स्तत्र॒माम॒मृतं॑कृ॒धीन्द्रा॑येन्दो॒परि॑स्रव ॥ ८ ॥

यत्र॑ । राजा॑ । वै॒व॒स्व॒तः । यत्र॑ । अ॒व॒ऽरोध॑नम् । दि॒वः ।
यत्र॑ । अ॒मूः । य॒ह्वतीः॑ । आपः॑ । तत्र॑ । माम् । अ॒मृत॑म् ।
कृ॒धि॒ । इन्द्रा॑य । इ॒न्दो॒ इति॑ । परि॑ । स्र॒व॒ ॥ ८ ॥

यत्र यस्मिन्लोके वैवस्वतः विवस्वत्पुत्रोराजा भवति यत्रच लोके दिवआदित्यस्यावरोधनं भूतानां प्रवेशनं। किंच यत्र लोके यह्वतीर्महत्यः अमूरिमागंगाद्याः आपस्तिष्ठन्ति । तत्र तादृशे लोके मां अमृतं मरणधर्मरहितं कृधि कुरु मम देवत्वं प्रापयेत्यर्थः । ततः कारणात् परिस्रव ॥ ८ ॥

अथ नवमी–

यत्रानुकामंचरणंत्रिनाकेत्रिदिवेदिवः ।
लोकायत्रज्योतिष्मन्तस्तत्रमामृतंकृधीन्द्रायेन्दोपरिस्रव ॥ ९ ॥

यत्र । अनुऽकामम् । चरणम् । त्रिऽनाके । त्रिऽदिवे । दिवः ।
लोकाः । यत्र । ज्योतिष्मन्तः । तत्र । माम् । अमृतम् ।
कृधि । इन्द्राय । इन्दो इति । परि । स्रव ॥ ९ ॥

यत्र त्रिदिवे तृतीयस्यां दिवि द्युलोके त्रिनाके तत्र अधरमध्यमोत्तमभावेन त्रीणिस्थानानि सन्ति । तत्र तृतीयेनाके उत्तमे स्थाने दिवआदित्यस्यानुकामं कामानुगुणं चरणमस्ति । किंच यत्र यस्मिन्लोके लोकाः ज्योतिष्मन्तः ज्योतिर्युक्तास्तिष्ठन्ति तत्र तादृशे लोके माममृतं कृधि यथाममोत्तमलोकोभवति तथा त्वमिन्द्राय परिस्रव ॥ ९ ॥

अथ दशमी–

यत्रकामानिकामाश्चयत्रब्रध्नस्यविष्टपम् ।
स्वधाचयत्रतृप्तिश्चतत्रमाममृतंकृधीन्द्रायेन्दोपरिस्रव ॥ १० ॥

यत्र । कामाः । निऽकामाः । च । यत्र । ब्रध्नस्य । विष्टपम् ।
स्वधा । च । यत्र । तृप्तिः । च । तत्र । माम् । अमृतम् ।
कृधि । इन्द्राय । इन्दो इति । परि । स्रव ॥ १० ॥

यत्र यस्मिन्लोके कामाः काम्यमानाः देवाः निकामानितरामवश्यं प्रार्थ्यमानाइन्द्रादयश्च विद्यन्ते यद्वा सूर्येण विना कर्माणि नघटन्ते इति सर्वेषां कर्मणां मूलभूतस्यादित्यस्य विष्टपं सहस्थानं विद्यते यत्र लोके स्वधान्नं स्वधाकारेण दत्तमन्नं तृप्तिस्तर्पणं यत्रविद्यते तत्र लोके माममृतं कृधि ॥ १० ॥

अथैकादशी–

यत्रानन्दाश्चमोदाश्चमुदःप्रमुदआसते ।
कामस्ययत्राप्ताःकामास्तत्रमाममृतंकृधीन्द्रायेन्दोपरिस्रव॥ ११॥२७॥

यत्र॑ । आ॒ऽन॒न्दाः । च॒ । मोदाः॑ । च॒ । मुदः॑ । प्र॒ऽमुदः॑ । आस॑ते ।
काम॑स्य । यत्र॑ । आ॒प्ताः । कामाः॑ । तत्र॑ । माम् । अ॒मृत॑म् ।
कृ॒धि॒ । इन्द्रा॑य । इ॒न्दो॒ इति॑ । परि॑ । स्र॒व॒ ॥ ११ ॥ २७ ॥

यत्र यस्मिन् लोके आनन्दादयआसते तेषामल्पोभेदोद्रष्टव्यः यत्र लोके कामस्य काम्यमानस्य देवस्य सर्वेकामाआप्ताः प्राप्ताभवन्ति तत्र माममृतं कृधि एतत्तु त्वयाविना नघटतइति हे सोम त्वं परिस्रव ॥ ११ ॥

॥ इति सप्तमस्य पंचमे सप्तविंशोवर्गः ॥ २७ ॥

यइन्दोइति चतुर्ऋचमेकादशं सूक्तं ऋष्याद्याः पूर्ववत् । तथाचानुक्रम्यते—यइन्दोश्चतुष्कमिति । गतः सूक्तविनियोगः ।

तत्र प्रथमा—

यइन्दोः॒पव॑मान॒स्यानु॒धामा॒न्यक्र॑मीत् ।
तमा॑हुः॒सुप्र॒जाइति॒यस्ते॒सोमा॒विध॒न्मन॒इन्द्रा॒येन्दो॒परि॑स्रव ॥ १ ॥

यः । इन्दोः॑ । पव॑मानस्य । अनु॑ । धामा॑नि । अक्र॑मीत् ।
तम् । आ॒हुः॒ । सु॒ऽप्र॒जाः । इति॑ । यः । ते॒ । सो॒म॒ । अवि॑धत् ।
मनः॑ । इन्द्रा॑य । इ॒न्दो॒ इति॑ । परि॑ । स्र॒व॒ ॥ १ ॥

पवमानस्य पूयमानस्य इन्दोः सोमस्य धामानि स्थानानि द्रोणकलशादीनि यद्वा धामानि तेजांसि योब्राह्मणः अन्वक्रमीत् अनुक्रामति अनुगच्छति तमनुजनं सुप्रजाः शोभनप्रजननः कल्याणपुत्रादिप्रजायुक्तइत्याहुः । नित्यमसिच्प्रजामेधयोरित्यसिच्समासान्तः । यः सोममभिषुणोति सपुत्रादियुक्तोभवतीत्यर्थः । किंच हे सोम योमनुष्यः ते त्वदर्थं मनः अविधत् करोति यद्वा ते त्वदीयं मनः अविधत् परिचरति विधतिः परिचरणकर्मा तमपि कल्याणजननमित्याहुः तस्मात् त्वं परिस्रव ॥ १ ॥

अथ द्वितीया—

ऋषे॑मन्त्र॒कृतां॒स्तोमैः॒कश्य॑पोद्व॒र्धय॒न्गिरः॑ ।
सोमं॑नमस्य॒राजा॑नं॒योज॒ज्ञेवी॒रुधां॒पति॒रिन्द्रा॒येन्दो॒परि॑स्रव ॥ २ ॥

ऋषे । मंत्रऽकृताम् । स्तोमैः । कश्यप । उत्ऽवर्धयन् । गिरः ।
सोमम् । नमस्य । राजानम् । यः । जज्ञे । वीरुधाम् ।
पतिः । इन्द्राय । इन्दो इति । परि । स्रव ॥ २ ॥

ऋषिः स्वात्मानं प्रत्याह हे ऋषे सूक्तद्रष्टः हे कश्यप आत्मन् त्वं मंत्रकृतामृषीणां स्तोमैः स्तोत्रैः गिरः स्तुतिरूपावाचः उद्वर्धयन्नुपर्युपरिवर्धन् राजानं सर्वेषां स्वामिनं तं सोमं नमस्य मनसा पूजय नमसः पूजायां नमोवरिवइति क्यच् । यः सोमः वीरुधां वनस्पतीनां पतिः पालकः सजज्ञे जातः तं नमस्य हे सोम यथा आत्मना सुतोभवसि तथा परिस्रव ॥ २ ॥

अथ तृतीया—

सप्तदिशोनानासूर्याःसप्तहोतारऋत्विजः ।
देवाआदित्यायेसप्ततेभिःसोमाभिरक्षनइन्द्रायेन्दोपरिस्रव ॥ ३ ॥

सप्त । दिशः । नानाऽसूर्याः । सप्त । होतारः । ऋत्विजः ।
देवाः । आदित्याः । ये । सप्त । तेभिः । सोम । अभि ।
रक्ष । नः । इन्द्राय । इन्दो इति । परि । स्रव ॥ ३ ॥

सप्तदिशः सोमोयस्यां दिशि वर्तते तद्व्यतिरिक्ताः सप्तभवन्ति ताः नानासूर्याः नानाविधैः सूर्यैरधिष्ठिताऋतवोभवन्ति नानालिंगत्वादृतूनां नानासूर्यत्वमित्याम्नानात् । यद्वा नानासूर्याइति दिग्विशेषणं । तथा होतारः वषट्कर्तारोहोत्रादयः सप्तऋत्विजोभवन्ति किंच सप्तआदित्याः अदितेः पुत्राधात्रादयोमार्तंडवर्जिताः ये सप्तदेवाः सन्ति । एतत्तु—अष्टौ पुत्रासोअदितेः[1] । इत्यत्र प्रपंचयिष्यते । हे सोम तेभिस्तैः दिगादिभिः सर्वैर्नोस्मानभिरक्ष । एतत्तु त्वया विना नघटतइति तस्मादिन्द्रायेन्दो परिस्रव ॥ ३ ॥

उपाकरणोत्सर्जनयोर्मंडलाद्यन्तहोमे यत्तेराजन्नित्येषा । सूत्रितंच—यत्तेराजन्नितिद्वृचाः समानीवआकूतिरित्येकेति ।

---

1 ऋ० सं०८. ३. १. ।

तत्र एषा सूक्ते चतुर्थी—

यत्तेराजञ्छृतंहविस्तेनंसोमाभिरंक्षनः।
अरातीवामानंस्तारीन्मोचंनःकिंचनाममदिन्द्रायेन्दोपरिंस्रव॥४॥२८॥

यत्। ते। राजन्। शृतम्। हविः। तेन। सोम। अभि। रक्ष। नः।
अरातिऽवा। मा। नः। तारीत्। मो इति। च। नः। किम्। चन।
आममत्। इन्द्राय। इन्दो इति। परि। स्रव॥ ४॥ २८॥

हे राजन् सर्वेषां कर्मसाधनत्वेन स्वामिन् हे सोम ते त्वदर्थं शृतं पक्वं यत् हविरस्ति शृतं। शृतं पाकेइति निष्ठायां निपातितः। तेन हविषा नोस्मानभिरक्ष अभिपालय। तस्मात् त्वदभिरक्षितानस्मान् अरातीवा अरातित्ववान् शत्रुः नोस्मान् मातारीत् मावधीत्। किंच नोस्माकं किंचन किंचिदपि धनादिकं शत्रुः मोआममत् माहिंसीत्। यदेतत् एतैः सूक्तैरुक्तं तद्यथास्माकं भवति तथा हे इन्दो इन्द्राय परिस्रव। एवं स्वादिष्ठयेत्यादिभिरेतदन्तैः सूक्तैर्बहुविधं सोममाहात्म्यं अभ्यधायि तस्मात् ऐहिकामुष्मिकफलसिद्ध्ये सोमयागः करणीयइत्युक्तं भवति॥ ४॥

॥ इति सप्तमस्य पंचमेष्टाविंशोवर्गः॥ २८॥

॥ इति नवमे मंडले सप्तमोनुवाकः॥ ७॥

॥ इति पावमानसौम्यं नवमं मंडलं समाप्तं॥

---

दशमे मंडले द्वादशानुवाकाः तत्र प्रथमानुवाके षोडशसूक्तानि तत्राग्नेबृहन्निति सप्तर्चं प्रथमं सूक्तं आप्त्यस्य त्रितस्यार्षं अनादेशपरिभाषया त्रिष्टुप् मंडलादिपरिभाषयाग्निर्देवता। तथाचानुक्रम्यते—अग्नेसप्तत्रितइति। प्रातरनुवाकाश्विनशस्त्रयोराग्नेयेक्रतौ त्रैष्टुभेछन्दसि इदमादीन्यष्टसूक्तानि अष्टमस्यांत्यास्तिस्रोवर्जयित्वा। सूत्र्यते हि—अनेनयोग्नेबृहन्नित्यष्टानामुत्तमादुत्तमास्तिस्रउद्धरेदितित्रैष्टुभमिति। प्रातरनुवाकन्यायेन तस्यैव समाम्नायस्य सहस्रावममोदेतोः शंसेदितिच होमार्थं प्रणीते आहवनीये प्राक्होमादुपशान्ते ज्योतिष्मद्गुणकाग्निदेवताका काचिदिष्टिस्तत्राद्या याज्या। सूत्रितंच—इष्टिरग्निर्ज्योतिष्मान्वरुणउदग्नेशुचयस्तवाग्नेबृहन्नुषसामूर्ध्वोअस्थादिति। उपाकरणोत्सर्जनयोर्मंडलादिहोमेप्येषा सूत्रमुदाहृतं।

तत्र प्रथमा—

अग्ने॒बृह॒न्नु॒षसा॑मू॒र्ध्वोअ॑स्थान्निर्ज॑ग॒न्वान्तम॑सो॒ज्योति॒षागा॑त्।
अ॒ग्निर्भा॒नुना॒रुश॑ता॒स्वङ्ग॒आजा॒तोविश्वा॒सद्मा॑न्यप्राः॥ १॥

अग्ने॑। बृ॒हन्। उ॒षसा॑म्। ऊ॒र्ध्वः। अ॒स्था॒त्। निः॒ऽज॒ग॒न्वान्। तम॑सः। ज्योति॑षा। आ। अ॒गा॒त्। अ॒ग्निः। भा॒नुना॑। रुश॑ता। सु॒ऽअङ्गः॑। आ। जा॒तः। विश्वा॑। सद्मा॑नि। अ॒प्राः॥ १॥

बृहन्महानेषोग्निः उषसामग्रे उषसामुपरि उषःकाले ऊर्ध्वः प्रज्वलितः सन् ज्वालारूपेण अस्थात् तिष्ठति ततस्तमसः रात्रिनामैतत् रात्रेर्निर्जगन्वान् निर्गतः गमः क्वसाविडभावे रूपं निर्गतःनिष्क्रान्तवान् सोग्निर्ज्योतिषा स्वीयेन तेजसा लक्षितः सन् आगात् गार्हपत्यात् विह्रियमाणआहवनीयं प्रत्यागच्छति। अनन्तरं स्वंगः शोभनज्वालावयवः जातः कर्मार्थं समुत्पन्नएषोग्निः रुशता रोचतेर्ज्वलतिकर्मणइदं रूपं आरोचमानेन यद्वा रुशतिर्हिंसार्थः तमसां हिंसकेन भानुना तेजसा विश्वा सद्मानि सर्वान् लोकान् यद्वा सदनानि यज्ञगृहाणि आप्राः आपूरयति। प्रापूरणे तिङांतिङोभवन्तीति तिपः सिबादेशः। अत्र वाजसनेयकम्—अग्ने बृहन्नुषसामूर्ध्वोअस्थादित्यग्नेह्येषबृहन्नुषसामूर्ध्वस्तिष्ठतिनिर्जगन्वान्तमसोज्योतिषागादितिनिर्जगन्वात्रात्रेस्तमसोज्योतिषेतिअग्निर्भानुनारुशतास्वंगइत्यग्निर्वाएषभानुनारुशतास्वंगआजातोविश्वासद्मान्यप्राइतिइमेवैलोकाविश्वासद्मानितानेषजातआपूरयतीति॥ १॥

अथ द्वितीया—

सजातोगर्भोअसिरोदस्योरग्नेचारुर्विभृतओषधीषु ।
चित्रःशिशुःपरितमांस्यक्तून्प्रमातृभ्योअधिकनिक्रदद्गाः ॥ २ ॥

सः । जातः । गर्भः । असि । रोदस्योः । अग्ने । चारुः । विऽभृतः ।
ओषधीषु । चित्रः । शिशुः । परि । तमांसि । अक्तून् । प्र ।
मातृऽभ्यः । अधि । कनिक्रदत् । गाः ॥ २ ॥

हे अग्ने जातउत्पन्नः चारुः कल्याणरूपः ओषधीषु ओषधिविकारेष्वरणीषु विभृतः विशेषेण मथितः आहवनीयाद्यात्मना विविधं ह्रियमाणः ओषधीषु वर्तमानः सत्वं रोदस्योर्द्यावापृथिव्योर्गर्भोसि गर्भोभवसि अग्निरूपआदित्यरूपश्चेति । किंच चित्रश्चित्रवर्णः काली करालीचमनोजवेत्यादिसप्तजिह्वादिभिर्नानारूपः यद्वा चित्रश्चायनीयः शिशुः ओषधीनां शिशुः अग्निः तमांसि अक्तून् रात्रिवत् कृष्णान् शत्रूंश्च परिभवसि स्वतेजसा अभिभवसि सत्वं मातृभ्यः मातृरूपाभ्यः ओषधीभ्यः अधिः पंचम्यर्थद्योतकः ताभ्यः कनिक्रदत् पुनःपुनः शब्दंकुर्वन् प्रगाः प्रगच्छसि प्रजायसे ॥ २ ॥

अथ तृतीया—

विष्णुरित्थापरममस्यविद्वाञ्जातोबृहन्नभिपातितृतीयम् ।
आसायदस्यपयोअक्रतस्वंसचेतसोअभ्यर्चन्त्यत्र ॥ ३ ॥

विष्णुः । इत्था । परमम् । अस्य । विद्वान् । जातः । बृहन् । अभि ।
पाति । तृतीयम् । आसा । यत् । अस्य । पयः । अक्रत ।
स्वम् । सऽचेतसः । अभि । अर्चन्ति । अत्र ॥ ३ ॥

परमं उत्कृष्टं विद्वान् जानानः जातः प्रादुर्भूतोबृहन् महान् इत्था इत्थमनेन प्रकारेण विष्णुः व्यापनशीलः ज्ञानादिगुणयुक्तोग्निः अस्य इमे तृतीयं त्रयाणां पूरकं त्रितं मां अभिपाति अभिर-

क्षतु। एकतोद्वितस्त्रितइति त्रयोबभूवुरिंति यास्केनोक्तं। किंच अस्याग्नेः स्वमात्मीयं पयउदकं आसा आस्येन यद्यदा अक्रत कुर्वन्ति यजमानायाचन्ते तदानीं अत्रास्मिन्लोके स्थिताः स्तोतारः सचेतसः समानमनस्काभूत्वा एनमभ्यर्चन्ति अभिष्टुवन्ति ॥ ३ ॥

अथ चतुर्थी—

अतं॒उत्वापितु॒भृतो॒जनि॑त्रीरन्ना॒वृधं॒प्रति॑चरन्त्यन्नैः।
ताईं॒प्रत्ये॑षि॒पुन॑र॒न्यरू॑पा॒असि॒त्वंवि॒क्षुमानु॑षीषु॒होता॑ ॥ ४ ॥

अत॑ः। ऊँ इति॑। त्वा॒। पि॒तु॒ऽभृतः॑। जनि॑त्रीः। अ॒न्न॒ऽवृध॑म्। प्रति॑। च॒र॒न्ति॒। अन्नैः॑। ताः। ईम्। प्रति॑। ए॒षि॒। पुनः॑। अ॒न्यऽरू॑पाः। असि॑। त्वम्। वि॒क्षु। मानु॑षीषु। होता॑ ॥ ४ ॥

हे अग्ने अतउइत्यवधारणे अस्मादेवकारणात् पितुभृतः पितुनान्नेन सर्वस्य जगतोधारयित्र्यः पोषयित्र्योवा जनित्रीः जनयित्र्यः ओषधयः अन्नावृधं अन्नस्य वर्धकं त्वा त्वां अन्नैर्हेतुभिः प्रतिचरन्ति परिचरन्ति। अभिगच्छन्ति ततस्त्वं ईमेनास्ताओषधीः प्रत्येषि प्रतिगच्छसि। पुनरपि अन्यरूपाः जीर्णाः ओषधीः दावभूतस्त्वं गच्छसि। किंच मानुषीषु मनुष्यजातिषु विक्षु प्रजासु यद्वा विक्षु अग्निहोत्रादिक्रियास्वभिनिविशन्तीषु मानुषीषु मनुष्यजातिषु होता देवानामाह्वाता होमनिष्पादकोवा असि भवसि। मनुष्येषु स्थितइत्यर्थे ब्राह्मणम्—देवोह्येषमर्त्येष्विति ॥ ४ ॥

आतिथ्यायां स्विष्टकृतोनुवाक्या होतारमित्येषा। सूत्रितंच—होतारं चित्ररथमध्वरस्य प्रयायमग्निर्भरतस्यशृण्वइति संयाज्येइति।

सैषा सूक्ते पञ्चमी—

होता॑रंचि॒त्ररथमध्व॒रस्यं॑य॒ज्ञस्यं॑य॒ज्ञस्यके॒तुंरुश॑न्तम्।
प्रत्य॑र्धिंदे॒वस्यं॑देवस्यम॒ह्नाश्रि॒यात्वं१॒ग्निमति॑थिं॒जना॑नाम् ॥ ५ ॥

---

१ नि० ४. ६.।   २ तै० सं० ६. १. ४.।

होतारम् । चित्रऽरथम् । अध्वरस्य । यज्ञस्यऽयज्ञस्य । केतुम् ।
रुशन्तम् । प्रतिऽअर्धिम् । देवस्यऽदेवस्य । मह्ना । श्रिया ।
तु । अग्निम् । अतिथिम् । जनानाम् ॥ ५ ॥

अध्वरस्य यज्ञस्य होतारं एतन्नामानं ऋत्विजं यद्वा होतारं देवानामाह्वातारं चित्ररथं नानारूपरथं अध्वरस्य रक्षोभिरहिंसितस्य यज्ञस्ययज्ञस्य सर्वस्य यज्ञस्य केतुं प्रज्ञापकं पताकास्थानीयंवा रुशंतं श्वेतवर्णं मह्ना स्वमहत्वेन देवस्यदेवस्य सर्वेषां देवानां प्रत्यर्धिं इन्द्रं प्रति भवन्तं । यत् सर्वेषामार्धमिन्द्रंभतीतिर्ब्राह्मणं । तादृशं जनानां यजमानानामतिथिं अतिथिवत्पूज्यं अग्निं तु क्षिप्रं श्रिया श्रियैर्थं वयं स्तुमः ॥ ५ ॥

अथ षष्ठी—

सतुवस्त्राण्यधपेशनानिवसानोअग्निर्नाभापृथिव्याः ।
अरुषोजातःपदइळायाःपुरोहितोराजन्यक्षीहदेवान् ॥ ६ ॥

सः । तु । वस्त्राणि । अध । पेशनानि । वसानः । अग्निः । नाभा ।
पृथिव्याः । अरुषः । जातः । पदे । इळायाः । पुरःऽहितः ।
राजन् । यक्षि । इह । देवान् ॥ ६ ॥

हे राजन् दीप्यमानाग्ने वस्त्राणि आच्छादकानि तेजांसि अध अपिच पेशनानि तेषां तेजसां कार्ष्ण्यशौक्ल्यादीनि रूपाणि यद्वा अथानन्तरं पेशनानि पेशइति हिरण्यनाम हिरण्यवत् हिरण्यसदृशानि भास्वराणि तेजांसि वसान आच्छादयन् पृथिव्यानाभा नाभौ नाभिस्थानीये इळायास्पदे उत्तरवेद्यां । एतद्वा इळायास्पदंयदुत्तरवेदीनाभिरित्याम्नानात् । तस्यां जातः समुत्पन्नः अरुषः आरोचमानोयोग्निः एवं विधोसि सत्वं पुरोहितः पुरतोनिहितः पूर्वस्यां दिशि आहवनीयायतने स्थापितः सन् इहास्मिन्यज्ञे देवान् इन्द्रादीन् यक्षि पूजय ॥ ६ ॥

अथ सप्तमी—

आहिद्यावापृथिवीअग्नउभेसदापुत्रोनमातराततन्थ ।
प्रयाह्यच्छोशतोयविष्ठाथावहसहस्येहदेवान् ॥ ७ ॥ २१ ॥

---

१ तै० सं० ५. ४. ८. । २ ऐ० ब्रा० १. २८. ।

आ । हि । द्यावापृथिवी इति । अग्ने । उभे इति । सदा । पुत्रः ।
न । मातरा । ततन्थ । प्र । याहि । अच्छ । उशतः । यविष्ठ ।
अथ । आ । वह । सहस्य । इह । देवान् ॥ ७ ॥ २९ ॥

हे अग्ने त्वं उभे द्यावापृथिवी द्यावापृथिव्यौ सदा सर्वदा आततन्थ आतेनिथ स्वतेजोभिर्विस्तारयसि हिखलु । बभूथाततंथेति थलि निपातितः । तत्र दृष्टान्तः-पुत्रोन यथा पुत्रो मातरा मातापितरौ क्षीणौ धनैस्तनोति तद्वत् । किंच हे यविष्ठ युवतम त्वं उशतः कामयमानानच्छाभिलक्ष्य प्रयाहि प्रकर्षेण गच्छ । अथानन्तरं हे सहस्य सहसोबलस्य पुत्र हे अग्ने त्वं इहास्मदीये यज्ञे देवानिन्द्रादीन् आवह प्रापय ॥ ७ ॥

॥ इति सप्तमस्य पंचमे एकोनत्रिंशोवर्गः ॥ २९ ॥

पिप्रीहीति सप्तर्चं द्वितीयं सूक्तं ऋष्याद्याः पूर्ववत् । पिप्रीहीत्यनुक्रान्तं । मातरनुवाकाश्विनशस्त्रयोरुक्तः सूक्तविनियोगः । दर्शपूर्णमासयोराद्या स्विष्टकृतोनुवाक्या । सूत्रितंच— अथ स्विष्टकृतः पिप्रीहिदेवाँ उशतोयविष्ठेत्यनुवाक्येति ।

तत्र प्रथमा—

पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँॠतुपते यजेह ।
ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठः ॥ १ ॥

पिप्रीहि । देवान् । उशतः । यविष्ठ । विद्वान् । ऋतून् । ऋतुऽपते ।
यज । इह । ये । दैव्याः । ऋत्विजः । तेभिः । अग्ने । त्वम् ।
होतॄणाम् । असि । आऽयजिष्ठः ॥ १ ॥

हे यविष्ठ युवतम अग्ने उशतः स्तुतीः श्रोतुं कामयमानान् देवान् पिप्रीहि हविर्भिः प्रीणय । हे ऋतुपते ऋतूनां देवयागकालानां स्वामिन् अग्ने ऋतून् यागकालान् विद्वान् जानानः त्वं इहास्मिन् यज्ञे तान् यज पूजय । किंच हे अग्ने दैव्याः देवेषु भवाः अग्निर्होताश्विनावध्वर्यूत्वष्टाग्नीन्मित्रउपवक्तेत्यत्रोक्ताये ऋत्विजः सन्ति तेभिस्तैः सह देवान्यज यद्वा दैव्याः देवेषु भवाऋत्विजः आश्वलायनेनोक्ताः चंद्रमाब्रह्मादित्योध्वर्युः पर्जन्यउद्गातेति । तैः सह यज । यस्मात्त्वं होतॄणां मध्ये आयजिष्ठः आभिमुख्येन देवानां यष्टृतमोसि भवसि ॥ १ ॥

अथ द्वितीया—

वेपिहोत्रमुतपोत्रंजनानांमन्धातासिद्रविणोदाऋतावा ।
स्वाहावयंकृणवामाहवींषिदेवोदेवान्यजत्वग्निरर्हन् ॥ २ ॥

वेषि । होत्रम् । उत । पोत्रम् । जनानाम् । मन्धाता । असि ।
द्रविणःऽदाः । ऋतऽवा । स्वाहा । वयम् । कृणवाम । हवींषि ।
देवः । देवान् । यजतु । अग्निः । अर्हन् ॥ २ ॥

हे अग्ने जनानां यजमानार्थं होत्रं होतुः कर्म तेन क्रियमाणं स्तोत्रं वेषि कामयसे । उतापिच पोत्रं पोतुः कर्म तेन क्रियमाणां स्तुतिं कामयसे । किंच मन्धाता मेधावी ऋतावा सत्यवांस्त्वं द्रविणोदा असि धनस्य प्रदाता भवसि। अथ परोक्षः वयं देवेभ्यः हवींषि स्वाहाकृणवाम स्वाहाकरवाम प्रयच्छाम । ततोदेवोदीप्यमानः अर्हन् प्रशस्यः यजमानयोग्योवाग्निः देवान्यजतु तैर्हविर्भिः पूजयतु ॥ २ ॥

दर्शपूर्णमासातिपत्यादौ निमित्ते पाथिकृतीष्टिः कर्तव्या । तत्र आदेवानामित्येषा याज्या । सूत्रितंच—वेत्थाहिवेधोअध्वनआदेवानामपिपन्थामगन्मेति । प्रायणीयायामप्येषैव याज्या उदयनीयायां सैवानुवाक्या। सूत्रितंच—अग्नेनयसुपथारायेअस्मानादेवानामपिपंथामगन्मेति विपरीताश्चयाज्यानुवाक्याइति ।

सैषा सूक्ते तृतीया—

आदेवानामपिपन्थामगन्मयच्छक्नवामतदनुप्रवोळ्हुम् ।
अग्निर्विद्वान्त्सयजात्सेदुहोतासोअध्वरान्त्सऋतून्कल्पयाति ॥ ३ ॥

आ । देवानाम् । अपि । पन्थाम् । अगन्म । यत् ।
शक्नवाम । तत् । अनु । प्रऽवोळ्हुम् ।
अग्निः । विद्वान् । सः । यजात् । सः । इत् । ऊँ इति । होता ।
सः । अध्वरान् । सः । ऋतून् । कल्पयाति ॥ ३ ॥

देवानां देवलोकादिगमनसाधनं देवानां स्वभूतं पंथां पंथानं तमपि वैदिकमार्गं वयमागन्म आगतवन्तोभवेम । येन देवान् प्राप्नुमः तथा वयं यत्कर्मानुष्ठातुं शक्नुवाम शक्नुमः समर्थाभवामः तत्कर्म अनुक्रमेण प्रवोळ्हुं प्रकर्षेण वोढुं समाप्तिं प्रापयितुं समर्थाभवामः अनन्तरं विद्वान् तं पंथानं जानानः सोऽग्निः यजात् देवान् यजतु सेत् उ सएव खलु होता मनुष्याणां होमनिष्पादकः ततः सएवाग्निः अध्वरान् यज्ञान् किंच सएव ऋतून् कालान् कल्पयाति कल्पयतु करोतु ॥ ३ ॥

व्रतातिपत्तौ व्रातपतीष्टिः कर्तव्या तत्र यद्वोवयमित्येषा याज्या। सूत्रितंच—त्वमग्नेव्रतपाअसि यद्वोवयंप्रमिनामव्रतानीति ।

सैषा चतुर्थी—

यद्वोंवयंप्र॑मि॒नाम॑व्र॒ता॑नि॑वि॒दुषां॑दे॒वा॒अवि॑दु॒ष्टरासः ।
अ॒ग्निष्टद्वि॑श्व॒मापृ॑णातिवि॒द्वान्ये॑भि॑र्दे॒वाँ ऋ॒तुभिः॑क॒ल्पया॑ति ॥४॥

यत् । वः॒ । व॒यम् । प्र॒ऽमि॒नाम॑ । व्र॒ता॑नि॑ । वि॒दुषा॑म् । दे॒वाः॒ ।
अवि॑दुःऽतरासः । अ॒ग्निः । तत् । विश्व॑म् । आ । पृ॒णा॒ति॒ ।
वि॒द्वान् । येभि॑ः । दे॒वान् । ऋ॒तुऽभि॑ः । क॒ल्पया॑ति॑ ॥ ४ ॥

हे देवाः अविदुष्टरासः अविद्वत्तराः अत्यन्तमजानन्तोवयं वः युष्माकं यत् यत्किंचित् व्रतानि कर्माणि विदुषां भवतां जानतामेव प्रमिनाम प्राहिंसितवन्तः भवत्सु जानत्सु नित्यनैमित्तिककर्माणि विलोपितवन्तइत्यर्थः । विद्वान् एतत्सर्वं जानानः अग्निः तत् स्विष्टकृतं विश्वं सर्वं कर्मजातं आपृणाति आपूरयतु फलसहितं करोत्वित्यर्थः । केनापूरयतु तत्राह येभिर्ऋतुभिः यागयोग्यैः कालैः देवान् कल्पयाति कल्पयति कर्मांगभावाय समर्थयति तैरापूरयतु ॥४॥

अथ पञ्चमी—

यत्पा॑क॒त्रामन॑सादी॒नद॑क्षा॒नय॒ज्ञस्य॑मन्व॒तेमर्त्या॑सः ।
अ॒ग्निष्टद्धोता॑क्रतु॒विद्वि॑जा॒नन्यजि॑ष्ठोदे॒वाँ ऋ॑तु॒शोय॑जाति॥५॥

यत् । पा॒क॒ऽत्रा । मन॑सा । दी॒नऽद॑क्षाः । न । य॒ज्ञस्य॑ ।
म॒न्व॒ते । मर्त्या॑सः । अ॒ग्निः । तत् । होता॑ । क्र॒तु॒ऽवित् ।
वि॒ऽजा॒नन् । यजि॑ष्ठः । दे॒वान् । ऋ॒तु॒ऽशः । य॒जा॒ति॒ ॥ ५ ॥

दीनदक्षाः दीनबलाः दीनोत्साहावा मर्त्यासोमर्त्याः मनुष्याऋत्विजः पाकत्रा पाकेन बहुलग्रहणादस्मादपि तृतीयार्थे त्राप्रत्ययः। पाकेन पक्तव्येन विशिष्टज्ञानरहितेन अल्पेन वा मनसा युक्ताः सन्तः यज्ञस्य यज्ञसंबन्धि यत्कर्म न मन्वते नविजानन्तः तदा होता देवानामाह्वाता होमनिष्पादकोवा क्रतुवित् कर्मवित् यजिष्ठः देवानामतिशयेन यष्टा अग्निः तव तेन कर्मणा ऋतुशः ऋतावृतौ स्वेस्वे यागयोग्ये काले देवान् यजाति यजतु हविर्भिः पूजयतु ॥५॥

अथ षष्ठी—

विश्वे॑षां॒ह्य॑ध्व॒राणा॒मनी॑कंचि॒त्रंके॒तुंजनि॑तात्वाज॒जान॑।
सआय॑जस्वनृ॒वती॒रनु॒क्षाःस्पा॒र्हाइष॑ःक्षु॒मती॑र्वि॒श्वज॑न्याः ॥ ६ ॥

विश्वे॑षाम्। हि। अ॒ध्व॒राणा॑म्। अनी॑कम्। चि॒त्रम्। के॒तुम्। जनि॑ता। त्वा॒। ज॒जान॑। सः। आ। य॒ज॒स्व॒। नृ॒ऽवती॑ः। अनु॑। क्षाः। स्पा॒र्हाः। इष॑ः। क्षु॒ऽमती॑ः। वि॒श्वऽज॑न्याः ॥ ६ ॥

हे अग्ने विश्वेषां सर्वेषां अध्वराणां यज्ञानां अनीकं मुखं प्रधानं चित्रं चायनीयं नानारूपं केतुं प्रज्ञापकं त्वा त्वां जनिता जनयिता प्रजापतिर्यजमानोवा जजान जनयामास। उत्पादितः सत्वं नृवतीः दासादियुक्ताः क्षाः पृथिवीनामैतत् क्षयंत्यत्रेति क्षा भूमिः अन्वायजस्व अनुप्रयच्छ। यद्वा नृवतीः नृभिः संस्कृतानि क्षां अनु पृथिवीं वेदिलक्षणां अनुगतानि वेद्यामासादितानि स्पार्हाः स्पृहणीयानि क्षुमतीः स्तुतिमंत्रलक्षणशब्दवन्ति विश्वजन्याः सर्वजनहितानि वृष्ट्यन्नहेतुत्वात्। तानि इषोन्नानि हविर्लक्षणानि आयजस्व देवेभ्यः प्रयच्छ ॥ ६ ॥

अथ सप्तमी—

यंत्वा॒द्यावा॑पृथि॒वीयंत्वाप॒स्त्वष्टा॒यंत्वा॑सु॒जनि॑माज॒जान॑।
पन्था॒मनु॑प्रवि॒द्वान्पि॑तृ॒याणं॑द्यु॒मद॑ग्नेसमिधा॒नोविभा॑हि ॥७॥३०॥

यम्। त्वा॒। द्यावा॑पृथि॒वी इति॑। यम्। त्वा॒। आप॑ः। त्वष्टा॑। यम्। त्वा॒। सु॒ऽजनि॑मा। ज॒जान॑। पन्था॑म्। अनु॑। प्र॒ऽवि॒द्वान्। पि॒तृ॒ऽयान॑म्। द्यु॒ऽमत्। अ॒ग्ने॒। स॒म्ऽइ॒धा॒नः। वि। भा॒हि॒ ॥७॥३०॥

हे अग्ने यं त्वा त्वां द्यावापृथिवी जनितवत्यौ आदित्यात्मना अग्न्यात्मना च तथायं त्वां आपः मेघोदरगताः विद्युदात्मना स्थितं जनितवत्यः यद्वा आपइत्यन्तरिक्षनाम द्यावापृथिवी अन्तरिक्षंच इमे त्रयोलोकाः यंत्वामजीजनन् । किंच सुजनिमाशोभनजननः त्वष्टा प्रजापतिः यं त्वां जजान जनयामास हे अग्ने पितृयानं पितरोयेन मार्गेण गच्छन्ति तं पंथां हविर्वहनमार्गं अनुप्रविद्वान् प्रजानंस्त्वं समिधानः समिध्यमानः सन् द्युमत् दीप्तियुक्तं यथा भवति तथा विभाहि विशेषेण दीप्यसे ॥ ७ ॥

॥ इति सप्तमस्य पंचमे त्रिंशोवर्गः ॥ ३० ॥

इनइति सप्तर्चं तृतीयं सूक्तं ऋष्याद्याः पूर्ववत् इनइत्यनुक्रान्तं प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः ।

तत्र प्रथमा—

इ॒नो रा॑जन्नर॒तिः समि॑द्धो॒ रौद्रो॒ दक्षा॑य सुषु॒माँ अ॑दर्शि ।
चि॒कि॒द्वि भा॑ति भा॒सा बृ॑ह॒तासि॑क्नीमेति॒ रुश॑तीम॒पाज॑न् ॥ १ ॥

इ॒नः । रा॒ज॒न् । अ॒र॒तिः । सम्ऽइ॑द्धः । रौद्रः॑ । दक्षा॑य । सु॒सु॒ऽमान् । अ॒द॒र्शि॒ । चि॒कि॒त् । वि । भा॒ति॒ । भा॒सा । बृ॒ह॒ता । असि॑क्नीम् । ए॒ति॒ । रुश॑तीम् । अ॒प॒ऽअज॑न् ॥ १ ॥

हे राजन् दीप्यमानाग्ने त्वं इनः ईश्वरः सर्वस्य भवसि । अथपरोक्षः अरतिः हविरादाय देवान् प्रति गन्ता समिद्धः संदीप्तः रौद्रः शत्रूणां भयंकरः सुषुमान् ओषध्यात्मनास्थितोंशुः सुष्टुसूयते इतिसुषुः सोमः तेन तद्वान् शोभनप्रसवोवा सोग्निः दक्षाय यजमानानां धनादिवृध्यर्थं वा अदर्शि सर्वैर्दृश्यते । किंच चिकित् सर्वं जानानोग्निर्विभाति विशेषेण दीप्यते तथा बृहता महता भासा तेजसा ज्वालालक्षणेन असिक्नीं रात्रिं एति सायं होमसिध्यर्थमेति गच्छति । किं कुर्वन् रुशतीं श्वेतवर्णां दीप्तिं अपाजन् अपगमयन् रात्रिं गच्छति सामर्थ्यात् रात्रिं परित्यजन् उषसं प्रातर्होमसिध्यर्थं गच्छतीत्यर्थोलभ्यते ॥ १ ॥

अथ द्वितीया—

कृ॒ष्णां यदेनी॑म॒भि वर्प॑सा॒ भूज्ज॒नय॒न्योषां॑ बृह॒तः पि॒तुर्जाम् ।
ऊ॒र्ध्वं भा॒नुं सूर्य॑स्य स्तभा॒यन्दि॒वो वसु॑भिरर॒तिर्वि भा॑ति ॥ २ ॥

कृष्णाम् । यत् । एनीम् । अभि । वर्पसा । भूत् । जनयन् । योषाम् ।
बृहतः । पितुः । जाम् । ऊर्ध्वम् । भानुम् । सूर्यस्य । स्तभायन् ।
दिवः । वसुऽभिः । अरतिः । वि । भाति ॥ २ ॥

सोग्निर्यद्यदा कृष्णां कृष्णवर्णा एनीं गच्छन्तीं रात्रिं वर्पसा आत्मीयेन ज्वालालक्षणेन रूपेण अभिभूत् अभिभवति । किंकुर्वन् बृहतोमहतः पितुः सर्वस्य जगतः पालयितुः पितृभूताद्वा आदित्यात् जां जायमानां योषां उषसं जनयन् अभिव्यंजयन् रात्रिमभ्यभूत् तदानीमरतिः गमनशीलोग्निः दिवोद्युलोकस्य वसुभिः वासयितृभिः आच्छादकैः संधुक्षणसमर्थैरात्मीयैः तेजोभिः सूर्यस्य भानुं दीप्तिं ऊर्ध्वमुपरिष्टात् स्तभायन् स्तंभयन् विभाति विशेषेण दीप्यते ॥ २ ॥

अथ तृतीया—

**भद्रोभद्रयासचमानआगात्स्वसारंजारोअभ्येतिपश्चात् ।**
**सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभिराममस्थात् ॥ ३ ॥**

भद्रः । भद्रया । सचमानः । आ । अगात् । स्वसारम् । जारः । अभि ।
एति । पश्चात् । सुऽप्रकेतैः । द्युऽभिः । अग्निः । विऽतिष्ठन् ।
रुशत्ऽभिः । वर्णैः । अभि । रामम् । अस्थात् ॥ ३ ॥

भद्रोभजनीयः कल्याणः भद्रया भजनीयया दीप्त्या उषसावा सचमानः सेव्यमानः संगच्छमानोवाग्निः आगात् आजगाम गार्हपत्यादाहवनीयमागच्छति । ततः पश्चात् जारोजरयिता शत्रूणां सोग्निः स्वसारं स्वयंसारिणीं भगिनींवा आगतामुषसं अभ्येति अभिगच्छति । तथा सुप्रकेतैः सुप्रज्ञानैः द्युभिर्दीप्तैस्तेजोभिः सह वितिष्ठन् सर्वतोवर्तमानः सोग्निः रुशद्भिः श्वेतवर्णैः वर्णैः वारकैरात्मीयैस्तेजोभिः रामं कृष्णवर्णं शार्वरं तमः अभ्यस्थात् सायं होमकाले अभिभूय तिष्ठति ॥ ३ ॥

अथ चतुर्थी—

**अस्ययामासोबृहतोनवग्नूनिन्धानाअग्नेःसख्युःशिवस्य ।**
**ईड्यस्यवृष्णोबृहतःस्वासोभामासोयामन्नक्तवश्चिकित्रे ॥ ४ ॥**

अस्य । यामा॑सः । बृ॒ह॒तः । न । व॒ग्नून् । इन्धा॑नाः । अ॒ग्नेः ।
सख्युः॑ । शि॒वस्य॑ । ईड्य॑स्य । वृष्णः॑ । बृ॒ह॒तः । सु॒ऽआसः॑ ।
भामा॑सः । याम॑न् । अ॒क्तवः॑ । चि॒कि॒त्रे ॥ ४ ॥

बृहतोमहतोस्याग्नेः संबन्धिनइन्धानाः दीप्यमानायामासः यान्ति गच्छन्तीति यामारश्मयः वग्नून् स्तुतिकारिणोजनान् नबाधन्ते । किंच सख्युः स्तुत्यस्तोतृयष्टृयष्टव्यलक्षणेन सख्येन सखिभूतस्य शिवस्य कल्याणस्य भक्तानां सुखकरस्य ईडचस्य स्तोतव्यस्य वृष्णः कामानां वर्षितुः बृहतोमहतः स्वासः शोभनास्याः अस्याग्नेः स्वभूताअक्तवः तमांसि अंजन्तः अपगमयन्तः आहुतिभिः संगतावा भामासः भामक्रोधे तीक्ष्णा अप्रसह्या रश्मयोयामन् याति देवान् प्रति तर्पणाय यांति देवाएतं प्रत्यंगभावायेति यामोयज्ञः तस्मिन् चिकित्रे सर्वतोजज्ञिरे प्रथिताअभूवन् ॥ ४ ॥

अथ पंचमी—

स्व॒नानय॑स्य॒भामा॑सः॒पव॑न्ते॒रोच॑मानस्यबृह॒तःसु॒दिवः॑ ।
ज्येष्ठे॑भि॒र्यस्तेजि॑ष्ठैःक्रीळु॒मद्भि॒र्वर्षि॑ष्ठेभिर्भा॒नुभि॒र्नक्ष॑ति॒द्याम् ॥५॥

स्व॒नाः । न । यस्य॑ । भामा॑सः । पव॑न्ते । रोच॑मानस्य । बृ॒ह॒तः ।
सु॒ऽदिवः॑ । ज्येष्ठे॑भिः । यः । तेजि॑ष्ठैः । क्री॒ळु॒मत्ऽभिः॑ ।
वर्षि॑ष्ठेभिः । भा॒नुऽभिः॑ । नक्ष॑ति । द्याम् ॥ ५ ॥

रोचमानस्य दीप्यमानस्य बृहतोमहतः सुदिवः शोभनदीप्तेर्वा यस्याग्नेः स्वभूताभामासः भादीप्तौ दीप्तारश्मयः स्वनान स्वनन्तोमरुतइव पवन्ते सर्वतः शब्दंकुर्वंतोगच्छन्ति । किंच योग्निः ज्येष्ठेभिः अत्यंतं प्रशस्तैः तेजिष्ठैः तेजस्वितमैः क्रीळुमद्भिः क्रीडनवद्भिः वर्षिष्ठेभिर्वृद्धतमैः भानुमद्भिः आत्मीयैस्तेजोभिः द्यां द्युलोकं नक्षति व्याप्नोतीति । सत्वं देवानावहेति उत्तरेण संबन्धः ॥ ५ ॥

अथ षष्ठी—

अ॒स्यशुष्मा॑सोददृशा॒नप॑वे॒र्जेह॑मानस्यस्वनयन्नि॒युद्भिः॑ ।
प्र॒त्नेभि॒र्योरु॒शद्भि॑र्दे॒वत॑मो॒विरेभ॑द्भिरर॒तिर्भाति॒विभ्वा॑ ॥ ६ ॥

अस्य । शुष्मासः । ददृशानऽपवेः । जेहमानस्य । स्वनयन् ।
नियुत्ऽभिः । प्रत्नेभिः । यः । रुशत्ऽभिः । देवऽतमः ।
वि । रेभत्ऽभिः । अरतिः । भाति । विऽभ्वा ॥ ६ ॥

ददृशानपवेः दर्शनीयज्वालाग्रेः यद्वा पविर्वज्रआयुधं दृश्यमानायुधस्य जेहमानस्य जेहतिर्गतिकर्मा हविरादाय देवान् प्रति गच्छतः अस्याग्नेः स्वभूताः शुष्मासः शोषकाः नियुद्भिर्नियुतो वायोरिति वायोरश्वानियुतः तद्युक्तैर्वायुभिः संयुक्तारश्मयः स्वनयन् शब्दायन्ते । किंच देवतमः देवानां मुख्यः अरतिः गन्ता विभ्वा विभवनशीलोमहान् योग्निः प्रत्नेभिः पुराणैः रुशद्भिः श्वेतवर्णैः रेभद्भिः शब्दायमानैस्तेजोभिः विभाति विविधं दीप्यते ॥ ६ ॥

अथ सप्तमी—

सआवंक्षिमहिनआचंसत्सिदिवस्पृंथिव्योरंरतिर्युंवत्योः ।
अग्निःसुतुकःसुतुकेभिरश्वैरभस्वद्भीरभस्वाँएहगम्याः ॥ ७ ॥ ३१ ॥

सः । आ । वक्षि । महि । नः । आ । च । सत्सि । दिवःपृथिव्योः ।
अरतिः । युवत्योः । अग्निः । सुऽतुकः । सुऽतुकेभिः । अश्वैः ।
रभस्वत्ऽभिः । रभस्वान् । आ । इह । गम्याः ॥ ७ ॥ ३१ ॥

हे अग्ने सतादृशस्त्वं नोस्मदीये यज्ञे महि महान् देवान् आवक्षि आवह प्रापय । किंच युवत्योः परस्परं मिश्रितयोः तरुण्योर्वा दिवस्पृथिव्योर्द्यावापृथिव्योर्मध्ये अरतिः अग्निः सूर्यात्मनागन्ता त्वं आसत्सि अस्माकं यज्ञमासीद । तथा सुतुकः तुकिर्गत्यर्थः सुगमः स्तोतृभिर्यष्टृभिश्च सुखेन प्राप्तव्यः रभस्वान् वेगवान् अग्निः अंगनादिगुणयुक्तस्त्वं सुतुकेभिः सुगमैः रभस्वद्भिर्वेगवद्भिरश्वैरोहिदाख्यैः सह इहास्मदीये यज्ञे आगम्याः आगच्छ ॥ ७ ॥

॥ इति सप्तमस्य पंचमे एकत्रिंशोवर्गः ॥ ३१ ॥

प्रतइति सप्तर्चं चतुर्थं सूक्तं ऋष्याद्याः पूर्ववत् । प्रतइत्यनुक्रान्तं । प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः ।

तत्र प्रथमा—

प्रतेयक्षिप्रतंइयर्मिमन्मभुवोयथावन्द्योंनोहवेषु ।
धन्वंन्निवप्रपाअसित्वमंग्नइयक्षवेपूरवेप्रत्नराजन् ॥ १ ॥

प्र । ते । यक्षि । प्र । ते । इयर्मि । मन्म । भुवः । यथा । वन्द्यः ।
नः । हवेषु । धन्वन्ऽइव । प्रऽपा । असि । त्वम् । अग्ने ।
इयक्षवे । पूरवे । प्रत्न । राजन् ॥ १ ॥

हे अग्ने ते तुभ्यं हविः प्रयक्षि प्रयच्छामि यजिर्दानार्थः । तथा मन्म मननीयां स्तुतिं ते त्वदर्थं प्रेयर्मि प्रेरयामि । प्रोच्चारयामि वंद्यः सर्वैर्वंदनीयस्त्वं नोस्मदीयेषु हवेषु देवाह्वानेषु यथा त्वं सन्निहितोभुवोभवसि तथा हविः प्रयच्छामि स्तौमिच। हे प्रत्न पुराण राजन् सर्वस्य जगतः स्वामिन् हे अग्ने सत्वं इयक्षवे यष्टुमिच्छवे पूरवे पूरुरिति मनुष्यनाम मनुष्याय यजमानाय यद्वा पूरवे हविर्भिर्देवान् पूरयित्रे जनाय धन्वन् इव प्रपाअसि यथा । धन्वन् धन्वनि मरौ निरुदकप्रदेशे प्रपा प्रपिबंत्यत्रेति प्रपा सा यथा उदकप्रदानेन जनेभ्यः सुखदाभवति एवं त्वं धनदानेन तस्मै सुखदाता भवसि ॥ १ ॥

अथ द्वितीया—

यंत्वाजनासोअभिसंचरन्तिगावउष्णमिवव्रजंयविष्ठ ।
दूतोदेवानामसिमर्त्यानामन्तर्महाँश्चरसिरोचनेन ॥ २ ॥

यम् । त्वा । जनासः । अभि । सम्ऽचरन्ति । गावः ।
उष्णम्ऽइव । व्रजम् । यविष्ठ । दूतः । देवानाम् । असि ।
मर्त्यानाम् । अन्तः । महान् । चरसि । रोचनेन ॥ २ ॥

हे यविष्ठ युवतमाग्ने यं त्वा त्वां जनासोजनाः यजमानाः फलप्राप्त्यर्थं अभिसंचरन्ति अभितः परिचरन्ति सेवन्ते । तत्र दृष्टान्तः—गावउष्णमिव यथागावः शीतार्तांउष्णं शीतजनितदुःखापनोदनार्थं उष्णं व्रजं गोष्ठमभिगच्छंति । सत्वं देवानामिन्द्रादीनां मर्त्यानां मनुष्याणां च दूतोसि हविः प्रापणद्वारा । ततोमहांस्त्वं अन्तः द्यावापृथिव्योर्मध्ये हवींष्यादाय रोचनेनांतरिक्षेण लोकेन चरसि गच्छसि तं त्वां स्तुमइतिशेषः ॥ २ ॥

अथ तृतीया—

शिशुंनत्वाजेन्यंवर्धयन्तीमाताबिभर्तिसचनस्यमाना ।
धनोरधिप्रवतायासिहर्यञ्जिगीषसेपशुरिवावसृष्टः ॥ ३ ॥

शिशुम् । न । त्वा । जेन्यम् । वर्धयन्ती । माता । बिभर्ति ।
सचनस्यमाना । धनोः । अधि । प्रऽवता । यासि ।
हर्यन् । जिगीषसे । पशुःऽइव । अवऽसृष्टः ॥ ३ ॥

हे अग्ने जेन्यं जयशीलं त्वा त्वां शिशुंन पुत्रमिव वर्धयन्ती पोषयन्ती माता पृथिवी सचनस्यमाना संपर्कमिच्छन्ती सती बिभर्ति धारयति । सत्वं हर्यन् कामयमानः तस्मिन् लोके धनोरधि अधिःसप्तम्यर्थद्योतकः धनोः अन्तरिक्षात् प्रवता प्रवणेन मार्गेण यासि यज्ञं प्रत्यागच्छसि । किंच त्वं अवसृष्टो यष्टृभिः हविरादाय जिगीषसे देवान् प्रतिगन्तुमिच्छसि । कथमिव पशुरिव यथा विमुक्तः पशुः गोष्ठं प्रत्यागच्छति तद्वत् ॥ ३ ॥

अथ चतुर्थी—

मूराअमूरनवयंचिकित्वोमहित्वमग्नेत्वमङ्गवित्से ।
शयेवव्रिश्चरतिजिह्वयादन्रेरिह्यतेयुवतिंविश्पतिःसन् ॥ ४ ॥

मूराः । अमूर । न । वयम् । चिकित्वः । महिऽत्वम् । अग्ने ।
त्वम् । अङ्ग । वित्से । शये । वव्रिः । चरति । जिह्वया ।
अदन् । रेरिह्यते । युवतिम् । विश्पतिः । सन् ॥ ४ ॥

हे अमूर अमूढ अतएव चिकित्वः चेतनावन् हे अग्ने मूरामूढावयं तव माहात्म्यं नजानीमः । किंतु हे अग्ने त्वमंग अंगेतिनिपातएवार्थे त्वमेव तव महित्वं माहात्म्यं वित्से जानासि त्वत्तः कोन्योवेदितुमर्हति । किंच वव्रिः जीर्णओषधीसंगः शये शेते तिष्ठति । यद्वा वव्रिरिति रूपनाम सामर्थ्याच्चान्तर्णीतमत्वर्थं द्रष्टव्यं आहवनीयाख्येन रूपेण रूपवान् शये चरति । अथ जिह्वया जिह्वाज्वालाख्यया अदन् हवींषि भक्षयन् चरति वाक्यभेदादनिघातः । किंच विश्पतिः विशां स्वामीसन्नग्निर्युवतिं आत्मनोमिश्रयित्रीमाहुतिं दीर्घप्रसृतया ज्वालया जिह्वया

रेरिह्यते अत्यर्थं लेढि आस्वादयति । लिह आस्वादने यङि रूपं । यद्वा सोग्निर्युवतिं तरुणीं जीर्णौषधिकां पृथिवीं आस्वादयति ॥ ४ ॥

अथ पंचमी–

कूचिज्जायतेसनयासुनव्योवनेतस्थौपलितोधूमकेतुः ।
अस्नातापोवृषभोनप्रवेतिसचेतसोयंप्रणयन्तमर्ताः ॥ ५ ॥

कूऽचित् । जायते । सनयासु । नव्यः । वने । तस्थौ ।
पलितः । धूमऽकेतुः । अस्नाता । आपः । वृषभः । न । प्र ।
वेति । सऽचेतसः । यम् । प्रऽनयन्त । मर्ताः ॥ ५ ॥

नव्योनवतरः स्तुत्योवाग्निः कूचित् क्वचित् प्रदेशे जायते कुत्र सनयासु पुराणीषु जीर्णास्वोषधीषु अरण्योः तथा पलितः पालयिताश्वेतवर्णोधूमकेतुः धूमप्रज्ञानोग्निः वने सर्वस्मिन्नरण्ये तस्थौ तिष्ठति । यद्वा वने उदके मेघगते विद्युदात्मना तिष्ठतिच अस्नाता स्नानमकुर्वन् अनपेक्षितस्नानः सर्वदा शुद्धः सोग्निः आपः सुब्व्यत्ययः अपउदकानि शांत्यर्थं प्रवेति प्रगच्छति । तत्र दृष्टान्तः–वृषभोन यथावृषभः तृष्णोपशमनार्थमरण्यमध्यस्थान्युदकानि प्रगच्छति तद्वत् मर्ता मनुष्याऋत्विजः सचेतसः समानमनस्काः समानप्रज्ञानाः सन्तः यमग्निं प्रणयन्त हविर्भिः प्रीणयन्ति ॥ ५ ॥

अथ षष्ठी–

तनूत्यजेवतस्करावनर्गूरशनाभिर्दशभिरभ्यधीताम् ।
इयंतेअग्नेनव्यसीमनीषायुक्ष्वारथंनशुचयद्भिरङ्गैः ॥ ६ ॥

तनूत्यजाऽइव । तस्करा । वनर्गू इति । रशनाभिः । दशऽभिः । अभि ।
अधीताम् । इयम् । ते । अग्ने । नव्यसी । मनीषा । युक्ष्व ।
रथम् । न । शुचयत्ऽभिः । अङ्गैः ॥ ६ ॥

हे अग्ने वनर्गू वनगामिनौ तनूत्यजेव चौर्ये मर्तुं कृतनिश्चयो धृष्टौ तस्करा तस्करौ यथा पथिकं मोषणार्थं रज्ज्वा बध्वाकृष्यच क्वचित् प्रदेशे स्थापयतः तद्वत् । तथायास्कः–तनूत्यकृतनूत्यक्तावनर्गूवनगामिनावग्निमंथनौबाहूतस्कराभ्यामुपमिमीते[1]इत्यादि । रशनाभिः दश–

1 नि० ३.१४.

भिरंगुलिभिः कृत्वा रज्जुभिः अभ्यधीतां अभ्यधायि । अधीतां दधातेर्लुङि सिचोलुकि छन्दस्युभयथेति तसआर्धधातुकत्वेन ङित्वाद्धुमास्थेतीकारः । ततः हे अग्ने ते त्वदर्थं नव्यसी नवतरा इयं मनीषा स्तुतिः मया क्रियते एतत् ज्ञात्वा शुचयद्भिः सर्वं प्रकाशयद्भिः आत्मीयैरंगैस्तेजोभि आत्मानं मदीयं यज्ञं मति युक्ष्व योजय । कथमिव रथंन यथारथमश्वैः संयोजयंति तद्वत् ॥ ६ ॥

उखासंभरणीयेष्टौग्नेर्ब्रह्मण्वतोथाज्या ब्रह्मचतइत्येषा । सूत्रितंच—ब्रह्मचतेजातवेदोनमश्चपुरूण्यग्नेपुरुधात्वायेति ।

सैषा सूक्ते सप्तमी—

ब्रह्मंचतेजातवेदोनमंश्चेयंचगीःसदमिद्वर्धनीभूत् ।
रक्षांणोअग्नेतनंयानितोकारक्षोतनंस्तन्वो॒ अप्रंयुच्छन्॥ ७॥ ३२॥

ब्रह्मं । च । ते । जात॒ऽवेदः । नमः । च । इयम् । च । गीः ।
सदम् । इत् । वर्धनी । भूत् । रक्षं । नः । अग्ने । तनंयानि ।
तोका । रक्षं । उत । नः । तन्वः । अप्रंऽयुच्छन् ॥ ७ ॥ ३२ ॥

हे जातवेदः जातप्रज्ञाग्ने ते त्वदर्थं ब्रह्मास्माभिर्दीयमानं हवीरूपमन्नुतमन्नं वर्धनीभूत् भवतु । तथा नमोनमस्कारश्च । किंच इयमिदानींक्रियमाणा एषा स्तुतिः सदमित् सदैव वर्धयित्री भूत् भवतु । तस्मात् हे अग्ने नोस्माकं तनयानि पुत्रान् तोकापौत्रांश्च रक्ष पालय । उतापिच अप्रयुच्छन् अप्रमाद्यंस्त्वं नोस्माकं तन्वोंगानि रक्ष ॥ ७ ॥

॥ इति सप्तमस्य पञ्चमे द्वात्रिंशोवर्गः ॥ ३२ ॥

एकःसमुद्रइति सप्तर्चं पञ्चमं सूक्तं ऋष्याद्याः पूर्ववत् विनियोगश्च एकइत्यनुक्रान्तं ।

तत्र प्रथमा—

एकःसमुद्रोधरुणोरयीणामस्मद्धृदोभूरिंजन्माविचंष्टे ।
सिषक्त्यूधर्निण्योरुपस्थउत्संस्यमध्येनिहिंतंपदंवेः ॥ १ ॥

एकः । समुद्रः । धरुणः । रयीणाम् । अस्मत् । हृदः ।
भूरिऽजन्मा । वि । चष्टे । सिसक्ति । ऊधः । निण्योः । उपऽस्थे ।
उत्सस्य । मध्ये । निऽहितम् । पदम् । वेरिति वेः ॥ १ ॥

समुद्रः यस्माद्धनान्युदकानि समुद्रवन्तीति तादृशः रयीणां धनानां धरुणोधारयिता एकः असहायः भूरिजन्मा बहुविधजननः नानायज्ञेष्वाहवनीयादिभावेन बहुजननः सोग्निः अस्मत् सुपांसुलुगिति षष्ठ्यालुक् अस्माकं हृदोहृदयान्यभिलषितानि विचष्टे विपश्यति जानाति । उक्तंच—मनोवैदेवामनुष्यस्यजानन्तीति। किंच निण्योः अन्तर्हितनामैतत् अन्तर्हितयोर्ज्योतिस्तमोभ्यामाच्छादितयोः प्रातःसायंकालयोः उपस्थे उपस्थाने समीपे वर्तमानमूधोरात्रिं सिषक्ति सेवते उपजीवति। यद्वा निण्योः अन्तर्हितस्यान्तरिक्षस्य समीपे वर्तमानमूधोमेघं सेवते । अथ प्रत्यक्षः हे अग्ने उत्सस्य उदकधारकस्य लोकस्य मध्ये पदमपां स्थानं निहितं तन्माध्यमिकां वाचं वेः गच्छ । यद्वा उत्सस्य मेघस्य मध्ये निहितं पदं विद्युदाख्यं तत् स्वात्मतया गच्छ । वेः वीगत्यादिषु लुङि सिपि रूपं वाक्यभेदादनिघातः ॥ १ ॥

अथ द्वितीया—

समानंनीळंवृषणोवसानाःसंजग्मिरेमहिषाअर्वतीभिः ।
ऋतस्यपदंकवयोनिपान्तिगुहानामानिदधिरेपराणि ॥ २ ॥

समानम् । नीळम् । वृषणः । वसानाः । सम् । जग्मिरे ।
महिषाः । अर्वतीभिः । ऋतस्य । पदम् । कवयः । नि ।
पान्ति । गुहा । नामानि । दधिरे । पराणि ॥ २ ॥

वृषणः आहुतीनां सेक्तारः समानमेकं नीळंस्थानमग्निं वसानाः मंत्रतआच्छादयन्तोमहिषामहान्तोयजमानाः अर्वतीभिर्वडवाभिः संजग्मिरे समगच्छन्त । अश्ववन्तोभूवन् यद्वा अग्निमेव आत्मीययज्ञं प्रत्यागन्तुं रोहिदाख्याभिर्वडवाभिः संयोजितवन्तः तथा कवयोमेधाविनः ऋतस्योदकस्य पदमावासस्थानमग्निं निपान्ति नितरां रक्षन्ति हविर्भिः स्तुतिभिश्चाराधयंतीत्यर्थः । ततोगुहा गुहायामन्तरिक्षे स्थितानि पराणि दिव्यानि नामानि उदकानि दधिरे धारय-

न्ति। यद्वा गुहा गूढे संवृते हृदये पराणि प्रधानानि अग्निर्जातवेदा वैश्वानरइत्यादीनि नामानि दधिरे कुर्वन्ति स्तुवन्तीत्यर्थः ॥ २ ॥

अथ तृतीया—

ऋतायिनीमायिनीसंदधातेमित्वाशिशुंजज्ञतुर्वर्धयन्ती ।
विश्वस्यनाभिंचरतोध्रुवस्यकवेश्चित्तन्तुंमनसावियन्तः ॥ ३ ॥

ऋतयिनीइत्यृतऽयिनी । मायिनी इति । सम् । दधाते इति ।
मित्वा । शिशुम् । जज्ञतुः । वर्धयन्ती इति । विश्वस्य । नाभिम् ।
चरतः । ध्रुवस्य । कवेः । चित् । तन्तुम् । मनसा । विऽयन्तः ॥ ३ ॥

ऋतायिनी ऋतवत्यौ सत्यवत्यौ अतएव मायिनी प्रज्ञावत्यौ कर्मयुक्तेवा द्यावापृथिव्यौ यज्ञसाधनभूते अरणी वा इममग्निं संदधाते सम्यक् धारयतः अग्निसूर्यात्मना केवलाध्यात्मनावा संदधाते। मित्वा कालपरिमाणं कृत्वा यद्वा संपरिच्छिद्यशिशुं शंसनीयं बालमग्निं जज्ञतुः जनयतः वर्धयन्ती वर्धन्त्यौ द्यावापृथिव्यौ लोके यथा परिच्छेदाय पुत्रं पितरौ जनयतः तद्वत्। ततः विश्वस्य सर्वस्य चरतोजंगमस्य ध्रुवस्य स्थावरस्यच जगतोनाभिं नाभिभूतं मध्यं प्रधानभूतं वा कवेर्मेधाविनोग्नेस्तन्तुं तनितारं वैश्वानराख्यमंशुं चित् मनसा वियन्तोविविधं गच्छन्तोमनुष्याः सुखेन युज्यन्ते इतिशेषः तं वयं यजामइतिवा ॥ ३ ॥

अथ चतुर्थी—

ऋतस्यहिवर्तनयःसुजातमिषोवाजायप्रदिवःसचन्ते ।
अधीवासंरोदसीवावसानेघृतैरन्नैर्वावृधातेमधूनाम् ॥ ४ ॥

ऋतस्य । हि । वर्तनयः । सुऽजातम् । इषः । वाजाय । प्रऽदिवः ।
सचन्ते । अधीवासम् । रोदसी इति । ववसाने इति ।
घृतैः । अन्नैः । ववृधाते इति । मधूनाम् ॥ ४ ॥

ऋतस्य यज्ञस्य वर्तनयः प्रवर्तकाइषअभिलषितानीच्छन्तः प्रदिवः पुरातनाऋत्विग्यजमानाः सुजातमाधानकाले सुष्ठूत्पन्नमग्निं वाजाय बलार्थं अन्नार्थंवा सचन्तेहि सेवन्तेखलु। अपिच वावसाने सर्वस्य जगतआच्छादयित्र्यौ रोदसी द्यावापृथिव्यौ अधीवासं ओषधिनक्षत्रा-

द्यात्मना निवसन्तं यद्वा अधिरुपर्यर्थे त्रयाणां लोकानामुपरि अग्निविद्युदादित्यात्मना निवसन्तमग्निं मधूनामुदकानां जन्यत्वेन संबन्धिभिर्घृतैरन्नैः पुरोडाशादिभिश्च वावृधते वर्धयांचक्रतुः वर्धयतः तस्माद्वयमपि तमग्निमभिष्टुम इत्यभिप्रायः ॥ ४ ॥

अथ पञ्चमी–

सप्त स्वसॄररुषीर्वावशानो विद्वान्मध्व उज्जभारा दृशे कम् ।
अन्तर्येमे अन्तरिक्षे पुराजा इच्छन्वव्रिमविदत्पूषणस्य ॥ ५ ॥

सप्त । स्वसॄः । अरुषीः । वावशानः । विद्वान् । मध्वः । उत् ।
जभार । दृशे । कम् । अन्तः । येमे । अन्तरिक्षे । पुराऽजाः ।
इच्छन् । वव्रिम् । अविदत् । पूषणस्य ॥ ५ ॥

वावशानः कामयमानः वाश्यमानः वेष्टयमानः स्तोतृभिः स्तूयमानोवा विद्वान् सर्वं जानानः सोग्निः अरुषीरारोचमानाः सप्त सप्तसंख्याकाः स्वसॄः स्वयंसारिणीः कालीकरालीचेत्यादिकाः सप्तजिह्वाः मध्वोमदकराद्यज्ञात् उज्जभार उज्जहार ऊर्ध्वं हृतवान् यज्ञे स्वतेजसा प्रादुर्भूतइत्यर्थः । किमर्थं कं सुखेन दृशे सर्वेषामेव पदार्थानां दर्शनार्थं । किंच पुराजाः पुराजातः सोग्निः द्यावापृथिव्योरन्तर्मध्ये अन्तरिक्षे तस्मिन् ताजिह्वायेमे नियमितवान् सर्वत्र तेजोयुक्तोवर्ततेइत्यर्थः।अपिच इच्छन् यजमानान् कामयमानोग्निः पूषणस्य पूषेति पृथिवीनाम पार्थिवस्य लोकस्य वव्रिं रूपं पृश्निवर्णं अविदत् प्रायच्छत् । यद्वा मूर्धाभुवोभवतिनक्तमग्निस्ततःसूर्योजायतेप्रातरुद्यन्निति मंत्रान्तरे दर्शनादादित्यात्मनाग्निः स्तूयते । कामयमानः सूर्यात्मनाग्निः सप्त संख्याकान् स्वसॄः रश्मीन् मध्वः समुद्रोदकादुद्धृतवान् प्रातः अन्तरिक्षे विद्युदात्मना स्थित्वा वृष्टिलक्षणं रूपं पृथिव्याः प्रायच्छति ॥ ५ ॥

अथ षष्ठी–

सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् ।
आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ ॥ ६ ॥

---

१ ऋ० सं० ८. ४. ११. ।

सप्त । मर्यादाः । कवयः । ततक्षुः । तासाम् । एकाम् । इत् ।
अभि । अंहुरः । गात् । आयोः । ह । स्कम्भः । उपऽमस्य ।
नीळे । पथाम् । विऽसर्गे । धरुणेषु । तस्थौ ॥ ६ ॥

कवयोमेधाविनऋषयः सप्तमर्यादाः कामजेभ्यः क्रोधजेभ्यश्चोत्थिताः । पानमक्षाःस्त्रियोमृगया दंडः पारुष्यमन्यदूषणमिति सप्तमर्यादाः । यद्वा स्तेयं गुरुतल्पारोहणं ब्रह्महत्यां सुरापानं दुष्कृतकर्मणः पुनःपुनः सेवां पातकेनृतोद्यमिति[1] निरुक्तेनिर्दिष्टाः । सप्तमर्यादाअवस्थिताः ततक्षुः तक्षतिः करोतिकर्मा सुष्ठु लंघनीयाश्चक्रुः त्यक्तवन्तइत्यर्थः । तासां मर्यादानां एकामित् एकामेव अंहुरः पापवान् पुरुषः अभिगात् अभिगच्छति यस्त्वेवं करोति सपापवान् भवतीत्यर्थः । किंच आयोः तस्य मनुष्यस्य स्कंभः स्कंभयिता निरोधकोग्निः उपमस्य समीपभूतस्य आयोर्नीळे स्थाने पथां आदित्यरूपस्य स्वस्य रश्मीनां विसर्गे विसर्जनस्थानेन्तरिक्षमध्ये वर्तमाने धरुणेषूदकेषु तस्थौ विद्युदात्मना तिष्ठति अनेन लोकत्रयवर्तित्वमिति ॥ ६॥

अथ सप्तमी—

असच्चसच्चपरमेव्योमन्दक्षस्यजन्मन्नदितेरुपस्थे ।
अग्निर्हनःप्रथमजाऋतस्यपूर्वआयुनिवृषभश्चधेनुः ॥ ७ ॥ २२ ॥

असत् । च । सत् । च । परमे । विऽओमन् । दक्षस्य । जन्मन् ।
अदितेः । उपऽस्थे । अग्निः । ह । नः । प्रथमऽजाः । ऋतस्य ।
पूर्वे । आयुनि । वृषभः । च । धेनुः ॥ ७ ॥ २२ ॥

असदव्याकृतं सच्चव्याकृतं असदेवेदमग्रआसीत् तत्सदासीत् तत्समभवदिति श्रुतेः । सदसदात्मकं जगत्सर्वं परमे उत्तमे ज्ञानसहिते व्योमन् व्योमनि कारणात्मनि जातमभूत्तदा अदितेः पृथिव्याउपस्थे उपस्थाने समीपे दक्षस्य प्रजापतेः यद्वा दक्षस्य सर्वेधात्मानं विभजतादित्यंतृतीयंवायुंतृतीयमितिश्रुतेः । तृतीयस्य द्युलोकस्याधिष्ठातृत्वादादित्यस्य जन्मन् जन्मनि ततएवं सति मनुष्यस्य सृष्टिक्रमात् पूर्वं अग्निर्ह अग्निरेव ऋतस्य कर्मफलस्य भोक्तॄणां नोस्माकं प्रथमजाः

---

1 नि० ६. २७.

प्रथमजातः समुत्पन्नः तेजोरसोनिरवर्ततानिरितिश्रवणात् । पश्चात्तत्प्रकरणे ततोमनुष्याअजायन्तेति प्रथमतएव मनुष्यसृष्टेरभिहितत्वात् अनन्तरं पूर्वे उत्तरसृष्टिमपेक्ष्य पूर्वत्वं आयुनि काले अयमग्निरेव वृषभश्चासीत् धेनुश्चाभवत् स्त्रीपुंसवत् स्त्रीपुंसात्मकोभवदित्यर्थः ॥ ७ ॥

॥ इति सप्तमस्य पञ्चमे त्रयस्त्रिंशोवर्गः ॥ ३३ ॥

वेदार्थस्यप्रकाशेन तमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके पंचमोध्यायः ॥ ५ ॥

---

## ॥श्रीगणेशायनमः॥



यस्यनिःश्वसितंवेदा योवेदेभ्योखिलंजगत् । निर्ममेतमहंवन्दे विद्यातीर्थमहेश्वरं ॥ १ ॥

सप्तमस्याष्टकस्येत्थं व्याकार्षीत्पंचमंसुधीः । सायणाह्वस्ततःषष्ठमध्यायंव्याचिकीर्षति ॥ २ ॥

दशमे मंडले प्रथमेनुवाके षोडश सूक्तानि तत्रायंसयस्येति सप्तर्चं षष्ठं सूक्तं आप्त्यस्य त्रितस्यार्षं त्रिष्टुभमाग्नेयं । अयमित्यनुक्रान्तं । प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः ।

तत्र प्रथमा—

ॐम् अयंसयस्यशर्मन्नवोभिरग्नेरेधतेजरिताभिष्टौ ।
ज्येष्ठेभिर्योभानुभिर्ऋषूणांपर्येतिपरिवीतोविभावा ॥ १ ॥

अयम् । सः । यस्य । शर्मन् । अवःऽभिः । अग्नेः । एधते । जरिता । अभिष्टौ । ज्येष्ठेभिः । यः । भानुऽभिः । ऋषूणाम् । परिऽएति । परिऽवीतः । विभाऽवा ॥ १ ॥

जरिता स्तोता अभिष्टौ यागे कृते यस्याग्नेरवोभिः पालनैः शर्मन् शर्मणि स्वगृहे एधते वर्धते । सोयमग्निर्यागार्थमस्माभिराहूतइतिशेषः । विभावा दीप्तिमान् योग्निः ऋषूणां सूर्यरश्मीनां ज्येष्ठेभिः प्रशस्तैः भानुभिस्तेजोभिः परिवीतः परिवृतः पर्येति सर्वतोगच्छति । यत्रयत्र गंतव्यं तत्रतत्राप्रतिहतगतिर्गच्छतीत्यर्थः ॥ १ ॥

अथ द्वितीया—

योभानुभिर्विभावाविभात्यग्निर्देवेभिर्ऋतावाजस्रः ।
आयोविवायसख्यासखिभ्योपरिह्वृतोअत्योनसप्तिः ॥ २ ॥

यः । भानुऽभिः । विभाऽवा । विऽभाति । अग्निः । देवेभिः । ऋतऽवा । अजस्रः । आ । यः । विवाय । सख्या । सखिऽभ्यः । अपरिऽह्वृतः । अत्यः । न । सप्तिः ॥ २ ॥

ऋतावा सत्यवान् यज्ञवान्वा अजस्रः अनुपक्षीणः अहिंसितोवा केनचिदनभिभूतइत्यर्थः । विभावा दीप्तिमान् योग्निः देवेभिर्देवैर्द्योतमानैः भानुभिस्तेजोभिर्विभाति विविधंदीप्यते । किंच योग्निः सख्या सख्यानि सखिभिः कर्तव्यानि कर्माणि हविरादीनि कर्तुमितिशेषः सखिभ्यः सखिभूतानां यजमानानामर्थाय अपरिह्वृतः अपरिहिंसितः अपरिश्रान्तइत्यर्थः आविवाय आभिमुख्येन गच्छति । तत्र दृष्टान्तः—सप्तिः सदासर्पणइत्यर्थः अत्योन यथा सततगमनसमर्थोश्वः अपरिश्रान्तोगच्छति तद्वत् सोयमग्निरस्माभिर्यागार्थमाहूतइति पूर्ववद्योज्यं ॥ २ ॥

अथ तृतीया—

ईशेयोविश्वस्यादेववीतेरीशेविश्वायुरुषसोव्युष्टौ ।
आयस्मिन्मनाहवींष्यग्नावरिष्टरथःस्कभ्नातिशूषैः ॥ ३ ॥

ईशे । यः । विश्वस्याः । देवऽवीतेः । ईशे । विश्वऽआयुः ।
उषसः । विऽउष्टौ । आ । यस्मिन् । मना । हवींषि । अग्नौ ।
अरिष्टऽरथः । स्कभ्नाति । शूषैः ॥ ३ ॥

योग्निर्विश्वस्य देववीतेः सर्वस्य यज्ञस्य ईशे ईष्टे । अपिच विश्वायुः सर्वत्राप्रतिहतगमनः उषसोव्युष्टौ विवासने उदयकाले होमार्थं यजमानानामीशे ईष्टे । शूषैः शत्रुबलैः अरिष्टरथः अहिंसितयज्ञरथः सर्वएव यजमानः यस्मिन्नग्नौ मना मननीयानि हवींषि आस्कभ्नाति आदरेण प्रतिबध्नाति प्रक्षिपति सोयमग्निरस्माभिर्यागार्थमाहूतइत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

शूषेभिर्वृधोजुषाणोअर्कैर्देवाँअच्छारघुपत्वाजिगाति ।
मन्द्रोहोतासजुह्वायजिष्ठःसंमिश्लोअग्निराजिघर्तिदेवान् ॥४॥

शूषेभिः । वृधः । जुषाणः । अर्कैः । देवान् । अच्छ । रघुऽपत्वा ।
जिगाति । मन्द्रः । होता । सः । जुह्वा । यजिष्ठः । सम्ऽमिश्लः ।
अग्निः । आ । जिघर्ति । देवान् ॥ ४ ॥

वृषः वर्धितोऽग्निः शूषेभिर्हविर्लक्षणैर्बलैः बलनिमित्तैर्हविर्भिरित्यर्थः अर्कैः स्तोत्रैश्च जुषाणः सेव्यमानः सन् देवानिन्द्रादीनच्छाभिमुखं रघुपत्वा लघुपतनः शीघ्रगामी जिगाति। गत्वाच मन्द्रः स्तुत्यः होता देवानामाह्वाता होमनिष्पादकोवा जुह्वा यजिष्ठः यष्टृतमः संमिश्लः सगुणैर्देवैर्वा संप्रयुक्तः सोऽग्निर्देवान्प्रति हविराजिघर्ति आहारयति देवेभ्योहविर्ददातीत्यर्थः ॥ ४ ॥

अथ पंचमी—

तमुस्रामिन्द्रंनरेजमानमग्निंगीर्भिर्नमोभिराकृणुध्वम् ।
आयंविप्रासोमतिभिर्गृणन्तिजातवेदसंजुह्वंसहानाम् ॥ ५ ॥

तम् । उस्राम् । इन्द्रम् । न । रेजमानम् । अग्निम् । गीःऽभिः ।
नमःऽभिः । आ । कृणुध्वम् । आ । यम् । विप्रासः । मतिऽभिः ।
गृणन्ति । जातऽवेदसम् । जुह्वम् । सहानाम् ॥ ५ ॥

हे ऋत्विजोयूयं उस्रां भोगानामुत्स्राविणं दातारं रेजमानं ज्वालात्मना कंपमानं तमग्निं इन्द्रंन इन्द्रमिव गीर्भिः स्तुतिभिर्नमोभिर्हविर्भिश्च आकृणुध्वं अस्मदभिमुखं कुरुत। विप्रासो- मेधाविनः स्तोतारः सहानां शत्रुबलाद्यभिभवितॄणां देवानां जुह्वमाह्वातारं जातवेदसं जातधनं जातप्रज्ञंवा यमग्निं आगृणन्ति आदरेण स्तुवन्ति तमाकृणुध्वमिति पूर्वेण संबन्धः ॥ ५ ॥

अथ षष्ठी—

संयस्मिन्विश्वावसूनिजग्मुर्वाजेनाश्वाःसप्तीवन्तएवैः ।
अस्मेऊतीरिन्द्रवाततमाअर्वाचीनाअग्नआकृणुष्व ॥ ६ ॥

सम् । यस्मिन् । विश्वा । वसूनि । जग्मुः । वाजे । न । अश्वाः ।
सप्तिऽवन्तः । एवैः । अस्मे इति । ऊतीः । इन्द्रवातऽतमाः ।
अर्वाचीनाः । अग्ने । आ । कृणुष्व ॥ ॥ ६ ॥

हे अग्ने यस्मिन् त्वयि विश्वा विश्वानि वसूनि धनानि संजग्मुः स्वत्वेन संगतानि भवन्ति। तत्र दृष्टान्तः—एवैर्गमनैः सप्तीवन्तः सर्पणवन्तः शीघ्रगमनशीलाः समर्थाः अश्वाः वाजे न यथा संग्रामे संगतास्तद्वत्। हेअग्ने सत्वं इन्द्रवाततमाः इन्द्रेणाभिगताः ऊतीः रक्षाः अस्मे अस्मासु अर्वाचीनाः अभिमुखीः आकृणुष्व आदरेण कुरु ॥ ६ ॥

अथ सप्तमी—

अधा॒ह्य॑ग्ने म॒ह्ना नि॒षद्या॑ स॒द्यो ज॑ज्ञा॒नो हव्यो॑ ब॒भूथ॑ ।
तं ते॑ दे॒वासो॒ अनु॒ केत॑माय॒न्नधा॑वर्धन्त प्रथ॒मास॒ ऊमाः॑ ॥ ७ ॥ १ ॥

अध॑ । हि । अ॒ग्ने॒ । म॒ह्ना । नि॒ऽसद्य॑ । स॒द्यः । ज॒ज्ञा॒नः ।
हव्यः॑ । ब॒भूथ॑ । तम् । ते॒ । दे॒वासः॑ । अनु॑ । केत॑म् । आ॒य॒न् ।
अध॑ । व॒र्ध॒न्त॒ । प्र॒थ॒मासः॑ । ऊमाः॑ ॥ ७ ॥ १ ॥

अध अथानन्तरं हियस्मात् अग्ने त्वं मह्ना महत्वेन जज्ञानोजायमानः ज्वलन्निषद्य उपविश्य सद्यस्तस्मिन् प्रजननकालएव हव्योहवनार्हः आहुतिमक्षेपार्हः बभूथ भवसि । तस्मात् कारणात् देवासः हविषां दातारः ऋत्विग्यजमानाः ते तव स्वभूतं तं तादृशं केतं प्रज्ञानलक्षणं अन्वायन् अनुगच्छन्ति दीप्ते त्वयि हवींषि जुह्वतीत्यर्थः । अध अथानन्तरं ऋत्विगादयः प्रथमासः क्रियाभिजनविद्यागुणैरुत्कृष्टाः ऊमाः त्वयारक्षिताः सन्तः अवर्धन्त वर्धन्ते ॥ ७ ॥

॥ इति सप्तमस्य षष्ठे प्रथमोवर्गः ॥ १ ॥

स्वस्तिनइति सप्तर्चं सप्तमं सूक्तं ऋष्याद्याः पूर्ववत् । स्वस्तीत्यनुक्रान्तं । उक्तः सूक्तविनियोगः । स्वस्त्ययन्यां प्रधानस्य स्वस्तिनइत्येषानुवाक्या । सूत्रितंच—अग्निः स्वस्तिमान् स्वस्तिनोदिवोअग्नेपृथिव्याइति ।

तत्र प्रथमा—

स्व॒स्ति नो॑ दि॒वो अ॑ग्ने पृथि॒व्या वि॒श्वायु॑र्धेहि य॒जथा॑य देव ।
सचे॑महि॒ तव॑ दस्म प्रके॒तैरु॑रु॒ष्या ण॑ उ॒रुभि॑र्देव॒ शंसैः॑ ॥ १ ॥

स्व॒स्ति । नः॒ । दि॒वः । अ॒ग्ने॒ । पृ॒थि॒व्याः । वि॒श्वऽआ॑युः ।
धे॒हि॒ । य॒जथा॑य । दे॒व॒ । सचे॑महि । तव॑ । द॒स्म॒ । प्र॒ऽके॒तैः ।
उ॒रु॒ष्य॒ । नः॒ । उ॒रुऽभिः॑ । दे॒व॒ । शंसैः॑ ॥ १ ॥

हे देव दानादिगुणविशिष्टाग्ने त्वं दिवः पृथिव्याः द्यावापृथिव्योः सकाशात् नोस्मभ्यं विश्वायुः सर्वान्नं स्वस्ति पुत्रादि यजथाय देवयागार्थं धेहि प्रयच्छ सर्वोपद्रवरहिताः सर्वान्न-

पुत्रयुक्ताश्चसन्तोवयं यथा यज्वानोभवेम तथास्मान् कुर्विति वाक्यशेषः । अपिच वयं सचेमहि हे दस्म दर्शनीय देवाग्ने उरुभिर्बहुभिः शंसैः शंसनीयैस्तवसंबन्धिभिः प्रकेतैः पालनोपायप्रज्ञानैः नोस्माननुरुष्य रक्ष ॥ १ ॥

अथ द्वितीया—

इमाअंग्नेमतयस्तुभ्यंजातागोभिरश्वैरभिगृंणन्तिराधः ।
यदातेमर्तोअनुभोगमानड्वसोदधानोमतिभिःसुजात ॥ २ ॥

इमाः । अग्ने । मतयः । तुभ्यम् । जाताः । गोभिः । अश्वैः ।
अभि । गृणन्ति । राधः । यदा । ते । मर्तः । अनु । भोगम् ।
आनट् । वसो इति । दधानः । मतिऽभिः । सुऽजात ॥ २ ॥

हे अग्ने इमा ईदृश्यः मतयः स्तुतयः तुभ्यं त्वदर्थं जाताः अस्मदादिस्तोतृमुखात् उत्पन्ना उच्चारिताइत्यर्थः गोभिरश्वैश्च सहितं राधः त्वया दीयमानं हिरण्यादिकं धनं अभिगृणन्ति अभिष्टुवन्ति । अस्मत्स्तुत्यनुरूपान्नमस्मभ्यं त्वया दत्तमिति प्रशंसन्ति यदा मर्तोस्मदादिकोमनुष्यः ते त्वया दीयमानं भोगं भोगार्हं धनं अन्वानट् प्राप्नोति लभते तदा हे वसो प्रशस्य वसुमन् यद्वा स्वेन तेजसा सर्वस्याच्छादयितः हे सुजात शोभनकर्मार्थमुत्पन्नाग्ने त्वं दधानोस्मभ्यं धनं प्रयच्छन् मतिभिरस्मदीयाभिः स्तूयसे इतिशेषः ॥ २ ॥

अथ तृतीया—

अग्निंमन्येपितरंमग्निमापिमग्निंभ्रातरंसदमित्सखायम् ।
अग्नेरनीकंबृहतःसपर्यंदिविशुक्रंयजतंसूर्यस्य ॥ ३ ॥

अग्निम् । मन्ये । पितरम् । अग्निम् । आपिम् । अग्निम् ।
भ्रातरम् । सदम् । इत् । सखायम् । अग्नेः । अनीकम् । बृहतः ।
सपर्यन् । दिवि । शुक्रम् । यजतम् । सूर्यस्य ॥ ३ ॥

अहं स्तोता पितरं अग्निमेव मन्ये जाने आपिं बन्धुं अग्निमेव मन्ये भ्रातरमग्निमेव मन्ये सदमित् सदैव आवसंवादिनं सखायं अग्निमेव जानामि बृहतोमहतोग्नेः अनीकं आहवनीया-

स्व्यं मुखं सपर्यं परिचरामि। तत्र दृष्टोपममेतत् दिवि द्युलोके स्थितं यजतं यष्टव्यं पूजनीयं सूर्यस्य संबन्धि शुक्रं दीप्तिमन्मंडलं यथा कश्चिदभिप्रेतार्थसिद्ध्ये आराधयति तद्वत् ॥ ३ ॥

अथ चतुर्थी—

सिध्राअंग्नेधियोंअस्मेसनुंत्रीर्यंत्रायंसेदमआनित्यंहोता।
ऋतावासरोहिदंश्वःपुरुक्षुर्द्युभिरस्माअहंभिर्वाममंस्तु ॥ ४ ॥

सिध्राः। अग्ने। धियः। अस्मे इति। सनुंत्रीः। यम्।
त्रायंसे। दमे। आ। नित्यंऽहोता। ऋतऽवा। सः। रोहित्ऽअंश्वः।
पुरुऽक्षुः। द्युऽभिः। अस्मै। अहंऽभिः। वामम्। अस्तु ॥ ४ ॥

हे अग्ने सनुत्रीः संभक्त्यः अस्मे अस्माकं संबंधिन्यः धियः स्तुतयः सिध्राः सिद्धानिष्पन्नाः त्वदर्थमस्माभिः कृताइत्यर्थः दमआ अस्मद्यज्ञगृहे मर्यादतयावस्थितस्त्वं नित्यहोता सततं होमनिष्पादकोदेवानामाह्वातावासन् यंत्रायसे कर्मवैगुण्यात् रक्षसि सोहं त्वत्प्रसादात् त्वत्सायुज्यं गतः सन् ऋतवा यज्ञवान् सत्यवान्वा स्यामितिशेषः। रोहिदश्वः रोहित्संज्ञकाश्वः पुरुक्षुः बह्वन्नश्वस्यां। किंच अस्मै ईदृग्भूताय तुभ्यं द्युभिर्दीप्तिषु अहभिरहःसु दिवसेषु वामं वननीयं हविरस्तु ॥ ४ ॥

अथ पंचमी—

द्युभिर्हितंमित्रमिवप्रयोगंप्रत्नमृत्विजंमध्वरस्यंजारम्।
बाहुभ्यांमग्निमायवोजनन्तविक्षुहोतारंन्यंसादयन्त ॥ ५ ॥

द्युऽभिः। हितम्। मित्रम्ऽइव। प्रऽयोगम्। प्रत्नम्। ऋत्विजम्।
अध्वरस्य। जारम्। बाहुऽभ्याम्। अग्निम्। आयवः।
अजनन्त। विक्षु। होतारम्। नि। असादयन्त ॥ ५ ॥

द्युभिर्हितं दीप्तैराहितं मित्रमिवस्निग्धमिव प्रयोगं प्रयोक्तव्यं प्रत्नं पुराणं ऋत्विजं होतृसंज्ञकं। अग्निर्वैदेवानांहोतासीदितिश्रुतेः। अध्वरस्य यज्ञस्य जारं समापयितारं एवंभूतम-

१ ऐ० ब्रा० ३. १४.।

ग्निं आयवोयजमानाः मनुष्याः बाहुभ्यामजनन्त जनितवन्तः। किंच विक्षु विशोमनुष्याः तदाकारेषु देवेष्वित्यर्थः होतारं आह्वातारं न्यसादयन्त नियमेन सादितवन्तः देवानां यागार्थं निरूपितवन्तइत्यर्थः ॥ ५ ॥

अथ षष्ठी—

स्वयंयंजस्वदिविदेवदेवान्किंतेपाकःकृणवदप्रचेताः ।
यथायंजऋतुभिर्देवदेवानेवायंजस्वतन्वंसुजात ॥ ६ ॥

स्वयम् । यजस्व । दिवि । देव । देवान् । किम् । ते । पाकः ।
कृणवत् । अप्रऽचेताः । यथा । अयंजः । ऋतुऽभिः । देव ।
देवान् । एव । यजस्व । तन्वम् । सुऽजात ॥ ६ ॥

हे देव द्योतमानाग्ने त्वं दिवि द्युलोके स्थितान् देवानिन्द्रादीन् स्वयमात्मनैव यजस्व पाकः पक्तव्यमज्ञः अप्रचेताः अप्रकृष्टज्ञानोमनुष्यः ते तव किंकृणवत् किंकरोति त्वयानधिष्ठितः किंचिदपि नजानातीत्यर्थः। किंच हेदेव त्वं ऋतुभिः कालविशेषैः देवान् यथा अयजः इष्टवानसि एव एवं हेसुजात शोभनजन्मन्नग्ने तन्वं आत्मानमपि यजस्व ॥ ६ ॥

अथ सप्तमी—

भवानोअग्नेवितोतगोपाभवावयस्कृदुतनोवयोधाः ।
रास्वाचनःसुमहोहव्यदातिंत्रास्वोतनंस्तन्वोऽअप्रयुच्छन् ॥ ७॥२॥

भव । नः । अग्ने । अविता । उत । गोपाः । भव । वयःऽकृत् । उत ।
नः । वयःऽधाः । रास्व । च । नः । सुऽमहः । हव्यऽदातिम् ।
त्रास्व । उत । नः । तन्वः । अप्रऽयुच्छन् ॥ ७ ॥ २ ॥

हेअग्ने त्वं नोस्माकं अवितादृष्टभयेभ्यो रक्षको भव भूयाः। उतापिच गोपा अदृष्टभयेभ्योगोप्ता रक्षकोभव। उतापिच वयस्कृत् अन्नस्य कर्ता भव वयोधाः अन्नस्य दाता भव। हेसुमहः सुष्ठु पूजनीयाग्ने त्वं स्वभूतां हव्यदातिं हविषोदातिं नोस्मभ्यं रास्वच प्रयच्छ। उतापिच नोस्माकं स्वभूतास्तन्वः शरीराणि अप्रयुच्छन् अप्रमाद्यन् त्रास्व पालय ॥ ७ ॥

॥ इति सप्तमस्य षष्ठे द्वितीयोवर्गः ॥ २ ॥

प्रकेतुनेतिनवर्चं अष्टमं सूक्तं त्रैष्टुभं त्वष्टृपुत्रस्त्रिशिरानामऋषिः आदितः षडाग्नेय्यः ततस्तिस्रः ऐन्द्र्यः। तथाचानुक्रान्तं—प्रकेतुनानवत्रिशिरास्त्वाष्ट्रस्तृचोन्त्यऐन्द्रइति। आदितः षण्णां प्रातरनुवाकाश्विनशस्त्रयोराग्नेयक्रतावुक्तोविनियोगः।

तत्र प्रथमा—

प्रकेतुनांबृहतायांत्यग्निरारोदंसीवृषभोरोरवीति।
दिवश्चिदन्ताँउपमाँउदांनळपामुपस्थेमहिषोववर्ध ॥ १ ॥

प्र। केतुना। बृहता। याति। अग्निः। आ। रोदसी इति। वृषभः।
रोरवीति। दिवः। चित्। अन्तान्। उपऽमान्। उत्।
आनट्। अपाम्। उपऽस्थे। महिषः। ववर्ध ॥ १ ॥

अग्निं बृहता महता केतुना प्रज्ञानेन युक्तः सन् आ इदानीं रोदसी द्यावापृथिव्यौ प्रयाति प्रकर्षेण गच्छति। किंच देवानामाह्वानकाले वृषभइव रोरवीति अत्यर्थं शब्दं करोति दिवश्चित् द्युलोकस्यापि अन्तानवसानान् उपमान् समीपांश्च प्रदेशान् ज्वलनात्मनादित्यात्मना वा स्थितः उदानट् ऊर्ध्वं व्याप्नोति अपां वृष्टिलक्षणानामुदकानामुपस्थे उपस्थानेन्तरिक्षे वैद्युतात्मना महिषो महान् ववर्ध वर्धते ॥ १ ॥

अथ द्वितीया—

मुमोदगर्भोवृषभःककुद्मानस्रेमावत्सःशिमीवाँअरावीत्।
सदेवतात्युद्यतानिकृण्वन्त्स्वेषुक्षयेषुप्रथमोजिगाति ॥ २ ॥

मुमोद। गर्भः। वृषभः। ककुत्ऽमान्। अस्रेमा। वत्सः। शिमीऽवान्।
अरावीत्। सः। देवऽताति। उत्ऽयतानि। कृण्वन्।
स्वेषु। क्षयेषु। प्रथमः। जिगाति ॥ २ ॥

गर्भः द्यावापृथिव्योरन्तर्गतः वृषभः कामानां वर्षिताग्निः ककुद्मान् उन्नततेजस्कः मुमोद मोदते। किंच अस्रेमा प्रशस्यनामैतत् प्रशस्तः वत्सः नक्तोषसोर्वत्सभूतः सायंप्रातराहुत्युपजीवनात् शिमीवान् हविर्वहनदेवाह्वानादिकर्मवान् अग्निः अरावीत् देवाह्वानादिशब्दं करोति

सोऽग्निः देवताति यज्ञे उद्यतानि उद्यमान्युत्साहानि कर्माणि कृण्वन् स्वेषु क्षयेषु आत्मीयेष्वाहवनीयादिस्थानेषु स्थितः प्रथमोदेवानां स्थानेषु मुख्यः जिगाति गच्छति ॥ २ ॥

अथ तृतीया—

आयोमूर्धानंपित्रोरर॑ब्धन्य॑ध्वरेद॑धिरेसूरोअर्णः ।
अस्यपत्मन्नरुषीरश्वंबुध्नाऋतस्ययोनौतन्वोजुषन्त ॥ ३ ॥

आ । यः । मूर्धानम् । पित्रोः । अरब्ध । नि । अध्वरे । दधिरे ।
सूरः । अर्णः । अस्य । पत्मन् । अरुषीः । अश्वऽबुध्नाः ।
ऋतस्य । योनौ । तन्वः । जुषन्त ॥ ३ ॥

योऽग्निः पित्रोः मातापितृभूतयोर्द्यावापृथिव्योः मूर्धानं आअरब्ध स्वतेजोभिरारभते यद्वा मातापितृभूतयोररण्योर्मूर्धानं शिरोवत् प्रधानभूतं मथनप्रदेशं आङीषदर्थे आरब्धईषद्धिनस्ति निर्मथनकालेपि दाहेन दग्धुं समर्थः सूरः सुवीर्यस्याग्नेः अर्णः गमनशीलं तेजः अध्वरे यज्ञे निदधिरे यष्टारोनियमेन धारयन्ति अस्याग्नेः पत्मन् पतने अरुषीरारोचमानाः ऋतस्य यज्ञस्य योनौ स्थाने अश्वबुध्नाः व्याप्तमूलाः अशनबन्धनावा हविराहारान्विताइत्यर्थः तन्वः त्वदीयास्तनूर्जुषन्त कवयः सेवन्ते ॥ ३ ॥

अथ चतुर्थी—

उषउषोहिवसोअग्रमेषित्वंयमयोरभवोविभावा ।
ऋतायसप्तदधिषेपदानिजनयन्मित्रंतन्वेस्वायै ॥ ४ ॥

उषःऽउषः । हि । वसो इति । अग्रम् । एषि । त्वम् । यमयोः ।
अभवः । विभाऽवा । ऋताय । सप्त । दधिषे । पदानि ।
जनयन् । मित्रम् । तन्वे । स्वायै ॥ ४ ॥

हेवसो स्वेन तेजसा सर्वस्याच्छादयितः वसुमन्वा प्रशस्यवाग्ने त्वं उषउषः सर्वस्याएवोषसः अग्रं पूर्वं एषि प्राप्नोषि । अपिच यमयोर्युग्मयोः परस्परमवियुक्तयोः अहोरात्रयोः वि-

भावा दीप्तिमान् अभवः भवसि । तन्वे स्वायै आत्मीयात् शरीरात् मित्रमादित्यं जनयन् उ-
त्पादयन् सप्तपदानि सप्तसंख्याकानि धिष्ण्यादिस्थानानि ऋताय यज्ञार्थं दधिषे धारयसि ॥४॥

अथ पंचमी—

भुवश्चक्षुर्महऋतस्यगोपाभुवोवरुणोयदृतायवेषि ।
भुवोअपांनपाज्जातवेदोभुवोदूतोयस्यहव्यंजुजोषः ॥ ५ ॥ ३ ॥

भुवः । चक्षुः । महः । ऋतस्य । गोपाः । भुवः । वरुणः । यत् ।
ऋताय । वेषि । भुवः । अपाम् । नपात् । जातऽवेदः । भुवः ।
दूतः । यस्य । हव्यम् । जुजोषः ॥ ५ ॥ ३ ॥

महोमहतः ऋतस्य यज्ञस्य हेअग्ने त्वं चक्षुरिव प्रकाशकोभुवः भवसि गोपाः यज्ञस्य रक्ष-
कस्त्वमेव भवसि यद्यदा ऋताय सोमरसलक्षणस्योदकस्यादानार्थं वरुणः आदित्यः वेषि गच्छ-
सि तदा त्वमेव भुवोभवसि । हेजातवेदः जातप्रज्ञाग्ने अपां वृष्टिलक्षणानामुदकानां नपात् पौत्रः
त्वमेव भुवोभवसि अद्भ्योहि मेघोजायते मेघादग्निर्विद्युद्रूपोजायते इत्यपां पौत्रत्वमुच्यते यस्य
यजमानस्य हव्यं हविः जुजोषः सेवसे तस्य दूतोभुवोभवसि ॥ ५ ॥

॥ इति सप्तमस्य षष्ठे तृतीयोवर्गः ॥ ३ ॥

दर्शपूर्णमासयोराग्नेयस्य याज्या भुवोयज्ञस्येत्येषा । सूत्रितंच—तासांयाज्यानुवाक्या अग्नि-
र्मूर्धाभुवोयज्ञस्येति । आग्नेयीकाचित्काम्येष्टिः तस्यामेषैव याज्या । सूत्रितंच—आग्नेय्याउत्तरे
नित्येमूर्धन्वतइति ।

सैषा सूक्ते षष्ठी—

भुवोयज्ञस्यरजसश्चनेतायत्रानियुद्भिःसचसेशिवाभिः ।
दिविमूर्धानंदधिषेस्वर्षांजिह्वामग्नेचकृषेहव्यवाहम् ॥ ६ ॥

भुवः । यज्ञस्य । रजसः । च । नेता । यत्र । नियुत्ऽभिः । सचसे ।
शिवाभिः । दिवि । मूर्धानम् । दधिषे । स्वःऽसाम् ।
जिह्वाम् । अग्ने । चकृषे । हव्यऽवाहम् ॥ ६ ॥

हे अग्ने त्वं यत्र यस्मिन्नन्तरिक्षे शिवाभिः कल्याणीभिर्नियुद्भिः नियुत्संज्ञकाभिरश्वजातिभिः संबद्धं वायुं सचसे संगच्छसे तस्मिन्नन्तरिक्षे यज्ञस्य रजसश्चोदकस्यच नेता प्रापयिता भुवोभवसि। अग्निर्वा इतोवृष्टिमुदीरयतीतिश्रुतेः। किंच दिवि द्युलोके मूर्धानं शिरोवत्प्रधानभूतं स्वर्षां सर्वस्य संभक्तारमादित्यं दधिषे हविर्वहनद्वारेण धारयसि। हेअग्ने त्वं जिह्वां ज्वालां हव्यवाहं हविषोवोढ्रीं चकृषे करोषि ॥ ६ ॥

अथ सप्तमी—

**अ॒स्य त्रि॒तः क्रतु॑ना व॒व्रे अ॒न्तरि॒च्छन्धी॒तिं॑ पि॒तुरेवैः॒ पर॑स्य ।**
**स॒च॒स्यमा॑नः पि॒त्रोरु॒पस्थे॑ जा॒मि ब्रु॑वा॒ण आयु॑धानि वेति ॥ ७ ॥**

**अ॒स्य । त्रि॒तः । क्रतु॑ना । व॒व्रे । अ॒न्तः । इ॒च्छन् । धी॒तिम् । पि॒तुः । एवैः॑ । पर॑स्य । स॒च॒स्यमा॑नः । पि॒त्रोः । उ॒पऽस्थे॑ । जा॒मि । ब्रु॒वा॒णः । आयु॑धानि । वे॒ति॒ ॥ ७ ॥**

अस्मिन्नृचे इन्द्रइममर्थं ब्रवीति। हे त्रित सर्वेषामायुधानि वेत्ता त्वं त्वष्टृपुत्रस्य त्रिशिरसोवधार्थं मम साहाय्यं कुर्वितीन्द्रेणैवं पृष्टस्त्रितः स्ववीर्यवृद्ध्यर्थं यज्ञभागं वव्रे। सचेन्द्रस्तस्मै पाणिप्रक्षालनार्थं जलं यज्ञभागंच दत्तवान् अनेन यज्ञभागेन वृद्धवीर्यस्त्रितः एतत्संज्ञकऋषिः एवैः आत्मनोरक्षणैर्युक्तः अन्तर्यज्ञस्य मध्ये धीतिं भागमिच्छन् परस्योत्कृष्टस्य पितुः सर्वस्य जगतः पालयितुरस्येन्द्रस्य क्रतुना त्रिशिरसोमम वधार्थं साहाय्यभूतेन कर्मणा निमित्तेन वव्रे सखायं वृतवान्। किंच पित्रोर्मातापितृभूतयोर्द्यावापृथिव्योः उपस्थे समीपस्थे यज्ञे सचस्यमानः ऋत्विग्भिः सेव्यमानस्त्रितः जामि योग्यं इन्द्रस्यानुरूपं स्तोत्रं ब्रुवाणइन्द्रस्य बलवृद्ध्यर्थमुच्चारयन् आयुधानि स्वभूतानि वेति त्वष्टृपुत्रस्य मम वधार्थं आगच्छति ॥ ७ ॥

अथाष्टमी—

**स पित्र्या॒ण्यायु॑धानि वि॒द्वानिन्द्रे॑षित आ॒प्त्यो अ॒भ्य॑युध्यत् ।**
**त्रि॒शी॒र्षाणं॑ स॒प्तर॑श्मिं जघ॒न्वान्त्वा॒ष्ट्रस्य॑ चि॒न्निः स॑सृजे त्रि॒तो गाः ॥ ८ ॥**

१ तै० सं० २. ४. १०.

सः । पित्र्याणि । आयुधानि । विद्वान् । इन्द्रऽइषितः । आप्त्यः । अभि । अयुध्यत् । त्रिऽशीर्षाणम् । सप्तऽरश्मिम् । जघन्वान् । त्वाष्ट्रस्य । चित् । निः । ससृजे । त्रितः । गाः ॥ ८ ॥

आप्त्यः आप्त्यस्य पुत्रः अपां पुत्रोवा तकारोपजनश्छान्दसः सत्रितः पित्र्याणि स्वपितृसबन्धीन्यायुधानि विद्वान् जानन् इन्द्रेषितः त्रिशिरसामयासह युद्धार्थमिन्द्रेण प्रेषितः सन् अभ्ययुध्यत् आभिमुख्येन युद्धवान् । तदनन्तरं सप्तरश्मिं शत्रुनियमनार्थं सप्तप्रग्रहहस्तं यद्वा सप्तरश्मिरादित्यः तत्सदृशं त्रिशीर्षाणं त्रिशिरस्कं मां जघन्वान् हतवान् मूर्छितं कृतवानित्यर्थः। किंच त्रितः त्वाष्ट्रस्य चित् त्वष्ट्रपुत्रस्य ममापि गाः पशून् निःससृजे विसृष्टवान् अपहृतवानित्यर्थः ॥ ८ ॥

अथ नवमी—

भूरीदिन्द्रउदिनक्षन्तमोजोवाभिनत्सत्पतिर्मन्यमानम् ।
त्वाष्ट्रस्यचिद्विश्वरूपस्यगोनामाचक्राणस्त्रीणिशीर्षापरावर्क् ॥ ९ ॥ ४ ॥

भूरि । इत् । इन्द्रः । उत्ऽइनक्षन्तम् । ओजः । अव । अभिनत् । सत्ऽपतिः । मन्यमानम् । त्वाष्ट्रस्य । चित् । विश्वऽरूपस्य । गोनाम् । आऽचक्राणः । त्रीणि । शीर्षा । परा । वर्गिति वर्क् ॥ ॥ ९ ॥ ४ ॥

सत्पतिः सतां पालकः इन्द्रः भूरीत् बह्वेव पूर्वतुल्यमतिरिक्तंवा ओजोबलं उदिनक्षन्तं व्याप्नुवन्तं मन्यमानं शूरमित्यात्मानं चिंतयन्तं यद्वा मन्यतिर्दीप्तिकर्मा क्रोधकर्मावा दीप्यमानं क्रुध्यन्तंवा त्वष्ट्रपुत्रं मां अवाभिनत् वज्रेण विदारितवान् । विदार्यत्वाष्ट्रस्यचित् त्वष्ट्रपुत्रस्यापि गोनां गवां स्वामिनमितिशेषः विश्वरूपस्य मम त्रीणि शीर्षा शीर्षाणि आचक्राणः आसमन्तात् शब्दं कुर्वन् परावर्क् पराङ्मुखस्य वृक्णवान् छिन्नवानित्यर्थः । ईदृशं भाविवस्तु विश्वरूपः स्वमति अनेन तृचेन दृष्टवान् ॥ ९ ॥

॥ इति सप्तमस्य षष्ठे चतुर्थो वर्गः ॥ ४ ॥

आपोहिष्ठेति नवर्चं नवमं सूक्तं अंबरीषस्य राज्ञः पुत्रःसिंधुद्वीपः ऋषिः त्वष्टृपुत्रस्त्रिशिरावा इदमापइत्यादिकेद्वे अनुष्टुभौ ईशानाइति वर्धमाना आपः पृणीतेति प्रतिष्ठा शिष्टागायत्र्यः आपोदेवता। तथाचानुक्रान्तं—आपोहिसिन्धुद्वीपोवांबरीषआपं गायत्रं ह्यनुष्टुबन्तं पंचमी वर्धमाना सप्तमी प्रतिष्ठेति। गतः सूक्तविनियोगः। आग्निमारुते आपोहिष्ठेत्याद्यास्तिस्रः। सूत्रितंच—आपोहिष्ठेति तिस्रोवियतमपउपस्पृशन्निति।

तत्र प्रथमा—

**आपो॒हिष्ठाम॑यो॒भुव॒स्तान॑ऊ॒र्जेद॑धातन। म॒हेरणा॑य॒चक्ष॑से॥ १॥**

**आप॑ः। हि। स्थ। म॒यः॒ऽभुव॑ः। ताः। नः॒। ऊ॒र्जे।**

**द॒धा॒त॒न॒। म॒हे। रणा॑य। चक्ष॑से॥ १॥**

हियस्मात् कारणात् आपःयायूयं मयोभुवः सुखस्य भावयित्र्यः स्थ भवथ तास्तादृश्योयूयं नोस्मान् ऊर्जे अन्नाय दधातन धत्त अन्नप्राप्तियोग्यानस्मान् कुरुत अन्नमस्मभ्यं दत्तेत्यर्थः। महे महते रणाय रमणीयाय चक्षसे दर्शनाय सम्यक् ज्ञानायच धत्त अस्मान् सम्यक्ज्ञानं प्रतियोग्यान् कुरुतेत्यर्थः॥ १॥

अथ द्वितीया—

**योव॑ःशि॒वत॑मो॒रस॒स्तस्य॑भाजयते॒हनः॑। उ॒श॒तीरि॑वमा॒तरः॑॥ २॥**

**यः। व॒ः। शि॒वऽत॑मः। रस॑ः। तस्य॑। भा॒ज॒य॒त॒।**

**इ॒ह। न॒ः। उ॒श॒तीःऽइ॑व। मा॒तर॑ः॥ २॥**

हेआपः वोयुष्माकं स्वभूतोयोरसः शिवतमः सुखतमः इहास्मिन् लोके तस्य तं रसं नोस्मान् भाजयत सेवयत उपयोजयतेत्यर्थः। तत्र दृष्टान्तः—उशतीरिव उशत्यइव पुत्रसमृद्धिं कामयमाना मातरः स्तन्यं रसं यथा भाजयन्ति प्रापयन्ति तद्वत्॥ २॥

अथ तृतीया—

**तस्मा॒अर॑ङ्गमामवो॒यस्य॒क्षया॑य॒जिन्व॑थ। आपो॑ज॒नय॑थाचनः॥ ३॥**

**तस्मै॑। अर॑म्। ग॒मा॒म॒। व॒ः। यस्य॑। क्षया॑य। जिन्व॑थ।**

**आप॑ः। ज॒नय॑थ। च॒। न॒ः॥ ३॥**

हेआपोयूयं यस्य पापस्य क्षयाय विनाशाय अस्मान् जिन्वथ प्रीणयथ तस्मै तादृशाय पापक्षयाय अरं क्षिप्रं वोयुष्मान् गमाम गमयाम वयं शिरसि प्रक्षिपामेत्यर्थः । यद्वा यस्यान्नस्य क्षयाय निवासार्थं यूयमोषधीर्जिन्वथ तर्पयथ तस्मै तदन्नमुद्दिश्य वयं अरं अलं पर्याप्तं यथा भवति तथा वोयुष्मान् गमाम गच्छाम । किंच हे आपः नोस्मान् जनयथ च पुत्रपौत्रादिजनने प्रयोजयतेत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

शंनोदेवीरभिष्टयआपोभवन्तुपीतये । शंयोरभिस्रवन्तुनः ॥ ४ ॥

शम् । नः । देवीः । अभिष्टये । आपः । भवन्तु । पीतये ।
शम् । योः । अभि । स्रवन्तु । नः ॥ ४ ॥

नोस्माकं पापापनोदद्वारेण शं सुखं भवन्तु देवीर्दिव्यः आपः अभिष्टये अस्मद्यज्ञाय भवन्तु यज्ञांगभावायच भवन्तुइत्यर्थः । पीतये पानायच भवन्तु । तथा शं उत्पन्नानां रोगाणां शमनं योः यावनं अनुत्पन्नानां पृथक्करणं च कुर्वन्तु । अपिच नोस्माकं अभि उपरि स्रवन्तु शुध्यर्थं सिंचन्तु ॥ ४ ॥

अथ पंचमी—

ईशानावार्याणांक्षयन्तीश्चर्षणीनाम् । अपोयाचामिभेषजम् ॥५॥

ईशानाः । वार्याणाम् । क्षयन्तीः । चर्षणीनाम् ।
अपः । याचामि । भेषजम् ॥ ५ ॥

वार्याणां वारिप्रभवानां व्रीहियवादीनां यद्वा वरणीयानां धनानां ईशाना ईश्वराश्चर्षणीनां मनुष्याणां क्षयन्तीः निवासयित्रीः अपउदकानि भेषजं सुखनामैतत् पापापनोदनं सुखं याचामि अहं प्रार्थये ॥ ५ ॥

अथ षष्ठी—

अप्सुमेसोमोअब्रवीदन्तर्विश्वानिभेषजा । अग्निंचविश्वशम्भुवम् ॥६॥

अप्ऽसु । मे । सोमः । अब्रवीत् । अन्तः । विश्वानि ।
भेषजा । अग्निम् । च । विश्वऽशंभुवम् ॥ ६ ॥

अथसप्तमी—

आपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक् च सूर्यं दृशे ॥ ७ ॥

आपः । पृणीत । भेषजम् । वरूथम् । तन्वे । मम ।
ज्योक् । च । सूर्यम् । दृशे ॥ ७ ॥

अथाष्टमी—

इदमापः प्र वहत यत्किं च दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥ ८ ॥

इदम् । आपः । प्र । वहत । यत् । किम् । च । दुःऽइतम् । मयि ।
यत् । वा । अहम् । अभिऽदुद्रोह । यत् । वा ।
शेपे । उत । अनृतम् ॥ ८ ॥

अथ नवमी—

आपो अद्यान्वचारिषं रसेन समगस्महि ।
पयस्वानग्न आ गहि तं मा सं सृज वर्चसा ॥ ९ ॥ ५ ॥

आपः । अद्य । अनु । अचारिषम् । रसेन । सम् । अगस्महि ।
पयस्वान् । अग्ने । आ । गहि । तम् । मा । सम् । सृज ।
वर्चसा ॥ ९ ॥ ५ ॥

अप्सुमे सोमोअब्रवीदित्यादिकाश्चतस्रऋचः प्रथमाष्टके द्वितीयाध्याये विनियोगपुरःसरं व्याख्याताः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

॥ इति सप्तमस्य षष्ठे पञ्चमोवर्गः ॥ ५ ॥

ओचिदितिचतुर्दशर्चं दशमं सूक्तं अत्रानुक्रम्यते—ओचित्षळूनावैवस्वतयोर्यमयम्योः संवादः षष्ठ्ययुग्भिर्यमीमिथुनार्थं यमंप्रोवाच स तां नवमीयुग्भिरनिच्छन्प्रत्याचष्टइति । ततः षष्ठ्यां प्रथमातृतीयाद्ययुक्षु विवस्वतः पुत्री यमी ऋषिः यमोदेवता । यस्यवाक्यं सऋषिः यातेनोच्यते सादेवतेति न्यायात् । तथा नवम्यां द्वितीयाचतुर्थीप्रभृतिषु युक्षु वैवस्वतोयमऋषिः यमी देवता । अनादेशपरिभाषयात्रिष्टुप्छन्दः गतोविनियोगः ।

तत्र प्रथमा—

ओचित्सखायंसख्यावंवृत्यांतिरःपुरूचिदर्णवंजगन्वान् ।
पितुर्नपातमादधीतवेधाअधिक्षमिप्रतरंदीध्यानः ॥ १ ॥

ओ इति । चित् । सखायम् । सख्या । ववृत्याम् । तिरः ।
पुरु । चित् । अर्णवम् । जगन्वान् । पितुः । नपातम् । आ ।
दधीत । वेधाः । अधि । क्षमि । प्रऽतरम् । दीध्यानः ॥ १ ॥

अत्रास्मिन्सूक्ते वैवस्वतयोर्यमयम्योः संवादउच्यते—अस्यामृचि यमं प्रति यमीप्रोवाच । तिरः अन्तर्हितं अप्रकाशमानं निर्जनप्रदेशमित्यर्थः पुरुचित् बह्वपि विस्तीर्णंच अर्णवं समुद्रैकदेशं अवान्तरद्वीपं जगन्वान् गतवती यमी चिदिति पूजार्थे पूजितमिष्टं श्रेष्ठमित्यर्थः सखायं गर्भवासादारभ्य सखिभूतं यमं सख्या सख्याय स्त्रीपुरुषसंपर्कजनितमित्रत्वाय ओववृत्यां आवर्तयामि आभिमुख्येन स्थित्वा लज्जां परित्यज्य त्वत्संभोगं करोमीत्यर्थः । धर्मस्य त्वरिता गतिरिति न्यायेन कामस्य त्वरितत्वात् । अपिच पितुः आवयोर्भविष्यतः पुत्रस्य पितृभूतस्य तवार्थाय अधिक्षमि अधि पृथिव्यां पृथिवीस्थानीये नभोदरेइत्यर्थः प्रतरं प्रकृष्टं सर्वगुणोपेतमित्यर्थः । नपातं गर्भलक्षणमपत्यं वेधा विधाता प्रजापतिः दीध्यानः आवयोरनुरूपस्य पुत्रस्य जननार्थं आवां ध्यायन् आदधीत प्रजापतिः । धातागर्भंदधातुतइत्युक्तत्वात् ॥ १ ॥

अथ द्वितीया—

नतेसखासख्यंवष्ट्येतत्सलक्ष्मायद्विषुरूपाभवाति ।
महस्पुत्रासोअसुरस्यवीरादिवोधर्तारउर्वियापरिख्यन् ॥ २ ॥

---

१ ऋ० सं० ८. ८. ४२. ।

न । ते । सखा । सख्यम् । वष्टि । एतत् । सऽलक्ष्मा । यत् ।
विषुऽरूपा । भवाति । महः । पुत्रासः । असुरस्य ।
वीराः । दिवः । धर्तारः । उर्विया । परि । ख्यन् ॥ २ ॥

यमः आत्मानं परोक्षीकृत्य यमीं प्रत्युवाच । हेयमि ते तव सखा गर्भवासलक्षणेन सखिभूतो-यमः एतदीदृशं त्वयोक्तं स्त्रीपुरुषलक्षणं सख्यं न वष्टि न कामयते । यद्यस्मात् कारणात् यमी सलक्ष्मा समानयोनित्वलक्षणा विषुरूपा भगिनीत्वात् विषमरूपा भवाति भवति तस्मान्न वष्टी-त्यर्थः । इदानीं तिरः पुरूचिदर्णवंजगन्वानित्यस्य प्रतिवचनमुच्यते । महोमहतः असुरस्य प्राणवतः प्रज्ञावतोवा प्रजापतेः पुत्रासः पुत्रभूताः वीराः । वीरोवीरयत्यमित्रान् वेतेर्वा स्याद्ग-तिकर्मणोवीरयतेर्वेतिनिरुक्तं । शत्रूणां विविधमीरयितारः धर्तारः धारयितारः दिवः द्युलोक-स्य प्रदर्शनमेतत् द्युप्रभृतीनां लोकानामित्यर्थः ॥ २ ॥

अथ तृतीया—

उशन्तिघातेअमृतासएतदेकस्यचित्त्यजसंमर्त्यस्य ।
नितेमनोमनसिधाय्यस्मेजन्युःपतिस्तन्व१मार्विविश्याः ॥ ३ ॥

उशन्ति । घ । ते । अमृतासः । एतत् । एकस्य । चित् । त्यजसम् ।
मर्त्यस्य । नि । ते । मनः । मनसि । धायि । अस्मे इति । जन्युः ।
पतिः । तन्वम् । आ । विविश्याः ॥ ३ ॥

पुनरपि यमी यमं प्रत्युवाच—घेति निपातोप्यर्थे हेयम ते प्रसिद्धाः अमृतासः प्रजापत्या-दयोदेवाएतदीदृशं शास्त्रेणागम्यत्वेनोक्तं त्यजसं त्यज्यते परस्मैप्रदीयतइति त्यजसं दुहितृभगि-न्यादिस्त्रीजातं उशन्ति कामयन्ते एकस्यचित् सर्वस्यजगतोमुख्यस्यापि प्रजापत्यादेः स्वदुहितृ-भगिन्यादिना संबन्धोस्तीति शेषः । अतः कारणात्ते तव मनश्चित्तं अस्मे अस्माकं ममेत्यर्थः । मनसि चित्ते निधायि निधीयतां अहं त्वां कामये त्वं मामपि कामयस्वेत्यर्थः । अपिच जन्यु-रिति लुप्तोपममेतत् जन्युरिव यथा जनयिता प्रजापतिः पतिर्भर्ता भूत्वा स्वदुहितुः शरीरं संभोगेनाविष्टवान् तथा त्वमपि मम पतिर्भूत्वा तन्वं मदीयं शरीरं आविविश्याः संभोगेनाविश योनौ प्रजननप्रक्षेपोपगूहचुंबनादिना मां संभुंक्ष्वेत्यर्थः ॥ ३ ॥

---

१ नि० १. ७. ।

अथ चतुर्थी—

नयत्पुराचकृमाकद्धनूनमृतावदन्तोअनृतंरपेम ।
गन्धर्वोअप्स्वप्याचयोषासानोनाभिःपरमंजामितन्नौ ॥ ४ ॥

न । यत् । पुरा । चकृम । कत् । ह । नूनम् । ऋता । वदन्तः ।
अनृतम् । रपेम । गन्धर्वः । अप्ऽसु । अप्या । च । योषा ।
सा । नः । नाभिः । परमम् । जामि । तत् । नौ ॥ ४ ॥

यमः यमीं पुनर्ब्रूते—पुरा पूर्वं प्रजापतेः यदगम्यागमनं अपरिमितसामर्थ्योपेतत्वात् कृतं तथा वयं नचकृम नाकुर्म । वयं ऋता ऋतानि सत्यानि वदन्तोब्रुवन्तः अनृतमसत्यं कद्ध कदा खलु नूनं निश्चितं रपेम वदेम नकदाचिदपीत्यर्थः। अगम्यागमनं नकुर्मइति यावत्। अपिच अप्सु अन्तरिक्षनामैतत् अन्तरिक्षे स्थितः गन्धर्वः गवां रश्मीनामुदकानांवा धारयिता आदित्यः अप्या अन्तरिक्षस्था सा प्रसिद्धा योषा आदित्यस्य भार्या सरण्यूश्च नौ आवयोर्नाभिरुत्पत्तिस्थानं मातापितरावित्यर्थः तत्तस्मात्कारणात् नौ आवयोः जामि बांधवं परमं उत्कृष्टं एवं सति आवयोरगम्यागमनरूपत्वात् कर्तुमयुक्तं तस्मादेतन्नकरोमीत्यभिप्रायः ॥ ४ ॥

अथ पंचमी—

गर्भेनुनौजनितादंपतीकर्देवस्त्वष्टासविताविश्वरूपः ।
नकिरस्यप्रमिनन्तिव्रतानिवेदनावस्यपृथिवीउतद्यौः ॥ ५ ॥ ६ ॥

गर्भे । नु । नौ । जनिता । दम्पती इति दम्ऽपती । कः । देवः । त्वष्टा
सविता । विश्वऽरूपः । नकिः । अस्य । प्र । मिनंति । व्रतानि ।
वेद । नौ । अस्य । पृथिवी । उत । द्यौः ॥ ५ ॥ ६ ॥

त्वष्टा रूपाणां कर्ता सविता सर्वेषां शुभाशुभस्य प्रेरकः विश्वरूपः सर्वात्मकः देवोदानादिगुणयुक्तः जनिता जनयिता प्रजापतिः गर्भेनु गर्भावस्थायामेव नौ आवां दंपती कः कृतवान् एकोदरे सहवासित्वात् । अस्य प्रजापतेः व्रतानि कर्माणि नकिः प्रमिनन्ति नकेचित् प्रहिंसन्ति नलोपयन्तीत्यर्थः । अतः कारणात् गर्भावस्थायामेवावयोः प्रजापतिकृते दंपतित्वे सति

संभोगं कुरु इत्यर्थः । अपिच नौ आवयोः अस्येदं मातुरुदरे सहवासजनितं दंपतित्वं पृथिवी भूमिः वेद जानाति उतापिच द्यौर्द्युलोकोपि जानाति ॥ ५ ॥

॥ इति सप्तमस्य षष्ठे षष्ठोवर्गः ॥ ६ ॥

अथ षष्ठी—

कोअस्यवेदप्रथमस्याह्नःकईंददर्शकइहप्रवोचत् ।
बृहन्मित्रस्यवरुणस्यधामकदुंब्रवआहनोवीच्यानॄन् ॥ ६ ॥

कः । अस्य । वेद । प्रथमस्य । अह्नः । कः । ईम् । ददर्श । कः । इह । प्र । वोचत् । बृहत् । मित्रस्य । वरुणस्य । धाम । कत् । ऊँ इति । ब्रवः । आहनः । वीच्या । नॄन् ॥ ६ ॥

प्रथमस्याह्नः संबन्धि अस्येदं अन्योन्यं संगमनं कोवेद जानाति । प्रथमेहनि यत् क्रियते तदनुमानमाश्रित्य नकश्चिदपि ज्ञातुं शक्नोतीत्यर्थः । इहास्मिन् प्रदेशे प्रत्यक्षतः कईमिदं संगमनं ददर्श पश्यति कः प्रवोचत् प्रख्यापयति नकोपीत्यर्थः । मित्रस्य वरुणस्य मित्रावरुणयोः बृहत् महत् धाम स्थानं अहोरात्रं यदस्ति तत्र नॄन् मनुष्यान् वीच्या नरकेण हे आहनः आहन्तः मर्यादयाहिंसितः स्वकृतशुभाशुभकर्मापेक्षया मनुष्यादिप्राणिनां नरकपातेन स्वर्गप्रापणेन निग्रहानुग्रहयोः कर्तरित्यर्थः एवंभूत हेयम त्वं कदुब्रवः किंवा ब्रवीषि ॥ ६ ॥

अथ सप्तमी—

यमस्यंमायम्यं१कामआगन्त्समानेयोनौसहशेय्याय ।
जायेवपत्येतन्वंरिरिच्यांविचिद्वृहेवरथ्येवचक्रा ॥ ७ ॥

यमस्य । मा । यम्यम् । कामः । आ । अगन् । समाने । योनौ । सहऽशेय्याय । जायाऽइव । पत्ये । तन्वम् । रिरिच्याम् । वि । चित् । वृहेव । रथ्याऽइव । चक्रा ॥ ७ ॥

यमस्य तव कामोभिलाषः यम्यं यमीं मा मां प्रति आगन् आगच्छतु ममोपरि तव यमस्य संभोगेच्छा जायतामित्यर्थः। किमर्थं समाने योनौ एकस्मिन् स्थाने शय्याख्ये सह शेय्याय सहशयनार्थं तदनन्तरं पूर्णमनोरथासती जायेव पत्ये यथा भार्या पत्युरर्थाय परया प्रीत्या विश्वस्ता सती रतिकामा स्वशरीरं प्रकाशयति एवं तन्वं आत्मीयं शरीरं रिरिच्यां विविच्यां त्वदर्थं प्रकाशयेयमित्यर्थः। किंच चिदिति पूरणः विवृहेव वृहउद्यमे धर्मार्थकामान् विविधमुद्यच्छावः। तत्र दृष्टान्तः—रथ्येव चक्रा रथस्यावयवभूते चक्रे यथा रथं उद्यच्छतः तद्वत्॥ ७॥

अथाष्टमी—

नतिष्ठन्तिननिमिषन्त्येतेदेवानांस्पशइहयेचरन्ति।
अन्येनमदाहनोयाहितूयंतेनविवृहरथ्येवचक्रा॥ ८॥

न। तिष्ठन्ति। न। निमिषन्ति। एते। देवानाम्। स्पशः। इह। ये। चरन्ति। अन्येन। मत्। आहनः। याहि। तूयम्। तेन। वि। वृह। रथ्याऽइव। चक्रा॥ ८॥

यम्या प्रत्याख्यातोयमः पुनराह—इहास्मिन् लोके देवानां संबन्धिनोये स्पशः अहोरात्रादयश्चाराश्चरन्ति सर्वेषां शुभाशुभलक्षणकर्मप्रत्यवेक्षणार्थं परिभ्रमन्ति एतेचाराः क्षणमात्रमपि चरणव्यापाररहिताः नतिष्ठन्ति ननिमिषन्ति मेषणंनकुर्वन्ति शुभमशुभंवा यः करोति तं निरीक्षन्ते चेत्यर्थः। हेआहनः ममापहंत्रि असत्यभाषणेन दुःखयित्रि त्वं मत् मत्तः अन्येन त्वत्सदृशेनसह तूयं क्षिप्रं याहि संगच्छ। गत्वाच तेन विवृह धर्मार्थकामानुद्यच्छ। तत्र दृष्टान्तः—रथ्येव चक्रा यथा रथावयवभूते चक्रे रथमुद्यच्छतः तद्वत्॥ ८॥

अथ नवमी—

रात्रीभिरस्माअहभिर्दशस्येत्सूर्यस्यचक्षुर्मुहुरुन्मिमीयात्।
दिवापृथिव्यामिथुनासबन्धूयमीर्यमस्यबिभृयादजामि॥ ९॥

रात्रीभिः । अस्मै । अहःऽभिः । दशस्येत् । सूर्यस्य । चक्षुः । मुहुः । उत् । मिमीयात् । दिवा । पृथिव्या । मिथुना । सबन्धू इति सऽबन्धू । यमीः । यमस्य । बिभृयात् । अजामि ॥ ९ ॥

रात्रीभिः रात्रिभिः अहभिः अहोरात्रयोः अस्मै यमाय कल्पितं भागं सर्वे यजमानाः दशस्येत् प्रयच्छन्तु सूर्यस्य संबन्धि चक्षुस्तेजः मुहुर्मुहुः अस्मै यमाय उन्मिमीयात् उदेतु दिवा पृथिव्या द्यावापृथिवीभ्यां सह मिथुना मिथुनौ सबन्धू समानबन्धू अहोरात्रे अस्मै यमाय एतत् ज्ञात्वा इयं यमीः यमस्य अजामि भ्रातरं बिभृयात् धारयतु यत्नेन परिगृह्णात्वित्यर्थः ॥९॥

अथ दशमी—

आघातागच्छानुत्तरायुगानियत्रजामयःकृणवन्नजामि ।
उपबर्बृहिवृषभायबाहुमन्यमिच्छस्वसुभगेपतिंमत् ॥ १० ॥ ७ ॥

आ । घ । ता । गच्छान् । उत्ऽतरा । युगानि । यत्र । जामयः । कृणवन् । अजामि । उप । बर्बृहि । वृषभाय । बाहुम् । अन्यम् । इच्छस्व । सुऽभगे । पतिम् । मत् ॥ १० ॥ ७ ॥

यत्र येषु कालेषु जामयोभगिन्यः अजामि अभ्रातरं पतिं कृणवन् करिष्यन्ति ता तानि उत्तराणि युगानि कालविशेषाः आगच्छान् आगमिष्यन्ति । घेतिपूरणः । यस्मादेवं तस्मात् हे सुभगे त्वं इदानीं मत् मत्तः अन्यं पतिं भर्तारं इच्छस्व कामयस्व । तदनन्तरं वृषभाय तव योनौ रेतः सेक्त्रे पुरुषाय आत्मीयं बाहुं उपबर्बृहि शयनकाले उपबर्हणं कुरु ॥ १० ॥

॥ इति सप्तमस्य षष्ठे सप्तमोवर्गः ॥ ७ ॥

अथैकादशी—

किंभ्रातासद्यदनाथंभवातिकिमुस्वसायन्निर्ऋतिर्निगच्छात् ।
काममूताबह्वेतद्रपामितन्वामेतन्वं१संपिपृग्धि ॥ ११ ॥

किम् । भ्राता । असत् । यत् । अनाथम् । भवाति । किम् । ऊँ इति ।
स्वसा । यत् । निःऽऋतिः । निऽगच्छात् । कामऽमूता । बहु ।
एतत् । रपामि । तन्वा । मे । तन्वम् । सम् । पिपृग्धि ॥ ११ ॥

यमी यमेन प्रत्याख्याता पुनराह—यत् यस्मिन् भ्रातरि सति स्वस्रादिकं अनाथं नाथरहितं भवाति भवति सभ्राता किमसत् किं भवति नभवतीत्यर्थः । किंच यत् यस्यां भगिन्यां सत्यां भ्रातरं निर्ऋतिर्दुःखं निगच्छात् नियमेन गच्छति प्राप्नोति सा स्वसा किमु किंवा भवति भ्रातृभगिन्योश्च परस्परं प्रीतिर्येन केनचित् उपायेनावश्यं कार्येत्यभिप्रायः । साहं कामभूता कामेन मूर्छिता सती बहु नानाप्रकारं एतदीदृशमुक्तं वक्ष्यमाणं च रपामि प्रलपामि एतत् ज्ञात्वा मे मम तन्वा शरीरेण तन्वंच शरीरं संपिपृग्धि संपर्चय संभोगेन संश्लेषय मां सम्यक् भुंक्ष्वेत्यर्थः ॥ ११ ॥

अथ द्वादशी—

नवाउंतेतन्वांतन्वं१संपपृच्यांपापमाहुर्यःस्वसारंनिगच्छात् ।
अन्येनमत्प्रमुदःकल्पयस्वनतेभ्रातासुभगेवष्टयेतत् ॥ १२ ॥

न । वै । ऊँ इति । ते । तन्वा । तन्वम् । सम् । पपृच्याम् । पापम् ।
आहुः । यः । स्वसारम् । निऽगच्छात् । अन्येन । मत् । प्रऽमुदः ।
कल्पयस्व । न । ते । भ्राता । सुऽभगे । वष्टि । एतत् ॥ १२ ॥

यमः यमीं प्रत्युक्तवान् हेयमि ते तव तन्वा शरीरेण तन्वमात्मीयं शरीरं नवै संपपृच्यां नैव संपर्चयामि नैवाहं त्वां संभोक्तुमिच्छामीत्यर्थः । योभ्राता स्वसारं भगिनीं निगच्छात् नियमेनोपगच्छति संभुंक्तइत्यर्थः तं पापं पापकारिणं आहुः शिष्टावदन्ति एतत् ज्ञात्वा हेसुभगे सुष्ठु भजनीये हे यमि त्वं मत् मत्तः अन्येन त्वद्योग्येन पुरुषेण सह प्रमुदः संभोगलक्षणान् प्रहर्षान् कल्पयस्व समर्थय । ते तव भ्राता यमः एतदीदृशं त्वया सह मैथुनं कर्तुं नवष्टि नकामयते नेच्छति ॥ १२ ॥

अथ त्रयोदशी—

बतोबतासियमनैवतेमनोहृदयंचाविदाम ।
अन्याकिलत्वांकक्ष्येवयुक्तंपरिष्वजातेलिबुंजेववृक्षम् ॥ १३ ॥

बतः । बत । असि । यम । न । एव । ते । मनः । हृदयम् । च ।
अविदाम । अन्या । किल । त्वाम् । कक्ष्याऽइव । युक्तम् ।
परि । स्वजाते । लिबुंजाऽइव । वृक्षम् ॥ १३ ॥

यमी प्रत्युवाच—हेयम त्वं बतोदुर्बलोसि । बतेति निपातः खेदानुकंपयोः । अनुकंप्यश्चासि ते त्वदीयं मनः मनोगतं संकल्पं हृदयंच बुद्धिगतमध्यवसायंच नैवाविदाम वयं नजानीम एवं मत्तोन्या काचित् स्त्री त्वां परिष्वजातेकिल । तत्र दृष्टान्तद्वयमुच्यते—कक्ष्येवयुक्तं यथाकक्ष्या-रज्जुः युक्तं आत्मना संबद्धं अश्वं परिष्वजते तद्वत् लिबुजेव वृक्षं यथा लिबुजा व्रततिः गाढं वृक्षं परिष्वजाते तद्वच्च अन्यस्यां स्त्रियां आसक्तस्त्वं मां परिष्वक्तुं नेच्छसीत्यर्थः ॥ १३ ॥

अथ चतुर्दशी—

अन्यमूषुत्वंयम्यन्यउत्वांपरिष्वजातेलिबुंजेववृक्षम् ।
तस्यंवात्वंमनइच्छासवातवाधांकृणुष्वसंविदंसुभद्राम् ॥ १४ ॥ ८ ॥

उ
सु
यो

अन्यम् । ऊँ इति । सु । त्वम् । यमि । अन्यः । ऊँ इति । त्वाम् । परि ।
स्वजाते । लिबुंजाऽइव । वृक्षम् । तस्य । वा । त्वम् । मनः । इच्छ ।
सः । वा । तव । अध । कृणुष्व । सम्ऽविदम् । सुऽभद्राम् ॥ १४ ॥ ८ ॥

यमः पुनरप्याह—हेयमि त्वं अन्यमु अन्यं पुरुषमेव सु सुष्ठु परिष्वज अन्यउ अन्योपि पुरुषः त्वां परिष्वजाते । तत्र दृष्टान्तः—लिबुजेव वृक्षं यथा वल्ली गाढं वृक्षं परिष्वजते तद्वत् । तथासति वाशब्दः समुच्चये । त्वं तस्यच पुरुषस्य मनः इच्छ कामय । तस्य त्वं वशवर्तिनी भवेत्यर्थः । सच पुरुषः तव मनइच्छतु । अध अथ परस्परवशवर्तित्वानन्तरं त्वं तेनसह सुभद्रां सुकल्याणीं संविदं परस्परसंभोगसुखसंवित्तिं कृणुष्व कुरुष्व ॥ १४ ॥

॥ इति सप्तमस्य षष्ठेष्टमोवर्गः ॥ ८ ॥

वृषेतिनवर्चमेकादशं सूक्तं आंगिरसहविर्धानस्यार्षं आग्नेयं सप्तम्याद्यास्तिस्रः त्रिष्टुभः शिष्टाजगत्यः तथाचानुक्रान्तं—वृषानवांगिरसोहविर्धानआग्नेयंतु त्रिष्टुबन्तमिति । गतः सूक्तविनियोगः ।

तत्र प्रथमा—

वृषावृष्णेदुदुहेदोहसादिवःपयांसियह्वोअदितेरदाभ्यः ।
विश्वंसवेदवरुणोयथाधियासयज्ञियोयजतुयज्ञियाँऋतून् ॥ १ ॥

वृषा । वृष्णे । दुदुहे । दोहसा । दिवः । पयांसि । यह्वः । अदितेः ।
अदाभ्यः । विश्वम् । सः । वेद । वरुणः । यथा । धिया ।
सः । यज्ञियः । यजतु । यज्ञियान् । ऋतून् ॥ १ ॥

वृषा आहुतिद्वारेण वृष्टेः वर्षिता यह्वो महान् अदाभ्यः केनाप्यहिंस्योऽग्निः अदितेरक्षीणयागक्रियस्य वृष्णेः यज्ञद्वारेण स्तुतीनां हविषां वा वर्षितुर्यजमानस्यार्थाय दोहसा दोहनेन महता प्रक्षारणेन दिवः सकाशात् पयांसि वृष्टिलक्षणान्युदकानि दुदुहे दोग्धि प्रक्षारयति । किंच यथा वरुणआदित्यः धिया आत्मानुरूपया प्रज्ञया विश्वं सर्वं वेद जानाति तथासोयमग्निर्जानातीत्यर्थः । यज्ञियोयज्ञार्हः सोग्निः यज्ञियान् यज्ञार्हान् ऋतून् यजतु पूजयतु ॥ १ ॥

अथ द्वितीया—

रपद्गन्धर्वीरप्याचयोषणानदस्यनादेपरिपातुमेमनः ।
इष्टस्यमध्येअदितिर्निधातुनोभ्रातानोज्येष्ठःप्रथमोविवोचति॥२॥

रपत् । गन्धर्वीः । अप्या । च । योषणा । नदस्य । नादे । परि ।
पातु । मे । मनः । इष्टस्य । मध्ये । अदितिः । नि । धातु । नः ।
भ्राता । नः । ज्येष्ठः । प्रथमः । वि । वोचति ॥ २ ॥

रपत् रपितवती अग्निगुणानुक्तवती गंधर्वी गंधर्वस्य स्त्री अप्या अद्भिः संस्कृतयोषणा आहुतिलक्षणा स्त्री च अग्निं तर्पितवतीति शेषः । नदस्य स्तोतृनामैतत् स्तोतुर्मे मम स्वभूतं मनः नादे स्तुतिलक्षणे शब्दे परिपातु अग्निः सम्यग्रक्षतु अहं समाहितमनाभूत्वा सम्यक् स्तुतिं करोमीत्यर्थः । किंच अदितिरखंडनीयोग्निः नोस्मान् इष्टस्य यागस्य मध्ये निधातु निदधातु नितरां

स्थापयतु । प्रथमः सर्वेषां यजमानानां मुख्यः नोस्माकं ज्येष्ठोभ्राता विवोचति विशेषेण ब्रवीति स्तौतीत्यर्थः । नाहमेव केवलोयजनशीलः किन्तु सर्वएवास्मत्कुलीनोदेवयागप्रियइत्यर्थः ॥२॥

अथ तृतीया—

सोचिन्नुभद्राक्षुमतीयशस्वत्युषाउवासमनवेस्वर्वती ।
यदीमुशन्तमुशतामनुक्रतुमग्निंहोतारंविदथायजीजनन् ॥ ३ ॥

सो इति । चित् । नु । भद्रा । क्षुऽमती । यशस्वती । उषाः । उवास । मनवे । स्वःऽवती । यत् । ईम् । उशन्तम् । उशताम् । अनु । क्रतुम् । अग्निम् । होतारम् । विदथाय । जीजनन् ॥ ३ ॥

भद्रा भजनीया क्षुमती शब्दवती यशस्वती अन्नवती कीर्तिमती वा सोचित् सैव प्रसिद्धा उषाः मनवे मनुष्याय यजमानाय स्वर्वती आदित्यवती सती नु क्षिप्रं उवास उषितवती उदितवतीत्यर्थः । कदोदितवती उच्यते—यद्यदा उशन्तं स्तुतिं हविश्च कामयमानं उशतां यष्टुं कामयमानानां संबन्धिनं होतारं देवानामाह्वातारं होमनिष्पादकं वा ईमेनमग्निं अनुक्रतुं स्तुतिकर्मणः पश्चात् विदथाय यजनीयाय यज्ञार्थं जीजनन् ऋत्विग्यजमानाः जनयन्तीत्यर्थः । तदोदितवतीतिसंबन्धः ॥ ३ ॥

अथ चतुर्थी—

अधत्यंद्रप्संविभ्वंविचक्षणंविराभरदिषितःश्येनोअध्वरे ।
यदीविशोवृणतेदस्ममार्याअग्निंहोतारमधधीरजायत ॥ ४ ॥

अध । त्यम् । द्रप्सम् । विऽभ्वम् । विऽचक्षणम् । विः । आ । अभरत् । इषितः । श्येनः । अध्वरे । यदि । विशः । वृणते । दस्मम् । आर्याः । अग्निम् । होतारम् । अध । धीः । अजायत ॥४॥

अध अथानंतरं श्येनः श्येनाख्यः विः पक्षी अध्वरेयागे इषितः अग्निप्रेषितः विभ्वं महान्तं विचक्षणं सर्वस्य विशेषेण द्रष्टारं त्यं तं प्रसिद्धं द्रप्सं नात्यल्पं नातिबहुलं सोमं आभरत् आहृतवान्। अपिच यदि यदा आर्या अभिगमनीयं तं व्रजन्तोविशोयजमानामनुष्यादस्मं दर्श-

नीयं शत्रूणामुपक्षपयितारं वा होतारं अग्निं वृणते प्रार्थयन्ते । अथ अथ तदाधीः यागादि-क्रिया अजायत यज्वभिः प्रतायतइत्यर्थः ॥ ४ ॥

अथ पञ्चमी—

सदासिरण्वोयवसेवपुष्यतेहोत्राभिरग्नेमनुषःस्वध्वरः ।
विप्रस्यवायच्छशमानउक्थ्यं१वाजंससवाँउपयासिभूरिभिः ॥५॥९॥

सदा । असि । रण्वः । यवसाऽइव । पुष्यते । होत्राभिः । अग्ने । मनुषः । सुऽअध्वरः । विप्रस्य । वा । यत् । शशमानः । उक्थ्यम् । वाजम् । ससऽवान् । उपऽयासि । भूरिऽभिः ॥ ५ ॥ ९ ॥

हे अग्ने त्वं सदा सततं रण्वोसि रमणीयोभवसि । तत्र दृष्टान्तः—युवसे वपुष्यते यथा यवसानि तृणानि स्वपुष्टिं कुर्वते हस्त्यश्वगोमहिषादिचतुष्पदाय सर्वदा रमणीयानि भवन्ति तद्वत् । अपिच हे अग्ने मनुषोमनुष्यस्य स्वभूतैः होत्राभिः होत्रेति यज्ञनामैतत् यज्ञैः स्वध्वरः शोभनयज्ञोभवेति शेषः विप्रस्य वा स्तोतुर्वा यत् यस्य यजमानस्य वा स्वभूतं उक्थ्यं स्तोत्रं शशमानः प्रशंसन् वाजं हविर्लक्षणमन्नं ससवान् संभजमानश्च भूरिभिर्बहुभिःदेवैः सह उपयासि उपगच्छसि ॥ ५ ॥

॥ इति सप्तमस्य षष्ठे नवमोवर्गः ॥ ९ ॥

अथ षष्ठी—

उदीरयपितराजारआभगमियक्षतिहर्यतोहृत्तइष्यति ।
विवक्तिवह्निःस्वपस्यतेमखस्तविष्यतेअसुरोवेपतेमती ॥ ६ ॥

उत् । ईरय । पितरा । जारः । आ । भगम् । इयक्षति । हर्यतः । हृत्तः । इष्यति । विवक्ति । वह्निः । सुऽअपस्यते । मखः । तविष्यते । असुरः । वेपते । मती ॥ ६ ॥

हे अग्ने त्वदीयं ज्योतिः पितरा पितरौ सर्वप्राणिनां मातापितृभूते द्यावापृथिव्यौ प्रति उदीरय उद्गमय । तत्र दृष्टान्तः—आकारउपमार्थे रात्रेर्नक्षत्रादिदीप्तीनां च जरयितृत्वाज्जारआ-

दित्यः सयथा द्यावापृथिव्यौ प्रति भर्गं भजनीयं स्वयं ज्योतिः उद्गमयति तद्वत् हर्यतः यागं कामयमानान् प्रति इयक्षति यजमानोयष्टुमिच्छति हृत्तः हृदयेनेव इष्यति इषिरयं गत्यर्थः शुद्धोप्युपसर्गपूर्वोद्रष्टव्यः अधीष्यति देवान् यष्टुमधिगच्छति विवक्ति विवक्षति शस्त्रलक्षणाः स्तुतीर्वक्तुमिच्छति च वह्निर्वोढा स्तुतीनां देवान् प्रति प्रापयिता होता च स्वपस्यते शोभनमात्मीयं कर्म कर्तुमिच्छति। मखः यज्ञनामैतत् अत्र तत् प्रयोक्ताध्वर्युरुच्यते सच तविष्यते तविषिर्वृध्यर्थः सचात्रान्तर्णीतसनर्थश्चद्रष्टव्यः तुतुविषति स्तोतृलक्षणाः स्तुतीः वर्धयितुमिच्छतीत्यर्थः। असुरः प्राणवान् प्रज्ञावान्वा ब्रह्मेति शेषः मती मत्या बुध्या वेपते कर्मवैगुण्यात् बिभ्यत् कंपते। हे अग्ने यतोयजमानः सर्वर्त्विजश्च स्वकर्मकर्तुं त्वामागच्छन्ति अतस्त्वं शीघ्रमुद्गमयेत्यर्थः॥ ६॥

अथ सप्तमी--

यस्ते॑अग्नेसुम॒तिंमर्तो॒अक्ष॒त्सह॑सःसूनो॒अति॒सप्रशृ॑ण्वे।
इषं॒दधा॑नो॒वह॑मानो॒अश्वै॒रासद्यु॒माँअम॑वान्भूषति॒द्यून्॥ ७॥

यः। ते॒। अ॒ग्ने॒। सु॒ऽम॒तिम्। मर्तः॑। अक्ष॑त्। सह॑सः। सू॒नो॒ इति॑। अति॑। सः। प्र। शृ॒ण्वे॒। इष॑म्। दधा॑नः। वह॑मानः। अश्वैः॑। आ। सः। द्यु॒ऽमान्। अम॑ऽवान्। भू॒ष॒ति॒। द्यून्॥ ७॥

हे सहसः सूनो बलस्य पुत्राग्ने ते त्वदीयां सुमतिं शोभनामनुग्राहिकां बुद्धिं मर्तोमनुष्योयजमानः अक्षत् अश्नुते अनुग्रहशीलं त्वां स्तुतिभिर्हविर्भिश्च परिचरतीत्यर्थः। सयजमानः अतिसप्रश्रृण्वे सर्वान् लोकानतीत्यप्रकर्षेण श्रूयते प्रख्यातोभवतीत्यर्थः। कीदृशः इषमन्नं दधानः अर्थिभ्यः प्रयच्छन् अश्वैर्वहमानः। किंच सएव द्युमान् दीप्तिमान् शरीरपतनानन्तरं द्युस्थानवान्वा अमवान् बलवान् आद्यून् द्युरित्यहर्नाम कालाध्वनोरत्यन्तसंयोगइत्येषा द्वितीया आदित्यकर्तृकाण्यहानि आचन्द्रार्कमित्यर्थः भूषति भवति॥ ७॥

महाव्रते संस्थिते मरुत्वतीये यदग्नएषेत्यनया चतुर्गृहीतमाज्यं जुहुयात्। तथैवपञ्चमारण्यके सूत्रितं—यदग्नएषासमितिर्भवातीति।

अथाष्टमी–

यदंग्न एषा समितिर्भवांति देवी देवेषुं यजता यंजत्र ।
रत्नां च यद्विभजांसि स्वधावो भागं नो अत्र वसुंमन्तं वीतात् ॥ ८ ॥

यत् । अग्ने । एषा । सम्ऽइंतिः । भवांति । देवी । देवेषुं ।
यजता । यजत्र । रत्नां । च । यत् । विऽभजांसि । स्वधाऽवः ।
भागम् । नः । अत्रं । वसुंऽमन्तम् । वीतात् ॥ ८ ॥

हे यजत्र यष्टव्याग्ने यद्यदा एषा समितिः अस्मत्कर्तृका स्तुतिः संहतिश्च यजता यजतेषु यष्टव्येषु देवेषु मध्ये देवी द्योतमाना भवाति यष्टव्यादेवाः अस्माभिः स्तूयन्ते इज्यन्ते चेत्यर्थः।हे स्वधावः हविर्लक्षणान्नवन्नग्ने त्वं यद्यदा रत्ना च रत्नानि रमणीयानि धनानि स्तोतृभ्योयष्टृभ्यश्च विभजासि विभजसि अत्र तदानीं तथा नोस्मान् प्रति वसुमन्तं धनवन्तं नानाधनावयवभूतं भागमंशं वीतात् वी गत्यादिषु तुह्योस्तातङाशिष्यन्यतरस्यामिति हेः स्थाने तातङ् अन्तर्णीतण्यर्थश्चात्र द्रष्टव्यः वयय आगमय अस्मभ्यं प्रयच्छेत्यर्थः॥ ८ ॥

अथ नवमी–

श्रुधी नो अग्ने सदंने सधस्थे युक्ष्वा रथंमृतंस्य द्रवित्नुम् ।
आ नो वह रोदंसी देवपुंत्रे माकिंर्देवानामपं भूरिह स्याः ॥ ९ ॥ १० ॥

श्रुधि । नः । अग्ने । सदंने । सधऽस्थे । युक्ष्व । रथंम् ।
अमृतंस्य । द्रवित्नुम् । आ । नः । वह । रोदंसी इतिं । देवपुंत्रे इतिं
देवऽपुंत्रे । माकिंः । देवानांम् । अपं । भूः । इह । स्याः ॥ ९ ॥१०॥

हे अग्ने सधस्थे सहस्थाने सर्वदेवतासाधारणे सदने यज्ञगृहे स्थितः सन् नोस्मदीयं वचनंश्रुधि शृणु।किंतद्वचनं उच्यते अमृतस्यदेवपानस्य मधुनः द्रवित्नुं द्रावकं रथमात्मीयं युक्ष्व आह्वानार्थं देवान्प्रति गमनाय अश्वैः संयुक्ष्व।संयुक्तेन रथेन गत्वा नोस्माकं यज्ञं प्रति देवपुत्रे देवस्य प्रजापतेर्दुहितरौ यद्वा देवाः पुत्रायययोस्ते रोदसी द्यावापृथिव्यौ आवह प्रापय

देवानां मध्ये कश्चिद्देवः अपभूः अपभविता अस्मद्यज्ञमपगन्ता माकिः स्यात् त्वं च इहास्मिन्यज्ञे स्याः सन्निहितोभव ॥ ९ ॥

॥ इति सप्तमस्य षष्ठे दशमोवर्गः ॥ १० ॥

द्यावेति नवर्चं द्वादशं सूक्तं आंगिर्हविर्धानस्यार्षं त्रैष्टुभमाग्नेयं । द्यावेत्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

द्यावा॑हृ॒क्षामा॑प्रथ॒मेऋ॒तेना॑भि॒श्रा॒वेभ॑वतःसत्य॒वाचा॑ ।
दे॒वोयन्मर्ता॑न्य॒जथा॑यकृ॒ण्वन्त्सीद॒द्धोता॑प्र॒त्यङ्स्वमसुं॑यन् ॥ १ ॥

द्यावा॑ । ह॒ । क्षामा॑ । प्र॒थ॒मे इति॑ । ऋ॒तेन॑ । अ॒भि॒ऽश्रा॒वे । भ॒व॒तः ।
स॒त्य॒ऽवाचा॑ । दे॒वः । यत् । मर्ता॑न् । य॒जथा॑य । कृ॒ण्वन् ।
सीद॑त् । होता॑ । प्र॒त्यङ् । स्वम् । असु॑म् । यन् ॥ १ ॥

सत्यवाचा सत्यवाचौ सत्यवादिन्यौ प्रधानभूते द्यावाक्षामा द्युक्षामे द्यावापृथिव्यौ ऋतेन सत्यभूतेन देवयजनेन सह अभिश्रावे आभिमुख्येन श्रूयते इत्यभिश्रावआह्वानं तस्मिन्नस्मद्यज्ञनिमित्ते अग्नेः संबन्धिनि आह्वाने भवतः लोडर्थे लट् भवतां यद्यदा देवोद्योतमानोग्निः यजथाय यज्ञाय मर्तान् मनुष्यान् कृण्वन् प्रेरयन् प्रत्यङ् आह्वानार्थं देवानां प्रत्यंचितास्वमसुं आत्मीयं ज्वालालक्षणं प्राणं यन् प्राप्नुवन् होता देवानामाह्वाता सीदत् वेद्यां निषीदति तदास्मद्यागकाले द्यावापृथिवी प्रमुखोग्निराह्वयत्वित्यर्थः ॥ १ ॥

अथ द्वितीया—

दे॒वोदे॒वान्प॑रि॒भूरृ॒तेन॒वहा॑नोह॒व्यंप्र॑थ॒मश्चि॑कि॒त्वान् ।
धू॒मके॑तुःस॒मिधा॒भाऋ॑जीकोम॒न्द्रोहोता॒नित्यो॑वा॒चायजी॑यान् ॥ २ ॥

दे॒वः । दे॒वान् । प॒रि॒ऽभूः । ऋ॒तेन॑ । वह॑ । नः॒ । ह॒व्यम् ।
प्र॒थ॒मः । चि॒कि॒त्वान् । धू॒मऽके॑तुः । स॒म्ऽइधा॑ । भाःऽऋ॑जीकः ।
म॒न्द्रः । होता॑ । नित्यः॑ । वा॒चा । यजी॑यान् ॥ २ ॥

देवोद्योतमानोग्निस्त्वं देवानिन्द्रादीन् परिभूः आह्वानहविर्नयनद्वारेण परिभूः परिगृह्णन् ऋतेन यज्ञेन सह नोस्माकं हव्यं हविः वह प्रापय। कीदृशस्त्वं प्रथमोदेवानां मुख्यः चिकित्वान् सर्वं जानन् धूमकेतुः धूमस्य कर्ता वा धूमध्वजोवा धूमप्रज्ञानोवा समिधा समिंधनेन संदीपनेन भाऋजीकः ऋजुदीप्तिरूर्ध्वंज्वलनइत्यर्थः मन्द्रः स्तुत्यः होता आह्वाता नित्योध्रुवः वाचा यजीयान् अतिशयेन यष्टा च ॥ २ ॥

अथ तृतीया—

**स्वावृग्देवस्यामृतंयदीगोरतोजातासोधारयन्तउर्वी ।**
**विश्वेदेवाअनुतत्तेयजुर्गुर्दुहेयदेनीदिव्यंघृतंवाः ॥ ३ ॥**

स्वाऽवृक् । देवस्य । अमृतम् । यदि । गोः । अतः । जातासः ।
धारयन्ते । उर्वी इति । विश्वे । देवाः । अनु । तत् । ते । यजुः ।
गुः । दुहे । यत् । एनी । दिव्यम् । घृतम् । वारितिवाः ॥ ३ ॥

देवस्याग्नेः स्वावृक् स्वार्जनं अमृतमुदकं स्वतेजसः सकाशाद्यदि यदा उत्पद्यते तदा अतोस्मात् गोरुदकाज्जातासउत्पन्नाओषधयः उर्वी द्यावापृथिव्यौ धारयन्ते विश्वेदेवाः सर्वे स्तोतारः ते तव संबन्धि तद्यजुः उदकस्य तद्दानं अनुगुः अनुगायन्ति एनी श्वेता दीप्तिः दिव्यं दिविभवं घृतं क्षरत् यद्वा वृष्टिलक्षणं यदुदकं दुहे दोग्धि ॥३॥

अथ चतुर्थी—

**अर्चामिवांवर्धायापोघृतस्नूद्यावाभूमीशृणुतंरोदसीमे ।**
**अहायद्यावोसुनीतिमयन्मध्वानोअत्रपितराशिशीताम् ॥ ४ ॥**

अर्चामि । वाम् । वर्धाय । अपः । घृतस्नू इति घृतऽस्नू ।
द्यावाभूमी इति । शृणुतम् । रोदसी इति । मे । अहा । यत् ।
द्यावः । असुऽनीतिम् । अयन् । मध्वा । नः । अत्र ।
पितरा । शिशीताम् ॥ ४ ॥

हे अग्ने त्वं अपः मदीयं यज्ञरूपं कर्म वर्धाय प्रोत्सर्पिते सति हे घृतस्नू वृष्ट्युदकस्य प्रसवित्र्यौ हे द्यावाभूमी द्यावापृथिव्यौ वां युवां अर्चामि ऋचस्तुतौ स्तौमि । हे रोदसी द्यावापृथिव्यौ युवां मे मदीयं स्तोत्रं शृणुतं यद्यस्मिन् अहा अहःशब्दः सामर्थ्यादहोरात्रसाध्यं कर्मोच्यते सुपांसुलुगिति सप्तम्येकवचनस्याजादेशः अहनि अहोरात्रस्य साध्यकर्मणि द्यावः स्तोतारः असुनीतिं असुः प्रज्ञा तया नीयतेइत्यसुनीतिः स्तुतिः तां अयन् गच्छन्ति अत्रास्मिन् कर्मणि पितरा सर्वस्य मातापितृभूते द्यावापृथिव्यौ नोस्मान् मध्वा वृष्ट्युदकेन शिशीतां स्नानपानादिना संस्कुरुतां ॥ ४ ॥

अथ पंचमी—

**किंस्विन्नोराजांजगृहेकदस्यातिव्रतंचकृमाकोविवेद ।**
**मित्रश्चिद्धिष्मांजुहुराणोदेवाञ्छ्लोकोनयातामपिवाजोअस्ति॥५॥११॥**

किम् । स्वित् । नः । राजा । जगृहे । कत् । अस्य । अति ।
व्रतम् । चकृम । कः । वि । वेद । मित्रः । चित् । हि । स्म ।
जुहुराणः । देवान् । श्लोकः । न । याताम् । अपि ।
वाजः । अस्ति ॥ ५॥ ११ ॥

किंस्विच्छब्दोवितर्कार्थे किंवा राजा दीप्यमानोग्निः नोस्माकं स्वभूतानि हवींषि स्तुतीश्च जगृहे परिगृह्णीयात् कत् किंवाअस्याग्नेः अतिव्रतं अतिपूजितं व्रतं परिचरणाख्यं कर्म चकृम वयं क्रियास्म कर्मवैगुण्यात् भीतस्य पूर्वार्धे एतद्वचनमुक्तं उत्तरार्धे इदानीं तन्निराक्रियते। हिस्मेतीमौ पूरणौ चिदित्युपमार्थे जुहुराणः स्निग्धमाहूयमानः मित्रः स्निग्धोयथा आगच्छेत तथा नेति संप्रत्यर्थे श्लोकः अस्मदीया स्तुतिलक्षणा वाक्देवानिन्द्रादीन् यातां गच्छतु। अपि वाजः हविराख्यं चान्नं यदस्ति तदपि देवान् प्रति गच्छतु देवाः स्तुतिं हविश्च प्रतिगृह्णंत्वित्यर्थः ॥ ५ ॥

॥ इति सप्तमस्य षष्ठे एकादशोवर्गः ॥ ११ ॥

अथ षष्ठी—

**दुर्मन्त्वत्रामृतस्यनामसलक्ष्मायद्विषुरूपाभवाति ।**
**यमस्ययोमनवतेसुमन्त्वग्नेतमृष्वपाह्यप्रयुच्छन् ॥ ६ ॥**

दुःऽमन्तुं । अत्रं । अमृतस्य । नामं । सऽलंक्ष्मा । यत् । विपुंऽरूपा ।
भवाति । यमस्यं । यः । मनवंते । सुऽमन्तुं । अग्ने । तम् ।
ऋष्व । पाहि । अप्रंऽयुच्छन् ॥ ६ ॥

यत् यस्य अमृतस्य मरणधर्मरहितस्य सूर्यस्य अस्य मरणधर्मराहित्यंतु—सूर्येविषमासजामीत्यमृस्याचि प्रसिद्धं । तादृशस्य संबन्धिनाम नामकमुदकं अत्र अस्यां पृथिव्यां विपुरूपा नानारूपं भवाति भवति।उदकस्य नानारूपत्वं—याआपोदिव्योइतिमंत्रे स्फुटमुक्तं।कीदृशं तत् दुर्मन्तु निरपराधं महत्स्वभावत्वात् । पुनः कीदृशं सलक्ष्मा मधुररसलक्षणोपेतं । किंच यः सूर्यः यमस्य संयमिनीपतेः सुमन्तु सुतरामपराधं मातृताडनरूपं मनवते अवबुध्यते यद्वा धातूनामनेकार्थत्वात् क्षमतइत्यर्थः । तं तादृशं जलजनकं सर्वज्ञं क्षमाशीलं सूर्यं हे ऋष्व महन्नग्ने अप्रयुच्छन्नप्रमाद्यन् त्वं पाहि आहुतिप्रदानेन रक्षणद्वारा आत्मरक्षणं प्रार्थयते ऋषिः ॥ ६ ॥

अथ सप्तमी—

यस्मिन्देवाविदथेमादयन्तेविवस्वतःसदनेधारयन्ते ।
सूर्येज्योतिरदधुर्मास्य[1]क्तून्परिद्योतनिंचरतोअजस्रा ॥ ७ ॥

यस्मिन् । देवाः । विदथे । मादयन्ते । विवस्वतः । सदने ।
धारयन्ते । सूर्ये । ज्योतिः । अदधुः । मासि । अक्तून् ।
परि । द्योतनिम् । चरतः । अजस्रा ॥ ७ ॥

यस्मिन्नग्नौ यज्ञस्य प्रधानांशे सति देवाइन्द्रादयोविदथे यज्ञे मादयन्ते । हविषात्मानं तर्पयन्ति तृप्यन्तिवा । अपिच विवस्वतोमनुष्यस्य यजमानस्य स्वभूते सदने वेद्याख्ये स्थाने धारयन्ते आत्मानं स्थापयन्तिच।किंच सूर्ये ज्योतिरहराख्यं तेजः अदधुः स्थापितवन्तः।मासि चन्द्रमसि अक्तून् रात्रीः स्थापितवन्तः। तदनंतरं अजस्रा अनुपक्षीणौ सूर्याचन्द्रमसौ द्योतनिं दीप्तिं परिचरतः परिगच्छतः सर्वत्र प्राप्नुतः ॥ ७ ॥

---

१ ऋ० सं० २. ५. १५. ।  २ ऋ० सं० ५. ४. १६. ।

अथाष्टमी–

यस्मिन्देवामन्मनिसंचरन्त्यपीच्येऽनवयमस्यविद्म।
मित्रोनोअत्रादितिरनागान्त्सवितादेवोवरुणायवोचत् ॥ ८ ॥

यस्मिन् । देवाः । मन्मनि । सम्ऽचरन्ति । अपीच्ये । न । वयम् ।
अस्य । विद्म । मित्रः । नः । अत्र । अदितिः । अनागान् ।
सविता । देवः । वरुणाय । वोचत् ॥ ८ ॥

देवाइन्द्रादयः यस्मिन्नग्नौ मन्मनि ज्ञानभूते ज्ञानवत्सर्वप्रकाशके सति संचरन्ति स्वाधिकारे संप्रवर्तन्ते । अपीच्येन्तर्हिते स्थितमस्याग्नेः स्वरूपं वयं नविद्म तत्वतोनजानीमः अत्रास्मिन्यज्ञे अंगभावाय वर्तमानोमित्रः वरुणाय सर्वेषां पापानां निवारयित्रे अग्नये नोस्मान् अनागानपापान् वोचत् ब्रवीतु । तथा अदितिर्देवमाता सविता सर्वस्य प्रेरकोदेवश्च ब्रवीतु ॥ ८ ॥

अथ नवमी–

श्रुधीनोअग्नेसदनेसधस्थेयुक्ष्वारथममृतस्यद्रवित्नुम् ।
आनोवहरोदसीदेवपुत्रेमाकिर्देवानामपभूरिहस्याः ॥ ९ ॥ १२ ॥

श्रुधि । नः । अग्ने । सदने । सधऽस्थे । युक्ष्व । रथम् । अमृतस्य ।
द्रवित्नुम् । आ । नः । वह । रोदसी इति । देवपुत्रे इति देवऽपुत्रे ।
माकिः । देवानाम् । अप । भूः । इह । स्याः ॥ ९ ॥ १२ ॥

श्रुधीनइत्येषा नवमी पूर्वसूक्ते व्याख्याता ॥ ९ ॥

॥ इति सप्तमस्य षष्ठे द्वादशोवर्गः ॥ १२॥

युजेवामिति पंचर्चं त्रयोदशं सूक्तं अदितेः पुत्रस्य विवस्वतआर्षं हविर्धानाख्ये ये द्वे-शकटे तद्देवत्यमिदं अन्त्या जगती शिष्टास्त्रिष्टुभः । तथाचानुक्रान्तं– युजेपंचविवस्वानादित्यो-हविर्धानंजगत्यन्तमिति । गतः सूक्तविनियोगः । हविर्धानप्रवर्तने युजेवामित्येका । सूत्रितंच– अन्तरावर्त्मपादयोर्युजेवांब्रह्मपूर्व्यंनमोभिरिति ।

तत्र प्रथमा—

युजेवांब्रह्मपूर्व्यंनमोभिर्विश्लोकएतुपथ्येवसूरेः ।
शृण्वन्तुविश्वेअमृतस्यपुत्राआयेधामानिदिव्यानितस्थुः ॥ १ ॥

युजे । वाम् । ब्रह्म । पूर्व्यम् । नमःऽभिः । वि । श्लोकः । एतु ।
पथ्याऽइव । सूरेः । शृण्वन्तु । विश्वे । अमृतस्य । पुत्राः । आ ।
ये । धामानि । दिव्यानि । तस्थुः ॥ १ ॥

हेहविर्धान शकटे वां युवां अहं पूर्व्यं पूर्वस्मिन्काले भवं अनादिकालप्रवृत्तमित्यर्थः एवंभूतं ब्रह्म मंत्रमुच्चार्येतिशेषः नमोभिः सोमादिहविर्लक्षणैरन्नैर्युंजे युनज्मि युवयोरुपरिसोमादिकमारोप्य पत्नीशालांते हविर्धानंप्रति युवांनयामीत्यर्थः । एवंभूतयोर्युवयोः श्लोकः शब्दः व्येतु विश्वान् देवान् प्रति विविधं गच्छतु । तत्र दृष्टान्तः— पथ्येव सूरेः यथा स्तोतुः स्वभूता पथ्या परिणामसुखावहाहुतिः विश्वान् देवान् प्रति विविधं गच्छति तद्वत् अमृतस्यामरणधर्मणः प्रजापतेः पुत्राविश्वेदेवाः एवंभूतं शब्दं शृण्वन्तु । ये देवाः दिव्यानि दिविभवानि धामानि स्थानानि आतस्थुः अधिष्ठितवन्तः ते शृण्वन्त्वित्यर्थः॥ १ ॥

अत्रैव हविर्धानप्रवर्तने यमेइवेत्येषा । सूत्रितंच—यमेइवयतमानेयदैतमधिद्वयोरदधाउक्थ्यंवचइत्यर्धर्चेआरमेदिति ।

तत्रैषा द्वितीया—

यमेइवयतमानेयदैतंप्रवांभरन्मानुषादेवयन्तः ।
आसीदतंस्वमुलोकंविदानेस्वासस्थेभवतमिन्दवेनः ॥ २ ॥

यमेइवेति यमेऽइव । यतमाने इति । यत् । ऐतम् । प्र । वाम् । भरन् ।
मानुषाः । देवऽयन्तः । आ । सीदतम् । स्वम् । ऊँ इति । लोकम् ।
विदाने इति । स्वासस्थे इति सुऽआसस्थे । भवतम् । इन्दवे । नः ॥२॥

यमे इव यथा सहोत्पन्ने अपत्ये संचरतः तथा यतमाने गमनहविर्धारणादिस्वाधिकारकर्मणि प्रवर्तमाने हविर्धानशकटे युवां यद्यदा एतं हविर्धानस्थानं प्रतिगच्छतः । तथा देवय-

न्तोदेवकामाः मानुषायजमानाः वां युवां प्रभरन् प्रभरन्ति । किंच युवां स्वमु लोकं आत्मीयमेव हविर्धानाख्यं स्थानं विदाने जानती आसीदतं ततः नोस्माकं इन्दवे सोमार्थं स्वासस्थे शोभननिवासस्थाने भवतं ॥ २ ॥

अथ तृतीया—

पञ्चपदानिरुपोअन्वरोहञ्चतुष्पदीमन्वेमिव्रतेन ।
अक्षरेणप्रतिमिमएतामृतस्यनाभावधिसंपुनामि ॥ ३ ॥

पञ्च । पदानि । रुपः । अनु । अरोहम् । चतुःऽपदीम् । अनु ।
एमि । व्रतेन । अक्षरेण । प्रति । मिमे । एताम् । ऋतस्य ।
नाभौ । अधि । सम् । पुनामि ॥ २ ॥

रुपः यष्टॄणां स्वर्गमारोपयितुर्यज्ञस्यांगत्वेन संबन्धीनि पंचसंख्याकानि धानासोमपशुपुरोडाशाज्याख्यानि पदानि वृत्तिहेतुत्वेन देवान् प्रति गन्तॄणि हवींषि अन्वरोहं अनुरोहामि शकटे युवयोः स्थापनवहनानन्तरं करणे करोमीत्यर्थः । किंच चतुष्पदीं चतुर्भिः पदैर्युक्तां त्रिष्टुबादिछन्दसं क्रियां व्रतेन प्रयोगकर्मणा अन्वेमि अनुगच्छामि यथाकालं प्रयुनज्मीत्यर्थः । अक्षरेण प्रणवाख्येन एतामुपस्थितां प्रतिगरक्रियां प्रतिमिमे निर्ममे । अपिच ऋतस्य यज्ञस्य अधीति सप्तम्यर्थानुवादी नाभौ नाभिभूते वेद्याख्ये स्थाने संपुनामि संशोधयामि दशापवित्रेण सोमं संस्करोमीत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

देवेभ्यःकमवृणीतमृत्युंप्रजायैकममृतंनावृणीत ।
बृहस्पतिंयज्ञमकृण्वतऋषिंप्रियांयमस्तन्वं१प्रारिरेचीत् ॥ ४ ॥

देवेभ्यः । कम् । अवृणीत । मृत्युम् । प्रऽजायै । कम् । अमृतम् ।
न । अवृणीत । बृहस्पतिम् । यज्ञम् । अकृण्वत । ऋषिम् ।
प्रियाम् । यमः । तन्वम् । प्र । आरिरेचीत् ॥ ४ ॥

देवेभ्योदेवानां मृत्युं मारयितारं कं स्वपुरुषं आवृणीत प्रार्थयते प्रयुंक्ते । किंच प्रजायै देवव्यतिरिक्तायामनुष्यादिकायाः प्रजायाः अमृतममारकं अविनाशकं वा स्वपुरुषं नावृणीत नप्रयुंक्ते हविर्धारणीक्रियायां प्रवृत्तायां सत्यां पूर्वोक्तानां सर्वेषां स्थितेरवश्यंभावित्वात् न कंचिदपि विनाशकं स्वपुरुषं यमोनिरूपयतीत्यर्थः । अपिच बृहस्पतिं बृहतां देवानां हविर्धारणे पालकं बृहतां मंत्राणां स्वामिनं वा ऋषिं सर्वस्य दृष्टादृष्टफलस्य द्रष्टारं यज्ञं अकृण्वत ऋत्विग्यजमानाः कुर्वन्ति । अपिच यमः प्रियां तन्वं अस्मदीयमिष्टं शरीरं प्रारिरेचीत् धातूनामनेकार्थत्वात् रिचिरत्र परिहारार्थे वर्तते प्ररेचयति मृत्योः सकाशात्परिहरति कर्मवैगुण्यजनितदोषाभावादस्माकं जीवितं नापहरतीत्यर्थः ॥ ४ ॥

अथ पंचमी—

सप्तक्षरन्तिशिशवेमरुत्वतेपित्रेपुत्रासोअप्यवीवतन्नृतम् ।
उभेइदस्योभयस्यराजतउभेयतेतेउभयस्यपुष्यतः ॥ ५ ॥ १३॥

सप्त । क्षरन्ति । शिशवे । मरुत्वते । पित्रे । पुत्रासः । अपि ।
अवीवतन् । ऋतम् । उभे इति । इत् । अस्य । उभयस्य । राजतः ।
उभे इति । यतेते इति । उभयस्य । पुष्यतः ॥ ५ ॥ १३ ॥

मरुत्वते मरुतः स्तोतारः स्तुतिद्वारेण तद्वते पित्रे ऋत्विजां पितृभूताय शिशवे शंसनीयाय हविर्धानशकटयोः सुखासीनभूताय सोमाय सप्तच्छन्दांसि क्षरंति स्तुतित्वेन गच्छन्ति । अपिच पुत्रासोपि सोमस्य पुत्रभूताः ऋत्विजोपि ऋतं सत्यभूतं स्तोत्रं अप्यवीवतन् संगमयन्ति सद्गुणग्राहिणीं स्तुतिं कुर्वन्तीत्यर्थः । उभेइत् द्वेएव हविर्धानशकटे अस्योभयस्य देवजातस्य मनुष्यजातस्य च राजतः ईशाने उभे एव शकटे यतेते कर्मानुष्ठाने प्रयत्नं कुरुतः उभयस्य देवजातस्य मनुष्यजातस्यच पुष्यतः हविर्धारणद्वारेण पुष्टिं कुरुतइत्यर्थः ॥ ५ ॥

॥ इति सप्तमस्य षष्ठे त्रयोदशोवर्गः ॥ १३ ॥

परेयिवांसमितिषोडशर्चं चतुर्दशं सूक्तं विवस्वतः पुत्रस्य यमस्यार्षं अंगिरसोनःपितरोनवग्वाइति षष्ठ्याअंगिरःपित्रथर्वभृगुलक्षणालिंगोक्तदेवताः प्रेहीत्याद्यास्तिस्रोलिंगोक्तदेवताकाः पितृदेवताकावा अतिद्रवसारमेयावित्यादिकस्तृचः सरमापुत्रौ यौ श्वानौ परलोकमार्गमभितःस्थि-

तौ तद्देवताकः शिष्टायमदेवत्याः यमायसोममिति त्रयोदश्याद्या अनुष्टुभः यमायमधुमत्तममित्येषा बृहती आदितोद्वादशत्रिष्टुभः । तथाचानुक्रान्तं—परेयिवांसंषोडशयमोयामं षष्ठी लिंगोक्तदेवता पराश्वतिस्रः पित्र्यावा तृचःश्वभ्यां पराअनुष्टुभोबृहत्युपान्त्येति । गतः सूक्तविनियोगः । महापितृयज्ञे यमयागाख्यायाज्या । सूत्रितंच—इमंयमप्रस्तरमाहिसीदेतिद्वेपरेयिवांसंप्रवतोमहीरन्विति ।

तत्र प्रथमा—

परेयिवांसंप्रवतोमहीरनुबहुभ्यःपन्थामनुपस्पशानम् ।
वैवस्वतंसंगमनंजनानांयमंराजानंहविषादुवस्य ॥ १ ॥

परेयिऽवांसम् । प्रऽवतः । महीः । अनु । बहुऽभ्यः । पन्थाम् ।
अनुऽपस्पशानम् । वैवस्वतम् । सम्ऽगमनम् । जनानाम् ।
यमम् । राजानम् । हविषा । दुवस्य ॥ १ ॥

हे मदीयान्तरात्मन् यजमान वा त्वं राजानं पितॄणां स्वामिनं यमं हविषा पुरोडाशादिना दुवस्य परिचर । कीदृशं प्रवतः प्रकृष्टकर्मवतोभूलोकवर्तिभोगसाधनं पुण्यमनुष्ठितवतः पुरुषान्महीः तत्तद्भोगोचितभूप्रदेशविशेषान् अनुपरेयिवांसं क्रमेण मरणादूर्ध्वं प्रापितवन्तं तथाबहुभ्यः स्वर्गार्थिभ्यः पुण्यकृद्भ्यः पुण्यकृतार्थे पंथां स्वर्गस्योचितमार्गं अनुपस्पशानं अबाधमानं पापिनएव पुरुषान् स्वर्गमार्गबाधेन नरकं प्रापयन्ति नतु पुण्यकृतइत्यर्थः वैवस्वतं विवस्वतः सूर्यस्य पुत्रं जनानां पापिनांसंगमनं गन्तव्यस्थानरूपं ॥ १ ॥

अथ द्वितीया—

यमोनोगातुंप्रथमोविवेदनैषागव्यूतिरपभर्तवाउ ।
यत्रानःपूर्वेपितरःपरेयुरेनाजज्ञानाःपथ्याऽअनुस्वाः ॥ २ ॥

यमः । नः । गातुम् । प्रथमः । विवेद । न । एषा । गव्यूतिः ।
अपऽभर्तवै । ऊँ इति । यत्र । नः । पूर्वे । पितरः । पराऽईयुः ।
एना । जज्ञानाः । पथ्याः । अनु । स्वाः ॥ २ ॥

प्रथमः सर्वेषां मुख्योयमः नोस्माकं प्रजानां गातुं शुभाशुभनिमित्तं विवेद जानाति । एषा गव्यूतिः नापभर्तवा उ अतिशयज्ञानयोगाद्यमस्य एषा गव्यूतिः अयं मार्गः नकेनचिदपहर्तुमपनेतुं शक्यतइत्यर्थः । यत्र यस्मिन्मार्गेनोस्माकं पूर्वे पितरः परेयुः एनानेन मार्गेण गच्छन्तः जज्ञानाः जाताः सर्वे स्वाः स्वभूताः पथ्याः स्वकर्ममार्गभूतागतीः अनुगच्छन्ति ॥ २ ॥

आग्निमारुते मातलीकव्यैरित्येषा धाय्या । सूत्रितंच—इमंयमप्रस्तरमाहिसीदमातलीकव्यैर्यमोअंगिरोभिरुदीरतामवरउत्परासइति ।

सैषा सूक्ते तृतीया—

मातलीकव्यैर्यमोआङ्गिरोभिर्बृहस्पतिर्ऋक्कभिर्वावृधानः ।
याँश्चदेवावावृधुर्येचदेवान्स्वाहान्येस्वधयान्येमदन्ति ॥ ३ ॥

मातली । कव्यैः । यमः । अङ्गिरःऽभिः । बृहस्पतिः । ऋक्कऽभिः ।
वावृधानः । यान् । च । देवाः । वावृधुः । ये । च । देवान् ।
स्वाहा । अन्ये । स्वधया । अन्ये । मदन्ति ॥ ३ ॥

मातली मातलिरिन्द्रस्य सारथिः तद्वानिन्द्रोमातली सच कव्यैः कव्यभाग्भिः पितृभिः सह ववृधानोवर्धमानोभवति यमश्चांगिरोभिः पितृविशेषैः सह वर्धमानोभवति । तथा बृहस्पतिः ऋक्कभिः पितृविशेषैः सह वर्धमानोभवति तत्र देवाइन्द्रादयो यांश्च कव्यभागादीन् पितॄन् ववृधुर्वर्धयन्ति येच कव्यभागादयः पितरः देवानिन्द्रादीन् वर्धयन्ति तेषां मध्ये अन्ये इन्द्रादयः स्वाहामदन्ति स्वाहाकारेण हृष्यन्ति अन्ये पितरः स्वधया स्वधाकारेण हृष्यन्ति ॥ ३ ॥

महापितृयज्ञे यमस्य इमंयमेत्यादिके द्वे अनुवाक्ये इमंयमेत्येषा आग्निमारुतेपि धाय्या । सूक्तंतुपूर्वमेवोदाहृतं ।

सैषा सूक्ते चतुर्थी—

इमंयमप्रस्तरमाहिसीदाङ्गिरोभिःपितृभिःसंविदानः ।
आत्वामन्त्राःकविशस्तावहन्त्वेनाराजन्हविषामादयस्व ॥ ४ ॥

इमम् । यम् । प्रऽस्तरम् । आ । हि । सीद । अंगिरःऽभिः ।
पितृऽभिः । सम्ऽविदानः । आ । त्वा । मन्त्राः । कविऽशस्ताः ।
वहन्तु । एना । राजन् । हविषा । मादयस्व ॥ ४ ॥

हे यमांगिरोभिः एतन्नामकैः पितृभिः संविदानः ऐकमत्यं गतस्त्वं इमं प्रस्तरं विस्तीर्णं यज्ञविशेषं आसीद आगत्योपविश । हि यस्मादेवं तस्मात् कविशस्ताः विद्वद्भिः ऋत्विग्भिः प्रयुक्तामंत्राः त्वा त्वां आवहन्तु । हेराजन् एना एतेन हविषा तुष्टोमादयस्व यजमानं हर्षय ॥४॥

अथ पञ्चमी—

अङ्गिरोभिरागंहियज्ञियेभिर्यमवैरूपैरिहमादयस्व ।
विवस्वन्तंहुवेयःपितातेस्मिन्यज्ञेबर्हिष्यानिषद्य ॥ ५ ॥ १४ ॥

अङ्गिरःऽभिः । आ । गहि । यज्ञियेभिः । यम । वैरूपैः ।
इह । मादयस्व । विवस्वन्तम् । हुवे । यः । पिता । ते ।
अस्मिन् । यज्ञे । बर्हिषि । आ । निऽसद्य ॥ ५ ॥ १४ ॥

हे यम वैरूपैः विविधरूपयुक्तैः वैरूपसामप्रियैर्वा यज्ञियेभिः यज्ञयोग्यैः अंगिरोभिः सहागहि आगच्छ । आगत्य च इहास्मिन् यज्ञे मादयस्व यजमानं हर्षय योविवस्वान् ते तव पितास्ति अस्मिन् यज्ञे तं विवस्वन्तं हुवे आह्वयामि सचास्तीर्णे बर्हिषि आनिषद्योपविश्य यजमानं हर्षयतु ॥ ५ ॥

॥ इति सप्तमस्य षष्ठे चतुर्दशोवर्गः ॥ १४ ॥

अथ षष्ठी—

आङ्गिरसोनःपितरोनवग्वाअथर्वाणोभृगवःसोम्यासः ।
तेषांवयंसुमतौयज्ञियानामपिभद्रेसौमनसेस्याम ॥ ६ ॥

अङ्गिरसः । नः । पितरः । नवऽग्वाः । अथर्वाणः । भृगवः ।
सोम्यासः । तेषाम् । वयम् । सुऽमतौ । यज्ञियानाम् ।
अपि । भद्रे । सौमनसे । स्याम ॥ ६ ॥

अंगिरसः अंगिरोनामकाः अथर्वाणःअथर्वनामकाः भृगवोभृगुनामकाश्च नोस्माकं पितरो-नवग्वाः अभिनवगमनयुक्ताः सदा नूतनवत् प्रीतिजनकाइत्यर्थः ते च सोम्यासः सोममर्हन्तीति सोम्याः यज्ञियानां यज्ञार्हाणां तेषां सुमतौ अनुग्रहयुक्तायां बुद्धौ वयं स्याम सर्वदा तिष्ठेम। अपिच सौमनसे भद्रे सौमनस्य कारणे कल्याणे फले स्याम सर्वदा तिष्ठेम ॥ ६ ॥

सत्रमध्ये दीक्षितस्य मरणे प्रेहिप्रेहीत्याद्याः पञ्चर्चस्तृतीयावर्जिता होत्राशंसनीयाः सूत्रितंच—प्रेहिप्रेहिपथिभिः पूर्व्येभिरितिपञ्चानां तृतीयामुद्धरेदिति ।

तत्रैषा सप्तमी—

प्रेहि॒प्रेहि॑प॒थिभिः॑पू॒र्व्येभि॒र्यत्रा॑नः॒पूर्वे॑पि॒तरः॑परे॒युः ।
उ॒भाराजा॑नास्व॒धया॒मद॑न्ताय॒मंप॑श्यासि॒वरु॑णंच॒देव॑म् ॥ ७ ॥

प्र । इ॒हि॒ । प्र । इ॒हि॒ । प॒थिऽभिः॑ पू॒र्व्येभिः॑ । यत्र॑ । नः॒ । पूर्वे॑ ।
पि॒तरः॑ । प॒रा॒ऽई॒युः । उ॒भा । राजा॑ना । स्व॒धया॑ । मद॑न्ता ।
य॒मम् । प॒श्या॒सि॒ । वरु॑णम् । च॒ । दे॒वम् ॥ ७ ॥

यत्र यस्मिन् स्थाने नोस्माकं पूर्वे पुरातनाः पितरः पितामहादयः परेयुः पूर्व्येभिः पूर्वस्मिन् कालेभवैः अनादिकालप्रवृत्तैरित्यर्थः पथिभिर्मार्गैः हे मत्पितः तत्स्थानं प्रेहिप्रेहि प्रगच्छ। गत्वा च स्वधया अमृतान्नेन मदन्ता मदन्तौ तृप्यन्तौ राजाना राजानौ उभा उभौ यमं देवं द्योतमानं वरुणं पश्यासि पश्य ॥ ७ ॥

अथाष्टमी—

संग॑च्छस्वपि॒तृभिः॒संय॒मेने॑ष्टापू॒र्तेन॑पर॒मेव्यो॑मन् ।
हि॒त्वाया॑व॒द्यंपुन॒रस्त॒मेहि॒संग॑च्छस्वत॒न्वा॑सु॒वर्चाः॑ ॥ ८ ॥

सम् । ग॒च्छ॒स्व॒ । पि॒तृऽभिः॑ । सम् । य॒मेन॑ । इ॒ष्टा॒पू॒र्तेन॑ । प॒र॒मे ।
विऽओ॑मन् । हि॒त्वाय॑ । अ॒व॒द्यम् । पुनः॑ । अस्त॑म् । आ ।
इ॒हि॒ । सम् । ग॒च्छ॒स्व॒ । त॒न्वा॑ । सु॒ऽवर्चाः॑ ॥ ८ ॥

हे मदीयपितः अतस्त्वं परमे उत्कृष्टे व्योमन् व्योमनि स्वर्गाख्ये स्थाने स्वभूतैः पितृभिः सह संगच्छस्व इष्टापूर्तेन श्रौतस्मार्तदानफलेन संगच्छस्व । ततइष्टापूर्तेन सहागम्य अवद्यं पा-

पं हित्वाय हित्वा परित्यज्य अस्तं व्रियमानाख्यं गृहं एहि आगच्छ । ततः सुवर्चाः तृतीयार्थे प्रथमा सुवर्चसा शोभनदीप्तियुक्तेन तन्वा स्वशरीरेण संगच्छस्व ॥ ८ ॥

पैतृमेधिके कर्मणि श्मशानायतनं प्रोक्षत्यपेतवीतेति । सूत्रितंच—गर्तोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन् प्रोक्षत्यपेतवीतविचसर्पतातेति ।

सैषा नवमी—

अपे॑त॒ वी॑त॒ वि च॑ सर्प॒तातो॒ऽस्मा ए॒तं पि॒तरो॑ लो॒कम॑क्रन् ।
अहो॑भिर॒द्भिर॒क्तुभि॒र्व्य॑क्तं य॒मो द॑दात्यव॒सान॑मस्मै ॥ ९ ॥

अप॑ । इ॒त॒ । वि । इ॒त॒ । वि । च॒ । स॒र्प॒त॒ । अतः॑ । अ॒स्मै॒ । ए॒तम् । पि॒तरः॑ । लो॒कम् । अ॒क्र॒न् । अहः॑ऽभिः । अ॒त्ऽभिः । अ॒क्तुऽभिः॑ । विऽअ॑क्तम् । य॒मः । द॒दा॒ति॒ । अ॒व॒ऽसान॑म् । अ॒स्मै॒ ॥ ९ ॥

श्मशाने पूर्वं स्थिताः हे पिशाचादयः अतोस्मात् मृतयजमानदहनस्थानात् अपेत अपगच्छत विशेषेणगच्छत विसर्पत च इदं स्थानं परित्यज्य नानाभावेन दूरतरं देशं गच्छतेत्यर्थः । पितरः अस्मै मृतयजमानस्यार्थाय एतं लोकं इदं दहनस्थानं अक्रन् परित्यज्य नानाभावेन यमस्याज्ञया अन्वकुर्वन् यमोपि अहोभिर्दिवसैः अद्भिः अभ्युक्षणोदकैः अक्तुभीरात्रिभिः व्यक्तं संगतं शुद्धिनिमित्तैः कालोदकादिभिः शोधितमित्यर्थः अवसानं दहनस्थानं अस्मै मृतयजमानस्यार्थाय ददाति दत्तवान् ॥ ९ ॥

अनुस्तरण्यावृक्कौ पार्श्वयोराम्रफलाकृती तावुद्धृत्य प्रेतस्यहस्तयोर्निदधात्यतिद्रवसारमेयाविति द्वाभ्यां । सूत्रितंच—वृक्कावुद्धृत्यपाण्योरादध्यादतिद्रवसारमेयौश्वानाविति ।

तत्रैषा दशमी—

अति॑ द्रव सार॒मे॒यौ श्वानौ॑ चतुर॒क्षौ श॒बलौ॑ सा॒धुना॑ प॒था ।
अथा॑ पि॒तॄन्त्सु॑वि॒दत्राँ॒ उपे॑हि य॒मेन॒ ये स॑ध॒माद॒ं मद॑न्ति ॥ १० ॥ १५ ॥

अति॑ । द्र॒व॒ । सा॒र॒मे॒यौ । श्वानौ॑ । च॒तुः॒ऽअ॒क्षौ । श॒बलौ॑ । सा॒धुना॑ । प॒था । अथ॑ । पि॒तॄन् । सु॒ऽवि॒दत्रा॑न् । उप॑ । इ॒हि॒ । य॒मेन॑ । ये । स॒ध॒ऽमाद॑म् । मद॑न्ति ॥ १० ॥ १५ ॥

हे अग्ने साधुना पथा समीचीनेन मार्गेण उभौ सारमेयौ श्वानौ अतिद्रव श्वानावुभौ अतिद्रव अतिक्रम्यगच्छ। यमसंबन्धिनौ यौ श्वानौ प्रेतस्य बाधकौ तौ परित्यज्य समीचीनेन मार्गेण प्रेतं नयेत्यर्थः। कीदृशौ श्वानौ सारमेयौ सरमानाम काचित्प्रसिद्धा देवशुनी तस्याः पुत्रौ चतुरक्षौ उपरिभागे पुनरप्यक्षिद्वयं ययोस्तादृशौ शबरौ कर्बुरवर्णौ। अथ शोभनमार्गेण गमनानन्तरं ये पितरोयमेन सधमादं सहर्षं मदन्ति प्राप्नुवन्ति तान् सुविदत्रान् सुष्ठु अभिज्ञान् पितॄन् उपेहि उपगच्छ ॥ १० ॥

॥ इति सप्तमस्य षष्ठे पंचदशोवर्गः ॥ १५ ॥

अथैकादशी—

यौतेश्वानौयमरक्षितारौचतुरक्षौपथिरक्षीनृचक्षसौ ।
ताभ्यामेनंपरिदेहिराजन्स्वस्तिचास्माअनमीवंचधेहि ॥ ११ ॥

यौ । ते । श्वानौ । यम । रक्षितारौ । चतुःऽअक्षौ ।
पथिरक्षी इति पथिऽरक्षी । नृऽचक्षसौ । ताभ्याम् । एनम् । परि । देहि ।
राजन् । स्वस्ति । च । अस्मै । अनमीवम् । च । धेहि ॥ ११ ॥

हे राजन् हे यम ते त्वदीयौ यौ श्वानौ विद्येते ताभ्यां श्वभ्यां हे राजन् यम एनं प्रेतं परिदेहि रक्षार्थं प्रयच्छ। कीदृशौ श्वानौ रक्षितारौ यमगृहस्य रक्षकौ चतुरक्षौ अक्षिचतुष्टययुक्तौ पथिरक्षी मार्गस्य रक्षकौ नृचक्षसौ मनुष्यैः ख्याप्यमानौ श्रुतिस्मृतिपुराणाभिज्ञाः पुरुषास्तौ प्रख्यापयन्ति ताभ्यां श्वभ्यां दत्वा अस्मै प्रेताय स्वस्ति च क्षेममपि अनमीवं च रोगाभावमपि धेहि संपादय ॥ ११ ॥

अथ द्वादशी—

उरूणसावसुतृपाउदुंबलौयमस्यदूतौचरतोजनाँअनु ।
तावस्मभ्यंदृशयेसूर्यायपुनर्दातामसुमद्येहभद्रम् ॥ १२ ॥

उरुऽनसौ । असुऽतृपौ । उदुंबलौ । यमस्य । दूतौ । चरतः ।
जनान् । अनु । तौ । अस्मभ्यम् । दृशये । सूर्याय । पुनः ।
दाताम् । असुम् । अद्य । इह । भद्रम् ॥ १२ ॥

यमस्य संबन्धिनौ दूतौ श्वानौ जनाननु प्राणिनौ लक्षीकृत्य सर्वस्य चरतः । कीदृशौ उरूणसौ दीर्घनासिकायुक्तौ असुतृपौ परकीयान् प्राणान् स्वीकृत्य तैस्तृप्यन्तौ उदुंबलौ उरुबलौ विस्तीर्णबलौ तावुभौ दूतौ सूर्याय दृशये सूर्यस्यदर्शनार्थं अद्य दिने इह कर्मणि भद्रमहुं समीचीनं प्राणं पुनरस्मभ्यं दातां अदत्तां ॥ १२ ॥

अथ त्रयोदशी—

यमायसोमंसुनुतयमायंजुहुताहविः ।
यमंहयज्ञोगच्छत्यग्निदूंतोअरंकृतः ॥ १३ ॥

यमाय । सोमम् । सुनुत । यमाय । जुहुत । हविः । यमम् ।
ह । यज्ञः । गच्छति । अग्निऽदूतः । अरम्ऽकृतः ॥ १३ ॥

हे ऋत्विजोयमाय यमदेवार्थं सोमं सुनुत लतात्मकं सोममभिषुणुत । तथा यमाय यमार्थं हविर्जुहुत अग्निदूतः अस्मिन्यज्ञे सोमोयमग्निदूतः । अग्नेर्दूतत्वमन्यत्राम्नातं—अग्निर्देवानांदूतआसीदिति[1] । अरंकृतः बहुभिर्द्रव्यैरलंकाररूपैर्युक्तः तादृशोयज्ञोयमं ह यममेव गच्छति ॥ १३ ॥

अथ चतुर्दशी—

यमायघृतवंद्धविर्जुहोतप्रचंतिष्ठत ।
सनोदेवेष्वायमद्दीर्घमायुःप्रजीवसे ॥ १४ ॥

यमाय । घृतऽवत् । हविः । जुहोत । प्र । च । तिष्ठत । सः । नः ।
देवेषु । आ । यमत् । दीर्घम् । आयुः । प्र । जीवसे ॥ १४ ॥

हे ऋत्विजोयूयं यमाय घृतवदाज्येन संयुक्तं हविः पुरोडाशादिकं जुहोत जुहुत प्रतिष्ठत च यमं यूयमुपतिष्ठध्वं च देवेषु मध्ये सयमोदेवः प्रजीवसे प्रकृष्टजीवनार्थं नोस्माकं दीर्घमायुः आयमत् प्रयच्छतु ॥ १४ ॥

---

[1] तै० सं० २. ५. ८. ।

अथ पञ्चदशी—

यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन ।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥ १५ ॥

यमाय । मधुमत्ऽतमम् । राज्ञे । हव्यम् । जुहोतन । इदम् । नमः ।
ऋषिऽभ्यः । पूर्वऽजेभ्यः । पूर्वेभ्यः । पथिकृत्ऽभ्यः ॥ १५ ॥

हे ऋत्विजो यमाय राज्ञे मधुमत्तमं अतिशयेन मधुरं हव्यं पुरोडाशादिकं हविर्जुहोतन जुहुत । पूर्वजेभ्यः सृष्ट्यादावुत्पन्नेभ्यः अतएव पूर्वेभ्यः अस्मत्तः पूर्वभाविभ्यः पथिकृद्भ्यः शोभनमार्गकारिभ्यः ऋषिभ्यः यइदं प्रत्यक्षं यथा भवति तथा नमोस्तु ॥ १५ ॥

अथ षोडशी—

त्रिकद्रुकेभिः पतति षळुर्वीरेकमिद्बृहत् ।
त्रिष्टुब्गायत्री छन्दांसि सर्वा ता यम आहिता ॥ १६ ॥ १६ ॥

त्रिऽकद्रुकेभिः । पतति । षट् । उर्वीः । एकम् । इत् । बृहत् । त्रिस्तुप् ।
गायत्री । छन्दांसि । सर्वा । ता । यमे । आऽहिता ॥ १६ ॥ १६ ॥

त्रिकद्रुकेभिः द्वितीयार्थे तृतीयैषा त्रिकद्रुकान् ज्योतिर्गौरायुरिति त्रयोयागविशेषाउच्यन्ते तान् मर्त्यंगभावाय संरक्षणार्थं च पतति यमस्तान् प्राप्नोति षट्संख्याकाः उर्वीः भूमीः कृताकृतप्रत्यवेक्षणाय प्राप्नोति । ताश्चोर्व्यः शाखान्तरमंत्रेण समाम्नातः—षण्मोर्वीरंहसस्पान्तुद्यौश्चपृथिवीचापश्चोषधयश्चोर्क्चसूनृताचेति । एकमित् एकमेव बृहत् महत् जगद्यमश्च प्रतिपालनीयः प्राप्नोति । किंच यानि त्रिष्टुप्गायत्र्यादीनि छन्दांसि सन्ति सर्वा ता सर्वाणि तानि छन्दांसि यमे आहिता आहितानि ऋत्विग्भिः स्तुतित्वेनावस्थितानि ॥ १६ ॥

॥ इति सप्तमस्य षष्ठे षोडशोवर्गः ॥ १६ ॥

उदीरतामिति चतुर्दशर्चं पंचदशं सूक्तम् । अत्रानुक्रम्यते—उदीरतां षळूना शंखः पित्र्यं जगत्येकादशीति । यामायनाः परे पंचेति वचनात् यमपुत्रः शंखाख्यऋषिः अग्निष्वात्ताइत्ये-

कादृशी जगती शिष्टास्त्रिष्टुभः पितरोदेवता । गतः सूक्तविनियोगः । अष्टकायां उदीरतामवरइ-त्याद्याअष्टर्चहोमार्थाः । सूत्रितंच—उदीरतामवरउत्परासइत्यष्टाभिर्हुत्वेति महापितृयज्ञे पितरः सोमवन्तइत्यस्यानुवाक्या उदीरतामित्येषा । सूत्रितंच—पितरोग्निष्वात्तायमउदीरतामवरउत्परास-इति । आग्निमारुतेप्येषा धाय्या । सूत्रितंच—मातलीकव्यैर्यमोअंगिरोभिरुदीरतामवरउत्परा-सइति ।

तत्र प्रथमा—

उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः ।
असुंयईयुरवृकाऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥ १ ॥

उत् । ईरताम् । अवरे । उत् । परासः । उत् । मध्यमाः । पितरः ।
सोम्यासः । असुम् । ये । ईयुः । अवृकाः । ऋतऽज्ञाः ।
ते । नः । अवन्तु । पितरः । हवेषु ॥ १ ॥

त्रिविधाः पितरः उत्तमामध्यमाअधमाश्चेति यथाविधं श्रौतं कर्मानुष्ठाय पितृत्वं प्राप्ताउ-त्तमाः स्मार्तकर्ममात्रपरामध्यमाः अत्रापिकैश्चित् संस्कारैः विकलाअधमाः एतदेवाभिप्रेत्य ये अग्निदग्धायेअनग्निदग्धाइत्यादिमंत्रे समाम्नाताः । तेष्ववरे निकृष्टाः उदीरतां उत्तमं हविः प्राप्नुव-न्तु । परासः उत्तमाः पितरः उदीरतां मध्यमाः पितरः उदीरतां ते सर्वेप्यस्मद्विषये सोम्यासः सोम्याअनुग्रहपराः सन्तु । ये पितरः अवृकाः वृकवदरण्यश्वावदस्मासु हिंसामकुर्वंतः ऋतज्ञाः अस्मदनुष्ठितं यज्ञं जानन्तः असुमस्मत्प्राणमीयुः रक्षितुं प्राप्तास्ते पितरः हवेष्वस्मदीयेष्वाह्वा-नेषु नोस्मानवन्तु रक्षन्तु ॥ १ ॥

महापितृयज्ञे पितरोबर्हिषदइत्यस्येदंपितृभ्यइति द्वितीयानुवाक्या । सूत्रंतु पूर्वमेवोदाहृतं । आग्निमारुते इदंपितृभ्यइत्येषा धाय्या । सूत्रितंच—आहंपितॄन्त्सुविदत्राँअवित्सीदंपितृभ्योनमो-अस्त्वद्यस्वादुष्किलायमितिचतस्रइति । महापितृयज्ञे पितरोबर्हिषदइत्यस्य द्वितीयानुवाक्या । सूत्रंतु पूर्वमुदाहृतं ।

---

२ ऋ० सं० ७. ६. १९ ।

तत्रैषा द्वितीया—

इदंपितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः ।
येपार्थिवेरजस्यानिषत्तायेवानूनंसुवृजनासुविक्षु ॥ २ ॥

इदम् । पितृऽभ्यः । नमः । अस्तु । अद्य । ये । पूर्वासः । ये ।
उपरासः । ईयुः । ये । पार्थिवे । रजसि । आ । निऽसत्ताः ।
ये । वा । नूनम् । सुऽवृजनासु । विक्षु ॥ २ ॥

पूर्वासः यजमानोत्पत्तेः पूर्वमुत्पन्नाः ज्येष्ठभ्रातृपितामहादयोये ईयुः पितृलोकं प्राप्ताः येचान्ये उपरासो यजमान जन्मनउपर्युत्पन्नाः कनिष्ठभ्रातृस्वपुत्रादयः ईयुः पितृलोकं प्राप्ताः येप्यन्ये पार्थिवे पृथिवीसंबन्धिनि रजसि रजोगुणकार्येस्मिन्कर्मणि आनिषत्ताः हविः स्वीकर्तुमागत्योपविष्टाः ये वा केचिदन्ये बन्धुवर्गरूपाः पितरः विक्षु बन्धुरूपासु नूनं निश्चयेन आनिषत्ताः श्राद्धादिस्वीकारायागत्योपविष्टाः । कीदृशीषु विक्षु सुवृजनासु वृज्यते परित्यज्यते दारिद्र्यमनेनेति वृजनं धनं शोभनं वृजनं यासां ताः सुवृजनाः तादृशीषु धनसमृध्या श्राद्धादिकर्मपरास्वित्यर्थः। सर्वेभ्यउक्तेभ्यः पितृभ्यः अद्यास्मिन् कर्मणीदं नमोस्तु अयमाहुतिप्रदानपूर्वकोनमस्कारो भवतु ॥ २ ॥

गताः आदरपूर्वं समागत्य स्वधया पुरोडाशाद्यन्नेन सह सुतस्याभिषुतस्य सोमलक्षणस्य पित्वः पितोरन्नस्य भागं भजन्त सेवन्ते उपयुंजते ॥ ३ ॥

सैषा चतुर्थी—

बर्हिषदः पितर ऊत्य१ र्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आगतावसा शंतमेनाथा नः शंयोररपो दधात ॥ ४ ॥

बर्हिऽसदः । पितरः । ऊती । अर्वाक् । इमा । वः । हव्या ।
चकृम । जुषध्वम् । ते । आ । गत । अवसा । शम्ऽतमेन ।
अथ । नः । शम् । योः । अरपः । दधात ॥ ४ ॥

हे बर्हिषदः बर्हिषि यज्ञे सीदन्तीति बर्हिषदः अत्रापि ये वैयज्वानस्तेपितरोबर्हिषदइत्यत्र श्रुतत्वात् । यागं कृत्वा प्रेत्य पितृलोकं प्राप्ताः बर्हिषदः तादृशा हे पितरः अर्वागर्वाचीनानामस्माकमूती रक्षा भवद्भिः कर्तव्येति शेषः । वोयुष्मदर्थं इमा हव्या एतानि हवींषि चकृम अतस्तानि जुषध्वं ते हविर्जुष्टवन्तोयूयं शंतमेन सुखतमेन अवसा रक्षणेन निमित्तभूतेन आगत आभिमुख्येनास्मान् प्राप्नुत । अथानन्तरं नोस्मभ्यं शं सुखं योः दुःखवियोगं अरपः पापरहितं च दधात दत्त ॥ ४ ॥

महापितृयज्ञे पितरः सोमवन्तइत्यस्य याज्या उपहूताः पितरइत्येषा । सूत्रितंच—उपहूताः पितरः सोम्यासस्त्वंसोमप्रचिकितोमनीषेति ।

सैषा सूक्ते पंचमी—

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आगमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ ५ ॥ १७ ॥

उपऽहूताः । पितरः । सोम्यासः । बर्हिष्येषु । निऽधिषु ।
प्रियेषु । ते । आ । गमन्तु । ते । इह । श्रुवन्तु । अधि ।
ब्रुवन्तु । ते । अवन्तु । अस्मान् ॥ ५ ॥ १७ ॥

सोम्यासः सोम्याः अस्मदनुग्रहपराः सोमसंपादिनोवा पितरः बर्हिष्येषु यागार्हेषु प्रियेषु तृप्तिकरेषु निधिषु निधिसदृशेषु हविःषु निमित्तभूतेषु सत्सु उपहूताअस्माभिराहूतास्ते पितरः आगमन्तु आगच्छंतु आगत्य च इहास्मिन्कर्मणि अस्माभिः प्रयुक्ताः स्तुतीः श्रुवन्तु शृण्वन्तु। श्रुत्वा च अधिब्रुवन्तु साधुरयं यजमानइत्यादरेण कथयन्तु ते तादृशाः पितरः अस्मानवन्तु रक्षन्तु॥ ५ ॥

॥ इति सप्तमस्य षष्ठे सप्तदशोवर्गः ॥ १७ ॥

अथ षष्ठी—

आच्या जानुं दक्षिणतो निषद्येमं यज्ञमभिगृणीत विश्वे ।
माहिंसिष्ट पितरः केनचिन्नो यद्व आगः पुरुषता कराम ॥ ६ ॥

आऽअच्यं । जानुं । दक्षिणतः । निऽसद्यं । इमम् । यज्ञम् । अभि ।
गृणीत । विश्वे । मा । हिंसिष्ट । पितरः । केनं । चित् । नः ।
यत् । वः । आगः । पुरुषता । करांम ॥ ६ ॥

पितृणामयं स्वाभाविकोधर्मः अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्येति वचनात्।हे पितरः विश्वे सर्वे यूयं जानु आच्य भूमौ निपात्य दक्षिणतः दक्षिणपार्श्वे निषद्योपविश्य इममस्मदीयं यज्ञं अभिगृणीत अभिष्टुत विशिष्टतृप्तियोगात्परया प्रीत्या सगुणोयं यज्ञइति च शंसतेत्यर्थः। अपिच वोयुष्माकं यत्किंचित् कर्मवैगुण्यजनितं आगः अपराधं पुरुषता मनुष्यत्वेन हेतुना कराम वयं कृतवन्तः हे पितरः तेन केनचिदप्यपराधेन नोस्मान् माहिंसिष्ट ॥ ६ ॥

अथ सप्तमी—

आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय ।
पुत्रेभ्यः पितरस्तस्य वस्वः प्रयच्छत त इहोर्जं दधात ॥ ७ ॥

आसीनासः । अरुणीनाम् । उपऽस्थे । रयिम् । धत्त । दाशुषे ।
मर्त्याय । पुत्रेभ्यः । पितरः । तस्य । वस्वः । प्र ।
यच्छत । ते । इह । ऊर्जम् । दधात ॥ ७ ॥

गताः आदरपूर्वं समागत्य स्वधया पुरोडाशाद्यन्नेन सह सुतस्याभिषुतस्य सोमलक्षणस्य पित्वः पितोरन्नस्य भागं भजन्त सेवन्ते उपयुंजते ॥ ३ ॥

सैषा चतुर्थी—

बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आगतावसा शंतमेनाथा नः शंयोररपो दधात ॥ ४ ॥

बर्हिऽसदः । पितरः । ऊती । अर्वाक् । इमा । वः । हव्या ।
चकृम । जुषध्वम् । ते । आ । गत । अवसा । शम्ऽतमेन ।
अथ । नः । शम् । योः । अरपः । दधात ॥ ४ ॥

हे बर्हिषदः बर्हिषि यज्ञे सीदन्तीति बर्हिषदः अत्रापि ये वैयज्वानस्तेपितरोबर्हिषदइत्यत्र श्रुतत्वात् । यागं कृत्वा मेत्य पितृलोकं प्राप्ताः बर्हिषदः तादृशा हे पितरः अर्वागर्वाचीनानामस्माकमूती रक्षा भवद्भिः कर्तव्येति शेषः । वोयुष्मदर्थं इमा हव्या एतानि हवींषि चकृम अतस्तानि जुषध्वं ते हविर्जुष्टवन्तोयूयं शंतमेन सुखतमेन अवसा रक्षणेन निमित्तभूतेन आगत आभिमुख्येनास्मान् प्राप्नुत । अथानन्तरं नोस्मभ्यं शं सुखं योः दुःखवियोगं अरपः पापरहितं च दधात दत्त ॥ ४ ॥

महापितृयज्ञे पितरः सोमवन्तइत्यस्य याज्या उपहूताः पितरइत्येषा । सूत्रितंच—उपहूताः पितरः सोम्यासस्त्वंसोमप्रचिकितोमनीषेति ।

सैषा सूक्ते पंचमी—

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आगमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ ५ ॥ १७ ॥

उपऽहूताः । पितरः । सोम्यासः । बर्हिष्येषु । निऽधिषु ।
प्रियेषु । ते । आ । गमन्तु । ते । इह । श्रुवन्तु । अधि ।
ब्रुवन्तु । ते । अवन्तु । अस्मान् ॥ ५ ॥ १७ ॥

सोम्यासः सोम्याः अस्मदनुग्रहपराः सोमसंपादिनोवा पितरः बर्हिष्येषु यागार्हेषु प्रियेषु तृप्तिकरेषु निधिषु निधिसदृशेषु हविःषु निमित्तभूतेषु सत्सु उपहूताअस्माभिराहूतास्ते पितरः आगमन्तु आगच्छंतु आगत्य च इहास्मिन्कर्मणि अस्माभिः प्रयुक्ताः स्तुतीः श्रुवन्तु शृण्वन्तु । श्रुत्वा च अधिब्रुवन्तु साधुरयं यजमानइत्यादरेण कथयन्तु ते तादृशाः पितरः अस्मानवन्तु रक्षन्तु ॥ ५ ॥

॥ इति सप्तमस्य षष्ठे सप्तदशोवर्गः ॥ १७ ॥

अथ षष्ठी—

**आच्याजानुंदक्षिणतोनिषद्येमंयज्ञमभिगृणीतविश्वे ।**
**माहिंसिष्टपितरःकेनंचिन्नोयद्वआगंःपुरुषताकरांम ॥ ६ ॥**

आऽअच्यं । जानुं । दक्षिणतः । निऽसद्यं । इमम् । यज्ञम् । अभि । गृणीत । विश्वें । मा । हिंसिष्ट । पितरः । केनं । चित् । नः । यत् । वः । आगंः । पुरुषतां । करांम ॥ ६ ॥

पितॄणामयं स्वाभाविकोधर्मः अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्येति वचनात् । हे पितरः विश्वे सर्वे यूयं जानु आच्य भूमौ निपात्य दक्षिणतः दक्षिणपार्श्वे निषद्योपविश्य इममस्मदीयं यज्ञं अभिगृणीत अभिष्टुत विशिष्टतृप्तियोगात्परया प्रीत्या सगुणोयं यज्ञइति च शंसतेत्यर्थः । अपिच वोयुष्माकं यत्किंचित् कर्मवैगुण्यजनितं आगः अपराधं पुरुषता मनुष्यत्वेन हेतुना कराम वयं कृतवन्तः हे पितरः तेन केनचिदप्यपराधेन नोस्मान् माहिंसिष्ट ॥ ६ ॥

अथ सप्तमी—

**आसीनासोअरुणीनांमुपस्थेरयिंधत्तदाशुषेमर्त्याय ।**
**पुत्रेभ्यंःपितरस्तस्यवस्वःप्रयंच्छततइहोर्जंदधात ॥ ७ ॥**

आसीनासः । अरुणीनांम् । उपऽस्थे । रयिम् । धत्त । दाशुषें । मर्त्याय । पुत्रेभ्यंः । पितरः । तस्यं । वस्वंः । प्र । यच्छत । ते । इह । ऊर्जम् । दधात ॥ ७ ॥

अरुणीनामारोचमानानां ज्वालानां वा देवतानां वा उपस्थे समीपस्थाने वेद्याख्ये आसीनासः उपविष्टाः पितरोयूयं दाशुषे हविर्दत्तवते मर्त्याय मनुष्याय यजमानाय रयिं धनं धत्त दत्त हे पितरोयूयं तस्य यजमानस्य पुत्रेभ्यः वस्वोवसु धनं प्रयच्छत ते तादृशायूयं इहास्मिन्नस्मदीये कर्मणि ऊर्जं धनं दधात निधत्त ॥ ७ ॥

अथाष्टमी—

येनः॒पूर्वे॒पि॒तरः॑सो॒म्यासो॑नूहि॒रेसो॑मपी॒थंवसि॑ष्ठाः ।
तेभि॑र्य॒मः सं॑रराणोह॒वींष्यु॒शन्नु॒शद्भिः॑प्रतिका॒मम॑त्तु ॥ ८ ॥

ये । नः॒ । पूर्वे॑ । पि॒तरः॑ । सो॒म्यासः॑ । अ॒नु॒ऽऊ॒हि॒रे । सो॒म॒ऽपी॒थम् ।
वसि॑ष्ठाः । तेभिः॑ । य॒मः । स॒म्ऽर॒रा॒णः । ह॒वींषि॑ । उ॒शन् ।
उ॒शत्ऽभिः॑ । प्र॒ति॒ऽका॒मम् । अ॒त्तु ॥ ८ ॥

सोम्यासः सोमसंपादिनोवसिष्ठाः वस्तृतमाः कृताच्छादनाः धनवत्तमावा नोस्माकं ये पूर्वे पितरः सोमपीथं सोमपानं अनूहिरे आनुपूर्व्येण देवेभ्यश्च पितृभ्यश्च प्राप्नुवन्तः दत्तवन्तइत्यर्थः । उशन् पितृभिः सहसंभोगं कामयमानोयमः पितृपतिः उशद्भिर्यमेन सह संभोगं कामयमानैस्तेभिस्तैरस्मदीयैः पितृभिः सह रराणोरममाणः हवींषि अस्माभिर्दत्तानि प्रतिकामं कामं प्रति अत्तु यानियानि हवींषि कामयते तानितानि भक्षयत्वित्यर्थः ॥ ८ ॥

महापितृयज्ञे अग्नेः कव्यवाहनस्य येतातृषुरित्येषा प्रथमानुवाक्या । सूत्रितंच—येतातृषुर्देवत्राजेहमानास्त्वदग्नेकाव्यात्वन्मनीषाइति ।

सैषा सूक्ते नवमी—

येता॑तृ॒षुर्दे॑व॒त्राजेह॑माना॒होत्रा॒विदः॒स्तोम॑तष्टासो॒अ॒र्कैः ।
आग्ने॑याहि॒सु॒वि॒दत्रे॑भि॒र॒र्वाङ्स॒त्यैः क॒व्यैः॑पि॒तृभि॑र्घ॒र्म॒सद्भिः॑ ॥ ९ ॥

ये । त॒तृ॒षुः । दे॒व॒ऽत्रा । जेह॑मानाः । हो॒त्रा॒ऽविदः॑ । स्तोम॑ऽतष्टासः ।
अ॒र्कैः । आ । अ॒ग्ने॒ । या॒हि॒ । सु॒ऽवि॒दत्रे॑भिः । अ॒र्वाङ् ।
स॒त्यैः । क॒व्यैः । पि॒तृऽभिः॑ । घ॒र्म॒सत्ऽभिः॑ ॥ ९ ॥

देवत्रा देवान् जेहमानाः क्रमेण गच्छन्तः क्रमेण देवत्वं प्राप्ताइत्यर्थः। होत्राविदः यज्ञान् सम्यक्कर्तुं वेदितारः अर्कैरर्चनीयैः स्तोत्रैः स्तोमतष्टासः स्तोमानां च सम्यक्कर्तारः ये पितरः तातृपुः तृप्यन्ति हे अग्ने त्वं तैः पितृभिः आ अर्वाङ् अस्मदभिमुखः आयाहि आगच्छ। कीदृशैः सुविदत्रेभिः सुविदत्रैः सत्यैरविसंवादिभिः कव्यैः कव्यं नाम पितृदेवत्यं हविः तत्संबन्धिभिः यद्वा कव्यैः कविभिर्मेधाविभिः स्वार्थिकोयत् घर्मसद्भिः यज्ञसादिभिः ॥ ९ ॥

अथ दशमी—

**येस॒त्यासो॑ह॒वि॒रदो॑ह॒वि॒ष्पाइन्द्रे॑ण॒दे॒वैः॒सर॑थं॒दधा॑नाः।**
**आग्ने॑याहिस॒ह॒स्रं॑दे॒व॒व॒न्दैः॒परैः॒पूर्वैः॑पि॒तृभि॑र्घर्म॒सद्भिः॑ ॥ १० ॥१८॥**

ये। स॒त्यास॑ः। ह॒वि॒ःऽअद॑ः। ह॒वि॒ःऽपाः। इन्द्रे॑ण। दे॒वैः।
स॒ऽरथ॑म्। दधा॑नाः। आ। अ॒ग्ने॒। या॒हि॒। स॒ह॒स्रम्। दे॒व॒ऽव॒न्दैः।
परैः॑। पूर्वैः॑ पि॒तृऽभि॑ः। घ॒र्म॒सत्ऽभि॑ः ॥ १० ॥ १८ ॥

सत्यासः सत्याय पितरः हविरदः भक्षणयोग्यस्य हविषः अत्तारोभक्षयितारः हविष्पाः पानयोग्यस्य हविषः पातारः इन्द्रेण देवैः सरथं समानमेकं तुल्यं रथं दधानाः लडर्थे शानच् गमनाय सदा धारयन्ति हे अग्ने तैः पितृभिः सह आयाह्यागच्छ। कीदृशः सहस्रं तृतीयार्थे प्रथमा सहस्रेण बहुभिरित्यर्थः देववन्दैः देवसंबन्धिभिः स्तोत्रैर्युक्ताः परैः परकालीनैः पूर्वैः पूर्वकालीनैः घर्मसद्भिः यज्ञसादिभिः महावीरसादिभिः आदित्यसादिभिर्वा ॥ १० ॥

॥ इति सप्तमस्य षष्ठेष्टादशोवर्गः ॥ १८ ॥

महापितृयज्ञे पितरोग्निष्वात्ताइत्यस्य अग्निष्वात्ताः पितरइत्येषा प्रथमानुवाक्या। सूत्रितंच—अग्निष्वात्ताःपितरएहगच्छत येचेहपितरोयेचनेहेति।

तत्रैषैकादशी—

**अग्नि॑ष्वात्ताःपितर॒एह॒गच्छ॑त॒सदः॑सदःसदतसुप्रणीतयः।**
**अ॒त्ताह॒वींषि॒प्रय॑तानिब॒र्हिष्यथा॑र॒यिंसर्व॑वीरंदधातन ॥ ११ ॥**

अग्निऽस्वात्ताः । पितरः । आ । इह । गच्छत । सदःऽसदः ।
सदत । सुऽप्रनीतयः । अत्त । हवींषि । प्रऽयतानि । बर्हिषि ।
अथ । रयिम् । सर्वऽवीरम् । दधातन ॥ ११ ॥

अग्निष्वात्ताः अग्निनास्वादिताः एतन्नामकाः पितरः यूयं इहास्मिन् पितृकर्मणि आगच्छत । आगत्य च हे सुप्रणीतयः अभिपूजितप्रणयनायूयं सदःसदः स्वस्वस्थानं सदत सीदत तत्रतत्र स्थाने यथेष्टमुपविशतेत्यर्थः । उपविश्य च बर्हिष्यासादितानि प्रयतानि शुचीनि हवींषि अत्त भक्षयत । अथानन्तरं सर्ववीरं सर्वैर्वीरैः पुत्रपौत्रैरुपेतं रयिं धनं दधातन अस्मभ्यंदत्त ॥ ११ ॥

महापितृयज्ञे वषट्कारक्रियायां त्वमग्नईळितइत्येषा स्विष्टकृतोयाज्या । सूत्रितंच—योग्निःकव्यवाहनस्त्वमग्नईळितोजातवेदइतिसंयाज्येति ।

सैषा द्वादशी—

त्वमग्नईळितोजातवेदोवाड्ढव्यानिसुरभीणिकृत्वी ।
प्रादाःपितृभ्यःस्वधयातेअक्षन्नद्धित्वंदेवप्रयताहवींषि ॥ १२ ॥

त्वम् । अग्ने । ईळितः । जातऽवेदः । अवाट् । हव्यानि ।
सुरभीणि । कृत्वी । प्र । अदाः । पितृऽभ्यः । स्वधया । ते ।
अक्षन् । अद्धि । त्वम् । देव । प्रऽयता । हवींषि ॥ १२ ॥

हे जातवेदः जातं सर्वं जगद्वेत्तीति जातवेदाः तथाविध हे अग्ने ईळितः अस्माभिः स्तुतस्त्वं हव्यानि अस्मदीयानि हवींषि सुरभीणि सुगन्धीनि कृत्वी कृत्वा अवाट् हवनं कृतवानसि । कृत्वाच पितृभ्यः प्रादाः । ते च पितरः स्वधया स्वधाकारेण दत्तं हविः अक्षन् अदन्तु हे देव त्वमपि प्रयता प्रयत्नसंपादितानि हवींषि अद्धि भक्षय ॥ १२ ॥

महापितृयज्ञे येचेहेतिद्वितीयानुवाक्या । सूत्रमुक्तं ।

सैषा त्रयोदशी—

येचे॒हपि॒तरो॒येच॒नेह॒यांश्च॑वि॒द्मयाँउ॑च॒नप्र॑वि॒द्म ।
त्वंवे॑त्थ॒यति॒तेजा॑तवेदः॒स्व॒धाभि॑र्य॒ज्ञंसुकृ॑तं॒जुषस्व ॥ १३ ॥

ये । च॒ । इ॒ह । पि॒तरः॑ । ये । च॒ । न । इ॒ह । यान् । च॒ । वि॒द्म ।
यान् । ऊँ॒ इति॑ । च॒ । न । प्र॒ऽवि॒द्म । त्वम् । वे॒त्थ॒ । यति॑ । ते ।
जा॒त॒ऽवे॒दः॒ । स्व॒धाभिः॑ । य॒ज्ञम् । सु॒ऽकृ॑तम् । जु॒ष॒स्व॒ ॥ १३ ॥

ये च पितरः इहास्मत्समीपे वर्तन्ते येच इह न सन्ति यांश्च पितॄन् विद्म सन्निकृष्टत्वाज्जानीम यान् उचन अपिच न प्रविद्म विप्रकृष्टत्वात् वयं न विजानीमः यति ते यावन्तस्ते भवन्ति तान् सर्वान् यथोक्तान् हे जातवेदः उत्पन्नसर्ववस्तुविषयज्ञानाग्ने त्वं वेत्थ जानासि स्वधाभिर्हविर्लक्षणैरन्नैः सुकृतं साधुकृतं यज्ञं जुषस्व प्रीत्या गृहाण ॥ १३ ॥

पूर्वोक्तएव यागे येअग्निदग्धा इत्येषा याज्या । सूत्रितंच—येअग्निदग्धायेअनग्निदग्धा इमंयमप्रस्तरमाहिसीदेति द्वे इति ।

सैषा सूक्ते चतुर्दशी—

येअ॑ग्नि॒द॒ग्धायेअन॑ग्निदग्धा॒मध्ये॑दि॒वः॒स्व॒धया॑मा॒दय॑न्ते ।
तेभिः॒स्व॒राळसु॑नीतिमे॒तांय॑थाव॒शंत॒न्वं॑कल्पयस्व ॥ १४ ॥ १९ ॥

ये । अ॒ग्नि॒ऽद॒ग्धाः । ये । अन॑ग्निऽदग्धाः । मध्ये॑ । दि॒वः । स्व॒धया॑ ।
मा॒दय॑न्ते । तेभिः॑ । स्व॒ऽराट् । असु॑ऽनीतिम् । ए॒ताम् ।
य॒था॒ऽव॒शम् । त॒न्व॑म् क॒ल्प॒य॒स्व॒ ॥ १४ ॥ १९ ॥

ये पितरः अग्निदग्धाः अग्निना भस्मीकृताः श्मशानं प्राप्ताइत्यर्थः ये च पितरः अनग्निदग्धाः श्मशानकर्म न प्राप्ताः मध्येदिवः द्युलोकस्य मध्ये स्वधया हविर्लक्षणेनान्नेन मादयन्ते तृप्यन्ति हे अग्ने स्वराट् स्वकर्मोपभोगेन दीप्यमानः तेभिस्तैः पितृभिः सहितः सन् असुनीतिं

प्राणानां विषयेषु नेतारं अस्मत्पित्रन्तरात्मानं एतां तन्वं एतद्देवताशरीरं यथावशं यथाकामं कल्पयस्व समर्थयस्व ग्रासयेत्यर्थः ॥ १४ ॥

॥ इति सप्तमस्य षष्ठे एकोनविंशोवर्गः ॥ १९ ॥

मैनमिति चतुर्दशर्चं षोडशं सूक्तं यमपुत्रस्य दमनस्यार्षं आदितोदश त्रिष्टुभः ततश्चतस्रोनुष्टुभः अग्निर्देवता । तथाचानुक्रान्तं—मैनं दमनआग्नेयं चतुरनुष्टुबन्तमिति । दीक्षितमरणे आद्याः षळृचः शंसनीयाः । सूत्रितंच— मैनमग्नेविदहोमाभिशोचइति षट् पूषात्वेतश्च्यावयतुप्रविद्वानिति । दह्यमानस्यप्रेतस्योपस्थानेप्येताः शंसनीयाः ।

तत्र प्रथमा—

मैनंमग्नेविदंहोमाभिशोंचोमास्यत्वचंचिक्षिपोमाशरीरम् ।
यदाशृतंकृणवोजातवेदोथेमेनंप्रहिणुतात्पितृभ्यः ॥ १ ॥

मा । एनम् । अग्ने । वि । दहः । मा । अभि । शोचः । मा । अस्य । त्वचंम् । चिक्षिपः । मा । शरीरम् । यदा । शृतम् । कृणवः । जातऽवेदः । अर्थ । ईम् । एनम् । प्र । हिणुतात् । पितृऽभ्यः ॥ १ ॥

हे अग्ने एनं प्रेतं माविदहः विशेषेण दग्धं भस्मीभूतं माकुरु माभिशोचः अभितः शोकेन संतापेन युक्तं माकुरु । अस्य त्वचं माचिक्षिपः इतस्ततोविक्षिप्तां माकुरु शरीरमपि विक्षिप्तं माकुरु । हे जातवेदः अग्ने यदा त्वं शृतं पक्वं सुदग्धं कृणवः करिष्यसि अथ तदानीं ईमेनं प्रेतं पितृभ्यः प्रहिणुतात् पितृसमीपे प्रेरय ॥ १ ॥

अथ द्वितीया—

शृतंयदाकरंसिजातवेदोथेमेनंपरिंदत्तात्पितृभ्यः ।
यदागच्छात्यसुंनीतिमेतामथांदेवानांवशनीर्भवाति ॥ २ ॥

शृतम् । यदा । करंसि । जातऽवेदः । अर्थ । ईम् । एनम् । परिं । दत्तात् । पितृऽभ्यः । यदा । गच्छांति । असुंऽनीतिम् । एताम् । अर्थ । देवानाम् । वशऽनीः । भवाति ॥ २ ॥

हे जातवेदः यदा प्रेतशरीरं शृतं पक्वं करसि करिष्यसि अथ ईं तदानीमेव एनं प्रेतं पितृभ्यः परिदत्तात् प्रयच्छ यदा अयं प्रेतः एतामग्निना कृतामसुनीतिं प्राणस्य नयनं प्राणप्रेरणं गच्छाति गच्छति प्राप्नोति अथ तदानीमेव देवानां वाशनी देवानां वशं प्रापितोभवाति भवति ॥२॥

अथ तृतीया—

सूर्यंचक्षुर्गच्छतुवातमात्माद्यांचगच्छपृथिवींचधर्मणा ।
अपोवागच्छयदितत्रतेहितमोषधीषुप्रतितिष्ठाशरीरैः ॥ ३ ॥

सूर्यम् । चक्षुः । गच्छतु । वातम् । आत्मा । द्याम् । च । गच्छ ।
पृथिवीम् । च । धर्मणा । अपः । वा । गच्छ । यदि । तत्र ।
ते । हितम् । ओषधीषु । प्रति । तिष्ठ । शरीरैः ॥ ३ ॥

हे प्रेत ते त्वदीयं चक्षुरिन्द्रियं सूर्यं गच्छतु प्राप्नोतु आत्मा प्राणः वातं बाह्यं वायुं गच्छतु अपिच त्वमपि धर्मणा सुकृतेन तत्फलं भोक्तुं द्यां च अत्र च शब्दोविकल्पार्थे द्युलोकं वा पृथिवीं च पृथिवीं वा गच्छ प्राप्नुहि अपोवान्तरिक्षलोकं गच्छ प्राप्नुहि यदि तत्रान्तरिक्षे हितं स्थापितं ते तव कर्मफलं ओषधीषु शरीरैः शरीरावयवैः प्रतितिष्ठ प्रतितिष्ठति ॥ ३ ॥

अथ चतुर्थी—

अजोभागस्तपसातंतपस्वतंतेशोचिस्तपतुतंतेअर्चिः ।
यास्तेशिवास्तन्वोजातवेदस्ताभिर्वहैनंसुकृतामुलोकम् ॥ ४ ॥

अजः । भागः । तपसा । तम् । तपस्व । तम् । ते । शोचिः ।
तपतु । तम् । ते । अर्चिः । याः । ते । शिवाः । तन्वः । जातऽवेदः ।
ताभिः । वह । एनम् । सुऽकृताम् । ऊँ इति । लोकम् ॥ ४ ॥

अजः जननरहितः शरीरेन्द्रियादिभागव्यतिरिक्तः अन्तरपुरुषलक्षणोयोभागोस्ति हे अग्ने ते त्वदीयेन तपसा तापनेन तं तादृशं भागं तपस्व तप्तं कुरु तथा ते तव शोचिः शोकहेतुज्वालाविशेषः तं भागं तपतु संस्करोतु । अपिच ते तवार्चिर्भासकः ज्वालाविशेषः तं भागं तपतु । तपः—

शोचिरर्चिःशब्दानां सन्तापतारतम्येनभेदः । जातवेदः ते तव यास्तन्वोमूर्तयः शिवाः सुखहेतवः नतु तापप्रदाः ताभिरेनं तनूभिः प्रेतं सुकृतां शोभनकर्मकारिणां लोकं स्थानं वह प्रापय। उशब्दः पूरणः ॥ ४ ॥

अथ पंचमी—

अवसृजपुनरग्नेपितृभ्योयस्तआहुतश्चरतिस्वधाभिः ।
आयुर्वसानउपवेतुशेषःसंगच्छतांतन्वाजातवेदः ॥ ५ ॥ २० ॥

अव । सृज । पुनः । अग्ने । पितृऽभ्यः । यः । ते । आऽहुतः । चरति ।
स्वधाभिः । आयुः । वसानः । उप । वेतु । शेषः ।
सम् । गच्छताम् । तन्वा । जातऽवेदः ॥ ५ ॥ २० ॥

हे अग्ने यः प्रेतः पुमान् ते तुभ्यं आहुतः चितौ मंत्रेण समर्पितः सन् स्वधाभिः स्वधाकारसमर्पितैरुदकादिभिः सह चरति तं प्रेतं पितृभ्यः पितृप्राप्त्यर्थं पुनरवसृज भूयः प्रेरय । अयं प्रेतआयुर्जीवनं वसानआच्छादयन् आयुषा युक्तइत्यर्थः । शेषः शिष्यमाणमस्थिलक्षणं यजनीयं शरीरं उपवेतु उपगच्छतु । हे जातवेदः तव प्रसादात् तन्वा शरीरेण संगच्छतां संगतोभवतु ॥ ५ ॥

॥ इति सप्तमस्य षष्ठे विंशोवर्गः ॥ २० ॥

अथ षष्ठी—

यत्तेकृष्णःशकुनआतुतोदपिपीलःसर्पउतवाश्वापदः ।
अग्निष्टद्विश्वादगदंकृणोतुसोमश्चयोब्राह्मणाँआविवेश ॥ ६ ॥

यत् । ते । कृष्णः । शकुनः । आऽतुतोद । पिपीलः । सर्पः ।
उत । वा । श्वापदः । अग्निः । तत् । विश्वऽअत् । अगदम् ।
कृणोतु । सोमः । च । यः । ब्राह्मणान् । आऽविवेश ॥ ६ ॥

हे मृतशरीर ते तव संबन्धि यदंगं कृष्णः शकुनः काकाख्यः आतुतोद आङीषदर्थे ईषत्तुन्नवान् तथा पिपीलः पिपीलिका वा सर्पोवा उतवा अपिवा श्वापदः श्वशृगालादिः एतेषामन्यतमोयदि तुन्नवानित्यर्थः विश्वात् सर्वस्यात्ता अग्निः तत्तादृशमंगं अगदं कृणोतुदोषरहितं करोतु संस्करोत्वित्यर्थः । तथा सोमश्च देवतारूपः ओषधिरूपोवा संस्करोतु यः सोमः ब्राह्मणान् ऋत्विगादीन् आविवेश प्रविष्टवान् ॥ ६ ॥

अनुस्तरण्यावपया प्रेतस्य मुखमग्नेर्वर्मेत्यनया प्रोर्णुयात् । सूत्रितंच—अनुस्तरण्यावपामुत्खिद्य शिरोमुखं प्रच्छादयेदग्नेर्वर्मपरिगोभिर्व्ययस्वेतीति ।

सैषा सूक्ते सप्तमी—

अ॒ग्नेर्वर्म॒ परि॒ गोभि॒र्व्यय॑स्व॒ सं प्रोर्णु॑ष्व॒ पीव॑सा॒ मेद॑सा च ।
नेत्त्वा॑ धृ॒ष्णुर्हर॑सा॒ जर्हृ॑षाणो द॒धृग्वि॑ध॒क्ष्यन्प॑र्य॒ङ्खया॑ते ॥ ७ ॥

अ॒ग्नेः । वर्म॑ । परि॑ । गोभिः॑ । व्य॒य॒स्व॒ । सम् । प्र । ऊ॒र्णु॒ष्व॒ । पीव॑सा
मेद॑सा । च॒ । न । इत् । त्वा॒ । धृ॒ष्णुः । हर॑सा । जर्हृ॑षाणः ।
द॒धृक् । वि॒ऽध॒क्ष्यन् । प॒रि॒ऽअ॒ङ्खया॑ते ॥ ७ ॥

हे प्रेत अग्नेः स्वभूतं वर्म ज्वालालक्षणं कवचं गोभिः अनुस्तरणीगोचर्मणा परिव्ययस्व परितः संवृणु । किंच पीवसा स्थूलेन मेदसा मांसेन च संसम्यक् प्रोर्णुष्व आच्छादय । एवंकृते सति हरसा तेजसा धृष्णुर्धर्षणशीलः जर्हृषाणः अत्यर्थं हृष्यन् दधृक् धृष्टः प्रगल्भः । ऋत्विगित्यादिनादधृक्शब्दोनिपातितः । विधक्ष्यन् विविधं भस्मीकरिष्यन् एवंभूतोग्निः त्वा त्वां नेत्पर्यंखयाते नैव सर्वतोविस्तारयति । अखेर्गत्यर्थाल्लिटच्यडागमः ॥ ७ ॥

इममग्नेचमसमित्यनया प्रणीताप्रणयनमनुमंत्रयते । सूत्रितंच—इममग्नेचमसंमाविजिह्वरइति प्रणीताप्रणयनमनुमंत्रयतइति ।

सैषाष्टमी—

इ॒मम॑ग्ने चम॒सं मा वि जि॑ह्वरः प्रि॒यो दे॒वाना॑मु॒त सो॒म्याना॑म् ।
ए॒ष यश्च॑म॒सो दे॑व॒पान॒स्तस्मि॑न्दे॒वा अ॒मृता॑ मादयन्ते ॥ ८ ॥

इमम् । अग्ने । चमसम् । मा । वि । जिह्वरः । प्रियः । देवानाम् ।
उत । सोम्यानाम् । एषः । यः । चमसः । देवऽपानः ।
तस्मिन् । देवाः । अमृताः । मादयन्ते ॥ ८ ॥

हे अग्ने इमं चमसं प्रणीताप्रणयनं माविजिह्वरः माविचालीः । यश्चमसः देवानामिन्द्रादीनां प्रियः उतापिच सोम्यानां सोमार्हाणां पितॄणां प्रियः । किंच यएषचमसः देवपानः देवाः पिबंत्यस्मिन्निति देवपानस्थानीयोभवति तस्मिंश्चमसे अमृताः मरणवर्जितादेवाः पितरश्च मादयन्ते हव्यैः कव्यैश्च हृष्टाभवन्ति ॥ ८ ॥

अथ नवमी—

क्रव्यादमग्निंप्रहिणोमिदूरंयमराज्ञोगच्छतुरिप्रवाहः ।
इहैवायमितरोजातवेदादेवेभ्योहव्यंवहतुप्रजानन् ॥ ९ ॥

क्रव्यऽअदम् । अग्निम् । प्र । हिणोमि । दूरम् । यमऽराज्ञः ।
गच्छतु । रिप्रऽवाहः । इह । एव । अयम् । इतरः । जातऽवेदाः ।
देवेभ्यः । हव्यम् । वहतु । प्रऽजानन् ॥ ९ ॥

आहिताग्निमरणेएतदादिद्वेऋचावौपासनोद्वासने विनियुक्ते । तत्र प्रथमायाः पूर्वार्धेन दक्षिणस्यां दिशि चतुष्पथादावौपासनाग्निं निरस्यति उत्तरेण शांतिकर्मार्थमादत्ते । क्रव्यादं क्रव्यमामिषं तस्यात्तारं तीव्रमग्निं दूरं विप्रकृष्टदेशे प्रहिणोमि प्रगमयामि । हि गतौ स्वादिः । रिप्रवाहः रिप्रं पापं तस्यवोढा सोग्निः यमराज्ञः यमोराजा येषां तान् यमराजकान् अन्यप्रदेशान् गच्छतु प्राप्नोतु । अथ शांति कर्मार्थमुपासनः इतरः क्रव्यादादन्योजातवेदाः जातानां वेदिता जातधनोवा प्रजानन् सर्वैर्विज्ञायमानोयमग्निः इहैव देशे देवेभ्योदेवार्थं हव्यं हवनयोग्यं हविः वहतु प्रापयतु ॥ ९ ॥

अथ दशमी—

योअग्निःक्रव्यात्प्रविवेशवोगृहमिमंपश्यन्नितरंजातवेदसम् ।
तंहरामिपितृयज्ञायदेवंसघर्ममिन्वात्परमेसधस्थे ॥१०॥२१॥

यः । अग्निः । क्रव्यऽअत् । प्रऽविवेश । वः । गृहम् । इमम् । पश्यन् । इतरम् । जातऽवेदसम् । तम् । हरामि । पितृऽयज्ञाय । देवम् । सः । घर्मम् । इन्वात् । परमे । सधऽस्थे ॥ १० ॥ २१ ॥

यः क्रव्यादोग्निः वोयुष्माकं गृहिणां गृहं प्रविवेश प्रविष्टवान् तं क्रव्यादं देवं हरामि गृहाद्बहिर्निष्क्रमयामीत्यर्थः। किमर्थं पितृयज्ञाय तदर्थं। किंकुर्वन् इममितरं तस्मादन्यं हव्यवाहं जातवेदसं पश्यन् पर्यालोचयन् तथासति क्रव्यात् क्रव्यादात्परोग्निः परमे उत्कृष्टे सधस्थे सहस्थाने घर्मं यज्ञमिन्वात् प्राप्नोतु पितृभिर्घर्मपैः सहेतिशेषः ॥ १० ॥

॥ इति सप्तमस्य षष्ठे एकविंशोवर्गः ॥ २१॥

महापितृयज्ञे वषट्कारक्रियायां योअग्निःक्रव्यवाहनइत्येषा स्विष्टकृतोयाज्या । सूत्रितंच— योअग्निः क्रव्यवाहनस्त्वमग्नईळितइति संयाज्ये इति ।

सैषैकादशी—

योअग्निःक्रव्यवाहनःपितॄन्यक्षदृतावृधः ।
प्रेदुहव्यानिवोचतिदेवेभ्यश्चपितृभ्यआ ॥ ११ ॥

यः । अग्निः । क्रव्यऽवाहनः । पितॄन् । यक्षत् । ऋतऽवृधः । प्र । इत् । ऊँ इति । हव्यानि । वोचति । देवेभ्यः । च । पितृऽभ्यः । आ ॥ ११ ॥

क्रव्यवाहनः क्रव्यस्य हविषोवोढायोग्निः पितॄन् ऋतावृधः ऋतस्य यज्ञस्योदकस्य वा वर्धयितॄन् सत्येन वृद्धान्वा देवान् एतत्पितृविशेषणं वा स्तुतान् यक्षत् यजति यजेर्लेटि सिप् अडागमः। सोग्निः हव्यानि हवींषि प्रवोचतु पितृयज्ञे प्रब्रवीतु युष्मदर्थं मयानीतानीति। इदू पूरणौ केभ्यः देवेभ्यश्च पितृभ्यश्च । आकारः समुच्चये ॥ ११ ॥

महापितृयज्ञे उशन्तस्त्वेत्येषा सामिधेनी। सूत्र्यतेहि—उशन्तस्त्वानिधीमहीत्येतां त्रिरनवानंताः सामिधेन्यइति ।

सैषा द्वादशी—

उशन्तस्त्वानिधीमह्युशन्तःसमिधीमहि ।
उशन्नुशतआवहपितॄन्हविषेअत्तवे ॥ १२ ॥

उशन्तः । त्वा । नि । धीमहि । उशन्तः । सम् । इधीमहि । उशन् ।
उशतः । आ । वह । पितॄन् । हविषे । अत्तवे ॥ १२ ॥

हे अग्ने उशन्तः कामयमानाः वयं त्वा त्वां निधीमहि कर्मार्थं स्थापितवन्तः । उशंतोवयं समिधीमहि संदीपयामः । त्वमपि उशन् कामयमानोहविरादिकं उशतः आगन्तुकामान् पितॄन् अस्मिन्यज्ञे आवह हविषे अस्माभिः प्रत्तं हविः अत्तवे अत्तुं । अदेस्तुमर्थे तवेन् प्रत्ययः क्रियाग्रहणंकर्तव्यमितिकर्मणः संप्रदानसंज्ञा ॥ १२ ॥

अथ त्रयोदशी—

यंत्वमग्नेसमदहस्तमुनिर्वापयापुनः ।
कियांब्वत्ररोहतुपाकदूर्वाव्यल्कशा ॥ १३ ॥

यम् । त्वम् । अग्ने । सम्ऽअदहः । तम् । ऊँ इति । निः । वापय ।
पुनरिति । कियाम्बु । अत्र । रोहतु । पाकऽदूर्वा । विऽअल्कशा ॥ १३ ॥

हे अग्ने त्वं पितृदहनकाले यं देशं समदहः पुरा सम्यक्दग्धवानसि । तिङ्चोदात्तवतीति समोनिघातः । तमु तमेव पुनर्निर्वापय अत्रास्मिन्देशे कियांबु कियत्प्रमाणमुदकं यस्मिन् तत्पुष्करिण्यादि रोहतु उत्पद्यतां । किंच व्यल्कशा विविधशाखा पाकदूर्वा परिपक्वदूर्वा च उत्पद्यतां ॥ १३ ॥

अस्थिसंचयने क्षीरोदकेन शमीशाखया त्रिः प्रसव्यं श्मशानायतनं प्रोक्षति शीतिकेशीतिकावतीत्यनया । सूत्रितंच—क्षीरोदकेनशमीशाखयात्रिःप्रसव्यंपरिव्रजन्प्रोक्षतिशीतिकेशीतिकावतीतीति ।

सैषा चतुर्दशी—

शीतिकेशीतिकावतिह्लादिकेह्लादिकावति ।
मण्डूक्या३सुसंगमइमंस्व१ग्निंहर्षय ॥ १४ ॥ २२ ॥

क
अ
यज
वो

शीर्तिके । शीर्तिकाऽवति । ह्लादिके । ह्लादिकाऽवति । मण्डूक्या ।
सु । सम् । गमः । इमम् । सु । अग्निम् । हर्षय ॥ १४ ॥ २२ ॥

हे शीतिके शैत्ययुक्ते हे शीतिकावति शीतिकाः शैत्ययुक्ताओषधयस्ताभिस्तद्वति हे ह्लादिके आह्लादयित्रि हे आह्लादिकावति आह्लादकफलयुक्तैर्वृक्षैस्तद्वति हे पृथिवि मंडूक्या मंडूकस्त्रिया वृष्टिप्रियया सु सुष्टु संगमः संगच्छस्व । गमेर्लुङि व्यत्ययेन परस्मैपदं तत इममग्निं सु सुष्टु हर्षय ॥ १४ ॥

॥ इति सप्तमस्य षष्ठे द्वाविंशोवर्गः ॥ २२ ॥

॥ इति दशमे मंडले प्रथमोनुवाकः ॥ १ ॥

द्वितीयेनुवाके त्रयोदशसूक्तानि तत्र त्वष्टादुहित्रइत्येतच्चतुर्दशर्चं प्रथमं सूक्तं यमपुत्रोदेवश्रवानाम ऋषिः आदितोद्वादश त्रिष्टुभः त्रयोदशीचतुर्दश्यावनुष्टुभौ यद्वा त्रयोदशी पुरस्ताद्बृहती आदितोद्वयोः सरण्यूर्देवता पूषात्वेतइत्याद्याश्चतस्रः पूषदेवत्याः सरस्वतीं देवयन्तइत्याद्यास्तिस्रः सरस्वतीदेवताकाः आपोअस्मानित्याद्याः पंचर्चोब्देवताकाः तत्र द्रप्सश्चस्कंदेत्याद्यास्तिस्रः सोमदेवत्यावा । तथाचानुक्रान्तं—त्वष्टादेवश्रवा द्वे सरण्यू देवते पौष्णयश्चतस्रः सारस्वत्यस्तिस्रः पंचाप्योद्रप्सस्तिस्रः सौम्योवांत्ये अनुष्टुभावुपान्त्यापुरस्ताद्बृहतीवेति । गतः सूक्तविनियोगः । अत्रेतिहासमाचक्षते—त्वष्टृनामकस्य देवस्य सरण्यूस्त्रिशिराश्चेति स्त्रीपुंसात्मकमपत्यद्वयमभूत् ततस्त्वष्टा सरण्यूनामिकां पुत्रीं विवस्वते प्रायच्छत् ततस्तस्यां विवस्वतः सकाशात् यमयम्यौ विजज्ञाते ततः कदाचिदात्मसदृश्यादेवजनितायाः स्त्रियः समीपे तदपत्यद्वयं निधाय स्वयमाश्वं रूपं कृत्वा उत्तरान् कुरून् प्रति जगाम । अथ विवस्वानेतां स्त्रियं सरण्यूमिति मन्वानामरंसीत् तस्यां मनुर्नाम राजर्षिरजायत । ततोविवस्वानेषा सरण्यूर्न भवतीति विज्ञाय स्वयमप्यश्वोभूत्वा तामश्वरूपिणीं प्रायासीत् ततः संक्रीडमानयोस्तयोः स्वभूतं रेतः पृथिव्यां पपात । अथ सागर्भकामनया तत्पतितं रेतः आजघ्रौ ततः तस्याः सकाशात् नासत्योदस्रश्चेत्युभावश्विनावजायेतामिति ।

तत्र प्रथमा—

त्वष्टादुहित्रेवहतुंकृणोतीतीदंविश्वंभुवनंसमेति ।
यमस्यमातापर्युह्यमानामहोजायाविवस्वतोननाश ॥१॥

त्वष्टा । दुहित्रे । वहतुम् । कृणोति । इति । इदम् । विश्वम् ।
भुवनम् । सम् । एति । यमस्य । माता । परिऽउह्यमाना ।
महः । जाया । विवस्वतः । ननाश ॥ १ ॥

त्वष्टा एतन्नामकोदेवः दुहित्रे षष्ठ्यर्थे चतुर्थी दुहितुः सरण्यूनामिकायाः वहतुं वहनं विवाहं एधिवह्योश्चतुरिति वहेश्चतुप्रत्ययः तं कृणोति करोतीति एतेन हेतुना इदं विश्वं सर्वं भुवनं भूतजातं समेति तं विवाहं समागमत् पर्युह्यमाना विवस्वता उद्वोढव्या यमस्य यम्याश्च माता महोमहतः विवस्वतोजाया भार्या सरण्यूः ननाश उत्तरान् कुरून् प्रतिनष्टा अगच्छदित्यर्थः ॥ १ ॥

अथ द्वितीया—

अपागूहन्नमृतांमर्त्येभ्यःकृत्वीसवर्णामददुर्विवस्वते ।
उताश्विनावभरद्यत्तदासीदजहादुद्वामिथुनासरण्यूः ॥२॥

अप । अगूहन् । अमृताम् । मर्त्येभ्यः । कृत्वी । सऽवर्णाम् । अददुः ।
विवस्वते । उत । अश्विनौ । अभरत् । यत् । तत् । आसीत् ।
अजहात् । ऊँ इति । द्वा । मिथुना । सरण्यूः ॥ २ ॥

अमृतां मरणधर्मरहितां एतां सरण्यूं मर्त्येभ्योमनुष्येभ्यः तदुत्पत्त्यर्थं अपागूहन् अपगूहितवन्तः संवृतवन्तः देवाअपनीतवन्तइत्यर्थः । किंच सवर्णां सरण्यूसदृशां अन्यां स्त्रियं कृत्वी कृत्वा तस्मै विवस्वते देवाअददुः प्रायच्छन् । उतापिच सा अश्वरूपिणी सरण्यूः तदाश्विनावभरत् स्वोदरे गर्भभूतौ धारितवती यद्यदा तत् जायापतिभ्यां अश्वरूपात्मना संभोगकाले रेतः पतितमासीत् तदा अश्विनौ जनयामासेत्यर्थः । तथा सरण्यूः सरणवती एतन्नामिका द्वा मिथुना द्वौ मिथुनौ यमयम्यौ अजहात् त्यक्तवती जनितवतीत्यर्थः । यद्वा सरण्यूः एतन्नामिका मध्यस्थाना देवता मध्यममग्निं माध्यमिकां वाचं च उत्पादितवती ॥ २ ॥

दीक्षितमरणे पूषात्वेतइत्याद्याश्चतस्रः शंसनीयाः । सूत्रितंच— पूषात्वेतश्च्यावयतुप्रविद्वानितिचतस्रइति ।

सैषा सूक्तेतृतीया–

पूषात्वेतश्च्यावयतुप्रविद्वाननष्टपशुर्भुवनस्यगोपाः ।
सत्वैतेभ्यःपरिददत्पितृभ्योग्निर्देवेभ्यःसुविदत्रियेभ्यः ॥ ३ ॥

पूषा । त्वा । इतः । च्यवयतु । प्र । विद्वान् । अनष्टऽपशुः ।
भुवनस्य । गोपाः । सः । त्वा । एतेभ्यः । परि । ददत् ।
पितृऽभ्यः । अग्निः । देवेभ्यः । सुऽविदत्रियेभ्यः ॥ ३ ॥

पूषा पोषयिता एतन्नामकोदेवः त्वा त्वां इतोस्माद्देशात् लोकात् प्रच्यावयतु प्रकर्षेणो-त्तमलोकं गमयतु । कीदृशः विद्वान् अस्मद्भक्तता विजानानः अनष्टपशुः अविनश्वरपशुयुक्तः तस्मिन् सर्वेपशवस्तिष्ठन्ति नतु नश्यन्तीत्यर्थः भुवनस्य भूतजातस्य गोपाः गोपायिता । किंच प्रक्रमय्यसपूषा एतेभ्यः पितृभ्यः त्वा त्वां परिददत् परिप्रयच्छतु । तथा अग्निश्च सुविदत्रियेभ्यः सुविदत्रं ज्ञानं धनं वा तदर्हाः सुविदत्रियाः छान्दसोघप्रत्ययः शोभनज्ञानेभ्यः सुधनेभ्योवा देवेभ्यः त्वां प्रयच्छतु तेषां लोके स्थापयत्वित्यर्थः ॥ ३ ॥

अथ चतुर्थी–

आयुर्विश्वायुःपरिपासतित्वापूषात्वापातुप्रपथेपुरस्तात् ।
यत्रासतेसुकृतोयत्रतेययुस्तत्रत्वादेवःसविताप्रदधातु ॥ ४ ॥

आयुः । विश्वऽआयुः । परि । पासति । त्वा । पूषा । त्वा । पातु ।
प्रऽपथे । पुरस्तात् । यत्र । आसते । सुऽकृतः । यत्र । ते ।
ययुः । तत्र । त्वा । देवः । सविता । दधातु ॥ ४ ॥

विश्वायुः सर्वात्मः सर्वत्रगमनशीलोवा आयुः वकारलोपश्छान्दसः वायुः यद्वा छन्दसी-णइति उणूप्रत्यये वृद्धौ च कृतायां रूपं । गन्ता वायुः त्वा त्वां परिपासति परिपातु पूषानुज्ञया परितोरक्षतु । पा रक्षणे लेटि सिप्यडागमः । प्रपथे प्रकृष्टे मार्गे स्वर्गे पुरस्तात् सर्वेषां प्रथममेव वर्तमानः पूषा स्वयमेव त्वा त्वां प्रमितं यजमानं पातु रक्षतु । सुकृतः पुण्यकर्माणः यत्र य-

स्मिन्देशे आसते तिष्ठन्ति यत्र वा ते सुकृतः ययुः प्राप्ताः तत्र तस्मिन् स्थाने देवोदीप्यमानः सविता सर्वस्य स्वस्वकर्मणि प्रेरकः एतन्नामकोदेवः त्वा त्वां दधातु निदधातु ॥ ४ ॥

एकादशिनस्य पौष्णस्य पशोर्हविषः पूषेमाइत्यनुवाक्या । पूषेमाआशाअनुवेदसर्वाः शुक्रंतेअन्यद्यजतमितिहि सूत्रितं ।

सैषा पञ्चमी—

पूषेमाआशाअनुवेदसर्वाःसोअस्माँअभयतमेननेषत् ।
स्वस्तिदाआघृणिःसर्ववीरोप्रयुच्छन्पुरएतुप्रजानन् ॥ ५ ॥२३॥

पूषा । इमाः । आशाः । अनु । वेद । सर्वाः । सः । अस्मान् ।
अभयऽतमेन । नेषत् । स्वस्तिऽदाः । आघृणिः । सर्वऽवीरः ।
अप्रऽयुच्छन् । पुरः । एतु । प्रऽजानन् ॥ ५ ॥ २३ ॥

पूषा देवः इमाः सर्वाआशाः प्राच्याद्यादिशः अनुवेद आनुपूर्व्येण जानाति इमाः सुखेन गंतव्याः असुखेनेति वा एवमनुक्रमेण जानातीत्यर्थः ।एवं सति अस्मान्प्रमिते यजमानोब्रवीति पुत्रमुखेन याजकमुखेन वा सपूषा अस्मान् अभयतमेन अत्यन्तं भयरहितेन मार्गेण नेषत् नयतु । कथं स्वस्तिदाः कल्याणस्य दाता आघृणिः आगतदीप्तियुक्तः सर्ववीरः सर्वैःवीरैः कर्मणि समर्थैः ऋत्विग्भिरुपेतः अप्रयुच्छन् अप्रमाद्यन् प्रजानन् अस्माकं फलाफले विजानानः सन् पुरएतु अस्माकं पुरस्ताद्गच्छतु यथा अस्माकं भयं न भवति तथा गच्छत्वित्यर्थः ॥ ५ ॥

॥ इति सप्तमस्य षष्ठे त्रयोविंशोवर्गः ॥ २३ ॥

एकादशिनस्य पौष्णस्य पशोः पुरोडाशस्य प्रपथेपथामिति याज्या । सूत्रितंच—प्रपथेपथामजनिष्टपूषा पथस्पथःपरिपतिंवचस्येति ।

सैषा षष्ठी—

प्रपथेपथामजनिष्टपूषाप्रपथेदिवःप्रपथेपृथिव्याः ।
उभेअभिप्रियतमेसधस्थेआचपराचचरतिप्रजानन् ॥ ६ ॥

प्रऽपथे । पथाम् । अजनिष्ट । पूषा । प्रऽपथे । दिवः । प्रऽपथे ।
पृथिव्याः । उभे इति । अभि । प्रियतमे इति प्रियऽतमे ।
सधस्थे इति सधऽस्थे । आ । च । परा । च । चरति । प्रऽजानन् ॥ ६ ॥

पथां अन्तरिक्षगमनहेतुभूतानां मार्गाणां मध्ये प्रपथे यः प्रकृष्टः पंथाअस्ति तत्र पूषा अजनिष्ट प्रादुरभूत् पुण्यकर्मणां सुगतिप्रापणार्थमवस्थितइतिभावः । तथा दिवोद्युलोकस्य च मार्गाणां मध्ये प्रपथे प्रकृष्टे मार्गे जातः तथा पृथिव्याः प्रपथे प्रकृष्टे मार्गे मनुष्याणां तत्तत्कर्मणि प्रवर्तनार्थं प्रादुर्भूतइत्यर्थः । सोयं पूषा प्रियतमे सर्वस्येष्टतमे सधस्थे सर्वेषां सहावस्थानभूते उभे द्यावापृथिव्यावभिलक्ष्य आचरति आभिमुख्येन चरति सुकृतिनां सुकृतफलप्रदर्शनायानुकूलं चरतीत्यर्थः । तथा पराचरति दुष्कर्मणां प्रतिकूलं गच्छति । किं कुर्वन् प्रजानन् अनेनेदं कर्म कृतं अस्य कर्मणइदं फलमिति अविशेषेण जानानः ॥ ६ ॥

व्यूळ्हस्य दशरात्रस्य तृतीये छन्दोमे प्रउगे सारस्वततृचस्य सरस्वतींदेवयन्तइत्येषा आद्या । सूत्र्यतेहि—प्रब्रह्माणोअंगिरसोनक्षंत सरस्वतींदेवयन्तोहवन्तइति ।

सैषा सप्तमी—

सरस्वतींदेवयन्तोहवन्तेसरस्वतीमध्वरेतायमाने ।
सरस्वतींसुकृतोअह्वयन्तसरस्वतीदाशुषेवार्यंदात् ॥ ७ ॥

सरस्वतीम् । देवऽयन्तः । हवन्ते । सरस्वतीम् । अध्वरे ।
तायमाने । सरस्वतीम् । सुऽकृतः । अह्वयन्त ।
सरस्वती । दाशुषे । वार्यम् । दात् ॥ ७ ॥

देवयन्तः देवान् यष्टुं स्तोतुं च कामयमानायजमानाः सरस्वतीं एतन्नामिकां मध्यमस्थानदेवतां हवन्ते कर्मावयवत्वायाह्वयन्ति । तथा तायमाने स्तुतिभिर्हविर्भिश्च विस्तार्यमाणे अध्वरे यज्ञे सरस्वतीं यजन्तीति शेषः । सुकृतः पुण्यकर्माणः सरस्वतीं अह्वयन्त फलप्रदानायाह्वयन्ते यतएवमतः कारणात् सरस्वती देवी दाशुषे हवींषि दत्तवते यजमानाय वार्यं वरणीयं कर्मफलं दात् प्रयच्छतु ॥ ७ ॥

अथाष्टमी—

सरस्वतियासरथंययाथस्वधाभिर्देविपितृभिर्मदन्ती ।
आसद्यास्मिन्बर्हिषिमादयस्वानमीवाइषआधेह्यस्मे ॥ ८ ॥

सरस्वति । या । सऽरथम् । ययाथ । स्वधाभिः । देवि । पितृऽभिः ।
मदन्ती । आऽसद्य । अस्मिन् । बर्हिषि । मादयस्व ।
अनमीवाः । इषः । आ । धेहि । अस्मे इति ॥ ८ ॥

हे सरस्वति हे देवि या त्वं सरथं पितृभिः सह समानेन रथेनयुक्तं यथा भवति तथा ययाथ अस्मदीयं यज्ञं प्राप्तासि । किंकुर्वती पितृभिः सह स्वधाभिर्हविर्लक्षणैरन्नैः मदन्तीमाद्यन्ती यज्ञं गच्छसीति संबन्धः । सा त्वं बर्हिषि अस्मिन् वेदिस्तरणे यज्ञे आसद्य उपविश्य मादयस्व हविर्भिस्तृप्ता भव आत्मानं तर्पय वा । ततस्तृप्ता सती त्वं अनमीवाः अमीवा रोगः तद्वर्जितानि आरोग्यजननानि इषोन्नानि अस्मे अस्मभ्यमाधेहि पर्याप्तं प्रयच्छ ॥ ८ ॥

अथ नवमी—

सरस्वतींयांपितरोहवन्तेदक्षिणायज्ञमभिनक्षमाणाः ।
सहस्रार्घमिळोअत्रभागंरायस्पोषंयजमानेषुधेहि ॥ ९ ॥

सरस्वतीम् । याम् । पितरः । हवन्ते । दक्षिणा । यज्ञम् ।
अभिऽनक्षमाणाः । सहस्रऽअर्घम् । इळः । अत्र । भागम् ।
रायः । पोषम् । यजमानेषु । धेहि ॥ ९ ॥

यां त्वां सरस्वतीं पितरोहवन्ते आह्वयन्ति । कीदृशाः दक्षिणा । दक्षिणादाजितिआच्प्रत्ययः । दक्षिणतआगत्य यज्ञमभिनक्षमाणाः अभितोगच्छन्तोऽव्याप्नुवन्तः अत्रास्मिन् यज्ञे सहस्रार्घं बहुभिः पूजनीयं उपयोज्यं इळोन्नस्य भागं रायोधनस्य पोषं पुष्टिं च यजमानेषु त्वं धेहि स्थापय ॥ ॥ ९ ॥

अवभृथस्थाने आपोअस्मानित्येषा । सूत्रितंच—ततआचम्याप्लवन्तआपोअस्मान्मातरः शुंधयन्त्विति । दशमेहनि वपामार्जनेप्येषा । सूत्रितंच— इदमापःप्रवहतेत्येतस्याःस्थानेआपोअस्मान्मातरः शुंधयंत्विति ।

सैषा दशमी—

आपोअस्मान्मातरःशुन्धयन्तुघृतेननोघृतप्वःपुनन्तु ।
विश्वंहिरिप्रंप्रवहन्तिदेवीरुदिदाभ्यःशुचिरापूतएमि ॥१०॥२४॥

आपः । अस्मान् । मातरः । शुन्धयन्तु । घृतेन । नः । घृतऽप्वः ।
पुनन्तु । विश्वम् । हि । रिप्रम् । प्रऽवहन्ति । देवीः । उत् ।
इत् । आभ्यः । शुचिः । आ । पूतः । एमि ॥ १० ॥ २४ ॥

मातरः जगतोमातृस्थानीयाआपः अस्मान् शुंधयन्तु प्रोक्षणेन शोधयन्तु । तथा घृतप्वः घृतमुदकं तेनास्मान् पुनन्तीति तास्तथोक्ताआपः यद्वा घृतप्वः घृतं गव्यं तेन पुनन्ति । तथा ब्राह्मणं घृतेननोघृतप्वः पुनन्तीति । तद्वैसुपूतंयद्घृतेनपूयतेइति । ताआपः घृतेन प्रत्यक्षेणोदकेन नोस्मान् पुनन्तु हि यस्मात् देवीर्दिव्यः देवनशीलाआपः विश्वं सर्वं रिप्रं पापं प्रवहन्ति पुरुषसकाशात् प्रगमयन्ति अपनयन्तीति यावत् । इत् अनन्तरं आभ्यः अद्भ्यः आपूतः आभिमुख्येन शुद्धः सन् स्तोता अहं उदेमि उद्गच्छामि ऊर्ध्वं स्वर्गं गच्छामीत्यर्थः ॥ १० ॥

॥ इति सप्तमस्य षष्ठे चतुर्विंशोवर्गः ॥ २४ ॥

सुत्येहनि द्रप्सश्चस्कन्देत्यादिके द्वे विप्रुड्ढोमार्थे । सूत्रितंच—द्रप्सश्चस्कन्देति द्वाभ्यां विप्रुड्ढोमौ हुत्वेति । स्कन्नहविरभिमर्शनेपि द्रप्सइत्येषा । आहुतिर्बहिष्परिधि यदिस्कन्देत्तदा आग्नीध्रः अनया जुहुयात् । स्कन्नमभिमृशेदितिप्रकृत्य सूत्रितं—द्रप्सश्चस्कन्देत्याहुतिश्चेद्बहिष्परिध्याग्नीध्रएनां जुहुयादिति ।

सैषा एकादशी—

द्रप्सश्चस्कन्दप्रथमाँअनुद्यूनिमंचयोनिमनुयश्चपूर्वः ।
समानंयोनिमनुसंचरन्तंद्रप्संजुहोम्यनुसप्तहोत्राः ॥ ११ ॥

द्रप्सः । चस्कन्द । प्रथमान् । अनु । द्यून् । इमम् । च । योनिम् ।
अनु । यः । च । पूर्वः । समानम् । योनिम् । अनु । सम्ऽचरन्तम् ।
द्रप्सम् । जुहोमि । अनु । सप्त । होत्राः ॥ ११ ॥

द्रप्सः अभिषूयमाणस्य सोमस्य रसः प्रथमान् पूर्वभाविनः पार्थिवान् लोकान् द्यून् दीप्यमानान् द्युलोकांश्च अनुलक्षीकृत्य चस्कन्द स्कन्नवान् गतवान्। तदेवाह इमं परिदृश्यमानं योनिं स्थानभूतं लोकं च यश्च अस्मात्पूर्वोस्ति तमनुगतवान् समानं साधारणं योनिं द्यावापृथिवीलक्षणं स्थानमनुसंचरन्तं सम्यग्गच्छन्तं द्रप्सं सोमरसं विप्रुलक्षणं सप्तहोत्राः सप्तसंख्याकाः विप्रुड्ढोमस्य कर्तारः होतृप्रभृतयोवयं अनु आनुपूर्व्येण जुहोमि जुहुमः। यद्वा होत्राः सप्तहोतृभिः क्रियमाणायागक्रिया होत्रास्ता अनु पश्चात् अध्वर्युरहं जुहोमि। यद्वा द्रप्सः द्रुतगामित्वात् द्रप्सआदित्यउच्यते सआदित्यः पृथिवीं च दिवं च गच्छति समानं योनिमन्तरिक्षं लक्षीकृत्य सम्यक् चरन्तं द्रप्समादित्यमुद्दिश्य सप्तहोत्राः सप्तसंख्याकादिशः यस्यां दिशिसूर्योवर्तते तद्व्यतिरिक्ताः सप्तसंख्याकादिशः सप्त अनु पश्चाज्जुहोमि यत्रयत्र वर्तते तां तां दिशं द्रव्यत्वेन प्रयच्छामि प्रतिष्ठापयामीत्यर्थः। अत्र वाजसनेयकं—असौवाआदित्योद्रप्सः सदिवंचपृथिवींच स्कन्दतीमंचयोनिमनुयश्चपूर्वइति। इमंचलोकममुंचेत्येतत् समानं योनिमनुसंचरन्तमिति। समानं ह्येषएतंयोनिमनुसंचरन्ति। द्रप्सं जुहोम्यनुसप्तहोत्राइत्यसौवाआदित्योद्रप्सोदिशः सप्तहोत्राअमुं तदादित्यं दिक्षुप्रतिष्ठापयतीति ॥ ११ ॥

अथ द्वादशी—

यस्तेद्रप्सःस्कन्दतियस्तेअंशुर्बाहुच्युतोधिषणायाउपस्थात्।
अध्वर्योर्वापरिवायःपवित्रात्तंतेजुहोमिमनसावषट्कृतम् ॥१२॥

यः। ते। द्रप्सः। स्कन्दति। यः। ते। अंशुः। बाहुऽच्युतः।
धिषणायाः। उपऽस्थात्। अध्वर्योः। वा। परि। वा। यः।
पवित्रात्। तम्। ते। जुहोमि। मनसा। वषट्ऽकृतम् ॥ १२ ॥

हे सोम ते त्वदीयोयोद्रप्सोरसः स्कन्दति अधिषवणचर्मणोन्यत्र गच्छति यश्च ते त्वदीयः अंशुः रसादितरः सन् स्कन्दति बाहुच्युतः अध्वर्योर्बाहुभ्यां प्रच्युतः सन् स्कन्दति यद्वा बाहुवत् साधनभूताग्रावाणः तैः प्रच्युतोभिषुतः सन् धिषणायाः धिषणेत्यधिषवणफलकनाम प्रत्येकविवक्षयैकवचनं अधिषवणफलकयोरुपस्थात् समीपस्थात् प्रदेशादन्यत्र गच्छति। तथा अध्वर्योर्वा अभिषुण्वतोध्वर्योर्हस्तात् स्कन्दति वापिवा योरसः पवित्राद्दशापवित्रात् परिस्कन्दति तं सर्वं द्रप्सं ते त्वदीयं रसं मनसा अन्तःकरणेन स्तोत्रेण वा सह वषट्कृतं वषट्कारेण स्वाहाकारेण कृतं जुहोमि अग्नौ प्रक्षिपामि ॥ १२ ॥

अथ त्रयोदशी–

यस्तेँद्रप्सःस्कन्नोयस्तेँअंशुरवश्चयःपरःस्रुचा ।
अयंदेवोबृहस्पतिःसंतंसिञ्चतुराधसे ॥ १३ ॥

यः । ते । द्रप्सः । स्कन्नः । यः । ते । अंशुः । अवः । च ।
यः । परः । स्रुचा । अयम् । देवः । बृहस्पतिः ।
सम् । तम् । सिञ्चतु । राधसे ॥ १३ ॥

हे सोम ते त्वदीयोयोद्रप्सोरसोन्यत्र स्कन्नोगतः यश्च ते त्वदीयः तव कारणभूतोंशुः लताखंडः रसादितरोभवति स्रुचा पात्रविशेषेण गृहीतः सोमः अवः अवस्तात् स्कन्दते परः परस्ताद्वा अतिरिक्तोभवति तमिमं सोमं अयं बृहस्पतिरेतन्नामकोदेवः संसिंचतु सम्यक् प्रक्षा-रयतु। किमर्थं राधसे अस्माकं धनार्थं स्कन्नेहि सोमे प्रजापश्वादिकमपस्कन्नं भवति खलु॥१३॥

अथ चतुर्दशी–

पयस्वतीरोषधयःपयस्वन्मामकंवचः ।
अपांपयस्वदित्पयस्तेनमासहशुन्धत ॥ १४ ॥ २५ ॥

पयस्वतीः । ओषधयः । पयस्वत् । मामकम् । वचः । अपाम् ।
पयस्वत् । इत् । पयः । तेन । मा । सह । शुन्धत ॥ १४ ॥ २५ ॥

इयं प्रत्यक्षकृता हे आपः ओषधयः पयस्वत्यः वृष्टिलक्षणेनोदकेन सारवत्योभवन्ति मामकं मदीयं वचः वचनं वृष्टिप्रार्थनवचनं पयस्वत् सारवत् भवति किं बहुना यच्चेह किं-चिदपामुदकानां पयः क्षीरवत् सारभूतंयदस्ति तत्सर्वं पयस्वत् सारवदेव तेनोदकसारेण सह मा मां शुंधत यूयं शोधयत । आपोअद्यान्वचारिषंरसेनसमगस्महीतिनिगमान्तरं ॥ १४ ॥

॥ इति सप्तमस्य षष्ठे पञ्चविंशोवर्गः ॥ २५ ॥

परंमृत्योइति चतुर्दशर्चं द्वितीयं सूक्तं यमपुत्रस्य संकुसुकस्यार्षं एकादशी प्रस्तार-पंक्तिः आद्यौ जागतौ ततो द्वौ गायत्रौ प्रस्तारपंक्तिःपुरतइति । त्रयोदशी जगती चतु-

१ ऋ० सं० १. २. १२. ।

दशी अनुष्टुप् शिष्टास्त्रिष्टुभः। तत्रादौ चतस्रो मृत्युदेवत्याः पञ्चमी धातृदेवताका षष्ठी त्वष्टृदेवत्या सप्तम्याद्याः शिष्टाःपितृमेधाभिधायिन्यः अतस्तद्देवताकाः अन्त्या तु अनिरुक्तत्वात् प्राजापत्या वा। तथाचानुक्रान्तं—परंमृत्योः संकुसुकश्चतस्रोमृत्युदेवताः पराधात्री परा त्वाष्ट्री पराः पितृमेधाएकादशी प्रस्तारपंक्तिर्जगत्युपान्त्यान्त्यानुष्टुप्प्राजापत्यावासानिरुक्तेति।

तत्र प्रथमा—

परंमृत्योअनुपरेहिपन्थांयस्तेस्वइतरोदेवयानात्।
चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजांरीरिषोमोतवीरान्॥१॥

परम्। मृत्यो इति। अनु। परा। इहि। पन्थाम्। यः। ते।
स्वःऽइतरः। देवऽयानात्। चक्षुष्मते। शृण्वते। ते। ब्रवीमि।
मा। नः। प्रऽजाम्। रिरिषः। मा। उत। वीरान्॥ १॥

हे मृत्यो सर्वेषां मारक एतन्नामक देव परमन्यं पंथां पंथानं अनु आनुपूर्व्येण परेहि पराङ्मुखोगच्छायजमानादितिशेषः। कोसौ पंथाः ते तव स्वः स्वभूतः देवयानात् देवाअनेन मार्गेण गच्छन्तीति देवयानोदेवमार्गः तस्मादितरोयः पंथाः तं प्रगच्छ। न केवलं मत्तः परागच्छ अपितु चक्षुष्मते दर्शनवते शृण्वते सर्वं अप्रतिहतसर्वेंद्रियविज्ञानायेत्यर्थः। ते तुभ्यं ब्रवीमि कथयामि नोस्माकं प्रजां दुहितृदौहित्रात्मिकां मारिरिषः माहिंसीः। उतापिच वीरान् पुत्रपौत्रादीन् माहिंसीः मत्परागमनेन रक्षेत्यर्थः॥ १॥

अथ द्वितीया—

मृत्योःपदंयोपयंन्तोयदैतद्राघीयआयुःप्रतरंदधानाः।
आप्यायमानाःप्रजयाधनेनशुद्धाःपूताभवतयज्ञियासः॥२॥

मृत्योः। पदम्। योपयन्तः। यत्। ऐत। द्राघीयः। आयुः।
प्रऽतरम्। दधानाः। आऽप्यायमानाः। प्रऽजया। धनेन।
शुद्धाः। पूताः। भवत। यज्ञियासः॥ २॥

हे मृतस्य ज्ञातयः मृत्योः परागच्छतस्तस्य पदं पद्यतेस्मिन् इति पदं पितृयाणः तं योपयन्तः विमोहयन्तः परिवर्जयन्तः यद्यस्मात् एतदेव यानीयपथागतवन्तस्तस्मात् द्राघीयः दीर्घतरं आयुर्जीवनं प्रतरं प्रकृष्टतरमत्यर्थं दधानाः धारयन्तोभवथ। किंचहे यज्ञियासः यज्ञार्हा यज्ञसंपादिनोयजमानाः प्रजया पुत्रपौत्रादिकया धनेन गवाश्वादिकेन च आप्यायमानाः वर्तमानाः सन्तः शुद्धाः जन्मान्तरसंचितदुरितक्षयात् शुद्धाभवत पूताः वर्तमानजन्मोपचितदुरितक्षयाच्च पूताभवत ॥ २ ॥

पैतृमेधिकेकर्मणि अमात्याःइमेजीवाविमृतैरितिसव्यावृतोव्रजन्ति । सूत्रितंच—इमेजीवाविमृतैरितिसव्यावृतोव्रजन्तीति ।

सैषा तृतीया—

इमेजीवाविमृतैराववृत्रन्नभूद्भद्रादेवहूतिर्नोअद्य ।
प्राञ्चोअगामनृतयेहसायद्राघीयआयुःप्रतरंदधानाः ॥ ३ ॥

इमे । जीवाः । वि । मृतैः । आ । अववृत्रन् । अभूत् । भद्रा ।
देवऽहूतिः । नः । अद्य । प्राञ्चः । अगाम । नृतये । हसाय ।
द्राघीयः । आयुः । प्रऽतरम् । दधानाः ॥ ३ ॥

इमे जीवाः जीवन्तः पुरुषाः मृतैः पित्रादिभिस्तेभ्यइत्यर्थः व्याववृत्रन् व्यावृत्ताभवन्तु एते नम्रियन्तामितिभावः । किंच अद्यास्मिन् दिने नोस्माकं अशौचे विसृष्टे देवहूतिः देवानामाह्वानं यत्र सदेवहूतिः पितृमेधाख्योयज्ञः भद्रा कल्याणोभूद्भवतु । ततउत्तरं वयं प्रांचः प्राङ्मुखांचनाः अयाम गच्छेम प्रत्यंचइतिभावः नृतये नर्तनाय कर्मणि गात्रविक्षेपाय स्वकर्मानुष्ठानायेतिभावः हसाय हसनाय पुत्रादिभिः सहक्रीडनाय । कीदृशावयं द्राघीयआयुः प्रतरं दधानाः ॥ ३ ॥

अथ चतुर्थी—

इमंजीवेभ्यःपरिधिंदधामिमैषांनुगादपरोअर्थमेतम् ।
शतंजीवन्तुशरदःपुरूचीरन्तर्मृत्युंदधतांपर्वतेन ॥ ४ ॥

इमम् । जीवेभ्यः । परिऽधिम् । दधामि । मा । एषाम् । नु । गात् । अपरः । अर्थम् । एतम् । शतम् । जीवन्तु । शरदः । पुरूचीः । अन्तः । मृत्युम् । दधताम् । पर्वतेन ॥ ४ ॥

अनया जीवरक्षार्थं पाषाणं परिधिरूपेण स्थापयन्ति । जीवेभ्यः जीवद्भ्यः पुत्रपौत्रादिभ्यः तेषां रक्षणार्थं इमं परिधिं मृत्योः परिधानभूतं पाषाणं दधामि निदधामि ततएषां जीवतां मध्ये अपरोन्यः एनमिमं अर्थं अर्तेरिदं रूपं गन्तव्यं मरणाख्यंमार्गं नु क्षिप्रं मागाव् मागच्छतु एतदर्थं परिधिं स्थापयामीतिसंबन्धः । किंच पुरूचीः बह्वंचनाः बहुगमनाः शतं शरदः एतत्संख्याकान् वर्षान् जीवन्तु स्वस्वप्राणान् धारयन्तु ! तथा पर्वतेन शिलोच्चयेन मृत्युं सर्वेषां मारकमेतन्नामाकं अन्तर्दधतां अन्तर्हितं कुर्वन्तु यथा नागच्छति तथा कुर्वतामित्यर्थः ॥ ४ ॥

अथ पंचमी—

यथाहान्यनुपूर्वंभवन्तीयथर्तवऋतुभिर्यन्तिसाधु ।
यथानपूर्वमपरोजहात्येवाधातरायूंषिकल्पयैषाम् ॥ ५ ॥ २६ ॥

यथा । अहानि । अनुऽपूर्वम् । भवन्ति । यथा । ऋतवः । ऋतुऽभिः । यन्ति । साधु । यथा । न । पूर्वम् । अपरः । जहाति । एव । धातः । आयूंषि । कल्पय । एषाम् ॥ ५ ॥ २६ ॥

यथा येन प्रकारेण अहानि अहोरात्रात्मकानि दिनानि अनुपूर्वं पूर्वमनुक्रमेण भवन्ति परिवर्तन्ते यथा च ऋतवोवसन्तादयऋतुभिः सह साधु शोभनं अविपर्यासेन यन्ति गच्छन्ति यथा च पूर्वं पूर्वकालीनं पितरं अपरः अर्वाक्कालीनः पुत्रोन जहाति न परित्यजति पूर्वमरणेन एव एवं तेनैवोक्तप्रकारेण हे धातः सर्वेषां धारयितरेतन्नामक देव एषामस्मत्कुलीनानां जीवानां आयूंषि जीवनानि कल्पय समर्थय कुर्वित्यर्थः ॥ ५ ॥

॥ इति सप्तमस्य षष्ठे षड्विंशोवर्गः ॥ २६ ॥

अथ षष्ठी–

**आरोहतायुर्जरसंवृणानाअनुपूर्वंयतमानायतिष्ठ ।**
**इहत्वष्टासुजनिमासजोषादीर्घमायुःकरतिजीवसेवः ॥ ६ ॥**

आ । रोहत । आयुः । जरसम् । वृणानाः । अनुऽपूर्वम् । यतमानाः ।
यति । स्थ । इह । त्वष्टा । सुऽजनिम । सऽजोषाः ।
दीर्घम् । आयुः । करति । जीवसे । वः ॥ ६ ॥

हे मृतस्य स्वजनाः पुत्रपौत्रादयः जरसं जरां वृणानाः संभजमानायूयं आयुर्जीवनमारोहत अधितिष्ठत अनुपूर्वं आनुपूर्व्येण अव्ययीभावः पूर्वोज्येष्ठः ज्येष्ठानुपूर्व्या यतमानाः प्रयत्नं कुर्वन्तोयूयं यतिस्थ यत्संख्याकाभवथ यच्छब्दाच्छान्दसोडतिः सुजनिमा शोभनजननः त्वष्टा एतन्नामकोदेवः सजोषाभवद्भिः संगतः सन् इहास्मिन् कर्मणि प्रवृत्तानां वोयुष्माकं जीवसे जीवनाय दीर्घं प्रभूतमायुः करति करोतु ॥ ६ ॥

अथ सप्तमी–

**इमानारीरविधवाःसुपत्नीराअंजनेनसर्पिषासंविशन्तु ।**
**अनश्रवोनमीवाःसुरत्नाआरोहन्तुजनयोयोनिमग्रे ॥ ७ ॥**

इमाः । नारीः । अविधवाः । सुऽपत्नीः । आऽअञ्जनेन । सर्पिषा ।
सम् । विशन्तु । अनश्रवः । अनमीवाः । सुऽरत्नाः ।
आ । रोहन्तु । जनयः । योनिम् । अग्रे ॥ ७ ॥

अविधवाः धवः पतिः अविगतपतिकाः जीवद्भर्तृकाइत्यर्थः सुपत्नीः शोभनपतिकाः इमानारीः नार्यः आंजनेन सर्वतोंजनसाधनेन सर्पिषा घृतेन अक्तनेत्राः सत्यः संविशन्तु स्वगृहान् प्रविशन्तु । तथा अनश्रवः अश्रुवर्जिताः अरुदत्यः अनमीवाः अमीवारोगस्तद्वर्जिताः मानसदुःखवर्जिताइत्यर्थः सुरत्नाः शोभनधनसहिताः जनयः जनयन्त्यपत्यमितिजनयोभार्याः ताअग्रे सर्वेषां प्रथमतएव योनिं गृहं आरोहन्तु आगच्छन्तु ॥ ७ ॥

देवरादिकः मेतपत्नीमुदीर्ष्वनारीत्यनयाभर्तृसकाशादुत्थापयेत् । सूत्रितंच—तामुत्थापये-द्देवरःपतिस्थानीयोन्तेवासीजरद्दासोवोदीर्ष्वनार्यभिजीवलोकमिति ।

सैषाष्टमी—

उदीर्ष्वनार्यभिजीवलोकंगतासुमेतमुपशेषएहि ।
हस्तग्राभस्यदिधिषोस्तवेदंपत्युर्जनित्वमभिसंबभूथ ॥ ८ ॥

उत् । ईर्ष्व । नारि । अभि । जीवऽलोकम् । गतऽअसुम् । एतम् ।
उप । शेषे । आ । इहि । हस्तऽग्राभस्य । दिधिषोः । तव ।
इदम् । पत्युः । जनिऽत्वम् । अभि । सम् । बभूथ ॥ ८ ॥

हे नारि मृतस्य पत्नि जीवलोकं जीवानां पुत्रपौत्रादीनां लोकं स्थानं गृहमभिलक्ष्य उदीर्ष्व अस्मात् स्थानादुत्तिष्ठ । ईर गतौ आदादिकः । गतासुं अपक्रान्तप्राणं एतं पतिं उपशेषे तस्य समीपे स्वपिषि तस्मात् त्वं एहि आगच्छ । यस्मात् त्वं हस्तग्राभस्य पाणिग्राहं कुर्वतः दिधिषोः गर्भस्यनिधातुः तवास्य पत्युः संबन्धादागतं इदं जनित्वं जायात्वं अभिलक्ष्य संबभूथ संभूतासि अनुमरणनिश्चयं अकार्षीः तस्मादागच्छ ॥ ८ ॥

क्षत्रियस्य धनुर्हस्तादित्यनया धनुःप्रहरेत् । सूत्रितंच—धनुर्हस्तादाददानोमृतस्येतिधनु-रिति ।

सैषा नवमी—

धनुर्हस्तादाददानोमृतस्यास्मेक्षत्रायवर्चसेबलाय ।
अत्रैवत्वमिहवयंसुवीराविश्वास्पृधोअभिमातीर्जयेम ॥ ९ ॥

धनुः । हस्तात् । आऽददानः । मृतस्य । अस्मे इति । क्षत्राय ।
वर्चसे । बलाय । अत्र । एव । त्वम् । इह । वयम् । सुऽवीराः ।
विश्वाः । स्पृधः । अभिऽमातीः । जयेम ॥ ९ ॥

मृतस्य क्षत्रियस्य हस्तात् धनुराददानः किमर्थं अस्मै अस्माकं क्षत्राय प्रजापालनसमर्थाय बलाय वर्चसे तेजसे बलाय सेनालक्षणाय च धनुराददानोहं ब्रवीमीति शेषः किमिति त्वं अत्रैवास्मिन् स्थाने एव भव । वयं च इहास्मिन् लोके सुवीराः सुपुत्रयुक्ताभवन्तः विश्वाः सर्वान् अभिमातीः अभिमन्यमानान् स्पृधः संवर्षयित्रीन् बाधकान् शत्रून् जयेम सहेमहि ॥ ९ ॥

दीक्षितमरणे उपसर्पमातरमित्याद्याश्चतस्रः शंसनीयाः । सूत्रितंच—उपसर्पमातरंभूमिमेतामितिचतस्रः सोमएकेभ्यइति । उपसर्पेत्यनया संचितान्यस्थीनिगर्तेनिदध्युः ।

सैषा दशमी—

उप॑सर्प मा॒तरं॒ भूमि॑मे॒तामु॑रु॒व्यच॑सं पृथि॒वीं सु॒शेवा॑म् ।
ऊर्ण॑म्रदा युव॒तिर्दक्षि॑णावत ए॒षा त्वा॑ पातु॒ निर्ऋ॑तेरु॒पस्था॑त् ॥ १० ॥ २७ ॥

उप॑ । स॒र्प॒ । मा॒तर॑म् । भूमि॑म् । ए॒ताम् । उ॒रु॒ऽव्यच॑सम् । पृ॒थि॒वीम् ।
सु॒ऽशेवा॑म् । ऊर्ण॑ऽम्रदाः । यु॒व॒तिः । दक्षि॑णाऽवते ।
ए॒षा । त्वा॒ । पा॒तु॒ । निःऽऋ॑तेः । उ॒पऽस्था॑त् ॥ १० ॥ २७ ॥

मातरं मातृभूतां भूमिं अस्माभिर्भूमौ निधीयमानस्त्वं उपसर्प उपगच्छ अनुप्रविशेत्यर्थः। कीदृशीं उरुव्यचसं बहुव्याप्तिकां पृथिवीं विस्तीर्णां सुशेवां सुसुखां सर्वेषां सुखदात्रीमित्यर्थः तामुपगच्छ । युवतिः यौवनान्विता स्त्रिरूपा इयं भूमिः दक्षिणावते ऋत्विग्भ्योदेयत्वेन धनवते यजमानाय ऊर्णम्रदाः ऊर्णेव ऊर्णास्तुकइव मृद्वी भवति सुकुमारा भवति न बाधयित्रीमित्यर्थः। सैषा पृथिवी निर्ऋतेः मृत्युदेवतायाः उपस्थात् समीपस्थानात् त्वा त्वां अस्थिरूपं यजमानं पातु रक्षतु ॥ १० ॥

॥ इति सप्तमस्य षष्ठे सप्तविंशोवर्गः ॥ २७ ॥

सैषैकादशी—

उच्छ्व॑ञ्चस्व पृथिवि॒ मा नि बा॑धथाः सूपाय॒नास्मै॑ भव सूपवञ्च॒ना ।
मा॒ता पु॒त्रं यथा॑ सि॒चाभ्ये॑नं भूम ऊर्णुहि ॥ ११ ॥

उत् । श्वञ्चस्व । पृथिवि । मा । नि । बाधथाः । सुऽउपायना ।
अस्मै । भव । सुऽउपवञ्चना । माता । पुत्रम् । यथा ।
सिचा । अभि । एनम् । भूमे । ऊर्णुहि ॥ ११ ॥

हे पृथिवि उच्छ्वंचस्व ऊर्ध्वं गतोच्छ्वासमेनं कुरु अधस्तान्माकुथाइत्यर्थः । किंच मा-निबाधथाः मा संपीडय । तथा अस्मै यजमानार्थं सूपायना शोभनोपगमना सूपचारिकाभवेत्यर्थः । सूपवंचना उपवंचनं प्रलंभनं शोभनप्रलंभा सुप्रतिष्ठा भव । अपिच माता पुत्रमात्मीयं बालकं सिचा वस्त्रांतेन यथा आच्छादयति तद्वत् हे भूमे एनं अस्थिरूपं यजमानं अभ्यूर्णुहि आभिमुख्येनाच्छादय ॥ ११ ॥

अथ द्वादशी—

उच्छ्वञ्चमानापृथिवीसुतिष्ठतुसहस्रंमितउपहिश्रयन्ताम् ।
तेगृहासोघृतश्चुतोभवन्तुविश्वाहास्मैशरणाःसन्त्वत्र ॥ १२ ॥

उत्ऽश्वञ्चमाना । पृथिवी । सु । तिष्ठतु । सहस्रम् । मितः । उप ।
हि । श्रयन्ताम् । ते । गृहासः । घृतऽश्चुतः । भवन्तु ।
विश्वाहा । अस्मै । शरणाः । सन्तु । अत्र ॥ १२ ॥

पांसुभिः प्रच्छाद्य एतां पठन्ति उच्छ्वंचमानाअस्थिकुंभमवष्टभ्य ऊर्ध्वं गच्छन्ती पृथिवी सुतिष्ठतु प्रतिष्ठिता भवतु । किंच सहस्रं सहस्रसंख्याकाः मितः प्रक्षिप्ताः मिनोतेरौणादिके कर्मणि क्विपि तुगागमः ततोजस् यद्वा सहस्रं तृतीयार्थे प्रथमा मितइतिनिष्ठान्तं रूपं व्यत्ययेन बहुवचनस्य एकवचनं स्वरोवृषादित्वात् द्रष्टव्यः सहस्रेण संमिताः बहुसंख्याकाः पार्थिवाः पांसवः उपश्रयन्तां एनमुपसेवन्तां संपरिवार्यतिष्ठन्त्वित्यर्थः । हिरवधारणे । तथा ते पांसवः अस्मै गृहासः गृहाभवन्तः घृतश्चुतः घृतस्योदकस्य सर्पिषोवा क्षारयितारोभवन्तु । अत्रास्मिन् लोके विश्वाहा सर्वेष्वहःसु सर्वदास्मै अस्य शरणाः सन्तु आश्रयभूताभवन्तु ॥ १२ ॥

उत्तेस्तभ्नामीति कपालेनास्थीन्यपिदध्यात् । सूत्रितंच—उत्तेस्तभ्नामीतिकपालेनापिधायेति ।

सैषा त्रयोदशी—

उत्तेस्तभ्नामिपृथिवींत्वत्परीमंलोगंनिदधन्मोअहंरिषम् ।
एतांस्थूणांपितरोधारयन्तुतेत्रायमःसादनातेमिनोतु ॥ १३ ॥

उत् । ते । स्तभ्नामि । पृथिवीम् । त्वत् । परि । इमम् । लोगम् ।
निऽदधत् । मो इति । अहम् । रिषम् । एताम् । स्थूणाम् । पितरः ।
धारयन्तु । ते । अत्र । यमः । सदना । ते । मिनोतु ॥ १३ ॥

हे अस्थिकुंभ त्वत्परि परिशब्दयोगे पंचमी तवोपरि ते त्वदीयेन कपालेन पृथिवीमुत् स्तभ्नामि प्रतिबध्नामि यथा पृथिवी तवोपरिमागच्छति तथापिदधामीत्यर्थः । इमं लोगं कपाललक्षणं लोष्टं निदधत् उपरिस्थापयन्नहं मोरिषं माहिंसिषं । किंच एतां मया निहितां स्थूणां ते त्वदीयां पृथिव्याधारयित्रीं कपाललक्षणां पितरोधारयन्तु निश्चलां कुर्वन्तु । ततः ते त्वदीये अत्र अस्मिन् स्थाने यमः पितृपतिः सदना सदनानि स्थानानि मिनोतु परिच्छिनत्तु करोत्वित्यर्थः ॥ १३ ॥

अथ चतुर्दशी—

प्रतीचीनेमामहनीष्वाःपर्णमिवादधुः ।
प्रतीचींजग्रभावाचमश्वंरशनयायथा ॥ १४ ॥ २८ ॥

प्रतीचीने । माम् । अहनि । इष्वाः । पर्णम्ऽइव । आ । दधुः ।
प्रतीचीम् । जग्रभ । वाचम् । अश्वम् । रशनया । यथा ॥ १४॥२८॥

अनया प्रजापतिः प्रार्थ्यते हे प्रजापते प्रतीचीने प्रतिपूज्ये अहनि तदुपलक्षिते संवत्सरात्मके मां संकुसुकमृषिं आदधुः निहितवन्तः सर्वे देवाः । किमिव इष्वाः बाणस्य पर्णमिव पक्षमिव पक्षं यथा बाणस्य मूले स्थापयन्ति तद्वत् जगन्मूले त्वयि मां स्थापितवन्तः अतोम-

दीयां प्रतीचीं पूज्यां वाचं स्तुतिरूपां जगृभ गृहाण । कथमित्युच्यते अश्वं आशुगामिनं हयं रशनया रज्वा यथा गृह्णन्ति तद्वत् कर्णाभ्यां मत्कृतां स्तुतिं गृहाणेत्यर्थः ॥ १४ ॥

॥ इति सप्तमस्य षष्ठेष्टाविंशोवर्गः ॥ २८ ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके षष्ठोध्यायः ॥ ६ ॥

## ॥श्रीगणेशायनमः॥



यस्यनिःश्वसितं वेदा योवेदेभ्योखिलं जगत् । निर्ममे तमहं वंदेविद्यातीर्थमहेश्वरं ॥ १ ॥

अष्टके सप्तमेषष्ठं व्याख्याय श्रुतिकोविदः । सायणार्यस्ततोध्यायं सप्तमं व्याचिकीर्षति ॥ २ ॥

अथ द्वादशानुवाकात्मकस्य दशममंडलस्य द्वितीयेनुवाके त्रयोदशसूक्तानि तत्र निवर्तध्वमित्यष्टर्चं तृतीयं सूक्तं अस्य यमपुत्रोमथिताख्यऋषिः वरुणपुत्रोभृगुर्वाथवा भार्गवश्च्यवनः षष्ठी गायत्री शिष्टाअनुष्टुभः इदं अब्देवताकं गोदेवताकं वा अग्नीषोमापुनर्वसू इत्यर्धर्चोग्नीषोमदेवताकः । तथाचानुक्रान्तं—निवर्तध्वमष्टौ मथितोभृगुर्वारुणिर्भार्गवश्च्यवनोवाप्यं गव्यं वानुष्टुभमग्नीषोमीयोद्वितीयोर्धर्चः षष्ठी गायत्री । गतोविनियोगः ।

तत्र प्रथमा—

ॐम् नि वर्तध्वं मानुं गातास्मान्त्सिसक्त रेवतीः ।
अग्नीषोमा पुनर्वसू अस्मे धारयतं रयिम् ॥ १ ॥

नि । वर्तध्वम् । मा । अनु । गात । अस्मान् । सिसक्त । रेवतीः ।
अग्नीषोमा । पुनर्वसू इति पुनःऽवसू । अस्मे इति ।
धारयतम् । रयिम् ॥ १ ॥

हे गावः हे आपोवा यूयं निवर्तध्वं अस्मान् प्रतिआगच्छत मानुगात अस्मद्व्यतिरिक्तं यजमानं मानुगच्छत । आगत्य च हेरेवतीः रेवत्योधनवत्यः यूयं अस्मान् सिषक्त सेचयत अवगाहत गोदोहनस्नानपानादिद्वारेण सेवध्वमित्यर्थः । हे पुनर्वसू पुनःपुनर्वस्तारौ स्तोतॄणां यष्टॄणामाच्छादयितारौ अग्नीषोमा अग्नीषोमौ एतन्नामकौ देवौ युवां अस्मे अस्मासु रयिं व्रीह्यादिलक्षणं धनं धारयतं स्थापयतं ॥ १ ॥

अथ द्वितीया—

पुनरेना निवर्तय पुनरेना न्याकुरु । इन्द्र एणा नियच्छत्वग्निरेना उपाजतु ॥ २

पुनः । एनाः । नि । वर्तय । पुनः । एनाः । नि । आ । कुरु ।
इन्द्रः । एनाः । नि । यच्छतु । अग्निः । एनाः । उपऽअजतु ॥ २॥

अत्र मंत्रद्रष्टा स्वात्मानं प्रति ब्रूते हे मदीयात्मन् त्वं एनाः एताः अन्यतोभिगंत्रीः गाआपोवा पुनर्निवर्तय पुनःपुनर्मदभिमुखीकुरु । तदनंतरं एनाः एताः पुनः भूयोभूयः निआकुरु नियताः आत्मायत्ताः कुरु । किंच इन्द्रोपि तव सहायभूतः सन् एनाएताः नियच्छतु त्वदायत्ताः करोतु। अग्निश्च एनाएताः गाः आपोवा उपाजतु उपगमयतु उपक्षिपतुवा उपयोग्याः करोत्वित्यर्थः ॥२॥

अथ तृतीया—

पुनरेतानिवर्तन्तामस्मिन्पुष्यन्तुगोपतौ ।
इहैवाग्नेनिधारयेहतिष्ठतुयारयिः ॥ ३ ॥

पुनः । एताः । नि । वर्तन्ताम् । अस्मिन् । पुष्यन्तु । गोऽपतौ ।
इह । एव । अग्ने । नि । धारय । इह । तिष्ठतु । या । रयिः ॥ ३ ॥

एनाएताःईदृश्योगावः आपोवा पुनर्निवर्तन्तां भूयोभूयोमां प्रत्यागच्छंतु आगत्य । च गोपतौ सास्नादिमतीनां धेनूनां वृष्टिलक्षणानामपां च पालके अस्मिन्नीदृशे मयि पुष्यन्तु आत्मायत्तत्वेन स्थित्वा पुष्टाभवन्तु । पुष्टाः सतीस्ताः हे अग्ने त्वं इहैव अस्मिन्नेव मयि निधारय नियमेन स्थापय । या रयिः यदपि व्रीह्यादिकं धनमस्ति तदपि धनं गोसहितं इहास्मिन्नेव गोपतौ मयि तिष्ठतु निवसतु ॥ ३ ॥

अथ चतुर्थी—

यन्नियानंन्ययनंसंज्ञानंयत्परायणम् ।
आवर्तनंनिवर्तनंयोगोपाअपितंहुवे ॥ ४ ॥

यत् । निऽयानम् । निऽअयनम् । सम्ऽज्ञानम् । यत् । पराऽअयनम् ।
आऽवर्तनम् । निऽवर्तनम् । यः । गोपाः । अपि । तम् । हुवे ॥ ४ ॥

नियानं अधिकरणे ल्युट् नियमेन यान्त्यागच्छन्ति गावोत्रेति नियानं गोष्ठाख्यं स्थानं यदस्तीति शेषः । यच्छब्दयोगात्तच्छब्दोध्याहर्तव्यः हुवइति क्रियापदं सर्वत्रानुषज्यते तत्स्थानं

हुवे आह्वयामि । आह्वानमभिमुखीकरणं तेन चात्र तत्पूर्विका प्रार्थना लक्ष्यते । गोसहितं गोष्ठं प्रार्थयइत्यर्थः । न्ययनं भावे ल्युट् नियमेन गृहं प्रति प्राप्तिलक्षणं गमनं यदस्ति तदपि प्रार्थये संज्ञानं गोभिः सह ऐकमत्यं यदस्ति तदपि प्रार्थये परायणं परागमनं वनं प्रति गवां चरणाय गमनं यदस्ति तदपि प्रार्थये आवर्तनं वनचारिणीभिर्गोभिः सह प्रवर्तनं यदस्ति तदपि प्रार्थये निवर्तनं वने चरित्वा गृहं प्रति यदागमनमस्ति तदपि प्रार्थये योपि गोपाः गवां पालकोस्ति तमपि हुवे प्रार्थये सर्वगुणोपेतागाः प्रार्थयइत्यर्थः ॥ ४ ॥

अथ पंचमी—

य उदानड्व्ययनंय उदानट्परायणम् ।
आवर्तनंनिवर्तनमपिगोपानिवर्तताम् ॥ ५ ॥

यः । उत्ऽआनट् । विऽअयनम् । यः । उत्ऽआनट् । पराऽअयनम् ।
आऽवर्तनम् । निऽवर्तनम् । अपि । गोपाः । नि । वर्तताम् ॥ ५ ॥

योगोपाः गोपालः व्ययनं नष्टानां गवां अन्वेषणार्थं विविधगमनं उदानट् व्याप्नोति अनुभवति यः परायणं परागमनं उदानट् व्याप्नोति वनं प्रति गवां चरणाय गमनमित्यर्थः यश्च आवर्तनं वनचारिणीभिर्गोभिः सह प्रवर्तनमनुभवति योपि गोपाः निवर्तनं गोभिः सह वनात् गृहं प्रति गमनमनुभवति सोपि गोपालः निवर्ततां गोभिः सह वनात् गृहं प्रति क्षेमेणागच्छतु ॥ ५ ॥

अथ सप्तमी–

परिवोविश्वतोदधऊर्जाघृतेनपयसा ।
येदेवाःकेचयज्ञियास्तेरय्यासंसृजन्तुनः ॥ ७ ॥

परि । वः । विश्वतः । दधे । ऊर्जा । घृतेन । पयसा । ये । देवाः ।
के । च । यज्ञियाः । ते । रय्या । सम् । सृजन्तु । नः ॥ ७ ॥

हे देवाः विश्वतः सर्वतः स्थितान् वोयुष्मान् ऊर्जागोसंबन्धिना दधिलक्षणेनान्नेन घृतेनाज्येन च पयसा क्षीरेण च परिदधे संधारयामि युष्मभ्यं हविर्द्वारेण प्रयच्छामि न केवलमात्मानं पुष्णामीत्यर्थः। एतत् ज्ञात्वा ये के च देवाः यज्ञियायज्ञार्हाः सन्ति ते देवाः नोस्मान् रय्या गोलक्षणेन धनेन संसृजंतु संयोजयन्तु ॥ ७ ॥

अथाष्टमी

आनिवर्तनिवर्तयनिनिवर्तनिवर्तय ।
भूम्याश्चतस्रःप्रदिशस्ताभ्यएनानिवर्तय ॥ ८ ॥ १ ॥

आ । निऽवर्तन । वर्तय । नि । निऽवर्तन । वर्तय । भूम्याः । चतस्रः ।
प्रऽदिशः । ताभ्यः । एनाः । नि । वर्तय ॥ ८ ॥ १ ॥

मंत्रद्रष्टा ऋषिः स्वात्मानं गाश्च संबोध्याह हे मदीयात्मन् त्वं गाः आवर्तय आकारोप्यनेनापि संबध्यते मदभिमुखीं कुरु स्तुत्या यागेन च ताः प्रसाद्योपनमयेत्यर्थः । हे गावोयूयमपि प्रसाद्यमानाआनिवर्तन आनिवर्तध्वं आभिमुख्येनागच्छत । पुनरप्याह हे मदीयात्मन् त्वं निवर्तय गोसंचरणस्थानादपगच्छन्तीर्गाः इतोभिगंत्रीः कुरु । यूयमपि हे गावः निवर्त्यमानाः सत्यः निवर्तन निवर्तध्वं । इदानीं स्वात्मागावश्च ऋषिं प्रति ब्रुवते हे ऋषे अहं कुतोगानिवर्तयामीति कुतोवयं निवर्तामहइत्यात्मना गोभिश्च पृष्टः सन्नाह—भूम्याः पृथिव्याः चतस्रः प्रदिशः चतुःसंख्यायुक्ताः प्रकृष्टायादिशः सन्ति ताभ्योदिग्भ्यः एनागाः निवर्तय हे आत्मन् मदभिमुखीः कुरु । हे गावोयूयमपि ताभ्योदिग्भ्योनिवर्तध्वमिति सामर्थ्याल्लभ्यं । यद्वा अन्दैवतपक्षेपि सूक्तार्थौ यथावटते तथा योजना कर्तव्या ॥ ८ ॥

॥ इति सप्तमस्य सप्तमे प्रथमोवर्गः ॥ १ ॥

भद्रमिति दशर्चं चतुर्थं सूक्तं आद्याएकपदा दशाक्षरा विराट् अग्निमीळेभुजामित्येषा अनुष्टुप् नवमीविराट् दशमीत्रिष्टुप् मध्येषड्गायत्र्यः इदमादीनां सप्तसूक्तानामिन्द्रपुत्रः प्रजापतिपुत्रोवा विमदऋषिः वसुक्रपुत्रोवसुकृदाख्योवा। इदमुत्तरं चाग्नेयं। तथाचानुक्रान्तं—सप्तोत्तराण्यैन्द्रोविमदः प्राजापत्योवा वासुक्रोवसुकृद्वा। भद्रं दशाग्नेयंतुगायत्रमाद्यैकपदा पादएव वा शांत्यर्थः परानुष्टुब्वंत्येविराट्त्रिष्टुभाविति। गतोविनियोगः।

तत्र प्रथमा—

भद्रंनोअपिवातयमनः ॥ १ ॥

भद्रंनोअपिवातयमनः ॥ १ ॥

हे अग्ने त्वं नोस्माकं मनः भद्रं शुभयुक्तं अपिवातय अपिरत्रधात्वर्थानुवादी आगमय त्वत्संबन्धिस्तोत्रकरणे प्रेरयेत्यर्थः ॥ १ ॥

अथ द्वितीया—

अग्निमीळेभुजांयविष्ठंशासामित्रंदुर्धरीतुम्।
यस्यधर्मन्त्स्व१रेनीःसपर्यन्तिमातुरूधः ॥ २ ॥

अग्निम्। ईळे। भुजाम्। यविष्ठम्। शासा। मित्रम्। दुःऽधरीतुम्।
यस्य। धर्मन्। स्वः। एनीः। सपर्यन्ति। मातुः। ऊधः ॥ २ ॥

भुजां हविर्भुजां देवानां मध्ये यविष्ठं अहन्यहनि अग्निहोत्रादिकर्मार्थं जायमानत्वादतिशयेन युवानं शासा अनुशासनेन मित्रं यस्मादिदं कर्तव्यं इदं न कर्तव्यमिति सर्वमनुशास्ति तस्मात् सर्वस्य मित्रभूतमित्यर्थः। दुर्धरीतुं दुर्धरणीयं संग्रामे शत्रुभिर्दुर्निवारणीयं एवंभूतमग्निं ईळे स्तौमि। अपिच यस्याग्नेः धर्मन् धर्मणि अग्निहोत्रादिके कर्मणि स्वः द्युलोकमादित्यं सर्वं देवजातं वा एनीः एन्यः प्रतिगन्त्र्यः आहुतयः स्तुतयश्च सपर्यन्ति परिचरन्ति सेवन्ते। यद्वा स्वः सपर्यन्तीत्यनयोः सामानाधिकरण्यं अत्र स्वरित्ययं सर्वशब्दोनिपातः स्वः सर्वे देवाः एनीः आत्मनः प्रतिगन्त्रीः आहुतीः स्तुतीश्च सपर्यन्ति सेवन्ते उपजीवन्तीत्यर्थः। तत्रदृष्टान्तः—लुप्तोपममेतत् मातुः गोरूधः क्षीरोपसंहारस्थानं प्रति यथा वत्साउपजीवन्ति तद्वत् तमग्निमीळइति पूर्वेण संबन्धः ॥ २ ॥

अथ तृतीया—

यमासाकृपनीळंभासाकेतुंवर्धयन्ति ।
भ्राजतेश्रेणिदन् ॥ ३ ॥

यम् । आसा । कृपऽनीळम् । भासाऽकेतुम् ।
वर्धयन्ति । भ्राजते । श्रेणिऽदन् ॥ ३ ॥

स्तोतारोयष्टारश्च आसा स्तुतिहविर्लक्षणेनोपासनेन यमग्निं वर्धयन्ति कीदृशं कृपनीळं कर्मस्थानं कर्माधारमित्यर्थः भासाकेतुं ज्वालालक्षणज्ञापकं दीप्तेः कर्तारं यच्छब्दश्रुतेः तच्छब्दोध्याहार्यः सोग्निः श्रेणिदन् श्रोतृभ्योयष्टृभ्यः अभीष्टफलसमूहप्रदः शत्रुभ्योज्वालापंक्तिप्रदोवा एवंभूतः सन् भ्राजते भासते ॥ ३ ॥

अथ चतुर्थी—

अर्योविशांगातुरेतिप्रयदानड्दिवोअन्तान् ।
कविरभ्रंदीद्यानः ॥ ४ ॥

अर्यः । विशाम् । गातुः । एति । प्र । यत् । आनट् । दिवः ।
अन्तान् । कविः । अभ्रम् । दीद्यानः ॥ ४ ॥

विशां यजमानमनुष्याणांअर्योगन्तव्यः गातुर्गमनशीलोग्निर्दीद्यानोदीप्यमानः यद्यदा एति ऊर्ध्वं गच्छति तदा दिवोद्युलोकस्य अन्तान् पर्यन्तान् कविर्मेधावी सोग्निः प्रानट् प्रकर्षेण व्याप्नोति अभ्रं मेघोपलक्षितमन्तरिक्षं च व्याप्नोति ॥ ४ ॥

अथ पंचमी—

जुषद्धव्यामानुषस्योर्ध्वस्तस्थावृभ्वांयज्ञे ।
मिन्वन्त्सद्मपुरएति ॥ ५ ॥

जुषत् । हव्या । मानुषस्य । ऊर्ध्वः । तस्थौ । ऋभ्वा । यज्ञे ।
मिन्वन् । सद्म । पुरः । एति ॥ ५ ॥

मानुषस्य यजमानस्य यज्ञे यजनीये यागे हव्या हव्यानि हवींषि जुषत् सेवमानोऽग्निः ऋभ्वा उरुभूतः बहुज्वालोपेतऊर्ध्वः तस्थौ उत्तिष्ठति ऊर्ध्वं ज्वलतीत्यर्थः । अपिच योऽग्निः पुरः प्राग्वंशादारभ्य सद्म सदनं सौमिकीं वेदिं मिन्वन् पुरः पुरस्तात् उत्तरवेदिशालामुखीयात् प्रणीयमानः सन् एति गच्छति ॥ ५ ॥

अथ षष्ठी—

सहिक्षेमोहविर्यज्ञःश्रुष्टीदस्यगातुरेति ।
अग्निंदेवावाशीमन्तम् ॥ ६ ॥ २ ॥

सः । हि । क्षेमः । हविः । यज्ञः । श्रुष्टी । इत् । अस्य । गातुः ।
एति । अग्निम् । देवाः । वाशीऽमन्तम् ॥ ६ ॥ २ ॥

यउक्तलक्षणविशिष्टोऽग्निः हीत्येतदवधारणे सएवाग्निः क्षेमः कुशलहेतुः सर्वस्य परिपालनहेतुरित्यर्थः हविः पुरोडाशादिकं च सएव हविषः तन्निमित्तत्वात् यज्ञः यागोपिसएव तस्यापि तद्धेतुत्वात् । किंच श्रुष्टीत् क्षिप्रमेव अस्याग्नेः गातुर्गमनशीलः अधिष्ठात्रात्मा एति देवानामाह्वानार्थं गच्छति । गत्वा च प्रत्यागच्छन्तं वाशीमन्तं स्तुतिलक्षणया वाचोपेतं अग्निं प्रतिदेवाः अपिगच्छन्तीतिशेषः ॥ ६ ॥

॥ इति सप्तमस्य सप्तमे द्वितीयोवर्गः ॥ २ ॥

अथ सप्तमी—

यज्ञासाहंदुवइषेऽग्निंपूर्वस्यशेवस्य । अद्रेःसूनुमायुमाहुः ॥ ७ ॥

यज्ञऽसहम् । दुवः । इषे । अग्निम् । पूर्वस्य । शेवस्य ।
अद्रेः । सूनुम् । आयुम् । आहुः ॥ ७ ॥

अत्रैकवाक्यतायै यत्तच्छब्दावध्याहार्यौ । अपरोऽर्धर्चः पू० व्याख्येयः आयुं देवानामाह्वानार्थं दूत्येन गन्तारं यमग्निं अद्रेः सूनुं अश्मनः पुत्रं आहुः । त्वमद्भ्यस्त्वमश्मनस्परीत्येवमादयोमंत्राः वदन्ति । यज्ञसहं यागस्यवोढारं धारयितारमित्यर्थः तमग्निं अभिलक्ष्य दुवः प-

---

१ ऋ० सं० २. ५. १६. ।

रिचरणं इषे इच्छामि । किमर्थं पूर्वस्य अत्र पूर्वशब्दउत्कृष्टवाची उत्कृष्टस्य शेवस्य स्वर्गापवर्गलक्षणसुखस्य प्राप्त्यर्थमिति शेषः ॥ ७ ॥

अथाष्टमी–

नरोयेकेचास्मदाविश्वेत्तेवामआस्युः । अग्निंहविषावर्धन्तः ॥ ८ ॥

नरः । ये । के । च । अस्मत् । आ । विश्वा । इत् । ते । वामे ।
आ । स्युरिति स्युः । अग्निम् । हविषा । वर्धन्तः ॥ ८ ॥

नरोनेतारः ये के च ये केचित् पुत्रपौत्रादयः अस्मदस्माकं सन्ति आकारः पूरकः ते पुत्रपौत्रादयः वामे वननीये संभजनीये विश्वेत् विश्वस्मिन्नेव पश्वादिधने आस्युः आसमन्ताद्भवेयुः उपविशेयुरित्याशास्महे । किंकुर्वन्तः अग्निं अंगनादिगुणविशिष्टं देवं हविषा पुरोडाशादिकेन वर्धन्तः वर्धयन्तः ॥ ८ ॥

अथ नवमी–

कृष्णःश्वेतोरुषोयामोअस्यब्रध्नऋज्रउतशोणोयशस्वान् ।
हिरण्यरूपंजनिताजजान ॥ ९ ॥

कृष्णः । श्वेतः । अरुषः । यामः । अस्य । ब्रध्नः । ऋज्रः । उत ।
शोणः । यशस्वान् । हिरण्यऽरूपम् । जनिता । जजान ॥ ९ ॥

अत्र यच्छब्दमध्याहृत्य योज्यं यामः याति गच्छत्यस्मिन्निति यामोरथः प्रजापतिना निर्मितः कीदृशः कृष्णः असितवर्णः श्वेतः सितवर्णः अरुषः आरोचमानः ब्रध्नोमहान् ऋज्रः ऋजुगामी उतापिच शोणोरक्तवर्णः यशस्वान् कीर्तिमान् यद्वा यशइति धननाम हविर्लक्षणेन धनेन युक्तः हिरण्यरूपं सुवर्णसदृशं तं रथं अस्याग्नेरर्थाय जनिता सर्वस्य जगतोजनयिता प्रजापतिः जजान जनयामास अस्मै दत्तवानित्यर्थः । कथमेकस्यैव रथस्य कृष्णादिनानारूपत्वं संभवतीति चेत् अग्नेः सामर्थ्यातिशयेन संभवतीत्यर्थः । यद्वा हिरण्यरूपमिति रथवाचिना शब्देन सह सामानाधिकरण्यात् कृष्णादिशब्दाः द्वितीयान्तत्वेन योज्याः अत्र सर्वगुणोकरथवत्तयाग्निः स्तूयतइत्यर्थः ॥ ९ ॥

अथ दशमी—

एवाते॑अग्ने॒विम॒दोम॑नी॒षामूर्जो॑नपाद॒मृते॑भिः॒स॒जोषाः॑ ।
गिर॒आव॑क्षत्सुम॒तीरि॑या॒नइष॒मूर्ज॑सुक्षि॒तिं॒विश्व॒माभाः॑ ॥ १०॥३॥

एव । ते । अग्ने । वि॒ऽम॒दः । म॒नी॒षाम् । ऊर्जः । न॒पा॒त् । अ॒मृते॑भिः । स॒ऽजोषाः॑ । गिरः॑ । आ । व॒क्ष॒त् । सु॒ऽम॒तीः । इ॒या॒नः । इष॑म् । ऊर्ज॑म् । सु॒ऽक्षि॒तिम् । विश्व॑म् । आ । अ॒भा॒रित्य॑भाः ॥ १० ॥ ३ ॥

एव एवमुक्तप्रकारेण हे ऊर्जोनपात् ओषधिवनस्पतिपितृभूतस्यान्नस्य पौत्र हे अग्ने अमृतेभिः अमृतैर्हविर्लक्षणैरन्नैः सजोषाः संगतोविमदोनाम ऋषिः मनीषां प्रकृष्टां बुद्धिं कामयमानः सन् ते तुभ्यं गिरः स्तुतिलक्षणावाचः आवक्षत् आभिमुख्येनोक्तवान् वक्तेश्छन्दसि लेटि रूपं ततस्त्वं एतत् ज्ञात्वा सुमतीरियानः शोभनलक्षणाबुद्धीस्तंगमयन् इषमन्नं ऊर्जं क्षीरादिकं रसं च सुक्षितिं शोभननिवासं यद्वा क्षितयोमनुष्याः शोभनपुत्रपौत्रादिकं यत्किंचिद्देयमस्ति तद्विश्वं धनं च आभाः तस्मै विमदाय आहर देहि ॥ १० ॥

॥ इति सप्तमस्य सप्तमे तृतीयोवर्गः ॥ ३ ॥

आग्निंनइत्यष्टर्चं पंचमं सूक्तं आस्तारपंक्तिच्छन्दस्कं आद्यौ द्वौ गायत्रौ पादौ ततो द्वौ जागतौ सा आस्तारपंक्तिः ऋषिदेवते पूर्ववत् । तथाचानुक्रान्तं—आग्निंनाष्टावास्तारपांक्तमिति । पृष्ठ्यस्य चतुर्थेहनि आग्निंनस्ववृक्तिभिरित्याज्यमिति । महाव्रते आग्निमारुते यावतीस्वृक्षु इलांदं साम स्तुवीरन् तदानीमादितस्तावत्यृचोनुरूपार्थाः सूत्रितंच—यदिलांदं भूयसीषु चेव स्तुवीरन्नाग्निंनस्ववृक्तिभिरितितावतीरनुरूपइति ।

तत्र प्रथमा—

आग्निंन॒स्ववृ॑क्तिभि॒र्होता॑रं॒त्वावृणीमहे ।
य॒ज्ञाय॑स्ती॒र्णब॑र्हिषे॒विवो॒मदे॑शी॒रंपा॑व॒कशो॑चिषं॒विव॑क्षसे ॥ १ ॥

आ । अ॒ग्निम् । न । स्ववृ॑क्तिऽभिः । होता॑रम् । त्वा॒ । वृ॒णी॒म॒हे॒ ।
य॒ज्ञाय॑ । स्ती॒र्णऽब॑र्हिषे । वि । वः॒ । मदे॑ । शी॒रम् ।
पा॒व॒कऽशो॑चिषम् । विव॑क्षसे ॥ १ ॥

हे अग्ने वः तव स्वभूते विमदे एतदाख्ये ऋषौ मयि इयं स्तुतिः प्रवृत्तास्ति नेति संप्रत्यर्थे अतोवयमिदानीं स्ववृक्तिभिः स्वयं कृताभिः दोषवर्जिताभिः स्तुतिभिः होतारं देवानामाह्वातारं होमनिष्पादकं वा अग्निं त्वा त्वां आवृणीमहे आभिमुख्येन संभजामहे । किमर्थं स्तीर्णबर्हिषे यज्ञाय तादर्थ्ये चतुर्थी यज्ञार्थं कीदृशं शीरं ओषध्यादिषु सर्वत्रानुशायिनं पावकशोचिषं शोधकदीप्तिं विवक्षसे महन्नामैतत् हे अग्ने त्वमपि महान् भवसि यद्वा विमदे यज्ञस्य संबन्धिनः सोमस्य पानजन्यविविधमदार्थं त्वामावृणीमहइति योज्यं ॥ १ ॥

अथ द्वितीया—

त्वामु॒ते स्वा॒भुवः॑ शुं॒भन्त्यश्व॑राधसः ।
वेति॒ त्वामु॑प॒सेच॑नी॒ वि वो॒ मद॒ ऋजी॑तिरग्न॒ आहु॑ति॒र्विव॑क्षसे ॥ २ ॥

त्वाम् । ऊँ इति॑ । ते । सु॒ऽआ॒भुवः॑ । शु॒म्भन्ति॑ । अश्व॑ऽराधसः । वेति॑ ।
त्वाम् । उ॒प॒ऽसेच॑नी । वि । वः॒ । मदे॑ । ऋजी॑तिः ।
अग्ने॑ । आऽहु॑तिः । विव॑क्षसे ॥ २ ॥

स्वाभुवः स्वप्रकाशेन दीप्यमानाः अश्वराधसोव्याप्तधनाः ते यजमानाः हे अग्ने त्वामु त्वामेव शुंभन्ति शोभयन्ति यज्ञेहविर्भिर्दीपयन्तीत्यर्थः । किंच उपसेचनी तवोपरिक्षरणशीला ऋजीतिः ऋजुगामिनी हूयमाना आहुतिःहे अग्ने त्वां वेति गच्छति । किमर्थं वस्तव विमदे मदनिमित्ते तृप्त्यर्थमित्यर्थः । किंच त्वमपि विवक्षसे महान् भवसि ॥ २ ॥

अथ तृतीया—

त्वे ध॒र्माण॑ आ॒सते॑ जु॒हूभिः॑ सि॒ञ्च॒तीरि॑व ।
कृ॒ष्णा रू॒पाण्यर्जु॑ना॒ वि वो॒ मदे॒ विश्वा॑ अ॒धि श्रियो॑ धिषे॒ विव॑क्षसे ॥ ३ ॥

त्वे इति । धर्माणः । आसते । जुहूभिः । सिञ्चतीःऽइव । कृष्णा ।
रूपाणि । अर्जुना । वि । वः । मदे । विश्वाः । अधि ।
श्रियः । धिषे । विवक्षसे ॥ ३ ॥

धर्माणोयज्ञस्य धारयितारऋत्विजः जुहूभिः संपूर्णाहुतिभिर्होमपात्रैः त्वे त्वामेव आसते सेवन्ते । तत्रदृष्टान्तः—सिंचतीरिव वृष्टिलक्षणाः पृथिवीं सिंचंत्यआपः अग्नीन् यथा स्वपितृत्वेन सेवन्ते तद्वत् । अग्नेरापइतिश्रुतेः । तस्यापां पितृत्वं । यद्वा जुहूभिः सिंचतीरिव सिच्यमानाआहुतयइव धर्मणः त्वया धार्यमाणारश्मयः त्वे त्वयि आसते निवसन्ति । हे अग्ने त्वं कृष्णा कृष्णवर्णानि अर्जुना अर्जुनानि श्वेतवर्णानिज्वालान्तर्गतरूपाणि च विश्वाः सर्वाः श्रियः शोभाअधिधिषे अधिकं यथा भवति तथा धारयसि किमर्थं वोयुष्माकं सर्वेषां देवानां विमदे विविधसोमपानजन्यमदार्थं यतएवमतः विवक्षसे त्वं महान् भवसि ॥ ३ ॥

अथ चतुर्थी—

यमग्नेमन्यसेरयिंसहसावन्नमर्त्य ।
तमानोवाजसातयेविवोमदेयज्ञेषुचित्रमाभराविवक्षसे ॥ ४ ॥

यम् । अग्ने । मन्यसे । रयिम् । सहसाऽवन् । अमर्त्य ।
तम् आ । नः । वाजऽसातये । वि । वः । मदे । यज्ञेषु ।
चित्रम् । आ । भर । विवक्षसे ॥ ४ ॥

हे अमर्त्य अमरणधर्मन् सहसावन् बलवन् एवंभूत हे अग्ने त्वं यं रयिं मन्यसे सर्वेषु धनेषु यद्धनं वरिष्ठमिति जानासि चित्रं चायनीयं रयिं नोस्माकं । वाजसातये अन्नलाभाय आभर आहर प्रयच्छ । किमर्थं वोयुष्माकं सर्वेषां देवानां यज्ञेषु विमदे विविधसोमादिहविर्जन्यमदनिमित्ते यागेषु नानाप्रकारैर्हविर्भिर्युष्माकं तर्पणायेत्यर्थः । त्वमपि विवक्षसे महान् भवसि ॥ ४ ॥

अथ पञ्चमी—

अग्निर्जातोअथर्वणाविदद्विश्वानिकाव्या ।
भुवद्दूतोविवस्वतोविवोमदेप्रियोयमस्यकाम्योविवक्षसे ॥ ५ ॥४॥

अग्निः । जातः । अथर्वणा । विदत् । विश्वानि । काव्या ।
भुवत् । दूतः । विवस्वतः । वि । वः । मदे । प्रियः ।
यमस्य । काम्यः । विवक्षसे ॥ ५ ॥ ४ ॥

अथर्वणा एतन्नाम्ना ऋषिणा जातोजनितोग्निः कथमवगम्यते । त्वामग्नेपुष्करादध्यथर्वा-निरमन्थतेतिमंत्रान्तरात् । विश्वानि समस्तानि काव्या काव्यानि स्तोतृकर्माणि विदत् वेत्ति विवस्वतोयजमानस्य दूतः देवानामाह्वानार्थं भुवत् भवति । किंच यमस्य संयन्तुः यजमानस्य प्रियः इष्टः सन् काम्यः कमनीयः प्रार्थनीयोभवतीत्यर्थः । शिष्टं स्पष्टं ॥ ५ ॥

॥ इति सप्तमस्य सप्तमे चतुर्थोवर्गः ॥ ४ ॥

अथ षष्ठी—

त्वांयज्ञेष्वीळतेग्नेप्रयत्यध्वरे ।
त्वंवसूनिकाम्याविवोमदेविश्वादधासिदाशुषेविवक्षसे ॥ ६ ॥

त्वाम् । यज्ञेषु । ईळते । अग्ने । प्रऽयति । अध्वरे ।
त्वम् । वसूनि । काम्या । वि । वः । मदे । विश्वा ।
दधासि । दाशुषे । विवक्षसे ॥ ६ ॥

हे अग्ने त्वां प्रयति प्रकर्षेण गच्छति वर्तमाने अध्वरे यागे यज्ञेषु यजनीयेषु हविःषु आसन्नेषु सत्सु ईळते ऋत्विग्यजमानाः स्तुवन्ति । अपिच हे अग्ने त्वं विश्वा विश्वानि काम्या काम्यानि कमनीयानि वसूनि धनानि दाशुषे हविर्दत्तवते यजमानाय विमदे सोमा-दिहविर्जन्यतृप्तौ सत्यां दधासि प्रयच्छसि अतः कारणाद्विवक्षसे त्वं महान् भवसि ॥ ६ ॥

अथ सप्तमी—

त्वांयज्ञेष्वृत्विजंचारुमग्नेनिषेदिरे ।
घृतप्रतीकंमनुषोविवोमदेशुक्रंचेतिष्ठमक्षभिर्विवक्षसे ॥ ७ ॥

---

१ ऋ० सं० ४. ५. २३.

त्वाम् । यज्ञेषु । ऋत्विजम् । चारुम् । अग्ने । नि । सेदिरे ।
घृतऽप्रतीकम् । मनुषः । वि । वः । मदे । शुक्रम् ।
चेतिष्ठम् । अक्षऽभिः । विवक्षसे ॥ ७ ॥

हे अग्ने त्वां मनुषोमनुष्याः यजमानायज्ञेषु यागेषु निषेदिरे नियमेन स्थापयन्ति । कीदृशं ऋत्विजं होतृनामकं चारुं रमणीयं घृतप्रतीकं आज्याहुतिपूर्णमुखं शुक्रं ज्वलन्तं अक्षभिर्व्याप्तैः तेजोभिः चेतिष्ठं अतिशयेन ज्ञातारं । किमर्थं विवोमदे तव सोमादिहविर्जन्यविविधवृप्त्यर्थं यस्मादेवं तस्माद्विवक्षसे महान् भवसि ॥ ७ ॥

अथाष्टमी—

अग्नेशुक्रेणंशोचिषोरुप्रथयसेबृहत् ।
अभिक्रन्दंन्वृषायसेविवोमदेगर्भंदधासिजामिषुविवंक्षसे ॥८॥५॥

अग्ने । शुक्रेण । शोचिषा । उरु । प्रथयसे । बृहत् ।
अभिऽक्रन्दन् । वृषऽयसे । वि । वः । मदे । गर्भम् ।
दधासि । जामिषु । विवक्षसे ॥ ८ ॥ ५ ॥

ना पुरस्ताद्बार्हतं त्रिष्टुबन्तं त्वंत्याचिद्दानस्त्वंनोनुष्टुभइति । चतुर्थेहनि निष्केवल्ये एतत्सूक्तं । सूत्रितंच–कुहश्रुतइन्द्रोयुध्मस्यतइति निष्केवल्यमिति ।

तत्र प्रथमा–

**कुहश्रुतइन्द्रःकस्मिन्नद्यजनेमित्रोनश्रूयते ।**
**ऋषीणांवायःक्षयेगुहावाचर्कृषेगिरा ॥ १ ॥**

कुह । श्रुतः । इन्द्रः । कस्मिन् । अद्य । जने । मित्रः । न । श्रूयते ।
ऋषीणाम् । वा । यः । क्षये । गुहा । वा । चर्कृषे । गिरा ॥ १ ॥

अद्यास्मिन् दिने इन्द्रः कुह कुत्र स्थाने श्रुतो विश्रुतः प्रख्यातः कस्मिन् जने यजमाने इज्यत्वेन स्तुत्यत्वेनावस्थितः श्रूयते प्रख्यायते। तत्रदृष्टान्तः–मित्रोन सूर्यइव सखेव वा तद्वत् । यइन्द्रऋषीणां भृग्वादीनां क्षये निवासे आश्रमे गुहावा गुहायामरण्ये वा गिरा स्तुतिलक्षणया वाचा चर्कृषे अत्यर्थमाकृष्यते अत्यर्थं स्तूयतइत्यर्थः। सइन्द्रः कुह श्रुतइति पूर्वेण संबन्धः ॥ १॥

अथ द्वितीया–

**इहश्रुतइन्द्रोअस्मेअद्यस्तवेवज्र्यृचीषमः ।**
**मित्रोनयोजनेष्वायशश्चक्रेअसाम्या ॥ २ ॥**

इह । श्रुतः । इन्द्रः । अस्मे इति । अद्य । स्तवे । वज्री । ऋचीषमः ।
मित्रः । न । यः । जनेषु । आ । यशः । चक्रे । असामि । आ ॥ २॥

इहास्मिन् यज्ञे इन्द्रः श्रुतः प्रख्यातः अद्यास्मिन् दिवसे अस्मे अस्माभिः स्तवे स्तूयते । कीदृशः वज्री वज्रवान् ऋचीषमः । यद्वावइन्द्रतेशतंशतंभूमीरुतस्युः नत्वावज्रिन्नित्यादिकया स्तुत्या समानगुणइत्यर्थः। यइन्द्रः मित्रोन सूर्यइव स्निग्धइव वा जनेषु स्तोतृषु जनेषु यशः अन्नं कीर्तिं च वा चक्रे करोति । कीदृशं असामि असाधारणं सइन्द्रः अस्माभिः स्तूयतइति पूर्वेण संबन्धः ॥ २ ॥

---

१ ऋ० सं० ६. ५. ८ ।

अथ तृतीया–

महोयस्पतिःशवसोअसाम्यामहोनृम्णस्यतूतुजिः ।
भर्तावज्रस्यधृष्णोःपितापुत्रमिवप्रियम् ॥ ३ ॥

महः । यः । पतिः । शवसः । असामि । आ । महः ।
नृम्णस्य । तूतुजिः । भर्ता । वज्रस्य । धृष्णोः ।
पिता । पुत्रम्ऽइव । प्रियम् ॥ ३ ॥

यइन्द्रः महोमहतः शवसोबलस्य पतिः ईश्वरः असाम्या आङ् मर्यादायां आसमाप्तेः अनन्तगुणइत्यर्थः महोमहतोनृम्णस्य धनस्य च तूतुजिः स्तोतृभ्यः प्रेरकः । किंच धृष्णोः शत्रूणां धर्षकस्य वज्रस्य स्वकीयस्यायुधस्य भर्ता यइन्द्रोधारयिता सइन्द्रोस्मान्पात्विति शेषः। तत्रदृष्टान्तः–पिता पुत्रमिव प्रियं यथा पिता प्रियं ईप्सितं सुतं पाति तद्वत् ॥ ३॥

अथ चतुर्थी–

त्वम् । त्या । चित् । वातस्य । अश्वा । आ । अगाः । ऋज्रा ।
त्मना । वहध्यै । ययोः । देवः । न । मर्त्यः । यन्ता ।
नकिः । विदाय्यः ॥ ५ ॥ ६ ॥

यच्छब्दसंबन्धादुत्तरतोऽर्धर्चः पूर्वं व्याख्यायते—ययोस्त्वदीययोरश्वयोर्यन्ता नियन्ता निवारयिता देवोन देवानां मध्ये कश्चिदपि देवोनास्ति । नकिर्न कश्चिदपि विदाय्यः वेत्ता जवस्य बलस्येति वा शेषः । हे इन्द्र त्वं वातस्य वायोर्जवेन बलेन च युक्तौ ऋज्रा ऋजुगामिनौ त्या चित् तावपि अश्वात्वदीयावश्वौ त्मना आत्मनैव सारथिनिरपेक्षेणेत्यर्थः वहध्यै वहनार्थं अभिमतदेशप्रापणायेत्यर्थः आगाः आभिमुख्येन गच्छसि ॥ ५ ॥

॥ इति सप्तमस्य सप्तमे षष्ठोवर्गः ॥ ६ ॥

अथ षष्ठी—

अधग्मन्तोशनापृच्छतेवांकदर्थानआगृहम् ।
आजग्मथुःपराकाद्दिवश्चग्मश्चमर्त्यम् ॥ ६ ॥

अध । ग्मन्ता । उशना । पृच्छते । वाम् । कत्ऽअर्था ।
नः । आ । गृहम् । आ । जग्मथुः । पराकात् । दिवः ।
च । ग्मः । च । मर्त्यम् ॥ ६ ॥

अधाथ यज्ञसमाप्त्यनन्तरं उशना भार्गवऋषिः हे इन्द्राग्नी ग्मन्ता स्वस्थानं प्रतिगच्छन्तौ वांयुवां सर्वोयजमानः पृच्छते पृच्छतिस्म। यद्वा उशनेति विभक्तिव्यत्ययः उशनसं इन्द्रस्य सखिभूतं भार्गवं इन्द्रं च युवां सर्वोयजमानः पृच्छति । किं पृष्टवानिति उच्यते—युवां कदर्था कदर्थौ किंप्रयोजनवन्तौ सन्तौ नोस्मदीयं आकारः प्रतीत्यस्यार्थे गृहं प्रति पराकात् दूरनामैतत् दूरादाजग्मथुः आगतवन्तौ स्थः। तदेवोक्तं दिवश्च द्युलोकाच्च ग्मश्च भूलोकाच्च मर्त्यं मनुष्यं मां प्रत्यागतवन्तौ युवयोः कृतार्थत्वादत्रगमनमस्मदनुग्रहार्थमेव न स्वार्थमिति ब्रुवन्ननुव्रजतीत्यर्थः ॥ ६ ॥

अथ सप्तमी—

आनंइन्द्रपृक्षसेस्माकंब्रह्मोद्यंतम् ।
तत्त्वांयाचामहेवःशुष्णंयद्धन्नमांनुषम् ॥ ७ ॥

आ । नः । इन्द्र । पृक्षसे । अस्माकम् । ब्रह्म । उत्ऽयंतम् । तत् ।
त्वा । याचामहे । अवः । शुष्णम् । यत् । हन् । अमांनुषम् ॥ ७ ॥

हे इन्द्र त्वं नइति तृतीयार्थे षष्ठी नोस्माभिः उद्यतं उत्क्षिप्तं दत्तमित्यर्थः । अस्माकमस्मदीयं ब्रह्म हविर्लक्षणमन्नं आङ्मर्यादायां आतृप्तेरित्यर्थः पृक्षसे आत्मना संपर्चय । पृची-संपर्के इति धातोरूपं आभक्षयेत्यर्थः । किंच वयमपि त्वा एवंभूतं त्वां तव यदुत्कृष्टमस्तीति शेषः तत्तादृशमन्नं अवः तद्रक्षणं च याचामहे प्रार्थयामहे यथा यच्छुष्णंबलं अमानुषं मनुष्यादन्यं राक्षसादिकं हन् हन्ति तदुत्कृष्टं बलंच याचामहे । यद्वा हे इन्द्र त्वं शुष्णं एतन्नामानं अमानुषं मनुष्यव्यतिरिक्तमसुरं हन् हतवानसि । हत्वा यत् येन रक्षणेन त्रैलोक्यं पालयितवानसि तदवः पालनमस्माकमपि भवेदिति त्वां याचामहइति वाक्यार्थः ॥ ७ ॥

अथाष्टमी—

अकर्मादस्युरभिनोअमन्तुरन्यव्रतोअमांनुषः ।
त्वंतस्यांमित्रहन्वधर्दासस्यदम्भय ॥ ८ ॥

अकर्मा । दस्युः । अभि । नः । अमन्तुः । अन्यऽव्रतः । अमांनुषः ।
त्वम् । तस्य । अमित्रऽहन् । वधः । दासस्य । दम्भय ॥ ८ ॥

अकर्मा अविद्यमानयागादिकर्मा दस्युः उपक्षपयिता अभि आभिमुख्येन स्वरूपतोनोस्मान् अमन्तुः अज्ञाता यद्वा अवावेत्युपसर्गस्य वकारलोपोद्रष्टव्यः अवमन्तुः अवमन्ता अभिभविता अन्यव्रतः श्रुतिस्मृतिव्यतिरिक्तकर्मा अमानुषः मनुष्यसंव्यवहाराद्बाह्यः असुरप्रकृतिरित्यर्थः एवंभूतोयोस्ति हे अमित्रहन् शत्रूणां हन्तरिन्द्र त्वं दासस्य उपक्षपयितव्यस्य तस्य वधः हन्ता सन् दंभय तं शत्रुं भिन्धि ॥ ८ ॥

अथ नवमी—

त्वंनंइन्द्रशूरशूरैरुतत्वोतासोबर्हणा।
पुरुत्रातेविपूर्तयोनवंन्तक्षोणयोयथा ॥ ९ ॥

त्वम् । नः । इन्द्र । शूर । शूरैः । उत । त्वाऽऊतासः । बर्हणा ।
पुरुऽत्रा । ते । वि । पूर्तयः । नवन्त । क्षोणयः । यथा ॥ ९ ॥

हे शूर विक्रान्तेन्द्र त्वं शूरैः भटैः मरुद्भिः सहितः सन् नोस्मान् पाहीति शेषः उत अपिच त्वोतासः त्वया रक्षितावयं बर्हणा परिबर्हणायां शत्रूणां हिंसायां समर्थाभवेम । किंच ते त्वदीया पूर्तयः कामानां पूरणानि ईप्सितार्थप्रदानानि पुरुत्रा बहून् स्तोतॄन् विनवन्त विविधं व्याप्नुवन्ति क्षोणयः मनुष्यनामैतत् मनुष्याः स्वकीयं स्वामिनं सेवार्थं यथा व्याप्नुवन्ति तद्वत्॥९॥

अथ दशमी—

त्वंतान्वृत्रहत्येचोदयोनॄन्कार्पाणेशूरवज्रिवः।
गुहायदीकवीनांविशांनक्षत्रशवसाम् ॥ १० ॥ ७ ॥

त्वम् । तान् । वृत्रऽहत्ये । चोदयः । नॄन् । कार्पाणे । शूर ।
वज्रिऽवः । गुहा । यदि । कवीनाम् । विशाम् ।
नक्षत्रऽशवसाम् ॥ १० ॥ ७ ॥

हे वज्रिवः वज्रधर शूरेन्द्र त्वं कार्पाणे असिः कृपाणः तेन कार्यं युद्धं कार्पाणं तस्मिन्वृत्रहत्ये शत्रुहननार्थं नॄन् नरान् तान् प्रसिद्धान् मरुद्गणान् चोदयः चोदयसि प्रेरयसि यदि यदा त्वं कवीनां मेधाविनां नक्षत्रशवसां देवान् प्रतिगच्छत् स्तोत्रबलानां विशां स्तोतृजनानां संबन्धीनि गुहा गुहानि गूढानि गुणैः संवृतानि स्तोत्राणि शृणोषीति शेषः तदाप्रेरयसीति पूर्वेणान्वयः ॥ १० ॥

॥ इति सप्तमस्य सप्तमे सप्तमोवर्गः ॥ ७ ॥

अथैकादशी—

मक्षूतातइन्द्रदानाप्नसआक्षाणेशूरवज्रिवः।
यद्धशुष्णस्यदम्भयोजातंविश्वंसयावभिः ॥ ११ ॥

मक्षु । ता । ते । इन्द्र । दानऽअप्नसः । आऽक्षाणे । शूर ।
वज्रिऽवः । यत् । ह । शुष्णस्य । दम्भयः । जातम् ।
विश्वम् । सयावऽभिः ॥ ११ ॥

हे शूर विक्रान्त वज्रिवः वज्रोपेतेन्द्र दानाप्नसः दानकर्मणः स्तोतृभ्यः सततमभीष्टफलप्रदस्येत्यर्थः ते तव स्वभूतानि मक्षु क्षिप्राणि अविलंबितानि क्षिप्रकारणयुक्तानीत्यर्थः आक्षाणे योद्धृभिर्व्याप्यमाने त्वय्यवस्थितानि ता तानि कर्माणि स्तोतारः स्तुवन्तीति शेषः सयावभिः सह यातृभिर्मरुद्भिः सहितस्त्वं यद्ध यस्य प्रसिद्धस्य शुष्णस्यासुरस्य विश्वं जातं सर्वमपत्यजातं दंभयः अदंभयः हिंसितवानसि यद्वा एवमादीनि यानि खलु कर्माणि सन्ति तानि स्तुवन्तीति पूर्वेण संबन्धः ॥ ११ ॥

अथ द्वादशी—

माकुध्र्यगिन्द्रशूरवस्वीरस्मेभूवन्नभिष्टयः ।
वयंवयन्तआसांसुम्नेस्यामवज्रिवः ॥ १२ ॥

मा । अकुध्र्यक् । इन्द्र । शूर । वस्वीः । अस्मे इति । भूवन् । अभिष्टयः ।
वयम्ऽवयम् । ते । आसाम् । सुम्ने । स्याम । वज्रिऽवः ॥ १२ ॥

हे शूर विक्रान्तेन्द्र अस्मे अस्माकं स्वभूताः वस्वीर्महत्यः अभिष्टयः आभिमुख्येष्टयः इज्याः यद्वा आभिमुख्येच्छा अभीप्सितप्रार्थनाः कुध्र्यक् कुत्सिताः विफलाइत्यर्थः माभूवन् । किं तर्हि हे वज्रिवः वज्रिन्निन्द्र ते तव प्रसादात् वयंवयमृत्विग्यजमानाः द्विर्वचनमतित्वराप्रदर्शनार्थं आसामिज्यामिच्छानां वा संबन्धिनि सुम्ने सुखे अवस्थिताः स्याम भवेम वयमभिष्टिजन्येन दृष्टादृष्टसुखेन युक्ताः शीघ्रं भवेमेत्याशास्महे इत्यर्थः ॥ १२ ॥

अथ त्रयोदशी—

अस्मेतातंइन्द्रसन्तुसत्याहिंसन्तीरुपस्पृशः ।
विद्यामयासांभुजोधेनूनांनवज्रिवः ॥ १३ ॥

अस्मे इति । ता । ते । इन्द्र । सन्तु । सत्या । अहिंसन्तीः । उपऽस्पृशः ।
विद्याम । यासाम् । भुजः । धेनूनाम् । न । वज्रिऽवः ॥ १३ ॥

हे इन्द्र अस्मे अस्माकं स्वभूताः ता सत्या इत्युभयत्र प्रथमाबहुवचनस्यछान्दसआकारः सति निर्देशस्याविशेषणत्वात् तास्त्वादृश्यः उपस्पृशः त्वामुपगम्य स्पृशन्तीत्युपस्पृशः स्तुतयः ते तव प्रसादात् सत्या सत्याः सन्तु यथार्थाभवन्तु तव सद्गुणग्राहिण्यइत्यर्थः। अपिच अहिंसन्तीः त्वां अहिंसत्यश्च भवन्तु सतिस्तुतित्वादनुद्वेजयन्त्यश्च भवन्त्वित्यर्थः। हे वज्रिव इन्द्र यासां स्तुतीनां संबन्धेन भुजोदृष्टादृष्टान् भोगान् विद्याम वयं लभेमहि। तत्र दृष्टान्तः—धेनूनां न गवां क्षीरादिभोगान् यथा गोस्वामी लभते तद्वत्। ताः सत्याभवन्त्विति पूर्वेणान्वयः॥ १३॥

अथ चतुर्दशी—

अहस्तायदपदीवर्धतक्षाःशचीभिर्वेद्यानाम्।
शुष्णंपरिप्रदक्षिणिद्विश्वायवेनिशिश्नथः॥ १४॥

अहस्ता। यत्। अपदी। वर्धत। क्षाः। शचीभिः। वेद्यानाम्।
शुष्णम्। परि। प्रऽदक्षिणित्। विश्वऽआयवे। नि। शिश्नथः॥ १४॥

हे इन्द्र यद्यदा क्षाः भूमिः अहस्ता पाणिरहिता अपदी चरणवर्जिता च अमनुष्यकर्मकेत्यर्थः वेद्यानां स्तोत्रयोग्यानां त्वत्प्रभृतीनां देवानां संबन्धिभिः शचीभिः कर्मभिर्वर्धत अवर्धत धनधान्यादिभिः समृद्धेत्यर्थः। तदा त्वं परिप्रदक्षिणित् एवंभूतां पृथिवीं परिवेष्ट्य प्रदक्षिणं यथा भवति तथा स्थितं शुष्णमसुरं विश्वायवे तादर्थ्ये चतुर्थी सर्वत्राप्रतिहतगामिनः एतदाख्यस्य और्वशेयराज्ञोर्थाय विशिश्नथः नितरां ताडितवानसि। यद्वा यदा शुष्णस्याच्छादनार्थं हस्तपादवर्जिता काचित् पृथिवी वेदितव्यानामसुराणां मायारूपैः कर्मभिः शुष्णं असुरं वेष्ट्य प्रदक्षिणं यथा भवति तथावस्थितावर्धत तदानीं तां मायोत्पादितां पृथिवीं विश्वायवे सर्वव्यापकस्य मरुद्गणस्य प्रवेशनार्थं निशिश्नथः नितरां हतवानसि॥ १४॥

अथ पंचदशी—

पिबापिबेदिन्द्रशूरसोमंमारिषण्योवसवानवसुःसन्।
उतत्रायस्वगृणतोमघोनोमहश्चरायोरेवतस्कृधीनः॥ १५॥ ८॥

पिबंऽपिब । इत् । इन्द्र । शूर । सोमम् । मा । रिषण्यः ।
वसवान । वसुः । सन् । उत । त्रायस्व । गृणतः । मघोनः ।
महः । च । रायः । रेवतः । कृधि । नः ॥ १५ ॥ ८ ॥

पिबपिबेति वीप्सा अतित्वराप्रदर्शनार्थं हे शूर वीरेन्द्र त्वं अभिषुतं सोमं शीघ्रं पिब यागकालातिपातोयावन्न भवति तावच्छीघ्रं सोमं पिबेत्यर्थः । इदितिपूरणः । हे वसवान वसूनां धनानामानेतस्त्वं वसुः प्रशस्तः सन् मारिषण्यः यागकालातिक्रमजातेन दोषेण अस्मान्माहिंसीः प्रशस्तस्य तव कर्मवैगुण्येन हिंसितुमयुक्तमित्यर्थः । उतापिच हे इन्द्र त्वं गृणतस्त्वां स्तुवतः स्तोतॄन् मघोनः हविर्लक्षणधनवतोयजमानांश्च त्रायस्व प्रमादजनितकर्मवैगुण्यदोषात् पालयस्व । किंच महश्चरायइत्युभयत्र तृतीयार्थे षष्ठी महोमहता रायोधनेन च नोस्मान् रेवतः कृधि धनवतः कुरु ॥ १५ ॥

॥ इति सप्तमस्य सप्तमेष्टमोवर्गः ॥ ८ ॥

यजामहइति सप्तर्चं सप्तमं सूक्तं प्रथमासप्तम्यौ त्रिष्टुभौ पंचम्यभिसारिणी द्विर्दशकवती द्विर्द्वादशकवतीत्यभिसारिणीत्युच्यते शिष्टाश्चतस्रोजगत्यः पूर्ववदृषिदेवते । तथाचानुक्रान्तं—यजामहेसप्ताद्यन्त्येत्रिष्टुभौ पंचम्यभिसारिणीति । चतुर्थेहनि माध्यन्दिनसवने तृतीयापंचम्योरावर्तनेन त्रीन् तृचान् होत्रकाएकैकं तृचमावपेरन् । सूत्रितंच—यजामहइन्द्रंवज्रदक्षिणमिति द्वितीयानेवमेवेति ।

तत्र प्रथमा—

यजामहइन्द्रंवज्रंदक्षिणंहरीणांरथ्यं१विव्रतानाम् ।
प्रश्मश्रुदोधुवदूर्ध्वथाभूद्विसेनाभिर्दयमानोविराधसा ॥ १ ॥

यजामहे । इन्द्रम् । वज्रऽदक्षिणम् । हरीणाम् । रथ्यम् ।
विऽव्रतानाम् । प्र । श्मश्रु । दोधुवत् । ऊर्ध्वऽथा । भूत् । वि ।
सेनाभिः । दयमानः । वि । राधसा ॥ १ ॥

वयमिन्द्रं यजामहे सोमलक्षणैर्हविर्भिः पूजयामः। कीदृशं वज्रदक्षिणं शत्रुवधाय सततं वज्रो दक्षिणहस्ते यस्य तं विव्रतानां रथवहनादिविविधकर्मणां हरीणां एतत्संज्ञकानामश्वानां रथ्यं आनेतारं सइन्द्रः सोमपानानन्तरं श्मश्रु स्वकीयानि श्मश्रूणि दोधुवत् पुनः पुनर्धुन्वानः सन् ऊर्ध्वथा ऊर्ध्वं प्रभूत् प्रादुरभूत्। किंच सेनाभिः मरुदादिस्वकीयैः सैन्यैः विदयमानः विविधं शत्रून् हिंसन् राधसा द्वितीयार्थेतृतीया राधोधनं वीत्युपसर्गश्रुतेर्योग्यक्रियाध्याहारः विविधं स्तोतृभ्योददाति ॥ १ ॥

अथ द्वितीया—

हरी॒न्व॑स्य॒या वने॑ वि॒दे वस्विन्द्रो॑ म॒घैर्म॒घवा॑ वृत्र॒हा भु॑वत् ।
ऋ॒भुर्वाज॑ ऋभु॒क्षाः प॑त्यते॒ शवोऽव॑ क्ष्णौमि॒ दास॑स्य॒ नाम॑ चि॒त् ॥ २ ॥

हरी॒ इति॑ । नु । अ॒स्य॒ । या । वने॑ । वि॒दे । वसु॑ । इन्द्रः॑ । म॒घैः ।
म॒घ॒ऽवा॑ । वृ॒त्र॒ऽहा । भु॒व॒त् । ऋ॒भुः । वाजः॑ । ऋ॒भु॒क्षाः ।
प॒त्य॒ते॒ । शवः॑ । अव॑ । क्ष्णौ॒मि॒ । दास॑स्य । नाम॑ । चि॒त् ॥ २ ॥

अस्येन्द्रस्य संबन्धिनौ या यौ हरी अश्वौ वने वन्यन्ते संभज्यन्तेस्मिन् देवाइति वनं यज्ञः अरण्यं वा तस्मिन् वसु ऋजीकलक्षणं धनं यवसलक्षणं वा नु क्षिप्रं विदे विन्देते लभेते। यद्वा यौ हरी अस्येन्द्रस्य वने संभजनार्थं वसुवसुनोलाभाय क्षिप्रं भवतइतिशेषः ताभ्यां हरिभ्यां मघैः धनैः मघवाधनवानिन्द्रः वृत्रहा वृत्राख्यासुरस्य मेघस्य वा हन्ता भुवत् भवति। अपिच ऋभुः दीप्तः वाजोबलवान् ऋभुक्षाः महानिन्द्रः शवः शवसोबलस्य धनस्य वा पत्यते ईष्टे। यद्वा शत्रूणां बलं प्रतिपत्यते पद्यतेगच्छति अहमपि तस्य प्रसादात् दासस्य उपक्षपयितव्यस्य शत्रोः नामचित् नम्यतेऽनेनेतिनाम शिरः तदपि अवक्ष्णौमि अवहन्मि किमुतान्यदंगं अथवा नामधेयमपि नाशयामि किमुत शत्रुं ॥ २ ॥

अथ तृतीया—

य॒दा वज्रं॒ हिर॑ण्य॒मिदथा॒ रथं॒ हरी॒ यम॑स्य॒ वह॑तो॒ वि सू॒रिभिः॑ ।
आ ति॑ष्ठति म॒घवा॒ सन॑श्रुत॒ इन्द्रो॒ वाज॑स्य दी॒र्घश्र॑वस॒स्पतिः॑ ॥ ३ ॥

यदा । वज्रम् । हिरण्यम् । इत् । अर्थ । रथम् । हरी इति ।
यम् । अस्य । वहतः । वि । सूरिऽभिः । आ । तिष्ठति ।
मघऽवा । सनऽश्रुतः । इन्द्रः । वाजस्य । दीर्घऽश्रवसः । पतिः ॥ ३॥

यदा इन्द्रोहिरण्यं हितरमणीयं वज्रं स्वकीयमायुधं शत्रुहननायगृह्णातीतिशेषः । इदिति पूरणः । अथ तदानीं अस्येन्द्रस्य हरी अश्वौ यं रथं विवहतः गन्तृप्रदेशं विशेषेण प्रापयतः मघवा धनवानिन्द्रः सूरिभिः स्तोतृभिः कुत्सादिभिः सह तं रथमातिष्ठति आरोहति । कीदृशः सनश्रुतः चिरप्रख्यातः जगति स्वभावतएव विख्यातइत्यर्थः । दीर्घश्रवसः बहुकीर्तेः वाजस्यान्नस्य पतिः स्वामी एवंभूतइन्द्रस्ते रथमारोहतीत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

सोचिन्नुवृष्टिर्यूथ्या३स्वासचाँइन्द्रःश्मश्रूणिहरिताभिप्रुष्णुते ।
अवर्वेतिसुक्षयंसुतेमधूदिद्धूनोतिवातोयथावनम् ॥ ४ ॥

सो इति । चित् । नु । वृष्टिः । यूथ्या । स्वा । सचा । इन्द्रः ।
श्मश्रूणि । हरिता । अभि । प्रुष्णुते । अव । वेति । सुऽक्षयम् ।
सुते । मधु । उत् । इत् । धूनोति । वातः । यथा । वनम् ॥ ४ ॥

तच्छब्दश्रुतेर्यच्छब्दोध्याहर्तव्यः या महती वृष्टिरस्ति सो सा वृष्टिः नु क्षिप्रं चिदित्युपमार्थे यथा सर्वं सिंचति तथा इन्द्रः स्वा स्वानि यूथ्या यूथ्यानि मरुदादिगणलक्षणानि सचा सह स्वानि श्मश्रूणि च हरिता हरिद्वर्णेन सोमेन च अभिप्रुष्णुते । प्रुषप्लुष स्नेहनसेचनपूरणेष्वितिधातुः आभिमुख्येनस्थित्वा क्षिप्रं सिंचति सोमं पाययति पिबति चेत्यर्थः । अपिच सुक्षयं शोभनं यज्ञगृहं अववेति अभिगच्छति गत्वा च सुते सोमेभिषुते सति मधु मधुररसोपेतं सोमं पीत्वा मत्तः सन्नितिशेषः उदिद्धूनोति स्वशरीरमुत्कंपयति । तत्र दृष्टान्तः—वातोवायुः यथा वनं वृक्षसमूहं उत्कंपयति तद्वत् ॥ ४ ॥

अथ पंचमी—

योवाचाविवाचोमृध्रवाचःपुरूसहस्राशिवाजघान ।
तत्तदिदस्यपौंस्यंगृणीमसिपितेवयस्तविषींवावृधेशवः ॥ ५ ॥

यः । वाचा । विऽवाचः । मृध्रऽवाचः । पुरु । सहस्रा । अशिवा । जघान । ततऽतत् । इत् । अस्य । पौंस्यम् । गृणीमसि । पिताऽइव । यः । तविषीम् । ववृधे । शवः ॥ ५ ॥

यइन्द्रः वाचा वाङ्मात्रेणैव विवाचः विविधवाचः स्वशत्रून् मृध्रवाचः हिंसितवाचः कृत्वेतिशेषः पुरु पुरूणि बहूनि अशिवा अशिवान्यसुखकराणि दुःखकराणीत्यर्थः सहस्रा शत्रूणां सहस्राणि जघान हन्ति अपिच यश्चेन्द्रः पितेव यथापिता पुत्रस्य तविषीं बलं अन्नमदानैर्ववृधे वर्धयति तथा वृष्टिद्वारेण सर्वस्य जगतः शवोबलं ववृधे वर्धयति । अस्येन्द्रस्य तत्तदित् तत्तदेव पौंस्यं बलं गृणीमसि वयं स्तुमः । इन्द्रोयेन येन बलेन शत्रून् हन्ति तस्य तत्तद्बलं वयं स्तुमइत्यर्थः ॥ ५ ॥

अथ षष्ठी—

स्तोमंतइन्द्रविमदाअजीजनन्नपूर्व्यंपुरुतमंसुदानवे ।
विद्माह्यस्यभोजनमिनस्ययदापशुंनगोपाःकरामहे ॥ ६ ॥

स्तोमम् । ते । इन्द्र । विऽमदाः । अजीजनन् । अपूर्व्यम् । पुरुऽतमम् । सुऽदानवे । विद्म । हि । अस्य । भोजनम् । इनस्य । यत् । आ । पशुम् । न । गोपाः । करामहे ॥ ६ ॥

हे इन्द्र ते तुभ्यं सुदानवे शोभनदानस्यार्थाय विमदा विमदनामानोवयं स्तोमं स्तोत्रविशेषंअजीजनन् जनितवन्तः कृतवन्तइत्यर्थः।अत्रपूर्वोत्तरयोरेकवाक्ययोःपुरुषव्यत्ययः।कीदृशं अपूर्व्यं अपूर्वं अन्यैः पूर्वमकृतं उत्कृष्टमित्यर्थः।पुरुतमं बहुतमं नानाप्रकारोपेतमित्यर्थः। हि यस्मात्कारणात् हे इन्द्र इनस्येश्वरस्य अस्य ईदृशस्य तव यद्भोजनं धनमस्ति तत् विद्म वयं जानीमः । तस्मात्कारणात् त्वदीयं तद्धनं आकरामहे वयं अस्मदभिमुखं कुर्महे।तत्र दृष्टान्तः—पशुं न गोपाः यथा गोपालः धेनुमाह्वयन् स्वस्याभिमुखीं करोति तद्वत् ॥ ६ ॥

अथ सप्तमी—

माकिर्नएनासख्याविर्यौषुस्तवंचेन्द्रविमदस्यचऋषेः ।
विद्माहितेप्रमतिंदेवजामिवदस्मेतेसन्तुसख्याशिवानि ॥ ७ ॥१॥

माकिः । नः । एना । सख्या । वि । यौषुः । तव । च । इन्द्र ।
विऽमदस्य । च । ऋषेः । विद्म । हि । ते । प्रऽमतिम् । देव ।
जामिऽवत् । अस्मे इति । ते । सन्तु । सख्या । शिवानि ॥७॥९॥

हे इन्द्र ते तव च विमदस्य ऋषेर्मम च नः अस्मदोद्वयोश्चेतिद्वयोर्बहुवचनं आवयोः एना एनानि सख्या सख्यानि स्तुत्यस्तोतृत्वेन यष्टव्ययष्टृत्वेन च सखिकर्माणि माकिर्वियौषुः केचिदपि न विश्लथयेयुः । अपिच हि यस्मात्कारणात् हे देव द्योतमानेन्द्र ते तव प्रमतिं प्रकृष्टांमतिं अनुग्राहिकां बुद्धिं विद्म जानीमः । तत्र दृष्टान्तः—जामिवत् यथा भ्राता स्वभगिन्या स्नेहयुक्तां मतिं जानाति तद्वत् तस्मात्कारणात् अस्मे अस्माकं ते तव च सख्या सख्यानि शिवानि सन्तु मंगळानि भवन्तु अनपायानीत्यर्थः ॥ ७ ॥

॥ इति सप्तमस्य सप्तमे नवमोवर्गः ॥ ९ ॥

इन्द्रसोममिति षळृचमष्टमं सूक्तं चतुर्थ्याद्यास्तिस्रोनुष्टुभोश्विदेवत्याः आदितस्तिस्रऐन्द्यः आस्तारपंक्तिच्छन्दकाः । आदितोद्वौ गायत्रौ ततोद्वौ जागतौ सा आस्तारपंक्तिः । ऋषिः पूर्ववत् । तथाचानुक्रान्तं—इन्द्रसोमंषळास्तारपांक्तंत्वाश्विन्योन्त्यास्तिस्रोनुष्टुभइति । गतोविनियोगः ।

तत्र प्रथमा—

इन्द्रसोमंमिमंपिबमधुमन्तंचमूसुतम् ।
अस्मेरयिंनिधारयविवोमदेसहस्रिणंपुरूवसोविवक्षसे ॥ १ ॥

इन्द्र । सोमम् । इमम् । पिब । मधुऽमन्तम् । चमू इति । सुतम् ।
अस्मे इति । रयिम् । नि । धारय । वि । वः । मदे । सहस्रिणम् ।
पुरुवसो इति । पुरुऽवसो । विवक्षसे ॥ १ ॥

हे इंद्र त्वं इममीदृशं सोमं पिब । कीदृशं मधुमन्तं मधुररसोपेतं चमू चम्वोः अधिषवणफलकयोः सुतमभिषुतं तदनंतरं पुरुवसो बहुधन हे इंद्र वः तव विमदे विशेषेण सोमजन्यमदे सति अस्मे अस्मासु रयिं धनं निधारय नितरां स्थापय । कीदृशं सहस्रिणं सहस्रसं-

स्यायुक्तं प्रभूतमित्यर्थः। त्वया दत्तेन धनेन यस्माद्वयं पुनरपि त्वदर्थं यागं कुर्मः तस्मादस्मासु धनं निधेहीत्यर्थः। अतः कारणाद्विवक्षसे महन्नामैतत् त्वं महान् भवसि ॥ १ ॥

अथ द्वितीया—

त्वांयज्ञेभिंरुक्थैरुपंहव्येभिंरीमहे।
शचींपतेशचीनांविवोमदेश्रेष्ठंनोधेहिवार्यंविवंक्षसे ॥ २ ॥

त्वाम्। यज्ञेभिः। उक्थैः। उपं। हव्येभिः। ईमहे। शचीऽपते।
शचीनाम्। वि। वः। मदें। श्रेष्ठम्। नः।
धेहि। वार्यम्। विवंक्षसे ॥ २ ॥

हे इन्द्र वयं यज्ञेभिर्यज्ञैः सोमयागादिभिः उक्थैः शस्त्रलक्षणैः स्तोत्रैः हव्येभिर्हव्यैः पुरोडाशादिभिश्च उपेत्युपसर्गश्रुतेर्योग्यपदाध्याहारः त्वामुपेत्य ईमहे अभिलषितं धनं याचामहे। अतः हे शचीपते कर्मणां पालक यतः त्वं केषांचित्कर्मणां पालकोभवसि इति न किंतु शचीनां सर्वेषां कर्मणां पालकोभवसीत्यर्थः। एवं याचितस्त्वं नोस्मभ्यं वार्यं वरणीयं श्रेष्ठं प्रशस्यतमं पश्वादिधनं धेहि देहि। शिष्टं स्पष्टं ॥ २ ॥

अथ तृतीया—

यस्पतिर्वार्याणामसिंरध्रस्यंचोदिता।
इन्द्रंस्तोतॄणामविताविवोमदेंद्विषोनःपाह्यंहसोविवंक्षसे ॥ ३ ॥

यः। पतिः। वार्याणाम्। असिं। रध्रस्यं। चोदिता।
इन्द्रं। स्तोतॄणाम्। अविता। वि। वः। मदें। द्विषः।
नः। पाहि। अंहसः। विवंक्षसे ॥ ३ ॥

हे इन्द्र यस्त्वं वार्याणां वरणीयानां धनानां पतिरसि स्वामी भवसि। रध्रस्य राधकस्य स्तोतुश्चोदिता धनदानेन कर्मसु नियोक्ता च भवसि। किंच हे इंद्र यस्त्वं स्तोतॄणां अविता रक्षकोसि सत्वं विवोमदे तव विविधे सोमजन्यमदे सति द्विषोद्वेष्टुः सकाशात् नोस्मान् पाहि रक्ष अंहसः पापाच्च रक्ष। कस्मादेवमुच्यसे यस्मात्त्वं विवक्षसे महान् भवसि ॥ ३ ॥

अथ चतुर्थी—

युवं शक्रामायाविनासमीचीनिरमन्थतम् ।
विमदेनयदीळितानासत्यानिरमन्थतम् ॥ ४ ॥

युवम् । शक्रा । मायाविना । समीची इति सम्ऽईची । निः ।
अमन्थतम् । विऽमदेन । यत् । ईळिता ।
नासत्या । निःऽअमन्थतम् ॥ ४ ॥

हे शक्रा शक्तौ शत्रुवधादिकर्मसु समर्थौ हे अश्विनौ मायाविना मायाविनौ प्रज्ञावंतौ शत्रुवंचनकुशलौ वा युवं युवां समीची परस्परं संगतौ निरमन्थतं अग्निं निरमथीतं। अश्विनावध्वर्यूइतिब्राह्मणोक्तत्वात् । अग्निमंथनमप्यश्विनोरुपपन्नमिति । कदाश्विनौ निर्मथितवंतौ उच्यते--यद्यदा नासत्या नासत्यौ युवां विमदेन मया ईळिता ईळितौ स्तुतौ निरमंथतं निरमथीतं तदानीं युवां परस्परं संगतौ निर्मथितवन्तौ स्थइत्यर्थः॥ ४ ॥

अथ पञ्चमी—

विश्वेदेवाअकृपन्तसमीच्योर्निष्पतन्त्योः ।
नासत्यावब्रुवन्देवाःपुनरावहतादिति ॥ ५ ॥

विश्वे । देवाः । अकृपन्त । सम्ऽईच्योः । निःऽपतन्त्योः । नासत्यौ ।
अब्रुवन् । देवाः । पुनः । आ । वहतात् । इति ॥ ५ ॥

हे अश्विनौ युवाभ्यां अग्निमंथनकाले प्रेर्यमाणयोः समीच्योः परस्परेण संयुक्तयोररण्योर्निष्पतन्त्योः विस्फुलिंगान्निर्गमयन्त्योः सत्योः विश्वे सर्वे इन्द्रादयोदेवाः अकृपंत युवामस्तुवन् । किंच देवाः नासत्यावश्विनौ युवामब्रुवन् अवोचन् । किमिति पुनरावहतादिति पुनः पुनः ईदृशानि जगत्स्थितिहेतुभूतानि कर्माणि युवामाभिमुख्येन स्थित्वावहतां यद्वा युवाभ्यामुत्पाद्यमानः पुनश्चायमग्निः अस्मदीयानि हवींषि आवहत्विति देवानासत्यावब्रुवन् ॥ ५॥

---

१ ऐ० ब्रा० १. १७.।

अथ षष्ठी—

मधुमन्मेपरायणंमधुमत्पुनरायनम् ।
तानोदेवादेवतयायुवंमधुमतस्कृतम् ॥ ६ ॥ १० ॥

मधुऽमत् । मे । पराऽअयनम् । मधुऽमत् । पुनः । आऽअयनम् ।
ता । नः । देवा । देवतया । युवम् । मधुऽमतः । कृतम् ॥ ६ ॥ १० ॥

हे अश्विनौ मे मदीयं परायणं गृहात्परागमनं मधुमत् अत्र रसविशेषवाचिना मधुशब्देन तद्वता प्रीतिर्लक्ष्यते युवयोः प्रसादात्प्रीतियुक्तं भवत्वितिशेषः । पुनः आयनं गृहं प्रत्यागमनं मधुमत्प्रीतियुक्तं भवतु । अपिच हे देवा देवौ द्योतमानौ ता तौ युवं युवां नोस्मान् मधुमतः प्रीतियुक्तान् कृतं कुरुतं । केनेति उच्यते—देवतया देवत्वेन अणिमादिदेवतैश्वर्ययोगेनेत्यर्थः ॥ ६ ॥

॥ इति सप्तमस्य सप्तमे दशमोवर्गः ॥ १० ॥

भद्रमित्येकादशर्चं नवमं सूक्तं तुह्यादिपरिभाषयेदमप्यास्तारपाङ्क्तं सोमदेवताकं ऋषिश्चान्यस्मादितिपरिभाषया प्राजापत्यऐन्द्रोवा विमदोवा वसुक्रोवसुकृद्वा ऋषिः । तथाचानुक्रान्तम्—भद्रमेकादशसौम्यमिति । गतोविनियोगः ।

तत्र प्रथमा—

भद्रंनोअपिवातयमनोदक्षमुतक्रतुम् ।
अधातेसख्येअन्धसोविवोमदेरणन्गावोनयवसेविवक्षसे ॥ १ ॥

भद्रम् । नः । अपि । वातय । मनः । दक्षम् । उत ।
क्रतुम् । अध । ते । सख्ये । अंधसः । वि । वः । मदे ।
रणन् । गावः । न । यवसे । विवक्षसे ॥ १ ॥

हे सोम त्वं नोस्मदीयं मनः भद्रं कल्याणं वातय गमय अस्माकं मनः शुभसंकल्पं कुर्वित्यर्थः । तथा दक्षमुत दक्षमपि दक्षवृद्धौ वृद्धं सर्वव्यापिनं अन्तरात्मानमपि भद्रं शुभकारिलक्षणं प्रापय अस्माकमन्तरात्मानं शुभकारिणं कुर्वित्यर्थः । उत अपिच क्रतुं प्रज्ञानं भद्रं

शुभाध्यवसायलक्षणं प्रापय शुभाध्यवसायिनं कुर्वित्यर्थः । अध अथ स्तोतारः ते तव सख्ये स्तुत्यस्तोतृत्वेज्ययष्टृत्वलक्षणे सखिकर्मणि रणन् रमंतां । तत्र दृष्टांतः—गावोन यवसे । यथा धेनवोघासे रमंते प्रीतिं कुर्वंति तद्वत् । कस्मिन् सति अन्धसः सोमाख्यस्यान्नस्य संबंधिनि वः तव विमदे विविधसोमजन्यमदनिमित्ते सति । कस्मादेवं यस्माद्विवक्षसे महान् भवसि ॥ १

अथ द्वितीया—



हृदिस्पृशस्तआसतेविश्वेषुसोमधामसु ।
अधाकामाइमेममविवोमदेवितिष्ठन्तेवसूयवोविवक्षसे ॥ २ ॥

हृदिऽस्पृशः । ते । आसते । विश्वेषु । सोम । धामऽसु ।
अध । कामाः । इमे । मम । वि । वः । मदे ।
वि । तिष्ठन्ते । वसुऽयवः । विवक्षसे ॥ २ ॥

हे सोम ते तव हृदिस्पृशः स्तुतिभिः हृदयं स्पृशंतऋत्विजः विश्वेषु धामसु सर्वेषु स्थानेषु आसते त्वां स्तुवंतस्तिष्ठन्ति । अध अथ इमे ईदृग्भूताः कामाः अभिलाषाः विवोमदे तव सोमपानजन्यविविधे मदनिमित्ते सति सोमयागार्थमित्यर्थः । वसूयवोवसुकामाः धनमिच्छन्तः मम हृदयादितिशेषः वितिष्ठन्ते उत्तिष्ठन्ति । कस्मादेवं यस्माद्विवक्षसे महान् भवसि ॥ २ ॥

अथ तृतीया—

उतव्रतानिसोमतेप्राहंमिनामिपाक्या ।
अधापितेवसूनवोविवोमदेमृळानोअभिचिद्वधाद्विवक्षसे ॥ ३ ॥

उत । व्रतानि । सोम । ते । प्र । अहम् । मिनामि । पाक्या ।
अध । पिताऽइव । सूनवे । वि । वः । मदे । मृळ ।
नः । अभि । चित् । वधात् । विवक्षसे ॥ ३ ॥

उतापिच हे सोम अहं ते तुभ्यं व्रतानि यागादिकर्माणि पाक्या परिपक्कया सर्वार्थदर्शिन्या प्रज्ञया । यद्वा पाक्येति व्रतविशेषणमेतत् पाक्यानि परिपक्कानि परिनिष्ठितानीत्यर्थः । प्रमिनामि प्रहिनस्मि प्रकर्षेण करोमीत्यर्थः । अधाथ यागानंतरं विवोमदे तव विविधे मदे सति नोस्मान् मृळ सुखय अतिचिद्वधात् आभिमुख्येन स्थित्वा शत्वादिवधाच्च अस्मान् पालयेतिशेषः । तत्र दृष्टांतः—पितेव सूनवे । यथा पिता पुत्रार्थं सुखयति सर्वस्मात् पुत्रमेव पालयति तद्वत् । यस्मात्सुख्यमानः पाल्यमानश्चाहं युष्मदर्थं पुनःपुनः सोमयागं करोमि तस्मान्मां सुखय पालय चेत्यर्थः । कस्मादेवमुच्यसे यस्मात्त्वं विवक्षसे महान् भवसि महान्तश्च भक्तान् सुखयन्ति पालयन्ति चेति यावत् ॥ ३ ॥

अथ चतुर्थी—

समु॒प्रय॑न्तिधी॒तय॑ःसर्गा॑सोऽव॒ताँइ॑व ।
क्रतुं॑नःसोमजी॒वसे॒विवो॒मदे॑धा॒रया॑चम॒साँइ॑व॒विव॑क्षसे ॥ ४ ॥

सम् । ऊँ इति॑ । प्र । य॒न्ति॒ । धी॒तय॑ः । सर्गा॑सः । अ॒व॒तान्ऽइ॑व ।
क्रतु॑म् । न॒ः । सो॒म॒ । जी॒वसे॑ । वि । व॒ः । मदे॑ ।
धा॒रय॑ । च॒म॒सान्ऽइ॑व । विव॑क्षसे ॥ ४ ॥

हे सोम धीतयः देवतागुणान् दधति गृह्णन्तीति धीतयः स्तुतयः अस्मदीयाः समु संभूयैव प्रयन्ति । प्रकृष्टया गत्या त्वां गच्छन्ति तत्र दृष्टान्तः—सर्गासोवतानिव विसृज्यन्ते उदकपानार्थमिति सर्गागोसंघाः यत्रस्थावटसंघावा ते यथा उदकपानार्थमादानार्थं वा अवतान् कूपनामैतत् कूपान् प्रतिगच्छन्ति तद्वत् त्वमप्येतत् ज्ञात्वा क्रतुं यागादिकं कर्म प्रज्ञां वा नोस्माकं जीवसे चिरंजीवनाय धारय महतादरेण स्थापय । तत्र दृष्टान्तः—चमसानिव यथा वस्तव विमदे विविधसोमजन्यमदेकर्तव्यत्वेन निमित्तभूते सति अध्वर्युर्हविर्धाने महता यत्नेन चमसान् सोमपात्राणिस्थापयति तद्वत् कस्मादेवमुच्यसे यस्मात्त्वं विवक्षसे महान् भवसि । यद्वा-धीतयः अंगुलिनामैतत् धयन्ति पिबन्त्याभिरिति धीतयोङ्गुलयः हे सोम त्वां समुप्रयन्ति संहैव प्रकर्षेण त्वां प्राप्नुवन्ति । किमिव अवतानिव जलोद्धरणार्थं विसृज्यन्तइति सर्गाः रज्जवः यथा कूपान्प्रति गच्छन्ति तद्वत् । ततस्त्वं नोस्माकं जीवसे चिरं जीवनाय क्रतुं कर्म धारय यथा संपूर्णं भवति तथा पूरय । किमिव यथा चमसान् स्वयं पूरयसि तद्वत् ॥ ४ ॥

अथ पञ्चमी—

तवत्येसोमशक्तिभिर्निकामासोव्यृण्विरे ।
गृत्संस्यधीरांस्तवसेविवोमदेंव्रजंगोमन्तमश्विनंविवंक्षसे ॥५॥११॥

तवं । त्ये । सोम । शक्तिऽभिः । निऽकांमासः । वि । ऋण्विरे ।
गृत्संस्य । धीरांः । तवसंः । वि । वः । मदें । व्रजम् ।
गोऽमन्तम् । अश्विनंम् । विवंक्षसे ॥ ५ ॥ ११ ॥

निकामासः दृष्टादृष्टफले नियतकामाः त्ये ते प्रसिद्धाधीरा मेधाविनऋत्विजः शक्तिभिर्यागादिकर्मभिः सह हे सोम गृत्सस्य मेधाविनः तवसः महतस्तव व्यृण्विरे विविधाः स्तुतीर्गमयन्ति प्रापयन्ति कुर्वन्तीत्यर्थः । अतः कारणात् विवोमदे तव सोमपानजन्यविविधमदनिमित्तभूते सति अस्मभ्यं गोमंतं गोसहितं अश्विनं अश्वसहितं व्रजं गोष्ठं सामर्थ्यान्मन्दुरा लभ्यते मन्दुरां च देहीतिशेषः । कस्मादेवमुच्यसे यस्माद्विवक्षसे महान् भवसि ॥ ५ ॥

॥ इति सप्तमस्य सप्तमे एकादशोवर्गः ॥ ११ ॥

अथ षष्ठी—

पशुंनःसोमरक्षसिपुरुत्राविष्ठितंजगंत् ।
समाकृंणोषिजीवसेविवोमदेविश्वांसंपश्यन्भुवंनाविवंक्षसे ॥ ६ ॥

पशुम् । नः । सोम । रक्षसि । पुरुऽत्रा । विऽस्थितम् । जगंत् ।
समऽआकृंणोषि । जीवसें । वि । वः । मदें । विश्वां ।
समऽपश्यंन् । भुवंना । विवंक्षसे ॥ ६ ॥

हे सोम त्वं नोस्मदीयं पशुं देवयागार्थमुपाकृतं रक्षसि पालयसि न केवलं पशुं किंतु पुरुत्रा बहुधा विष्ठितं सुरनरतिर्यग्योन्यादिभावेनावस्थितं जगच्च रक्षसि । किंच सत्वं समाकृणोषि जगतोवृत्तिं सम्यगाकरोषीत्यर्थ । किमर्थं जीवसे जीवनार्थं । किं कुर्वन् विश्वा भुवना विश्वानि भुवनानि भूतजातानि संपश्यन् । किमर्थमेतदादिकं सर्वं करोषि । उच्यते—विवोमदे युष्माकंसर्वेषां देवानां विविधहविर्जन्यतृप्त्यर्थं । उक्तंहि— इतःप्रदानमुतदेवाउपजीव-

न्यमुतः प्रदानंमनुष्याउपजीवन्तीति। अतएव त्वं विवक्षसे महन् भवसि महतामेतत्सर्वमुचितमित्यर्थः ॥ ६ ॥

अथ सप्तमी—

त्वंनः॑सोमविश्वतो॑गोपाअदा॑भ्योभव ।
सेधं॑राजन्नपस्रिधो॒विवो॒मदे॒मानो॑दुःशंसईशताविवंक्षसे ॥ ७ ॥

त्वम् । नः॒ । सो॒म॒ । वि॒श्वतः॑ । गो॒पाः । अदा॑भ्यः । भ॒व॒ । सेधं॑ ।
रा॒ज॒न् । अपं॑ । स्रिधः॑ । वि । वः॒ । मदे॑ । मा । नः॒ । दुः॒ऽशंसः॑ ।
ई॒श॒त॒ । विवं॑क्षसे ॥ ७ ॥

हे सोम अदाभ्यः केनाप्यहिंस्यस्त्वं विश्वतः सर्वतः नोस्माकं गोपाः रक्षिता भव। अपिच हे राजन् राजमान सोम त्वं स्रिधः अस्माकमुपक्षपयितॄन् अपसेध अस्मत्तः अपगमय अपजहि च नोस्माकं दुःशंसः विद्यमानानां अविद्यमानानां कर्मणां शंसिता प्रख्यापयिता माईशत ईशिता माभूत् तव प्रसादादस्माकमपवक्ता कश्चिदपि माभूदित्यर्थः। किमर्थमेतत्सर्वंमार्थ्यसे विवोमदे तव विविधसोमादिहविर्जन्यतृप्त्यर्थं। अतोविवक्षसे त्वं महान् भवसि ॥ ७ ॥

अथाष्टमी—

त्वंनः॑सोमसुक्रतु॑र्वयो॒धेया॑यजागृहि ।
क्षेत्रवित्त॑रो॒मनु॑षो॒विवो॒मदे॑द्रुहोनः॑पा॒ह्यंह॑सो॒विवं॑क्षसे ॥ ८ ॥

त्वम् । नः॒ । सो॒म॒ । सु॒ऽक्रतुः॑ । व॒यः॒ऽधेया॑य । जा॒गृ॒हि॒ ।
क्षे॒त्र॒वित्ऽत॑रः । मनु॑षः । वि । वः॒ । मदे॑ । द्रु॒हः॑ । नः॒ । पा॒हि॒ ।
अंह॑सः । विवं॑क्षसे ॥ ८ ॥

हे सोम सुक्रतुः शोभनप्रज्ञः क्षेत्रवित्तरः क्षेत्रस्यातिशयेन लंभकः त्वं नोस्माकं वयोधेयाय अन्नदानाय जागृहि। किंच द्रुहः द्रोग्धुः मनुषोमनुष्याच्छत्रोः सकाशान्नोस्मान्पाहि रक्ष अंहसः पापाच्च नोस्मान्पाहि। किमर्थं विवोमदे तव सोमादिहविर्जन्यतृप्त्यर्थमित्यर्थः। विवक्षसे त्वं महान् भवसि ॥ ८ ॥

अथ नवमी—

त्वंनो॑वृत्रहन्तमेन्द्र॑स्येन्दोशि॒वःसखा॑ ।
यत्सीं॒हव॑न्तेसमि॒थेविवो॒मदे॑युध्य॑मानास्तो॒कसा॑तौ॒विव॑क्षसे ॥ ९ ॥

त्वम् । नः॒ । वृ॒त्र॒ह॒न्ऽत॒म॒ । इन्द्र॑स्य । इ॒न्दो॒ इति॑ । शि॒वः । सखा॑ ।
यत् । सी॒म् । हव॑न्ते । स॒म्ऽइ॒थे । वि । वः॒ । मदे॑ । युध्य॑मानाः ।
तो॒कऽसा॑तौ । विव॑क्षसे ॥ ९ ॥

हे वृत्रहन्तम शत्रूणामतिशयेन हंतः हे इन्दो हे सोम यस्त्वं इन्द्रस्य शिवः सुखकरः सखा मित्रभूतोसि सत्वं नोस्मान्पाहीतिशेषः । कदेति उच्यते—तोकसातौ तोकइत्यपत्यनाम सातिः षणुदाने इत्यस्माद्धातोरूपं दीयतेस्मिन्नपत्यमितितोकसातिः संग्रामविशेषणं तस्मिन् अतिमहतीत्यर्थः समिथे संग्रामे युद्धमानाः युद्धं कुर्वाणाः शत्रुजनाः सीं सर्वतः यद्यदा हवन्ते युद्धार्थमस्मानाह्वयन्ति तदास्माकं रक्षिताभवेत्यर्थः । कस्मिन्निमित्ते विवोमदे तव विविधहविर्जन्यहर्षनिमित्ते । विवक्षसे त्वं महान् भवसि महतां हि पालनं युक्तमेवेति ॥ ९ ॥

अथ दशमी—

अ॒यंघ॒सतु॒रोम॒द॒इन्द्र॑स्यवर्धतप्रि॒यः ।
अ॒यंक॒क्षीव॑तोम॒होविवो॒मदे॑म॒तिंविप्र॑स्यवर्धय॒द्विव॑क्षसे ॥ १० ॥

अ॒यम् । घ॒ । सः । तु॒रः । मदः॑ । इन्द्र॑स्य । व॒र्ध॒त॒ । प्रि॒यः ।
अ॒यम् । क॒क्षीव॑तः । म॒हः । वि । वः॒ । मदे॑ । म॒तिम् ।
विप्र॑स्य । व॒र्धय॑त् । विव॑क्षसे ॥ १० ॥

अयं घ ईदृशः खलु सप्रसिद्धोस्माभिरभिषुतः सोमः तुरः सर्वकार्येषु त्वरणशीलः मदोमदकरः प्रियः इन्द्रस्य तर्पयिता वर्धत अस्मदीयां मतिं अवर्धयत् । अयं सोमः कक्षीवतः एतदाख्यस्य ऋषेः कीदृशस्य महोमहतः विप्रस्य मेधाविनः मतिं प्रज्ञां वर्धयत् अवर्धयत् । तद्वदस्माकमपि मतिमवर्धयदित्यर्थः । शिष्टं गतं ॥ १० ॥

अथैकादशी—

अयंविप्रा॑यदा॒शुषे॒वाजाँ॑इयर्ति॒गोम॑तः ।
अ॒यंस॒मभ्य॒आव॒रंविवो॒मदे॒प्रान्धंश्रो॒णंच॑तारिषद्विव॑क्षसे॥११॥१२॥

अ॒यम् । विप्रा॑य । दा॒शुषे॑ । वाजा॑न् । इ॒य॒र्ति॒ । गोऽम॑तः ।
अ॒यम् । स॒प्तऽभ्यः॑ । आ । वर॑म् । वि । वः॒ । मदे॑ । प्र । अ॒न्धम् ।
श्रो॒णम् । च॒ । ता॒रि॒ष॒त् । विव॑क्षसे ॥ ११ ॥ १२ ॥

अयं सोमः विप्राय मेधाविने दाशुषे हविर्दत्तवते यजमानाय गोमतः पशुयुक्तानि वाजान् अन्नानि इयर्ति प्रेरयति प्रयच्छतीत्यर्थः । किंच अयमेव सोमः सप्तभ्यः होत्राभ्यः वरं वरणीयं धनं आप्रयच्छति अन्धं नेत्रहीनं दीर्घतमसमृषिं चक्षुःप्रदानेन श्रोणं च पंगुं परावृजमृषिं चरणप्रदानेन एवमुभावृषी प्रतारिषत् प्रकर्षेण वर्धितवान् शिष्टं स्पष्टम् ॥ ११ ॥

॥ इति सप्तमस्य सप्तमे द्वादशोवर्गः ॥ १२ ॥

प्रहीति नवर्चं दशमं सूक्तं आनुष्टुभं पूषदेवताकं आद्याचतुर्थ्यौ उष्णिहौ ऋषिः पूर्ववत् तथाचानुक्रान्तम्—प्रहिनवपौष्णमानुष्टुभमाद्याचतुर्थ्यावुष्णिहाविति । गतोविनियोगः ।

तत्र प्रथमा—

प्रह्यच्छा॑मनी॒षाःस्पा॒र्हायन्ति॑नि॒युतः॑ ।
प्रद॒स्रानि॒युद्र॑थःपू॒षाअ॑विष्टु॒माहि॑नः ॥ १ ॥

प्र । हि । अच्छ॑ । म॒नी॒षाः । स्पा॒र्हाः । यन्ति॑ । नि॒ऽयुतः॑ ।
प्र । द॒स्रा । नि॒युत्ऽर॑थः । पू॒षा । अ॒वि॒ष्टु॒ । माहि॑नः ॥ १ ॥

हि यस्मात्कारणात् मनीषाः अस्मदीयाः स्तुतिलक्षणावाचः अच्छ गुणग्रहणद्वारेण पूषणमभिप्राप्तुं प्रयन्ति प्रकर्षेण गच्छन्ति । कीदृश्यः स्पार्हाः सर्वगुणोपेतत्वात् स्पृहणीयाः नियुतः नियमनाद्वा नियोजनाद्वेत्येतद्रूपं अस्माभिर्नियमितावानियुतावा उच्चारिताइत्यर्थः एतत् ज्ञात्वा उपकारस्य प्रत्युपकारं कर्तुं दस्रा दर्शनीयः नियुद्रथः गमनाय सर्वदानियुतरथोनियुक्तरथोवा माहिनः महान् पूषा देवः प्राविष्टु अस्मान्प्रकर्षेणरक्षतु । यद्वा दस्रा दंसयितारौ कर्मणामुपक्षपयितारौ परिसमापयितारावित्यर्थः एवं भूतौ पत्नीयजमानौ पूषा रक्षत्विति योज्यम् ॥ १ ॥

धेया
क्ष अं
वक्षसे

अथ द्वितीया—

यस्यत्यन्महित्वंवाताप्यंमयंजनः ।
विप्रआवंसद्धीतिभिश्चिकेतसुष्टुतीनाम् ॥ २ ॥

यस्यं । त्यत् । महिऽत्वम् । वाताप्यंम् । अयम् । जनः ।
विप्रः । आ । वंसत् । धीतिऽभिः । चिकेत । सुऽस्तुतीनाम् ॥ २ ॥

विप्रोमेधावी अयं यजमानजनः यस्य पूष्णः संबंधि त्यत्तत् प्रसिद्धं महित्वं महत्वं वाताप्यं मण्डले संभृतं परिपक्वमुदकंधीतिभिः यागादिकर्मभिः आवंसत् संभजते सदेवः सुष्टुतीनां तदीयाः शोभनाः स्तुतीः चिकेत जानातु ॥ २ ॥

अथ तृतीया—

सवेदसुष्टुतीनामिन्दुर्नपूषावृषा ।
अभिप्सुरःप्रुषायतिव्रजंनआप्रुषायति ॥ ३ ॥

सः । वेद । सुऽस्तुतीनाम् । इन्दुः । न । पूषा । वृषा ।
अभि । प्सुरः । प्रुषायति । व्रजम् । नः । आ । प्रुषायति ॥ ३ ॥

यउक्तगुणः सपूषा सुष्टुतीनां शोभनस्तोत्राणां स्वरूपमितिशेषः वेद जानाति अपिच इन्दुर्न सोमइव तथा अयं पूषा वृषा कामानां वर्षिता भवति। प्सुरः रूपवान् सन् अभि अस्मानभिलक्ष्य प्रुषायति सिंचति । तथा नोस्माकं व्रजं गोष्ठं च आप्रुषायति आभिमुख्येन सिंचति अस्मभ्यं हिरण्यपश्वादिकं ददातीत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

मंसीमहित्वावयमस्माकंदेवपूषन् ।
मतीनांचसाधनंविप्राणांचाधवम् ॥ ४ ॥

मंसीमहि । त्वा । वयम् । अस्माकम् । देव । पूषन् ।
मतीनाम् । च । साधनम् । विप्राणाम् । च । आऽधवम् ॥ ४ ॥

हेदेव द्योतमान पूषन् वयं स्तोतारः त्वा त्वां मंसीमहि स्तुमः । कीदृशं अस्माकं अस्मदीयानां मतीनां च अभिलषितानां च साधनं साधयितारं विप्राणां च मेधाविनामपि आधवं परिचर्याद्वारेण कंपयितारं ॥ ४ ॥

अथ पञ्चमी—

प्रत्यर्धिर्यज्ञानामश्वहयोरथानाम् ।
ऋषिःसयोमनुर्हितोविप्रस्ययावयत्सखः ॥ ५ ॥ १३ ॥

प्रतिऽअर्धिः । यज्ञानाम् । अश्वऽहयः । रथानाम् ।
ऋषिः । सः । यः । मनुःऽहितः । विप्रस्य । यवयत्ऽसखः ॥५॥१३॥

ऋषिः सर्वस्य द्रष्टा सपूषा यज्ञानां प्रत्यार्धिः अर्धभाक् रथानां संबंधिभिः अश्वहयः हयतिर्गतिकर्मा अश्वैर्गमनशीलोभवति अश्वयुक्तेन रथेन सदागन्तेत्यर्थः । मनुर्हितः मनुष्यहितोयः विप्रस्य मेधाविनः स्तोतुः यावयत्सखः शत्रूणां पृथक्कर्ता सखा भवसि सइति पूर्वेण संबंधः ॥ ५ ॥

॥ इति सप्तमस्य सप्तमे त्रयोदशोवर्गः ॥ १३ ॥

अथ षष्ठी—

आधीषमाणायाःपतिःशुचायाश्चशुचस्यच ।
वासोवायोवीनामावासांसिमर्मृजत् ॥ ६ ॥

आऽधीषमाणायाः । पतिः । शुचायाः । च । शुचस्य । च ।
वासःऽवायः । अवीनाम् । आ । वासांसि । मर्मृजत् ॥ ६ ॥

आधीषमाणायाआत्मार्थं धीयमानायाः शुचायाश्च दीप्तायाः अजायाश्च पतिः स्वामी न केवलं स्त्रीमात्रस्य किंतु शुचस्य दीप्तस्य पुंपशोश्च पतिरित्यर्थः एवंभूतः पूषा देवः अवीनामूरणानां संबंधिरोमभिः वासोवायः दशापवित्रादीनि वस्त्राणि प्रेरयन् वासांसि रजकशोध्यानि तानि वस्त्राणि आमर्मृजत् आसमंतात्प्रकाशोष्णाभ्यां शोधयन् भवति ॥ ६ ॥

अथ सप्तमी—

इनोवाजानांपतिरिनःपुष्टीनांसखा ।
प्रश्मश्रुंहर्यतोदूधोद्विवृथायोअदाभ्यः ॥ ७ ॥

इनः । वाजानाम् । पतिः । इनः । पुष्टीनाम् । सखा । प्र । श्मश्रु ।
हर्यतः । दूधोत् । वि । वृथा । यः । अदाभ्यः ॥ ७ ॥

इनईश्वरः पूषा वाजानां हविरादीनां सर्वेषामन्नानां पतिः स्वामी इनः प्रभुः पुष्टीनां सर्वेषां प्राणिनां स्वभूतानां पोषकाणां करणे सखा मित्रभूतः सर्वस्योपकारित्वात् । किञ्च हर्यतः काययमानस्य यजमानस्य स्वभूतं सोमं पिबन्निति शेषः । श्मश्रु श्मश्रूणि वृथा अनायासेन प्रयत्नेन प्रविदूधोत् प्रकर्षेण विविधं कंपयति । यः पूषा अदाभ्यः शत्रुभिरहिंस्यः सइति पूर्वेण संबंधः ॥ ७ ॥

अथाष्टमी—

आतेरथस्यपूषन्नजाधुरंववृत्युः ।
विश्वस्यार्थिनःसखासनोजाअनपच्युतः ॥ ८ ॥

आ । ते । रथस्य । पूषन् । अजाः । धुरम् । ववृत्युः । विश्वस्य ।
अर्थिनः । सखा । सनःऽजाः । अनपऽच्युतः ॥ ८ ॥

हे पूषन् देव ते त्वदीयस्य रथस्य धुरं अजावाहनत्वेन आववृत्युः आवर्तयन्ति आवहन्तीत्यर्थः । यस्त्वं विश्वस्य सर्वस्यार्थिनोयाचकस्य अभिलषितार्थप्रदातृत्वात् सखा सखिभूतः सनोजाः चिरजातः अनपच्युतः स्वाधिकारादनपगतः तस्य ते रथमिति संबंधः ॥ ८ ॥

अथ नवमी—

अस्माकमूर्जारथंपूषाअविष्टुमाहिनः ।
भुवद्वाजानांवृधइमंनःशृणवद्धवम् ॥ ९ ॥ १४ ॥

अस्माकम् । ऊर्जा । रथम् । पूषा । अविष्टु । माहिनः । भुवत् ।
वाजानाम् । वृधः । इमम् । नः । शृणवत् । हवम् ॥ ९ ॥ १४ ॥

माहिनोमहान् पूषा अस्माकं स्वभूतं रथं ऊर्जा बलेनान्नेन वा अविष्टु अवतु रक्षतु। किंच वाजानामन्नानां वृधोवर्धकोभुवत् भवतु नोस्मदीयं इममीदृग्भूतं हवमाह्वानं शृणवत् शृणोतु ॥ ९ ॥

इति सप्तमस्य सप्तमे चतुर्दशोवर्गः ॥ १४ ॥

असत्सुमइति चतुर्विंशत्यृचमेकादशं सूक्तं इन्द्रपुत्रस्य वसुक्रस्यार्षं त्रैष्टुभमैन्द्रं तथा चानुक्रान्तं—असत्सुचतुर्विंशतिरैन्द्रोवसुक्रइति। महाव्रते मरुत्वतीयशस्त्रे एतत्सूक्तम्। तथैव-पञ्चमारण्यके सूत्रितञ्च—असत्सुमेजरितःसाभिवेगःपिबासोममभियमुग्रतर्दइति।

तत्र प्रथमा—

असत्सुमेजरितःसाभिवेगोयत्सुन्वतेयजमानायशिक्षम्।
अनाशीर्दामहमस्मिप्रहन्तासत्यध्वृतंवृजिनायन्तमाभुम् ॥ १ ॥

असत्। सु। मे। जरितरिति। सः। अभिऽवेगः। यत्। सुन्वते। यजमानाय। शिक्षम्। अनाशीःऽदाम्। अहम्। अस्मि। प्रऽहन्ता। सत्यऽध्वृतम्। वृजिनऽयन्तम्। आभुम् ॥ १ ॥

वासुक्रेषु सूक्तेषु बाहुल्येनेन्द्रः स्तूयते इदानीमिन्द्रोवसुक्रं स्तोतुमुद्यतं पुत्रं संबोध्य स्वसामर्थ्यं कथयति। येन विज्ञातदेवतारूपःसन् सुखेन स्तोष्यतीति यद्वा कार्यकारणयोरेकत्वोपचारात्। आत्मावैपुत्रनामासीतिवचनात्। इन्द्ररूपेणावस्थितोवसुक्रआत्मानं स्तौति क्वचित् क्वचिदिन्द्रं चेति। हे जरितः स्तोतः मे मम सुशोभनः सताहशः अभिवेगः अभिगमनं मनसोवृत्तिविशेषः असत् अस्ति विद्यते यत् येनाभिवेगेन सुन्वते मदर्थं सोमाभिषवं कुर्वते यजमानाय यज्वने शिक्षं अभिलषितमर्थं ददामि। किंच अहं अनाशीर्दां आशीरन्यत्र प्रार्थना इह सामर्थ्यात्प्रार्थ्यमानं हविरुच्यते तत् मह्यं अददतं जनं यद्वा आशीरिति सोमाश्रयणं दध्युच्यते तस्यादातारं असोमयाजिनमित्यर्थः। प्रहन्तास्मि प्रकर्षेण हिंसिता भवामि। कीदृशं सत्यध्वृतं सत्यस्य हिंसकं अनृतवादिनं चेत्यर्थः वृजिनायन्तं पापं कर्तुमिच्छन्तं आभुं व्याप्तवन्तम् ॥१॥

---

१ आश्वलायगृह्यसूत्रे अ० १।

अथ द्वितीया—

यदीदहंयुधयेसन्नयान्यदेवयून्तन्वाशूशुजानान् ।
अमातेतुम्रंवृषभंपचानितीव्रंसुतंपञ्चदशंनिषिञ्चम् ॥ २ ॥

यदि । इत् । अहम् । युधये । सम्ऽनयानि । अदेवऽयून् । तन्वा ।
शूशुजानान् । अमा । ते । तुम्रम् । वृषभम् । पचानि ।
तीव्रम् । सुतम् । पञ्चऽदशम् । नि । सिञ्चम् ॥ २ ॥

यद्यदाहमित् अहमेव युधये युद्धार्थं अदेवयून् नदेवानयष्टुमिच्छतः अयज्वनः संनयानि संगमयानि । कीदृशान् तन्वा स्वशरीरेण शूशुजानान् आत्मंभरित्वात् पुष्टिलक्षणया दीप्त्या युक्तान् पुष्टानित्यर्थः तदा हे इन्द्र अहं अमा ऋत्विगादिभिः सहितः ते तुभ्यं तुम्रं प्रेरकं बलिनं पीवानमित्यर्थः वृषभं सेचनसमर्थं पुंपशुं पचानि । किंच तीव्रं मदकरं रसं सुतं अभिषुतं पञ्चदशं प्रतिपत्प्रभृतिपञ्चदशसंख्याकासु तिथिषु शुक्लपक्षेएकोत्तरवृद्ध्यापर्णानि जायन्ते कृष्णपक्षेतु तद्वृद्धिहीयन्ते एवंभूतत्वात् पञ्चदशः सोमउच्यते तं यद्वा त्रिवृत्पञ्चदशस्तोमोपेतं माध्यंदिनसवनिकमित्यर्थः निषिंचं दशापवित्रेद्रोणकलशे चमसपात्रे अग्नौ च सिंचामि प्रक्षिपामीत्यर्थः ॥२॥

अथ तृतीया—

नाहंतंवेदयइतिब्रवीत्यदेवयून्त्समरणेजघन्वान् ।
यदावाख्यत्समरणमृघावदादिद्धमेवृषभाप्रब्रुवन्ति ॥ ३ ॥

न । अहम् । तम् । वेद । यः । इति । ब्रवीति । अदेवऽयून् ।
समऽअरणे । जघन्वान् । यदा । अवऽअख्यत् । समऽअरणम् ।
ऋघाऽवत् । आत् । इत् । ह । मे । वृषभा । प्र । ब्रुवन्ति ॥ ३ ॥

योजनः अदेवयून् देवानकामयमानान् देवद्विषोराक्षसादीन् समरणे संग्रामे जघन्वान् अहं हतवानिति ब्रवीति वदति तं तादृशं मद्व्यतिरिक्तं जनं अहं न वेद न जानामि। मत्तोन्यः संग्रामे शत्रूणां हन्ता नास्तीत्यर्थः। किञ्च यदा यस्मिन् काले समरणं संग्रामं अवाख्यत् अवाक्तं न्यक्कृतमहं पश्यामि । कीदृशं ऋघावत् ऋघावन्तं परस्परं हिंसायुक्तं अ-

त्यंतक्रूरमित्यर्थः। आत् तदानीं मे मम स्वभूतानि वृषभा वृषभकर्माणि दर्पतोवृषभस्येव विक्रांतकर्माणि मन्नुवन्ति विद्वज्जनाइतिशेषः इद्धेतीमौ पदपूरणौ ॥ ३ ॥

अथ चतुर्थी—

यदज्ञातेषुवृजनेष्वासंविश्वेसतोमघवानोमआसन्।
जिनामिवेत्क्षेमआसन्तमाभुंप्रतंक्षिणांपर्वतेपादगृह्य ॥ ४ ॥

यत्। अज्ञातेषु। वृजनेषु। आसम्। विश्वे। सतः। मघऽवानः। मे। आसन्। जिनामि। वा। इत्। क्षेमे। आ। सन्तम्। आभुम्। प्र। तम्। क्षिणाम्। पर्वते। पादऽगृह्य ॥ ४ ॥

यद्यदा अज्ञातेषु शरीरवस्त्रास्त्रबलादिभिः अपरिज्ञातेषु वृजनेषु संग्रामेषु आसं अहं युद्धार्थमुपविशामि तदा विश्वे सर्वे मघवानो हविर्लक्षणतपोलक्षणधनवन्तऋषयः सतः एवं वर्तमानस्य मे ममेन्द्रस्य समीपे आसन् उपविशन्ति मम वीर्यवृद्ध्यर्थं मां स्तुवन्तस्तिष्ठन्तीत्यर्थः। अपिच क्षेमे जगत्पालने निमित्ते आसंतं आकारोभीत्यस्यार्थे वर्तते सर्वमभितः संतं आभुं महान्तं शत्रुं जिनामि वा विनाशयाम्येव नात्र विनाशे संशयः इदितिपूरणः। तं महान्तं शत्रुं पादगृह्य पादौ गृहीत्वा पर्वते गिरौ प्रदक्षिणां प्रहितवानस्मि प्रक्षिपामि ॥ ४ ॥

अथ पञ्चमी—

नवाउमांवृजनेवारयन्तेनपर्वतासोयदहंमनस्ये।
ममस्वनात्कृधुकर्णोभयातएवेदनुद्यून्किरणःसमेजात् ॥ ५ ॥१५॥

न। वै। ऊँ इति। माम्। वृजने। वारयन्ते। न। पर्वतासः। यत्। अहम्। मनस्ये। मम। स्वनात्। कृधुऽकर्णः। भयाते। एव। इत्। अनु। द्यून्। किरणः। सम्। एजात् ॥ ५ ॥ १५ ॥

वैउ इत्येतैव वृजने संग्रामे मां युद्धार्थमुपस्थितं संतं न वारयन्ते केचिन्निवारयितुं समर्थान भवन्ति अहं यत्कर्म मनस्ये मनसा कर्तुमिच्छामि पर्वतासः अतितरणक्षमाहिमवदादयोगिरयः तत्कर्म मनसा सोढुं न शक्नुवन्तीत्यर्थः। किञ्च ममेन्द्रस्य स्वनात् शब्दादेव कृधुक-

र्णोनामाखुरः यद्वा क्षुधुकर्णोह्रस्वकर्णः मंदश्रवणेन्द्रियोबधिरः स्थावरपिपीलिकादिरपि भयाते बिभेति । अपिच एवेत एवमेव क्षुधुकर्णवत् अनुद्यून् प्रतिदिनमित्यर्थः किरणः अन्तर्णीतम-त्वर्थमेतत् किरणवान्रश्मिवानादित्यः समेजात् सम्यक् कंपते चलति नियमेन प्रयातीत्यर्थः ॥५॥

॥ इति सप्तमस्य सप्तमे पञ्चदशोवर्गः ॥ १५ ॥

अथ षष्ठी—

दर्शन्न्वत्रंशृतपाँअनिन्द्रान्बाहुक्षदःशरवेपत्यमानान् ।
घृषुंवायेनिनिदुःसखायमध्यून्वेषुपवयोववृत्युः ॥ ६ ॥

दर्शन् । नु । अत्र । शृतऽपान् । अनिन्द्रान् । बाहुऽक्षदः ।
शरवे । पत्यमानान् । घृषुम् । वा । ये । निनिदुः । सखायम् ।
अधि । ऊँ इति । नु । एषु । पवयः । ववृत्युः ॥ ६ ॥

अत्रास्मिन्जगति शृतपान् शृतानि पक्वानि सोमादिहवींष्यपहृत्य पिबतः अनिन्द्रान् इन्द्रेण मया वर्जितान् बाहुक्षदः बाहुभिर्यजमानान् शकलीकुर्वतः शरवे हिंसार्थं पत्यमानान् अभिपततोऽसुरादीन् नु क्षिप्रं दर्शं अहमिन्द्रः पश्यामि एवं भूतेष्वेषु अधि उपरि पवयोमदीयान्यायुधानि ववृत्युः वर्तन्ते । वाशब्दः समुच्चये । घृषुं महान्तं च सखायं सखिवत्प्रियं हितस्य कर्तारं मां ये निनिदुः निंदंति उइति समुच्चये एषु चोपरिमदीयान्यायुधानि नु क्षिप्रं वर्तन्ते ॥६॥

अथ सप्तमी—

अभूर्वौक्षीर्व्युं१आयुरानड्दर्षन्नुपूर्वोअपरोनुदर्षत् ।
द्वेपवस्तेपरितंनभूतोयोअस्यपारेरजसोविवेष ॥ ७ ॥

अभूः । ऊँ इति । औक्षीः । वि । ऊँ इति । आयुः । आनट् ।
दर्षत् । नु । पूर्वः । अपरः । नु । दर्षत् । द्वे इति । पवस्ते इति ।
परि । तम् । न । भूतः । यः । अस्य । पारे । रजसः । विवेष ॥७॥

अत्र मध्यमपुरुषेणेन्द्रस्योच्यमानत्वात् वसुक्रइन्द्रं स्तौति । उइत्यवधारणे । हे इन्द्र अभूः त्वमेव प्रादुर्भवसि औक्षीः कालेकाले त्वमेव पृथिवीं सिञ्चसि नान्यइत्यर्थः आनडित्यादौ सर्वत्र परोक्षनिर्देशे प्रत्यक्षीकरणार्थं मध्यमपुरुषेण प्रकृतत्वादेकवाक्यतार्थं युष्मच्छब्दसमानार्थोभवच्छब्दोध्याहर्तव्यः विइति वैविध्ये । उ इति वार्थे । आयुर्जीवितमुच्यते । इन्द्रोभवान्विविधमायुश्च आनट् व्याप्नोति आभूतसंप्लवाज्जीवतीत्यर्थः । किंच पूर्वः पुरातनोभवानिन्द्रः नु क्षिप्रं दर्षत् दृविदारणे सिब्बहुलं लेटि वज्रेण शत्रून् विदारयति अपरोन्यः शत्रुर्नुदर्षत् नु इति निषेधार्थेभवन्तमिन्द्रं नविदारयति भवानेव सर्वं शत्रुजातं हिनस्तीत्यर्थः । अपिच योभवानिन्द्रः अस्येदृशस्य रजसोलोकस्य त्रैलोक्यस्येत्यर्थः पारे परतः परमसूक्ष्मवायुरूपेण सृष्टिकारणात्मना स्थित्वेत्यर्थः विवेष सर्वतोऽव्याप्नोति तमिन्द्रं द्वेइति सामर्थ्यात् द्यावापृथिव्यौ न परिभूतः नपरिभवतः अभिभवितुं न शक्नुतइत्यर्थः । कीदृश्यौ पवस्ते पवतिर्गतिकर्मा अस्मादौणादिकोस्तप्रत्ययः अतः अजाद्यतष्टाबिति टापि कृते प्रथमाद्विवचने चैतद्रूपं भवति महत्त्वेन सर्वस्याभिभवनाय गन्त्र्यौ यद्वा सर्वस्य प्रकर्षेणाच्छादयित्र्यौ रेफलोपश्छान्दसः ॥ ७ ॥

अथाष्टमी—

**गावोयवंप्रयुताअर्योअक्षन्ताअपश्यंसहगोपाश्चरन्तीः ।**
**हवाइदर्योअभितःसमायन्कियदासुःस्वपतिश्छन्दयाते ॥ ८ ॥**

**गावः । यवम् । प्रऽयुताः । अर्यः । अक्षन् । ताः । अपश्यम् ।**
**सहऽगोपाः । चरन्तीः । हवाः । इत् । अर्यः । अभितः । सम् ।**
**आयन् । कियत् । आसु । स्वऽपतिः । छन्दयाते ॥ ८ ॥**

गावोधेनवः प्रयुताः प्रकर्षेण मिश्रिताः परस्परेण सहभूताः यवं मद्वृष्टिजनितयवादि घासं अक्षन् अदंति भक्षयन्ति अर्यः सर्वस्य स्वाम्यहं तागाः अपश्यं पश्यामि । कीदृशीः सहगोपाः पशुपालकेन सहिताः चरन्तीः घासं भक्षयन्तीः एवंभूतास्ताः परया प्रीत्या पश्यामीत्यर्थः । किञ्च हवाः वाहनदोहनार्थमाह्वानार्हाः गावः अर्यः द्वितीयार्थे प्रथमा अर्यं स्वामिनं प्रति अभितः सर्वतः समायन् समित्येकीभावे एकीभूय आगच्छन्ति । इदितिपूरणः । आगतास्वासु गोषु स्वपतिः स्वानां गवां स्वामी कियत् क्षीरं छन्दयाते दोग्धुं कामयते मदर्थं दोग्ध्रीरित्यर्थः । गावआशिरं दुहे इतिवचनात् ॥ ८ ॥

अथ नवमी—

संयद्वयंयवसादोजनानामहंयवादउर्वज्रेअन्तः ।
अत्रायुक्तोवसातारमिच्छादथोअयुक्तंयुनजद्ववन्वान् ॥ ९ ॥

सम् । यत् । वयम् । यवसऽअदः । जनानाम् । अहम् । यवऽअद
उरुऽअज्रे । अन्तरिति । अत्र । युक्तः । अवऽसातारम् । इच्छात्
अथो इति । अयुक्तम् । युनजत् । ववन्वान् ॥ ९ ॥

अनया ऋषिरिन्द्रप्रसादलब्धं स्वस्य सार्वात्म्यं प्रकाशयति । जनानां लोकानां म॰ ये यवसादः तृणस्यात्तारः पशवः ते वयमिति संसम्यक् जानीहि उपसर्गश्रुतेर्योग्यक्रियाध्य हारः । ये च यवादः यवोपलक्षितस्यान्नस्यात्तारोमनुष्यास्तेपि वयमिति संजानीहि । वस्तुत उर्वज्रे विस्तीर्णे अजिरेंगणे हार्दाकाशरूपे यत् अंतः अंतर्यामिरूपं ब्रह्म तदहमस्मि अ स्मिन् हार्दाकाशे युक्तः समाहितोभवानिन्द्रः अवसातारं आत्मनः संभक्तारं इच्छात् इच्छे आत्मसाक्षात्कर्तुं । अथो अपिच अयुक्तं अयोगिनं ववन्वान् द्वितीयार्थे प्रथमा ववन्व अतिशयेन विषयान् सेवमानं पुरुषं युनजत् युनक्ति संसारे शापानुग्रहसमर्थोभवद्रूपोहमेवा स्मीति भावः ॥ ९ ॥

अथ दशमी—

अत्रेदुमेमंससेसत्यमुक्तंद्विपाच्चयच्चतुष्पात्संसृजानि ।
स्त्रीभिर्योअत्रवृषणंपृतन्यादयुद्धोअस्यविभजानिवेदः॥१०॥१६

अत्र । इत् । ऊँ इति । मे । मंससे । सत्यम् । उक्तम् । द्विऽपात् ।
च । यत् । चतुःऽपात् । समऽसृजानि । स्त्रीभिः । यः । अत्र ।
वृषणम् । पृतन्यात् । अयुद्धः । अस्य । वि । भजानि । वेदः ॥१०॥१६

मे मम अत्रास्मिन्स्तोत्रे उक्तं मया कथितं सत्यमित् यथा भूतमेव मंससे त्वं जानीहि अर्थवादरूपेणनैतदध्यारोपितमित्यर्थः । उइति पूरणः । किञ्च द्विपाच्च मनुष्यादिकं च चतुष्पा- च्च पश्वादिकं च यत्स्थावरजंगमात्मकं [illegible]

स्त्रीभिः स्त्रीसदृशैर्बलादिहीनैः पुरुषैः सह यः शूरंमन्योजनः वृषणंअभिलषितस्य वर्षितारं मां परित्यज्येति शेषः । पृतन्यात् युद्धं कर्तुमिच्छति अहं अस्येदृशस्य स्वभूतं वेदोधनं अयुद्धः तेन पुरुषेणायोद्धासन् बलादपहृत्य विभजानि स्तोतृभ्योयष्टृभ्यश्च ददामीत्यर्थः ॥१०॥

॥ इति सप्तमस्य सप्तमे षोडशोवर्गः ॥ १६ ॥

अथैकादशी—

यस्यानक्षादुहिताजात्वासकस्तांविद्वाँअभिमन्यातेअन्धाम् ।
कतरोमेनिंप्रतितंमुचातेयईंवहातेयईंवावरेयात् ॥ ११ ॥

यस्य । अनक्षा । दुहिता । जातु । आस । कः । ताम् । विद्वान् ।
अभि । मन्याते । अन्धाम् । कतरः । मेनिम् । प्रति । तम् ।
मुचाते । यः । ईम् । वहाते । यः । ईम् । वा । वरेऽयात् ॥ ११ ॥

यस्येन्द्रस्य मम कारणरूपेणावस्थितस्य अनक्षा अक्षिवर्जिता दर्शनहीना अचेतनेत्यर्थः दुहिता प्रकृत्याख्या जातु कदाचित् आस असतेर्गत्यर्थस्य लिटि रूपं सामर्थ्यात् महाप्रलये मय्येव लीना सती सर्वत्र वर्तते । तां प्रकृतिं विद्वान् मय्येव लीनां जानन् मत्तोन्योदेवः कोभवति न कोपीत्यर्थः । अपिच अंधां दर्शनहीनामचेतनां तां अभिमन्याते आत्मन्याश्रयप्रदानेन कोदेवोभिपूजयति यद्वा क्षीरोदकवत् घटाकाशवच्च मया सहैकीभूतां तां आभिमुख्येन कोजानाति अहमेव सर्वज्ञः स्वात्मन्याश्रयप्रदानेनाभिपूजयामि मया सहैकीभूतां तां तत्वतोहमेव जानामि नान्यइति । किञ्च कतरोदेवः मेनिं वज्रं तं प्रसिद्धं वृत्रादिशत्रुं प्रतिमुचाते मुंचति स्वयमेव प्रश्नमुत्थाप्येदानीं प्रतिब्रूते योदेवईमेनं शत्रुं वहाते वहति अपिवा यईमेनं वरेयात् वारयितुमिच्छति सचाहमेव नान्योमत्सदृशोस्तीत्यर्थः ॥ ११ ॥

अथ द्वादशी—

कियतीयोषामर्यतोवधूयोःपरिप्रीतापन्यसावार्येण ।
भद्रावधूर्भवतियत्सुपेशाःस्वयंसामित्रंवनुतेजनेचित् ॥ १२ ॥

कियंती । योषा । मर्यतः । वधूऽयोः । परिऽप्रीता । पन्यसा । वार्येण । भद्रा । वधूः । भवति । यत् । सुऽपेशाः । स्वयं । सा । मित्रम् । वनुते । जने । चित् ॥ १२ ॥

कियती किं परिमाणा योषा स्त्रीजातिः मर्यतोमनुष्यसंबंधिनोभोगानाचरतः वधूः स्त्रीकामस्य सर्वात्मकस्यान्तर्यामिरूपेणावस्थितस्येन्द्रस्य परिप्रीता अनुरक्ता वशवर्तिनीत्यः कीदृशस्य वार्येण वरणीयेन पन्यसा स्तोत्रेण स्तुतस्य सतइतिशेषः ।अपिच यत् या वधूः भ कल्याणी सुपेशाः शोभनरूपा च भवति सा द्रौपदीदमयन्त्यादिका वधूः स्वयमात्मनैव ज चित् जनमध्येवस्थितमपि मित्रं प्रियमर्जुननलादिकं पतिं वनुते याचते स्वयंवरधर्मेण प्रार्थय सच प्रीयमाणोवरजनोहमेवेत्यभिप्रायः । रूपंरूपंप्रतिरूपोबभूवेतिमंत्रलिंगात्सर्वात्मकत्व दिति ॥ १२ ॥

अथ त्रयोदशी—

पत्तोजंगारप्रत्यञ्चंमत्तिशीर्ष्णाशिरःप्रतिदधौवरूथम् ।
आसीनऊर्ध्वामुपसिक्षिणातिन्यंङुत्तानामन्वेतिभूमिम् ॥ १३ ॥

पत्तः । जगार । प्रत्यञ्चम् । अत्ति । शीर्ष्णा । शिरः । प्रति । दधौ । वरूथम् । आसीनः । ऊर्ध्वाम् । उपसि । क्षिणाति । न्यङ् । उत्तानाम् । अनु । एति । भूमिम् ॥ १३ ॥

अत्रादित्यात्मनेन्द्रः स्तूयतेतदंशत्वात् आदित्यरूपीन्द्रः पत्तः रश्म्याख्यैः पादैः जगार वृष्टिलक्षणमुदकं गिरति गृह्णाति वा ।गृहीत्वा च प्रत्यञ्चं आत्मानं प्रतिगतमुदकमत्ति भक्षयति मंडले अवस्थापयतीत्यर्थः । तदनंतरं वरूथं वरणीयं वृष्टिलक्षणमुदकं शीर्ष्णा शिरःस्थानीयेन रश्मिजालेन शिरः सर्वस्य लोकस्य मस्तकं प्रतिदधौ दधाति प्रतिक्षिपतीत्यर्थः । किञ्च उपसि उपस्थे स्वसमीपस्थाने मण्डले आसीनउपविष्टः सन् ऊर्ध्वामुद्गतां स्वदीप्तिं क्षिणाति हिनस्ति आलोककरणाय प्रक्षिपतीत्यर्थः न्यङ् रश्मिसमूहरूपेण नीचैरञ्चिता गन्ता सन् उत्तानां विस्तृतां भूमिं अन्वेति अनुगच्छति ॥ १३ ॥

---

१ ऋ० सं० ४. ७. ३३. ।

२ प्रत्यञ्चं प्रतिकूल... [illegible]

अथ चतुर्दशी—

बृहन्नच्छायोअपलाशोअर्वातस्थौमाताविषितोअत्तिगर्भः ।
अन्यस्यांवत्संरिहतीमिमायकयांभुवानिदधेधेनुरूधः ॥ १४ ॥

बृहन् । अच्छायः । अपलाशः । अर्वा । तस्थौ । माता ।
विऽसितः । अत्ति । गर्भः । अन्यस्याः । वत्सम् । रिहती ।
मिमाय । कया । भुवा । नि । दधे । धेनुः । ऊधः ॥ १४ ॥

वसुक्रः अनयादित्यात्मानमिन्द्रं स्तौति । बृहन्महानादित्यः अच्छायः छायावर्जितः तमोरहितइत्यर्थः अपलाशः पर्णरहितः पराशदनवर्जितोविनाशरहितइत्यर्थः । अर्वा सततगामी तस्थौ तिष्ठति । किञ्च माता वृष्टिप्रदानद्वारेण सर्वस्य जगतोनिर्माता विषितोविमुक्तः निरालंबनइत्यर्थः गर्भः त्रैलोक्यस्य गर्भभूतः आदित्यात्मेन्द्रः अत्ति हवींषि भक्षयति । यद्वा अनेन विनाशः लक्ष्यते पापानि नाशयति किं अन्यस्याः अदित्याख्यायादेवमातुः वत्समपत्यभूतं आदित्यं रिहती आस्वादयन्ती उपजीवन्ती वर्धयन्ती मिमाय निर्मिमीते पूर्वस्यां दिश्यहन्यहनि उत्पादयतीत्यर्थः । कया भुवा केन भावेनाभिप्रायेण भक्त्या भयेन चेत्यर्थः धेनुर्द्यौः तं उदकस्याधारत्वात् क्षरितृत्वाच्च ऊधःस्थानीयमादित्यं निदधे स्थापयति यद्वा धेनुर्गौः ऊधोयथा तद्वदादित्यं द्यौर्धारयति ॥ १४ ॥

अथ पञ्चदशी—

सप्तवीरासोअधरादुदायन्नष्टोत्तरात्तात्समजग्मिरन्ते ।
नवपश्चातात्स्थिविमन्तआयन्दशप्राक्सानुवितिरन्त्यश्नः ॥ १५ ॥ १७ ॥

सप्त । वीरासः । अधरात् । उत् । आयन् । अष्ट । उत्तरात्तात् ।
सम् । अजग्मिरन् । ते । नव । पश्चतात् । स्थिविऽमन्तः ।
आयन् । दश । प्राक् । सानु । वि । तिरन्ति । अश्नः ॥ १५ ॥ १७ ॥

अनयेन्द्रः प्रजापतिरूपेण स्तूयते सप्त सप्तसंख्याकाः वीरासः प्रजापतेः पुत्राविश्वामित्रादयः अधरात् प्रजापतेरधः कायादुदायन् उत्पन्नाबभूवुः अष्ट अष्टसंख्याकास्ते प्रसिद्धवालखिल्यादयः उत्तरात्तात् उत्तरात्कायप्रदेशात् समजग्मिरन् संजज्ञिरे । स्थिविमन्तः स्थानवन्तः नव नवसंख्याकाभृगवः पश्चात्तात् पृष्ठतः आयन् आगताउत्पन्नाइत्यर्थः । तथा दश दशसंख्याकाअङ्गिरसः प्राक् अग्रतउत्पन्नाः सन्तः अश्नः अशनवतोद्युलोकस्य सानु उन्नतप्रदेशं वितिरन्ति वर्धयन्ति । अपरआह सप्तसंख्योपेतावीरामरुतः अधरात् इन्द्रस्य दक्षिणभागादुदगमन् अष्टसंख्याकास्ते मरुतः उत्तरभागात्संगच्छन्ते स्थानवन्तो नवसंख्याकास्ते मरुतः पृष्ठभागादागच्छन्ति दशसंख्याकास्ते अश्नः अशनवन्तइन्द्रस्य प्राक्प्रदेशस्थिताः समुच्छ्रितमुदकं तेजोवा वितरन्ति मरुतः प्रतिदिशमवस्थाय इन्द्रस्य सहायं कुर्वन्तीत्यर्थः ॥ १५ ॥

॥ इति सप्तमस्य सप्तमे सप्तदशोवर्गः ॥ १७ ॥

अथ षोडशी—

**दशानामेकंकपिलंसमानंतंहिन्वन्तिक्रतवेपार्याय ।**
**गर्भंमातासुधितंवक्षणास्ववेनन्तंतुषयन्तीबिभर्ति ॥ १६ ॥**

दशानाम् । एकम् । कपिलम् । समानम् । तम् । हिन्वन्ति ।
क्रतवे । पार्याय । गर्भम् । माता । सुऽधितम् । वक्षणासु ।
अवेनन्तम् । तुषयन्ती । बिभर्ति ॥ १६ ॥

दशानां दशसंख्याकानां पूर्वोक्तानामेवाङ्गिरसां मध्ये एकं मुख्यं कपिलं एतन्नामानं तं प्रसिद्धमृषिं कीदृशं समानं सदृशं केन सामर्थ्यात्प्रजापतिना हिन्वन्ति अवशिष्टाअङ्गिरसः प्रेरयन्ति । किमर्थं क्रतवे यज्ञादिजगत्प्रवर्तनकर्मणे यद्वा सम्यक् ज्ञानलक्षणप्रज्ञानाय । कीदृशाय पार्याय परिसमापयितव्याय प्रणेतव्याय वा यज्ञादिकर्मणोपदेशनायेत्यर्थः माता प्रकृत्याख्या च वक्षणासु वक्षणाइति नद्यउच्यन्ते ताभिश्चात्रापोलक्ष्यन्ते प्रकृतिस्थासु सूक्ष्मास्वप्सु सुधितं सुहितं प्रजापतिना स्थापितमित्यर्थः अवेनन्तं वेनतिः कान्तिकर्मा गतिनिवासमकामयमानं तादृशं प्रजापतेः गर्भं तुषयन्ती तुष्यंती सम्यक् ज्ञानान्युपदेष्टुं योग्योयमिति प्रीता सती बिभर्ति प्रजापतेर्नियोगाद्धारयति ॥ १६ ॥

अथ सप्तदशी—

पीवानंमेषमंपचन्तवीरान्युंप्ताअक्षाअनुंदीवआंसन् ।
द्वाधनुंबृहतीमप्स्व१ंन्तःपवित्रंवन्ताचरतःपुनन्तां ॥ १७ ॥

पीवानम् । मेषम् । अपचन्त । वीराः । निऽउंप्ताः । अक्षाः । अनुं ।
दीवे । आसन् । द्वा । धनुंम् । बृहतीम् । अप्ऽसु । अन्तरिति ।
पवित्रंऽवन्ता । चरतः । पुनन्तां ॥ १७ ॥

वीराः प्रजापतेः पुत्राः अङ्गिरसः पीवानं स्थूलं मेदोमांसादियुक्तमित्यर्थः मेषं अजं अपचन्त प्रजापतिरूपस्येन्द्रस्यार्थाय पक्वन्तोभवन् पशुयागं कुर्वन्तइत्यर्थः । किञ्च लुप्तोपममेतत् । यथा देवानां अक्षाः दीवे देवने रमणस्थाने न्युप्ताः निक्षिप्ताः सन्तः अन्वासन् संक्रीडमानयोर्द्वयोरेकतरस्यानुगताभवन्ति तथा सर्वेङ्गिरसः प्रजापतेरनुगताभवन्ति । द्वा अङ्गिरसां मध्ये द्वावङ्गिरसौ धनुं धनुशब्दोत्र धनुःशब्दपर्यायोधनपर्यायोवा धनुर्यथा वधसाधनं तथा अज्ञानादिवधसाधनं धनवत् प्रीतिकरं वा कपिलमित्यर्थः बृहतीं प्रजापतेराज्ञयावर्धयित्रीं प्रकृतिं अप्सु अन्तः प्रकृतिस्थानां सूक्ष्माणामुदकानां मध्ये चरतः प्रजापत्यादेशादाराधयतः । कीदृशौ पवित्रवन्ता पवित्रवन्तौ मन्त्रः पवित्रमुच्यते ध्यानसाधनप्रणवमन्त्रवन्तौ पुनंता पुनन्तौ शुद्धौ प्रणवध्यानेनात्मानं संस्कुर्वंतावित्यर्थः ॥ १७ ॥

अथाष्टादशी—

विक्रोशनासोविष्वंचआयन्पचांतिनेमोनहिपक्षंदर्धः ।
अयंमेदेवःसंवितातदांहद्र्वन्नइद्वंनवत्सर्पिरंन्नः ॥ १८ ॥

वि । क्रोशनासः । विष्वंञ्चः । आयन् । पचांति । नेमः । नहि ।
पक्षंत् । अर्धः । अयम् । मे । देवः । सविता । तत् । आह ।
द्रुऽअंन्नः । इत् । वनवत् । सर्पिःऽअंन्नः ॥ १८ ॥

विक्रोशनासः विविधं प्रजापतिंपितरमाह्वयन्तः विष्वञ्चः नानागतयोनानापूजनावा अङ्गिरसआयन् आगच्छन् प्रजापतेः सकाशादुत्पन्नाइत्यर्थः । उत्पद्यमानो नेमः अर्धः अङ्गि मध्ये एकोभागः पचाति प्रजापत्यर्थं हवींषि पचति अर्धः अपरोभागः नहि पक्षत् नहि पच एतत्सर्वं कथमज्ञायि उच्यते—अयमीदृशोदेवः द्योतमानः सविता सर्वस्य प्रेरकः आदित्योव जापतिर्वा मे मह्यं तत्सर्वं यथोक्तमाह । किञ्च सर्पिरन्नः घृतौदनः द्रुन्नः इव दार्वोदनोग्निरपि नवत् हविर्द्वारेण प्रजापतिं वनति संभजते ॥ १८ ॥

अथैकोनविंशी—

अपश्यंग्रामंवहमानमारादचक्रयास्वधयावर्तमानम् ।
सिषक्त्यर्यःप्रयुगाजनानांसद्यःशिश्नाप्रमिनानोनवीयान् ॥ १९

अपश्यम् । ग्रामम् । वहमानम् । आरात् । अचक्रया । स्वधया ।
वर्तमानम् । सिसक्ति । अर्यः । प्र । युगा । जनानाम् ।
सद्यः । शिश्ना । प्रऽमिनानः । नवीयान् ॥ १९ ॥

अपश्यं वसुक्रोहं प्रजापतिरूपमिन्द्रं सम्यक् ज्ञानेन दृष्टवानस्मि । कीदृशं ग्रामं भूतसंघं वहमानं वाहयन्तं सृजन्तमित्यर्थः । कुतः आरात् दूरात् उपादानकारणात् प्रकृतितइत्यर्थः अचक्रया चक्रवर्जितया रथहीनया स्वधया स्वयमात्मानं धारयन्त्या सेनया वर्तमानमागच्छन्तं एवंभूतमपश्यमित्यर्थः । किञ्च अर्यः सर्वस्य स्वामीन्द्रः जनानां यजमानानां कार्यत्वेन संबंधिनः युगा युग्मानि यज्ञकालविशेषान् प्रसिषक्ति प्रकर्षेण सेवते । कीदृशः सद्यस्तदानीमेव शिश्ना शिश्नानि शिश्नं श्नथतेरितिनिर्वचनात् श्नथितॄणि ताडयितॄणि राक्षसादिवृन्दानि प्रमिनानः प्रकर्षेण हिंसन् नवीयान् शरीरेण च बलपौरुषनयनादिभिश्च नवतरः ॥ १९॥

अथ विंशी—

एतौमेगावौप्रमरस्ययुक्तौमोषुप्रसेधीर्मुहुरिन्ममन्धि ।
आपश्चिदस्यविनशन्त्यर्थंसूरश्चमर्कउपरोबभूवान् ॥ २० ॥१९॥

---

१ नि० ४.१९. ।

एतौ । मे । गावौ । प्रऽमरस्य । युक्तौ । मो इति । सु । प्र । सेधीः ।
मुहुः । इत् । ममन्धि । आपः । चित् । अस्य । वि । नशन्ति ।
अर्थम् । सूरः । च । मर्कः । उपरः । बभूवान् ॥ २० ॥ १८ ॥

कार्यकारणयोरुपचारात् आत्मावैपुत्रनामासीतिवचनात् चेन्द्ररूपेणावस्थितस्य प्रमरस्य प्रकर्षेण शत्रूणां मारयितुः मे मम स्वभूतौ एतावेतादृशौ युक्तौ सुष्ठुपूजितौ गावौ शत्रून् यज्ञांश्च प्रतिगन्तारौ हरी मोप्रसेधीः स्तुत्युपसंहारकरणेन अस्मद्यज्ञात् मागमय । किं तर्हिमुहुरित् मुहुर्मुहुः ममन्धि पुनःपुनः स्तुहि ममात्मन्नित्यर्थः । आपश्चिद्वृष्टिलक्षणान्युदकान्यपि अस्येन्द्रस्यार्थं गतिं विनशन्ति विनशतिर्व्याप्तिकर्मा व्याप्नुवन्ति । तथा सूरश्च सूर्यश्च व्याप्नोति । कीदृशः मर्कः मार्जयिता सर्वस्य शोधयिता उपरः मेघसदृशः बभूवान् भवन् मेघवच्छीघ्रगतिः सन्नित्यर्थः ॥ २० ॥

॥ इति सप्तमस्य सप्तमेष्टादशोवर्गः ॥ १८ ॥

अथैकविंशी—

अयंयोवज्रःपुरुधाविवृत्तोवःसूर्यस्यबृहतःपुरीषात् ।
श्रवइदेनापरोअन्यदस्तितदव्यथीजरिमाणस्तरन्ति ॥ २१ ॥

अयम् । यः । वज्रः । पुरुधा । विऽवृत्तः । अवः । सूर्यस्य । बृहतः ।
पुरीषात् । श्रवः । इत् । एना । परः । अन्यत् । अस्ति ।
तत् । अव्यथीः । जरिमाणः । तरन्ति ॥ २१ ॥

योयं वज्रइन्द्रस्य स्वभूतः सूर्यस्यादित्यस्य बृहतोमहतः पुरीषात् पूरकात् मण्डलात् अवः अवस्तात् अधोभागे स्थितेषु पुरुधा बहुप्रकारेण विवृत्तः वृष्ट्यर्थं प्रवृत्तः पतितः इच्छब्दोप्यर्थे तच्छब्दश्रुतेर्यच्छब्दोध्याहार्यः परः परस्तात् अन्तरिक्षलोकस्योपरिस्थिते सूर्यमण्डले स्थितं एना एनत् श्रवइत्यन्ननाम तद्धेतुत्वात् उदकं श्रवइत्युच्यते यद्यप्युदकं मेघोदरगतादुदकादन्यदप्यस्ति अव्यथी व्यथारहिताः जरिमाणः स्तोतारोमरुदादयः तत्तादृशमुदकं तरन्ति अन्तरिक्षलोकं प्रत्यवतारयन्ति ॥ २१ ॥

अथ द्वाविंशी—

वृक्षेवृक्षेनियताामीमयद्गौस्ततोवयःप्रपतान्पूरुषादः ।
अथेदंविश्वंभुवनंभयातइन्द्रायसुन्वदृषयेचशिक्षत् ॥ २२ ॥

वृक्षेऽवृक्षे । निऽयता । मीमयत् । गौः । ततः । वयः । प्र । पतान् ।
पुरुषऽअदः । अथ । इदम् । विश्वम् । भुवनम् । भयाते ।
इन्द्राय । सुन्वत् । ऋषये । च । शिक्षत् ॥ २२ ॥

वृक्षेवृक्षे सर्वस्मिन्वृक्षमये धनुषि नियता संबद्धा गौः गोसंबंधिनी स्नायुमती मौर्वी मीमयत् मीमयतिः शब्दकर्मा आकृष्यमाणा सती शब्दं करोति । ततस्तस्माद्धनुषः पुरुषादः शत्रुजनानामत्तारोमारयितारइत्यर्थः वयः पक्षिसदृशाः गन्तारोबाणाः प्रपतान् शत्रून्प्रति प्रपतन्ति । अथ तदानीं इन्द्रायेन्द्रार्थं सुन्वत् सोमयागं कुर्वत् ऋषये च शिक्षत् कर्मणां द्रष्ट्रेऋत्विजे च संपूर्णां दक्षिणां दददपि इदमीदृशं विश्वं समस्तं भुवनं भूतजातं भयाते इन्द्राद्बिभेति अन्यत्किमुतेत्यर्थः ॥ २२ ॥

अथ त्रयोविंशी—

देवानांमानेप्रथमाअतिष्ठन्कृन्तत्रादेषामुपराउदायन् ।
त्रयस्तपन्तिपृथिवीमनूपाद्वाबृबूकंवहतःपुरीषम् ॥ २३ ॥

देवानाम् । माने । प्रथमाः । अतिष्ठन् । कृन्तत्रात् । एषाम् ।
उपराः । उत् । आयन् । त्रयः । तपन्ति । पृथिवीम् ।
अनूपाः । द्वा । बृबूकम् । वहतः । पुरीषम् ॥ २३ ॥

देवानां सर्वेषां माने निर्माणे सृष्टिकाले इत्यर्थः जगत्स्थितिहेतुभूतरसानुप्रदानकर्मणि स्रष्टव्यत्वेन प्रथमा अतिष्ठन् इन्द्रादेशादेते पूर्वं स्थिताः कएते मेघाः कुतएतदवगम्यते परस्मिन्पादे तेषामनकथनात । [illegible]

कृंतनात् छेदनात् उपराः मेघनामैतत् तत्रस्था आपउच्यन्ते मेघस्थाआपः उदायन् उत्पन्नाः वृष्टिभावेन भूमौ निपातिताइत्यर्थः। पातितास्वप्सु इन्द्रस्याज्ञया पर्जन्योवायुरादित्यइत्येते त्रयो-देवाः पृथिवीं भूमिं तत्रस्थाओषधीरित्यर्थः तपन्ति वृष्टिशीतोष्णैः सन्तापयन्ति पाचयन्ती-त्यर्थः। कीदृशाः अनूपाः वर्षादीनामानुपूर्व्येण व्याप्तारः प्रभावयितारः प्रक्षेप्तारइत्यर्थः द्वा द्वौ वाय्वादित्यौ पाचितास्वोषधीषु स्थितं पुरीषं सर्वस्य पालयितृ प्रीणयितृ वा बृबूकं उदकं आदित्यमण्डलं प्रति वहत वायुः शोषयन् आदित्योरश्मिभिराददानइत्यर्थः॥ २३॥

अथ चतुर्विंशी—

सातेंजीवातुंरुततस्यंविद्धिमास्मैताहृगपंगूहःसमर्यै।
आविःस्वःकृणुतेगूहंतेबुसंसपादुरंस्यनिर्णिजोनमुच्यते॥२४॥१९॥

सा। ते। जीवातुः। उत। तस्यं। विद्धि। मा। स्म। एताहृक्। अपं। गूहः। सऽमर्यै। आविः। स्वः१रितिस्वः। कृणुते। गूहंते। बुसम्। सः। पादुः। अस्य। निःऽनिजः। न। मुच्यते॥ २४॥१९॥

अत्रान्तरात्मनेन्द्रः स्तूयते। हे अन्तरात्मन् ते तव सा तादृशी आदित्यात्मिका देवता जीवातुः जीविका जीवनहेतुः उतापिच तस्यादित्यस्य च एतादृक् ईदृशं स्वरूपं समर्ये संग्रा-मवाची समर्यशब्दोअत्र यज्ञवाची यज्ञे विद्धि जानीहि स्तुत्यत्वेनेतिशेषः। मास्मापगूहः मा खल्वपवृणोः। किञ्च निर्निजः सर्वस्य शोधयितुरस्यादित्यस्य सपादुः तच्च पादनं गमनं र-श्मिद्वारेण गत्वा स्वः सर्वं त्रैलोक्यं आविष्कृणुते प्रकाशीकरोति। बुसमुदकं गूहते संवृणोति आदत्ते इत्यर्थः। अस्मै प्रयोजनद्वयायादित्येन निर्वेदनात् श्रमेणवा गमनं न मुच्यते नकदा-चित्परित्यज्यतइत्यर्थः॥ २४॥

॥ इति सप्तमस्य सप्तमे एकोनविंशोवर्गः॥ १९॥

विश्वोहीति द्वादशर्चं द्वादशं सूक्तं त्रैष्टुभं इन्द्रवसुक्रयोः पितापुत्रयोः संवादोत्रक्रि-यते। पुरा वसुक्रे यज्ञं कुर्वाणे सति इन्द्रः प्रच्छन्नरूपआजगाम तं वसुक्रपत्नीन्द्रागमनकां-क्षिणी विप्रकृष्टमिवाज्ञया अस्तौत। अतस्तस्याः साक्रषिरिन्द्रोदेवता। अथ तस्याः प्रीत्यै वसु-

क्रेण सहेन्द्रः संवादमकरोत् द्वितीयादियुजः चतुर्थीरहिताः पञ्चर्चइन्द्रवाक्यानि । अतस्ता सक्रषिः । यद्यप्यासु वसुक्रः संबोध्यत्वाद्देवता तथापि ताऋचः ऐन्द्रे कर्मणि विनियोक्त्व इन्द्रलिंगसद्भावात् । चतुर्थीसहिताः शिष्टाः तृतीयाद्यावसुक्रवाक्यानि । अतः सक्रषिः तार मिन्द्रोदेवता । तथाचानुक्रान्तम्—विश्वोहिद्वादशेन्द्रवसुक्रयोः संवादऐन्द्रः सूक्तस्य प्रथम न्द्रस्य स्नुषा परोक्षवदिन्द्रमाहेन्द्रस्य युजः शेषाऋषेश्चतुर्थीति । गतोविनियोगः ।

तत्र प्रथमा—

विश्वोह्य१न्योअरिराजगाममेदहःश्वशुरोनाजगाम ।
जक्षीयाद्धानाउतसोमंपपीयात्स्वाशितःपुनरस्तंजगायात् ॥ १

विश्वः । हि । अन्यः । अरिः । आऽजगाम । मम । इत् । अह ।
श्वशुरः । न । आ । जगाम । जक्षीयात् । धानाः । उत । सोमम् ।
पपीयात् । सुऽआशितः । पुनः । अस्तम् । जगायात् ॥ १ ॥

अनया वसुक्रपत्नीन्द्रं स्तौति—अन्यइन्द्रव्यतिरिक्तः अरिः अर्यः ईश्वरः विश्वोहि सर्व एव देवगणआजगाम अस्मद्यज्ञं प्रत्यायया । इदित्यवधारणे अहेत्यद्भुते । सर्वदेवगणे आ गते सति ममैव श्वशुरः इन्द्रोनाजगाम सइन्द्रोयद्यागच्छेत्तर्हि धानाः भृष्टयवान् जक्षीयात् भक्षयेत् । उतापिच सोममभिषुतं पपीयात् ततः स्वाशितः सुष्ठु भुक्तः तृप्तः सन् पुनर्भूयः अस्त स्वगृहं प्रति जगायात् गच्छेत् ॥ १ ॥

अथ द्वितीया—

सरोरुवद्वृषभस्तिग्मशृङ्गोवर्ष्मन्तस्थौवरिमन्नापृथिव्याः ।
विश्वेष्वेनंवृजनेषुपामियोमेकुक्षीसुतसोमःपृणाति ॥ २ ॥

सः । रोरुवत् । वृषभः । तिग्मऽशृङ्गः । वर्ष्मन् । तस्थौ । वरिमन् ।
आ । पृथिव्याः । विश्वेषु । एनम् । वृजनेषु । पामि । यः ।
मे । कुक्षी इति । सुतऽसोमः । पृणाति ॥ २ ॥

वृषभः कामानां वर्षिता तिग्मशृंगः तीक्ष्णरश्मिः सइन्द्रोहं पृथिव्याअन्तरिक्षस्य वर्ष्मन् वर्ष्मनि वर्ष्मन्शब्दउन्नतवचनः स्थिरवचनोवा एवंभूते वरिमन् विस्तीर्णे प्रदेशे रोरुवत् भृशं शब्दायमानः सन् आतस्थौ आतिष्ठामि । एवंभूतोहं विश्वेषु सर्वेषु वृजनेषु संग्रामेषु एनमीदृशं वसुक्रं यजमानं पामि रक्षामि योयजमानः सुतसोमः अभिषुतसोमः मे मम कुक्षी उभौ पार्श्वौ पृणाति सोमरसपुरोडाशादिहविर्भिः पूरयति ईदृशं रक्षामीति संबंधः ॥ २ ॥

अथ तृतीया—

अद्रि॑णा ते म॒न्दिन॑ इन्द्र॒ तूया॑न्त्सु॒न्वन्ति॒ सोमा॒न्पिब॑सि॒ त्वमे॑षाम् ।
पच॑न्ति ते वृष॒भाँ अत्सि॒ तेषां॑ पृ॒क्षेण॒ यन्म॑घवन्हू॒यमा॑नः ॥ ३ ॥

अद्रि॑णा । ते॒ । म॒न्दिन॑ः । इ॒न्द्र॒ । तूया॑न् । सु॒न्वन्ति॑ । सोमा॑न् ।
पिब॑सि । त्वम् । ए॒षा॒म् । पच॑न्ति । ते॒ । वृ॒ष॒भान् । अत्सि॑ ।
तेषा॑म् । पृ॒क्षेण॑ । यत् । म॒घ॒ऽव॒न् । हू॒यमा॑नः ॥ ३ ॥

हे इन्द्र ते त्वदर्थं मन्दिनः मादयितॄन् तूयान् अविलंबितान् सोमान् अद्रिणा अभिषवग्राव्णा सुन्वन्ति यजमानाअभिषुण्वन्ति । एषामस्मदादियजमानानां संबंधीन् सोमान् त्वं पिबसि । किञ्च ते त्वदर्थं वृषभान् पशून् ये यजमानाः पचन्ति तेषां संबंधि हविर्भूतान् अत्सि भक्षयसि । हे मघवन् धनवन्निन्द्र त्वं यत् यदा पृक्षेण हविर्भूतेनान्नेन निर्मितेन हूयमानः यजमानैर्हूयसे तदेति पूर्वेण संबंधः ॥ ३ ॥

अथ चतुर्थी—

इ॒दं सु मे॑ जरित॒रा चि॑किद्धि प्रती॒पं शापं॑ न॒द्यो॑ वहन्ति ।
लो॒पा॒शः सिं॒हं प्र॒त्यञ्च॑मत्साः क्रो॒ष्टा व॑रा॒हं निर॑तक्त॒ कक्षा॑त् ॥ ४ ॥

इ॒दम् । सु । मे॒ । ज॒रि॒त॒रिति॑ । आ । चि॒कि॒द्धि॒ । प्र॒ति॒ऽई॒पम् । शाप॑म् ।
न॒द्य॑ः । व॒ह॒न्ति॒ । लो॒पा॒शः । सिं॒हम् । प्र॒त्यञ्च॑म् । अ॒त्साः॒ ।
क्रो॒ष्टा । व॒रा॒हम् । निः । अ॒त॒क्त॒ । कक्षा॑त् ॥ ४ ॥

हे जरितः शत्रूणां जरयितरिन्द्र त्वं मे मम सुशोभनमपि इदमीदृशं रूपं सामर्थ्यं चिकिद्धि आसमंताज्जानीहि । कीदृशं नद्योगंगाद्याः सरितः प्रतीपं प्रतिकूलं शापं उदकं न्ति । अपिच लोपाशः लुप्यमानं तृणमश्नातीति लोपाशोमृगः मया प्रेषितः सन् प्रत्यञ्चं त्मानं प्रतिगच्छन्तं सिंहं अत्साः अत्सात् आभिमुख्येन गच्छति । तथा क्रोष्टा शृगालः व बलवन्तमपि सूकरं कक्षात् अभिगहनदेशान्निरतक्क निर्गमयति एतदपि सर्वं सामर्थ्यं त्व मयि त्वत्प्रसादाल्लब्धमपि जानीहीत्यर्थः ॥ ४ ॥

अथ पंचमी—

कथातएतदहमाचिकेतंगृत्सस्यपाकस्तवसोमनीषाम् ।
त्वंनोविद्वाँऋतुथाविवोचोयमर्धंतेमघवन्क्षेम्याधूः ॥ ५ ॥

कथा । ते । एतत् । अहम् । आ । चिकेतम् । गृत्सस्य । पाकः ।
तवसः । मनीषाम् । त्वम् । नः । विद्वान् । ऋतुऽथा । वि ।
वोचः । यम् । अर्धम् । ते । मघऽवन् । क्षेम्या । धूः ॥ ५ ॥

हे इन्द्र पाकः पक्तव्यप्रज्ञोहं गृत्सस्य मेधाविनस्तवसोवृद्धस्य ते तव मनीषां स्तुतिं कर्तु मिति शेषः एतदीदृशं त्वदीयं सामर्थ्यं कथा कथं केन प्रकारेण आचिकेतं आसमंताज्जानामि त्वदुपदेशं विना न जानामीत्यर्थः । तस्मात्कारणात् विद्वान्सर्वज्ञस्त्वमेव नोस्मभ्यं ऋतुथा काले विवोचः विशेषेण ब्रूहि । हे मघवन् धनवन्निन्द्र ते तव अर्धं यं स्तुत्यवयवं वयं कुर्मः सा स्तुति क्षेम्या क्षेमेभवा क्लेशरहिता वोढुं शक्या धूरस्ति यस्मात् अतः स्तुत्यवयवमेव वयमक्लेशेन क- र्तुं न शक्नुमः अस्माकं मंदबुद्धित्वात् । तस्मात्त्वमेवास्मभ्यं स्वसामर्थ्यं स्तुतिप्रकारं च पुनरपि कथयेत्यर्थः ॥ ५ ॥

अथ षष्ठी—

एवाहिमान्तवसंवर्धयन्तिदिवश्चिन्मेबृहतउत्तराधूः ।
[illegible]

एव । हि । माम् । तवसम् । वर्धयन्ति । दिवः । चित् । मे ।
बृहतः । उत्ऽतरा । धूः । पुरु । सहस्रा । नि । शिशामि ।
साकम् । अशत्रुम् । हि । मा । जनिता । जजान ॥ ६ ॥ २० ॥

हि यस्मात्कारणात् एव एवमुक्तप्रकारेण तवसं प्रवृद्धं मां स्तोतारः स्तुतिभिः स्तुवन्तः वीर्येण वर्धयन्ति तस्मात्कारणात् बृहतोमहतो मे ममेन्द्रस्य दिवश्चित् द्युलोकादपि धूः स्तुतिः उत्तरा उद्गततरा अधिकतरा । किञ्च पुरु पुरूणि बहूनि मे सहस्रा शत्रूणां सहस्राणि साकं युगपत् निशिशामि तनूकरोमि हिनस्मीत्यर्थः । हि यस्मात्कारणात् जनिता सर्वस्य जनयिता प्रजापतिः मा मां इन्द्रं अशत्रुं अविद्यमानशत्रुं जजान जनितवान् ॥ ६ ॥

॥ इति सप्तमस्य सप्तमे विंशोवर्गः ॥ २० ॥

अथ सप्तमी—

**एवाहिमांतवसंजज्ञुरुग्रंकर्मन्कर्मन्वृषणमिन्द्रदेवाः ।**
**वधींवृत्रंवज्रेणमन्दसानोपव्रजंमहिनादाशुषेवम् ॥ ७ ॥**

एव । हि । माम् । तवसम् । जज्ञुः । उग्रम् । कर्मन्ऽकर्मन् ।
वृषणम् । इन्द्र । देवाः । वधीम् । वृत्रम् । वज्रेण । मन्दसानः ।
अप । व्रजम् । महिना । दाशुषे । वम् ॥ ७ ॥

हि यस्मात्कारणात् एव एवमनेनोक्तप्रकारेण हे इन्द्र देवाः मरुदादयः ऋत्विग्यजमानावा तवसं महान्तं त्वत्पुत्रं त्वद्रूपनिरूपणावस्थितं सन्तं वसुक्रं मां कर्मन्कर्मन् वृत्रवधाग्निहोत्रादौ सर्वस्मिन्कर्मणि उग्रं शूरमसह्यं वा वृषणं वर्षितारं हविषां दातारं जज्ञुः जानन्ति । अतः मन्दसानोमोदमानोहं वज्रेणायुधेन वृत्रं मेघमसुरं वावधीं अवधिषं । किञ्च दाशुषे हविर्दत्तवते यजमानाय वृष्टिप्रदानार्थं महिना महत्त्वेन व्रजं मेघसमूहं अपवं अपावं अपावृणोमि ॥ ७ ॥

अथाष्टमी—

**देवासआयन्परशूँरबिभ्रन्वनावृश्चन्तोअभिविड्भिरायन् ।**
**निसुद्र्वं१दधतोवक्षणासुयत्राकृपीटमनुतद्दहन्ति ॥ ८ ॥**

देवासः । आयन् । परशून् । अबिभ्रन् । वना । वृश्चन्तः ।
अभि । विट्ऽभिः । आयन् । नि । सुऽद्र्वम् । दधतः । वक्षणासु ।
यत्र । कृपीटम् । अनु । तत् । दहन्ति ॥ ८ ॥

देवासोदेवाः इन्द्रेण चोदिताः सन्तः आयन् गच्छन्ति मेघवधार्थं परशून् वज्रान् अ
बिभ्रन् धारयन्ति तदनंतरं विड्भिः मरुदादिप्रजाभिः सहितावृश्चन्तः मेघान् छिन्दन्तः वना वन
वृष्टिलक्षणान्युदकानि अभ्यायन् आभिमुख्येन गच्छन्ति । ततः सुद्र्वं शोभनद्रवणं वृष्ट्युदकं
क्षणासु नदीषु निदधतः नियमेन स्थापयन्तः यत्र यस्मिन्मेघजाते कृपीटं उदकनामैतत् निगू
मुदकं तिष्ठति तइमे देवाः तन्मेघजातं अनुलक्षीकृत्य दहन्ति उदकनिर्गमनार्थं शोषयन्ति ॥८

अथ नवमी—

शशः क्षुरं प्रत्यञ्चं जगाराद्रिं लोगेन व्यभेदमारात् ।
बृहन्तं चिदृहते रन्धयानि वयद्वत्सो वृषभं शूशुवानः ॥ ९ ॥

शशः । क्षुरम् । प्रत्यञ्चम् । जगार । अद्रिम् । लोगेन । वि ।
अभेदम् । आरात् । बृहन्तम् । चित् । ऋहते । रन्धयानि ।
वयत् । वत्सः । वृषभम् । शूशुवानः ॥ ९ ॥

वसुक्रइन्द्रंप्रति ब्रूते—शशः एतत्संज्ञितोमया प्रेरितोमृगविशेषः प्रत्यञ्चं वधायात्मानं
प्रतिगच्छन्तं क्षुरं क्षुरवन्तं दृढदीर्घतीक्ष्णनखं सिंहव्याघ्रादिकं बलवत्क्रूरमृगमित्यर्थः जगार
गिरति गृह्णाति वा । किञ्च लोगेन लोष्टेन अद्रिं हिमवदादिकं पर्वतं आराद्दूरस्थितमपि व्यभेदं
अहं भिनद्मि । बृहन्तं चिद् महान्तमपि हस्त्यादिकं ऋहते ह्रस्वकाय अल्पाय शशकादिकाय रं-
धयानि वशंगमयानि । शूशुवानः वीर्येण वर्धमानोवत्सः वृषभं महोक्षं वयत् युद्धाय गच्छति ।
हे इन्द्र एतदपि सर्वं त्वत्प्रसादादहं करोमीत्यर्थः ॥ ९ ॥

अथ दशमी—

सुपर्ण इत्था नखमा सिषायावरुद्धः परिपदं न सिंहः ।
निरुद्धश्चिन्महिषस्तर्ष्यावान्गोधा तस्मा अयथं कर्षदेतत् ॥ १० ॥

सुऽपर्णः । इत्था । नखम् । आ । सिसाय । अवऽरुद्धः । परिऽपदम् ।
न । सिंहः । निऽरुद्धः । चित् । महिषः । तृष्याऽवान् ।
गोधा । तस्मै । अयथम् । कर्षत् । एतत् ॥ १० ॥

सुपर्णः पक्षिरूपा गायत्री इत्था अमुत्र द्युलोके नखमात्मीयं आसिषाय सोमाहरणकाले इन्द्रार्थमाबबन्ध इन्द्रस्य प्रसादात् दिवि पदं न्यस्तवतीत्यर्थः । तत्रदृष्टान्तः—अवरुद्धः पंजरेणावृतः परिवेष्टितः सिंहः परिपदं न यथा करस्योपरि सर्वतः पादमवबध्नाति । किञ्च चिदित्युपमार्थे यथा केनापि बद्धपादोनिरुद्धोमहिषः तष्यावान् उदकाभावे तृषावान्भवति एवमिन्द्रः सोमाहरणात्पूर्वं सोमाभावे तृषितवानितिशेषः । तस्मै तादर्थ्ये चतुर्थी तादृशस्य तृषितस्येन्द्रस्यार्थं गोधा गमयतिवर्णानिति गौर्वाक् तत्र निधीयमानत्वाद्गायत्री गोधा । यद्वा गुधिर्निष्कर्षणार्थः निष्कृष्यसोमाहरणात् गोधा गायत्री अयथं अयत्नेन लीलयेत्यर्थः एतत्सोमजातं कर्षत् आकृष्टवती दिवः सकाशादाहृतवतीत्यर्थः ॥ १० ॥

अथैकादशी—

तेभ्यो गोधा अयथं कर्षदेतद्ये ब्रह्मणः प्रतिपीयन्त्यन्नैः ।
सिम उक्ष्णोवसृष्टाँ अदन्ति स्वयं बलानि तन्वः शृणानाः ॥ ११ ॥

तेभ्यः । गोधाः । अयथम् । कर्षत् । एतत् । ये । ब्रह्मणः ।
प्रतिऽपीयन्ति । अन्नैः । सिमः । उक्ष्णः । अवऽसृष्टान् ।
अदन्ति । स्वयम् । बलानि । तन्वः । शृणानाः ॥ ११ ॥

ये मरुदादिदेवगणाः ब्रह्मणः परिवृढस्येन्द्रस्य स्वभूतैरन्नैः सोमाख्यैः तृप्ताः सन्तः इति शेषः प्रतिपीयन्ति । पीयतिर्हिंसाकर्मा इन्द्रादेशाद्धिंसकान्प्रतिहिंसन्ति । तेभ्यः तेषां देवगणानामर्थाय गोधाः पूर्वोक्ता गायत्री अयथं अनायासेन एतत्सोमजातं कर्षदाकृष्टवती । किञ्च सिमः सिमान् श्रेष्ठान् यद्वा सिमशब्दः सर्वशब्दपर्यायः सर्वानुक्ष्णः सिञ्चतः अवसृष्टान् इन्द्रेण निसृष्टान् अनुज्ञातान् हविर्भूतान् सोमान् यज्ञेष्वदन्ति । किंकुर्वन्तः स्वयमात्मनैव बलानि शत्रूणां सैन्या-
[illegible] सोममाहृतवतीत्यर्थः ॥ ११ ॥

अथ द्वादशी—

एतेशमीभिःसुशमीअभूवन्येहिन्विरेतन्वः१सोमउक्थैः ।
नृवद्वदन्नुपनोमाहिवाजान्दिविश्रवोदधिषेनामवीरः ॥१२॥२

एते । शमीभिः । सुऽशमी । अभूवन् । ये । हिन्विरे । तन्वः । सो
उक्थैः । नृऽवत् । वदन् । उप । नः । माहि । वाजान् ।
दिवि । श्रवः । दधिषे । नाम । वीरः ॥ १२ ॥ २१ ॥

ये देवर्ष्यादयः तन्वः शरीराणि सोमे सोमयागे उक्थैः शस्त्रैः हिन्विरे वर्धयन्ति । ए
देवादयः इन्द्रादेशात्सोमे आहृते सति शमीभिः सोमयागकर्मभिः सुशमी सुकर्माणः अभूवन
नृवत् मनुष्यवद्वदन् इदं युष्मभ्यं मया दत्तमिति व्यक्तां वाचमुद्धारयन् नोस्मभ्यमुपमाहि उप
गम्य वाजानन्नानि बलानि वा हे इन्द्र त्वं देहीतिशेषः । अतःकारणात् वीरः दानशूरस्त्वं दि
वि द्युलोके श्रवः दानपतिरितिकीर्तितं नाम नामधेयं दधिषे धारयसि ॥ १२ ॥

॥ इति सप्तमस्य सप्तमे एकविंशोवर्गः ॥ २१ ॥

वनेवेत्यष्टर्चं त्रयोदशं सूक्तं वसुक्रस्यार्षं त्रैष्टुभमैन्द्रं अनुक्रान्तंच—वनेनाष्टाविति । चतुर्थेह
स्तोमवृद्धौ ब्राह्मणाच्छंसिनएतत्सूक्तमावापार्थं । सूत्रितञ्च—स्तोमेवर्धमानेकोअद्यनर्योवनेनवा-
यइति । महाव्रते निष्केवल्येप्येतत्सूक्तं । सूत्रितंच—प्रवोमहेमन्दमानायांधसइतिनिविद्धानंवने-
नवायोन्यधायिचाकन्निति ।

तत्र प्रथमा—

वनेनवायोन्यधायिचाकञ्छुचिर्वांस्तोमोभुरणावजीगः ।
यस्येदिन्द्रःपुरुदिनेषुहोतानृणांनर्योनृतमःक्षपावान् ॥ १ ॥

वने । न । वा । यः । नि । अधायि । चाकन् । शुचिः । वाम् ।
स्तोमः । भुरणौ । अजीगरिति । यस्य । इत् । इन्द्रः । पुरुऽदिनेषु ।
होता । नृणाम् । नर्यः । नृऽतमः । क्षपाऽवान् ॥

वनेनवायोन्यधायीति वने न वनइव वृक्ष इव शकुनिः स्वे नीडे वायमात्मीयं पुत्रं न्यधायि निदधाति शशुकमजातपक्षं सयथा तत्र निहितः चाकन् भयाद्दिशोनिरीक्षमाणआसीत्। अथवा कामयमानस्तदुत्सुकमनाआसीत् एवमयमस्मासु वृक्षस्यनीडभूतेषु शकुनिपुत्रभूतः शुचिर्व्यपगतसर्वदोषः वां युवयोः स्वभूतः स्तोमः हे भुरणौ भर्तारावश्विनौ शीघ्रौ वा भुरण्युरिति क्षिप्रनामेति। किञ्च यस्य स्तोमस्य पुरुदिनेषु बहुष्वहःसु इन्द्रो होता इन्द्रोप्याह्वाता भवति ममायं स्तोमः स्यादिति । किंलक्षणः पुनरिंद्रआह्वाता योनृणां मनुष्याणां नृतमः मनुष्याणामपि मनुष्यतमः शूराणामपि मध्ये शूरतमइत्यर्थः। नर्यश्च नृभ्योहितोयः क्षपावांश्च रात्रिपर्यायेषु सोमभागः एवं गुणयुक्तेन यः स्तोमः इन्द्रेणापि प्रार्थ्यतेस्मासु वर्तमानः सयुवां प्रत्यजीगः नित्यकालमेव गच्छतीत्यर्थः। एवं तावदेतामृचमाश्विनीमितिकृत्वा व्याचक्षते। तदसाधु। ऐन्द्रेहि सूक्ते प्रथमैवेयं भवति तच्च पुनः पृष्ठ्यस्य षष्ठेहनि स्तोमे वर्धमाने माध्यन्दिनसवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुज्यते। हे भुरणौ भर्तारौ देवानां पती यएषस्तोमोस्मासु निहितः शुचिर्व्यपगतदोषः शकुनिपुत्रइव वने वनावयवे वृक्षे चाकन्पश्यन्निव कामयमानइव वा इन्द्रमास्ते यस्य स्तोमस्य किमिति यस्येन्द्रः पुरुदिनेषु बहुष्वहःसु आह्वाताभूत्। अपिनाम मामनेन स्तोमेन स्तुयुरिति। किंलक्षणः पुनराह्वाता यस्येदिन्द्रइति नृणां नृतमः नर्यश्च क्षपावांश्च समानमेतत्पूर्वेणार्थेन। यमेवं इन्द्रः प्रार्थयते सएषस्तोमः तं प्रत्यजीगः गच्छतीत्यर्थः। अथवा सएषः स्तोमोस्माभिरुदीर्यमाणस्तस्येन्द्रस्य गुणान् गृह्णातीति स्यात् जिगर्तिर्गृह्णातिकर्मेतिह्युक्तं एवमत्र चाकन्नित्यस्य पश्यन्निति वा कामयमानइतिवेत्येतौ विपरिणामौ उपपद्येते शब्दसारूप्यादर्थाविरोधाच्च। एतस्मिन्निगमे पदविभागगतः कश्चिद्विचारोस्ति तमाह भाष्यकारः—वेति च यइतिच। चकारशाकल्यइति वा इति यइति च पदे चकारशाकल्यः पदकारः। तदेतद्विचार्यमाणं न साधु भवति। किं कारणं उदात्तंत्वेवमाख्यातमभविष्यत् एवमेतस्मिन्पदद्वये सति यदेतदाख्यातमधायीतिपदं उदात्तमभविष्यत् यद्वृत्तात्परस्य नित्यमाख्यातस्य निघातोन भवतीति लक्षणविदोमन्यन्ते। नचेदमुदात्तं तस्माद्यइति नेदं यद्वृत्तं किंतर्हि वायइत्येकमेवपदं। किञ्च असुसमाप्तश्च अर्थः अपुष्कलः एवमेतस्मिन्पदद्वये सति मन्त्रस्यार्थः असुसमाप्तो भवति ॥ १ ॥

अथ द्वितीया—

**प्रतेअस्याउषसःप्रापरस्यानृतौस्यामनृतमस्यनृणाम् ।**
**अनुत्रिशोकःशतमावहन्नन्कुत्सेनरथोयोअसत्ससवान् ॥ २ ॥**

प्र । ते । अस्याः । उषसः । प्र । अपरस्याः । नृतौ । स्याम ।
नृऽतमस्य । नृणाम् । अनु । त्रिऽशोकः । शतम् । आ । अवहत्
नॄन् । कुत्सेन । रथः । यः । असत् । ससऽवान् ॥ २ ॥

अस्यावर्तमानायाः ईदृश्याउषसः नृतौ नूनये नयने प्रापणे उदयकाले इत्यर्थः नृणां ने॒ णां मध्ये नृतमस्य अतिशयेन नेतुस्ते तवेन्द्रस्य स्तुत्या यागेन च प्रस्याम वयं प्रकृष्टाभवेम तथा हे इन्द्र अपरस्याआगामिन्याश्चोषसः नृतौ प्रापणे तव स्तुत्या यागेन च वयं प्रकृष्टाभ वेमेत्याशास्महे । किञ्च त्रिशोकोनामऋषिः हे इन्द्र त्वामाराध्य त्वत्प्रसादात् शतं बहून् अ॒ अनुचरभूतान् नॄन् मनुष्यानावहत् प्रापितवान् लब्धवानित्यर्थः । तथा तव कुत्सस्य च ससवा सनिता युगपदेव संभक्ता योरथः असत् अस्ति तं रथं कुत्सो लब्धवानितिशेषः । तथाच मन्त्रान्तरे श्रूयते—यासिकुत्सेनसरथमवस्युरिति । यस्मादेवं तस्मात् त्वत्प्रसादाद्वयं प्रकृष्टाभवेमेत्यर्थः ॥ २ ॥

अथ तृतीया—

कस्तेमदइन्द्ररन्त्योभूद्दुरोगिरोअभ्यु१ग्रोविधाव ।
कद्वाहोअर्वागुपमामनीषाआत्वाशक्यामुपमंराधोअन्नैः ॥ ३ ॥

कः । ते । मदः । इन्द्र । रन्त्यः । भूत् । दुरः । गिरः । अभि । उग्रः ।
वि । धाव । कत् । वाहः । अर्वाक् । उप । मा । मनीषा । आ ।
त्वा । शक्याम् । उपऽमम् । राधः । अन्नैः ॥ ३ ॥

हे इन्द्र ते तव ईषन्मध्यमोत्तमानां सोमजन्यानां मदानां मध्ये कोमदः रन्त्योरमयिता प्रीतिकरोभूत् भवति त्वत्प्रीतिकरमदयोग्यसोमदानाभिप्रायेणायं प्रश्नः । उग्रः ओजस्वी त्वं दुरः यज्ञगृहद्वाराणि गिरः स्तुतिलक्षणावाचश्च अभिविधाव अभ्यागच्छ । किञ्च कत् कदा वाहः इन्द्रं प्रत्युह्यतइति वाहः सोमउच्यते एवं भूतः अर्वाक् त्वत्प्रसादात्फलदानायास्मदभिमुखोभवि-

ष्यतीतिशेषः। अपिच कदा मनीषा सर्वार्थदर्शनप्रज्ञा सर्वगुणग्राहिणीस्तुतिर्वा मा मां त्वत्प्रसादादुपगमिष्यतीतिशेषः। कदा हे इन्द्र त्वा त्वां आइत्युपसर्गश्रुतेर्योग्यपदाध्याहारः आराध्य वयं अन्नैः सह राधोधनं उपमं मत्समीपं शक्यां शकिरत्र गत्यर्थोन्तर्भावितण्यर्थः संगमयेयं॥३॥

अथ चतुर्थी—

कदुंद्युम्नमिन्द्रत्वावंतोनूनूकयांधियाकंरसेकन्नआगंन्।
मित्रोनसत्यउरुगायभृत्याअन्नेसमस्ययदसंन्मनीषाः ॥ ४ ॥

कत्। ऊँ इति। द्युम्नम्। इन्द्र। त्वाऽवंतः। नून्। कयां।
धिया। करसे। कत्। नः। आ। अगन्। मित्रः। न। सत्यः।
उरुऽगाय। भृत्यै। अन्ने। समस्य। यत्। असंन्। मनीषाः ॥ ४ ॥

हे इन्द्र त्वं कदु कदा वा द्युम्नं हविर्लक्षणमस्मदीयमन्नं भुक्त्वेतिशेषः कया धिया केन कर्मणा नून् नेतॄनस्मान् त्वावतः त्वत्सदृशान्करसे करिष्यसि। कत् कदा नोस्मान्प्रति आगन् आगमिष्यसि। सत्यः अनवद्यइत्यर्थः मित्रोन सखेव तथा हे उरुगाय बहुकीर्ते इन्द्र त्वं भृत्यै भरणाय पोषणाय भवसीति शेषः। यद्यदा समस्य अस्मदादिकस्य सर्वस्य जगतःअन्ने जगत्स्थितिनिमित्ते आहारे मनीषाः अन्नाभिलषणाबुद्धयः असन् भवेयुः तदा सर्वस्य पोषणाय त्वं भवसीत्यर्थः ॥ ४ ॥

अथ पंचमी—

प्रेरयसूरोअर्थंनपारंयेअस्यकामंजनिधाइंवग्मन्।
गिरंश्चयेतेतुविजातपूर्वीर्नरंइन्द्रप्रतिशिक्षन्त्यन्नैः ॥ ५ ॥ २२॥

प्र। ईरय। सूरः। अर्थम्। न। पारम्। ये। अस्य। कामम्।
जनिधाःऽइंव। ग्मन्। गिरंः। च। ये। ते। तुविऽजात। पूर्वीः।
नरः। इन्द्र। प्रतिऽशिक्षंन्ति। अन्नैः ॥ ५ ॥ २२ ॥

सूरः सूर्यः अर्थंन यथा अर्तारं गन्तारं योगिनमनुगृह्णन् पारं संसारस्यान्तमपवर्गं गमयति तथा हे इन्द्र त्वं यजमानान् संसारस्यान्तं प्रेरय गमय ये अस्मदादयोयजमानाः अस्य तवेन्द्रस्य कामं सोमपानेच्छां ग्मन् गमिरत्र विपूर्वोन्तर्भावितण्यर्थश्च द्रष्टव्यः विगमयन्ति महता सोमपानेनापनयन्ति । तत्र दृष्टान्तः—जनिधाइव जनीनां जायानां संभोगकाले शय्यासु धारयितारः पतयोयथा प्रभूतसंभोगप्रदानेन मैथुनेच्छामपनयन्ति तद्वत् । किञ्च नरोनेतारोस्मदादयोये यजमानाः हे तुविजात बहुरूप रूपंरूपंप्रतिरूपोबभूवेति वचनात् । सर्वात्मन्निन्द्र ते तुभ्यं पूर्वीः अनादिकालप्रवृत्तागिरश्च स्तुतिलक्षणावाचश्च अन्नैः पुरोडाशादिहविर्भिः सह प्रतिशिक्षन्ति प्रतिकालं प्रयच्छन्ति तानस्मदादीन्यजमानान् पारं गमयेति पूर्वेण संबंधः ॥५॥

॥ इति सप्तमस्य सप्तमे द्वाविंशोवर्गः ॥२२॥

अथ षष्ठी—

**मात्रेनुतेसुमितेइन्द्रपूर्वीद्यौर्मज्मनापृथिवीकाव्येन ।**
**वरायतेघृतवन्तःसुतासःस्वाद्मन्भवन्तुपीतयेमधूनि ॥ ६ ॥**

**मात्रे इति । नु । ते । सुमिते इति सुऽमिते । इन्द्र । पूर्वी इति । द्यौः मज्मना । पृथिवी । काव्येन । वराय । ते । घृतऽवन्तः । सुतासः । स्वाद्मन् । भवन्तु । पीतये । मधूनि ॥ ६ ॥**

हे इन्द्र ते तव स्वभूतेन मज्मना शत्रूणां मज्जकेन काव्येन कर्मणा द्यौः पृथिवी द्यावापृथिव्यौ नु क्षिप्रं सुमिते निर्मिते । कीदृश्यौ मात्रे निर्मात्र्यौ पूर्वी पूर्व्यौ महत्यौ । यस्मादीदृशेन महत्त्वेन युक्तः तस्मात् घृतवन्तः अभिमुखत्वात् त्वां क्षरंतः दीप्तिमन्तोवा सुसंस्कृतत्वात् । यद्वा आज्यसंयुक्तावा सुतासः अभिषुताः सोमाः वराय श्रेष्ठाय ते तुभ्यमिन्द्राय स्वाद्मन् स्वाद्मानः स्वादिष्ठाः भवन्तु अस्माभिर्दत्ताः सन्तु । किमर्थं पीतये पानाय मधूनि मधुररसात्मकानि पुरोडाशादीन्यन्नानि हवींषि भक्षणार्थं दत्तानि भवन्तु ॥ ६॥

अथ सप्तमी—

आमध्वोअस्माअसिचन्नमंत्रमिन्द्रायपूर्णंसहिसत्यराधाः ।
सवावृधेवरिमन्नापृथिव्याअभिक्रत्वानर्यःपौंस्यैश्च ॥ ७ ॥

आ । मध्वः । अस्मै । असिचन् । अमंत्रम् । इन्द्राय । पूर्णम् ।
सः । हि । सत्यऽराधाः । सः । ववृधे । वरिमन् । आ । पृथिव्याः ।
अभि । क्रत्वा । नर्यः । पौंस्यैः । च ॥ ७ ॥

अस्मै इन्द्राय अस्येन्द्रार्थं मध्वोमधुररसस्य सोमस्य पूर्णं अमत्रं ग्रहचमसादिकं पात्रं आअसिचन् असिञ्चन् आभिमुख्येन स्थित्वा परयाभक्त्या अस्मदीयाऋत्विजः सिक्तवन्तः अ-ग्नौ प्रक्षिप्तवन्तः । हि यस्मात्कारणात्सइन्द्रः सत्यराधाः सत्यधनः यजमानेभ्योदातव्येनाविसंवा-दिधनइत्यर्थः । तस्मादसिञ्चन्निति संबंधः । अग्नावासिक्तेन तेन पात्रेण तृप्तः सइन्द्रः पृथिव्याः अन्तरिक्षस्य वरिमन्नतिशयेन विस्तीर्णस्थाने आगत्य अभिववृधे अभिवर्धते । कीदृशइन्द्रः नर्यः नृभ्योहितः क्रत्वा वृत्रवधादिकर्मणा प्रज्ञानेनवा पौंस्यैश्च युक्तइतिशेषः ॥ ७ ॥

अथाष्टमी—

व्यानळिन्द्रःपृतनाःस्वोजाआस्मैयतन्तेसख्यायपूर्वीः ।
आस्मारथंनपृतनासुतिष्ठयंभद्रयासुमत्याचोदयासे ॥ ८ ॥ २३ ॥

वि । आनट् । इन्द्रः । पृतनाः । सुऽओजाः । आ । अस्मै । यतन्ते ।
सख्याय । पूर्वीः । आ । स्म । रथम् । न । पृतनासु । तिष्ठ ।
यम् । भद्रया । सुऽमत्या । चोदयासे ॥ ८ ॥ २३ ॥

स्वोजाः शोभनबलः इन्द्रः पृतनाः शत्रुसेनाः व्यानट् व्याप्नोति इन्द्रः संग्रामेषु केनाप्य-प्रतिहन्यमानः सन् शत्रून् जयतीत्यर्थः । किञ्च पूर्वीः अत्र पूर्वशब्दउत्कृष्टवाची उत्कृष्टाः शत्रु-सेनाः अप्रभवन्त्यः सत्यः अस्मै अस्येन्द्रस्य सख्याय संबंधित्वलक्षणाय सखित्वाय आय-तंते संधिं कर्तुमिच्छन्तीत्यर्थः । अपरोर्धर्चः प्रत्यक्षकृतत्वात् भिन्नं वाक्यं । हे इन्द्र त्वं यं स्वी-

यं रथं भद्रया कल्याण्या सुमत्या शोभनया परानुग्रहयाबुद्ध्या चोदयासे चोदयसे यज्ञान्
ति प्रेरयसि । तं रथमस्मद्यज्ञं प्रत्यागन्तुं महतादरेणातिष्ठ आरोह । तत्रदृष्टान्तः—पृतनासु
ग्रामेषु रथं न यथा स्वरथं महतादरेणातिष्ठसि तद्वत् । स्मेति पादपूरणः ॥ ८ ॥

॥ इति सप्तमस्य सप्तमे त्रयोविंशोवर्गः ॥ २३ ॥

॥ इति दशमे मण्डले द्वितीयोनुवाकः ॥ २ ॥

तृतीयेनुवाके त्रयोदशसूक्तानि तत्र प्रदेवत्रेति पञ्चदशर्चं प्रथमं सूक्तं इलूषपुत्रस्य कव
स्यार्षं त्रैष्टुभमब्देवत्यं अपान्नपाद्देवताकं वा । तथाचानुक्रान्तं—प्रदेवत्रापञ्चोना कवषऐलूषआप
पोनप्त्रीयं वेति । अपइष्यहोतरित्युक्तः सन् होता प्रदेवत्रेत्याद्यानवर्चोनुब्रूयात् । सूत्रितञ्च—
वत्राब्रह्मणेगातुरेत्विति नव हिनोतानोअध्वरंदेवयज्येति दशमीमिति ।

तत्र प्रथमा--

प्रदेवत्राब्रह्मणेगातुरेत्वपोअच्छामनसोनप्रयुक्ति ।
महींमित्रस्यवरुणस्यधासिंपृथुज्रयसेरीरधासुवृक्तिम् ॥ १ ॥

प्र । देवऽत्रा । ब्रह्मणे । गातुः । एतु । अपः । अच्छ । मनसः ।
न । प्रऽयुक्ति । महीम् । मित्रस्य । वरुणस्य । धासिम् ।
पृथुऽज्रयसे । रीरध । सुऽवृक्तिम् ॥ १ ॥

ब्रह्मणे तृतीयार्थे चतुर्थी ब्रह्मणा स्तोत्रेण स्तूयमानइतिशेषः गातुर्देवानपोवाप्रति गमनशी-
लः सोमः देवत्रा देवीर्द्योतमानाः अपः वसतीवर्येकधनालक्षणान्युदकानि अच्छाभिमैतु प्र-
कर्षेण गच्छतु । तत्र दृष्टान्तः— मनसोनप्रयुक्ति यथा मनसः प्रयुक्ति प्रयोगउद्योगः शीघ्रं ग-
च्छति तद्वत् । एवं सोमे अपःप्रति गते सति हे मदीयात्मन् अध्वर्यो वा महीं धासिं महत्सो-
मलक्षणमन्नं मित्रस्य वरुणस्य चार्थाय पृथुज्रयसे विस्तीर्णजवाय महतइन्द्रस्य वार्थायेत्य-
र्थः रीरध संसाधय संस्कुरु दानयोग्यं कुरु । सुवृक्तिं सुष्ठु दोषैर्वर्जितां स्तुतिं च कुरु ॥१॥

अथ द्वितीया–

अध्वर्य॑वो ह॒विष्म॑न्तो॒ हि भू॒ताच्छा॒प इ॑तोश॒तीरु॑शन्तः ।
अव॒ याश्चष्टे॑ अरु॒णः सु॑प॒र्णस्तमास्य॑ध्वमू॒र्मिम॒द्या सु॑हस्ताः ॥ २ ॥

अध्व॑र्यवः । ह॒विष्म॑न्तः । हि । भू॒त । अच्छ॑ । अ॒पः । इ॒त ।
उ॒श॒तीः । उ॒श॒न्तः । अव॑ । याः । चष्टे॑ । अ॒रु॒णः । सु॒ऽप॒र्णः । तम् ।
आ । अ॒स्य॒ध्व॒म् । ऊ॒र्मिम् । अ॒द्य । सु॒ऽह॒स्ताः ॥ २ ॥

हे अध्वर्यवः यूयं हविष्मन्तोहि अभिषोतव्येन सोमलक्षणेन हविषा युक्ताः खलु भूत भवत । किञ्च हे उशन्तः सोमाभिषवं कर्तुं कामयमानाः अध्वर्यवोयूयं उशतीः सोमाभिषवांगभावमभिलषन्तीः एकधनालक्षणाअपः अच्छाभिमुख्येन इत गच्छत । अरुणः रक्तवर्णः सुपर्णः सुपतनः सोमः अवाधस्तात् अन्तरिक्षे याः मेघान्तरगताः अपः चष्टे पश्यति । हे सुहस्ताः सोमाभिषवादिशोभनकर्मकारित्वात्सुवर्णमयपवित्राद्यलंकृताः । यद्वा शोभनहस्ताहे अध्वर्यवोयूयं अद्येदानीं तं तादृशं ऊर्मिं सोमसंघातं ताभिरद्भिः सह आ अस्यध्वं आभिमुख्येन स्थित्वा महतादरेण दशापवित्रे शोधनार्थं मक्षिपत ॥ २ ॥

अथ तृतीया–

अध्व॑र्यवो॒ऽप इ॑ता समु॒द्रम॒पां नपा॑तं ह॒विषा॑ यजध्वम् ।
स वो॑ ददद् ऊ॒र्मिम॒द्या सुपू॑तं॒ तस्मै॒ सोमं॒ मधु॑मन्तं सुनोत ॥ ३ ॥

अध्व॑र्यवः । अ॒पः । इ॒त । स॒मु॒द्रम् । अ॒पाम् । नपा॑तम् ।
ह॒विषा॑ । य॒ज॒ध्व॒म् । सः । व॒ः । द॒द॒त् । ऊ॒र्मिम् । अ॒द्य ।
सु॒ऽपू॑तम् । तस्मै॑ । सोम॑म् । मधु॑ऽमन्तम् । सु॒नो॒त ॥ ३ ॥

हे अध्वर्यवोयूयं अपः एकधनलक्षणान्युदकान्याहर्तुमितिशेषः समुद्रं उदधिस्थानीयं जलाशयं इत गच्छत । इदानीं उत्तरोर्धर्चोव्याख्यायते–पश्चाद्द्वितीयः पादः आर्थिकोयं क्रमः

---

१ अच्छाभिलक्ष्य इत ताआनेतुं गच्छत यतः अरुणवर्णः शोभनपतनः सोमः अवयाः स्वमामिकामाअपः ।

अथेदानीं सोपान्नपात् वः जलाशयं प्रति गतेभ्योयुष्मभ्यं सुपूतं सुशुद्धं ऊर्मिं जलसमूहं
देव् ददातु यूयमपि तेन समूहेन तस्मै अपांनपाते मधुमन्तं मधुरस्वादूपेतं सोमं सुनोत अभि
णुत अभिषुतेन सोमाख्येन हविषा अपांनपातं वृष्टिकर्मण्यधिकृतं देवं यजध्वं ॥ ३ ॥

अथ चतुर्थी—

योअ॑निध्मोदीद॑यद॒प्स्व१॒॑न्तर्यंविप्रा॑सईळ॑तेअध्व॒रेषु॑ ।
अपां॑नपा॒न्मधु॑मतीर॒पोदा॒याभि॒रिन्द्रो॑वावृ॒धेवी॒र्या॑य ॥ ४ ॥

यः । अ॒नि॒ध्मः । दीद॑यत् । अ॒प्ऽसु । अ॒न्तः । यम् । विप्रा॑सः ।
ईळ॑ते । अ॒ध्व॒रेषु॑ । अपा॑म् । नपा॑त् । मधु॑ऽमतीः । अ॒पः ।
दाः । याभि॑ः । इन्द्र॑ः । व॒वृ॒धे । वी॒र्या॑य ॥ ४ ॥

उत्तरार्धस्य प्रत्यक्षकृतत्वादेकवाक्यतायै युष्मच्छब्देन समानार्थोभवच्छब्दः प्रथमार्धे
आहार्यः योभवानपान्नपात् अप्सु अन्तः अपां मध्ये मेघस्थाने अनिध्मः काष्ठवर्जितः सन्
दीदयत् दीप्यते विप्रासोमेधाविनऋत्विग्यजमानाअध्वरेषु यागेषु यं भवन्तं ईळते स्तुवन्ति । हे
अपान्नपात् सत्वं मधुमतीः मधुररसयुक्ताः अपोवृष्टिलक्षणादाः अस्मभ्यं देहि याभिर्वसतीवर्यै-
कधनारूपाभिः सोमेन श्रुताभिरद्भिः इन्द्रः वीर्याय वृत्रवधादिशूरकर्मणे ववृधे वर्धते ताअपोदे-
हीति संबंधः ॥ ४ ॥

अथ पञ्चमी—

याभि॒ःसोमो॒मोद॑तेहर्ष॑तेचक॒ल्या॒णीभि॑र्युव॒तिभि॒र्नमर्य॑ः ।
ताअ॑ध्वर्यो॒अ॒पोअच्छा॒परे॑हि॒यदा॑सि॒ञ्चाओष॑धीभिःपुनी॒तात्॥५॥२४॥

याभि॑ः । सोम॑ः । मोद॑ते । हर्ष॑ते । च॒ । क॒ल्या॒णीभि॑ः । यु॒व॒तिऽभि॑ः ।
न । मर्य॑ः । ताः । अ॒ध्व॒र्यो॒ इति॑ । अ॒पः । अच्छ॑ । परा॑ । इ॒हि॒ ।
यत् । आ॒ऽसि॒ञ्चाः । ओष॑धीभिः । पुनी॒ता॒त् ॥ ५ ॥ २४ ॥

अभिषुतः सोमः याभिर्वसतीवर्यैकधनाख्याभिरद्भिः सह मोदते मुदितोभवति हर्षते च
पुनरुक्तिरादरार्था अत्यर्थं हृष्यतीत्यर्थः । तत्र दृष्टान्तः—कल्याणीभिः कमनीयाभिर्युवतिभिस्त-
रुणीभिः सह मर्योन यथा मनुष्योमोदते तद्वत् । हे अध्वर्यो त्वं तास्तादृशीरपः अच्छाभिप्राप्तुं

परेहि जलाशयं प्रति गच्छ । किञ्च यद्यदा आहृताभिस्ताभिः आसिचाः आसमन्तात्सोमा-
न्सिञ्चसि तदा ओषधीभिः सोमैः सह अपश्च पुनीतात् दशापवित्रेण पुनीहि ॥ ५ ॥

॥ इति सप्तमस्य सप्तमे चतुर्विंशोवर्गः ॥ २४ ॥

अथ षष्ठी—

एवेद्यूनेयुवतयोनमन्तयदीमुशन्नुशतीरेत्यच्छ ।
संजानतेमनसासंचिकित्रेध्वर्यवोधिषणापश्चदेवीः ॥ ६ ॥

एव । इत् । यूने । युवतयः । नमन्त । यत् । ईम् । उशन् ।
उशतीः । एति । अच्छ । सम् । जानते । मनसा । सम् । चिकित्रे ।
अध्वर्यवः । धिषणा । आपः । च । देवीः ॥ ६ ॥

युवतयस्तरुण्यः स्त्रियः यूने तरुणाय नमंत यथा प्रह्वीभवन्ति एव एवं वसतीवर्येकध-
नाख्याआपः सोमाय प्रह्वीभवन्ति । यद्वा युवतयः सोमेन सह मिश्रयित्र्यः आपः यूने अभिष-
वादिकर्मणा आत्मना सह मिश्रयित्रे कर्त्रे अध्वर्यवे नमन्त प्रह्वीभवन्त्येव । इदितिपूरणः ।
कदा यद्यदा उशन् अभिषवार्थं वसतीवरीः कामयमानः सोमः सोमाभिषवं कर्तुं कामयमानो-
ध्वर्युर्वा उशतीः सोमेन सह मिश्रीभावमभिषवादिकर्मांगभावं च कामयमानाः ईमेनाअपः अ-
च्छ प्राप्तुं एति गच्छति तदा उपनमन्ते अध्वर्यवः धिषणा तदीया स्तुतिलक्षणा वाक्च देवीर्दे-
व्यः अपः आपश्च मनसा विशिष्टया बुद्ध्या संजानते सम्यक् जानन्ति संचिकित्रे स्वं स्वमधि-
कारं परस्परोपकारं च चक्षुषा सम्यक् पश्यन्ति ॥ ६ ॥

अथ सप्तमी—

योवोवृताभ्योअकृणोदुलोकंयोवोमह्याअभिशस्तेरमुञ्चत् ।
तस्माइन्द्रायमधुमन्तमूर्मिंदेवमादनंप्रहिणोतनापः ॥ ७ ॥

यः । वः । वृताभ्यः । अकृणोत् । ऊँ इति । लोकम् । यः । वः ।
मह्याः । अभिऽशस्तेः । अमुञ्चत् । तस्मै । इंद्राय । मधुऽमन्तम् ।
ऊर्मिम् । देवऽमादनम् । प्र । हिणोतन । आपः ॥ ७ ॥

यइन्द्रः वृताभ्यः मेघैरावृताभ्यः परिवेष्टिताभ्यः वोयुष्मभ्यं अद्भ्यः लोकं मेघोदराद्वि मनमार्गं अकृणोदकरोत्। उइतिपूरणः। किञ्च यः वोयुष्मान् मह्वा महत्याः अभिशस्तेर्मेघप रिवेष्टनाभिहिंसनात् अमुंचत् मोचितवान्। हे आपः यूयं तस्मै तादृशायेन्द्राय मधुमन्तं मधु स्वादयुक्तं देवमादनं इन्द्रादिदेवानां सोमेन सह मिश्रीभूय तर्पयितारं ऊर्मिं अप्संघातं प्रहिणु तन अस्मद्यज्ञं प्रतिगमयत सोमाभिषवकर्मांगभावाय प्रस्थापयत ॥ ७ ॥

अथाष्टमी—

प्रास्मैहिनोतमधुमन्तमूर्मिंगर्भोयोवःसिन्धवोमध्वउत्सः।
घृतपृष्ठमीड्यमध्वरेष्वापोरेवतीःशृणुताहवंमे ॥ ८ ॥

प्र। अस्मै। हिनोत। मधुऽमन्तम्। ऊर्मिम्। गर्भः। यः। वः।
सिन्धवः। मध्वः। उत्सः। घृतऽपृष्ठम्। ईड्यम्। अध्वरेषु।
आपः। रेवतीः। शृणुत। हवम्। मे ॥ ८ ॥

अत्र यच्छब्दसंबंधात् द्वितीयः पादः पूर्वं व्याख्येयः हे सिन्धवः स्यन्दनशीलाः आपः वोयुष्माकं योगर्भः मध्वोमधुररसस्य उत्सउत्स्यन्दनः प्रस्रवणः यच्छब्दयोगात्तच्छब्दोध्याहार्यः तं मधुमन्तं मधुररसोपेतं ऊर्मिमप्संघातं सारमित्यर्थः अस्मै अस्येन्द्रस्यार्थाय प्रहिनोत प्र- हिणुत प्रगमयत। कीदृशं अध्वरेषु यज्ञेषु घृतपृष्ठं घृतमाज्यं पृष्ठे यस्य तं पश्चाद्धृतपातिनमि- त्यर्थः। ईड्यं स्तुत्यं। किञ्च हे आपः यूयं रेवतीः रेवत्यः अस्मभ्यं यानि धनानि दातव्या- नि तैर्धनवत्यः मे मदीयं हवमाह्वानं शृणुत ॥ ८ ॥

अथ नवमी—

तंसिन्धवोमत्सरमिन्द्रपानमूर्मिंप्रहेतयउभेइयर्ति।
मदच्युतमौशानंनभोजांपरित्रितन्तुंविचरन्तमुत्सम् ॥ ९ ॥

तम्। सिन्धवः। मत्सरम्। इन्द्रऽपानम्। ऊर्मिम्। प्र। हेत।
यः। उभे इति। इयर्ति। मदऽच्युतम्। औशानम्। नभःऽजाम्।
परि। त्रिऽतन्तुम्। विऽचरन्तम्। उत्सम् ॥ ९ ॥

हे सिन्धवः स्यन्दनशीलाआपः योयुष्मदीयः सारभूतः समूहः उभे अस्मभ्यं दृष्टादृष्टफले दाता सन् इयर्ति कर्मांगभावं प्रतिपद्यते मत्सरं मादयितारं इन्द्रादिदेवानां तर्पयितारं इन्द्रपानं देवानां प्रमुखेनेन्द्रेण पानीयं तादृशं ऊर्मिमुदकसमूहं प्रहेत प्रगमयत अस्मद्यज्ञं प्रति प्रेरयत । कीदृशं मदच्युतं मदस्य च्यावकं औशानं सोमेन सह मिश्रीभावं कामयमानं नभोजां नभस्यन्तरिक्षे वृष्टिरूपेण जातं परि सर्वतः त्रितंतुं त्रयाणां लोकानां तनितारं विस्तारयितारं विचरन्तं यज्ञपात्रेषु गच्छन्तं उत्सं उत्स्यन्दनं तर्पयितारं देवान्प्रतिऊर्ध्वं गन्तारमिमित्यर्थः ॥ ९ ॥

अपोनप्त्रीये एकधनास्वावृत्तासु आववृंततीरित्येषा । सूत्रितञ्च—आववृंततीरधनुद्विधाराइत्यावृत्तास्वेकधनास्विति । तत्रैव हिनोतानइत्येषा । सूत्रंपूर्वमुदाहृतं ।

तत्रैषा सूक्ते दशमी—

आवर्वृततीरधनुद्विधारांगोषुयुधोननियवंचरन्तीः ।
ऋषेजनित्रीर्भुवनस्यपत्नीरपोवन्दस्वसवृधःसयोनीः ॥ १० ॥२५॥

आऽवर्वृततीः । अधं । नु । द्विऽधाराः । गोषुऽयुधः । न ।
निऽयवम् । चरन्तीः । ऋषे । जनित्रीः । भुवनस्य । पत्नीः ।
अपः । वन्दस्व । सऽवृधः । सऽयोनीः ॥ १० ॥ २५ ॥

अधाथानन्तरं गोषु युधोन गोषु निमित्तभूतासु मेघैः सह युद्ध्यतइति गोषुयुदिन्द्रः तस्य यथा वृष्टिलक्षणाआपः द्विधाराः द्विशब्दोनेकत्ववाची अनेकधाराः अपर्यन्तधाराइत्यर्थः अस्माकमप्येवं स्थिताः आववृंततीः आवृत्ताः नियवं सोमं प्रतिनियतं यवं मिश्रीभावं चरन्तीः गच्छन्तीः भुवनस्य लोकस्य जनित्रीः जनयित्रीः पत्नीः पालयित्रीश्च सवृधः सह सोमस्य वर्धयित्रीः सयोनीः सोमेन सह समानस्थानाः हे ऋषे मदीयान्तरात्मन् अध्वर्यो वा त्वं एवंभूताअपः नु क्षिप्रं वन्दस्व स्तुहीत्यर्थः ॥ १० ॥

॥ इति सप्तमस्य सप्तमे पञ्चविंशोवर्गः ॥ २५ ॥

अथैकादशी—

हिनोतानोअध्वरंदेवयज्याहिनोतब्रह्मसनयेधनानाम् ।
ऋतस्ययोगेविष्यध्वमूधःश्रुष्टीवरीर्भूतनास्मभ्यमापः ॥ ११ ।

हिनोत । नः । अध्वरम् । देवऽयज्या । हिनोत । ब्रह्म । सनये ।
धनानाम् । ऋतस्य । योगे । वि । स्यध्वम् । ऊधः ।
श्रुष्टीऽवरीः । भूतन । अस्मभ्यम् । आपः ॥ ११ ॥

हे ऋत्विजः हिनोत प्रहिणुत प्रगमयत प्रोत्सर्पयत नोस्माकं एतमध्वरं यज्ञं देवयज्य देवयज्यायै देवयजनार्थं । किञ्च प्रहिणुतब्रह्मस्तुत्याख्यं यथाशास्त्रक्रमेण सनये लब्धयेस्माव धनानां किञ्च ऋतस्य यज्ञस्य योगे संयोगे यदेतदूधरिव सोमपूर्णमधिषवणचर्म वर्तते । अथव सोमसंबद्धशकटं योगः तद्धि तर्हि युज्यते तेनाधिषवणचर्मोधसोधस्तादवस्थितेनेति म· न्यमानोनिरुक्तकारोब्रवीति याज्ञेशकटइति । यदेतद्यज्ञशकटस्याधस्तादुपरिवाधिषवणचर्मैतद्वि- ष्यध्वं विमुंचध्वं ग्रहचमसस्थाल्यादिषु योनिषेकः सोमस्य एतद्विमोचनमधिषवणचर्मो- धसः तद्धिसोमउत्सिच्यमाने श्लथीभवति । यथेतरं गोरूधोदुह्यमानायां गवि एवमृत्विजउ- क्त्वाधुनैवसोमसंमिश्राअपोब्रवीति यूयमपि हे आपः एभिर्ऋत्विग्भिरुत्सिच्यमानाः श्रुष्टीवरीः सुखवत्योभूतन भवतास्मभ्यम् । एवमत्र प्रशब्देनार्थस्य सुतरां प्रकटनाभवतीति भाष्यकारेण प्रशब्दोध्याहृतः प्रहिणुतेति अध्वरमित्यनेनसंबंधात् हिनोतेर्गत्यर्थत्वमुपपद्यते । एतस्याऋचो- व्याख्यानं निरुक्तटीकायाउद्धृतं[1] ॥ ११ ॥

प्रातरनुवाकस्यापोरेवतीरित्येषा प्रतिपत् । सूत्रितंच—आपोरेवतीःक्षयथाहिवस्व उपप्रय- न्तइतिसूक्ते इति ।

तत्रैषा द्वादशी—

आपोरेवतीःक्षयथाहिवस्वःक्रतुंचभद्रंबिभृथामृतंच ।
रायश्चस्थस्वपत्यस्यपत्नीःसरस्वतीतद्गृणतेवयोधात् ॥ १२ ॥ [मयमा- न्द्रायेन्द्रार्थं]

१ नि० ६. २२. ।

आपः । रेवतीः । क्षयथ । हि । वस्वः । क्रतुम् । च । भद्रम् ।
बिभृथ । अमृतम् । च । रायः । च । स्थ । सुऽअपत्यस्य ।
पत्नीः । सरस्वती । तत् । गृणते । वयः । धात् ॥ १२ ॥

हे आपः रेवतीः रेवत्योधनवत्योयूयं वस्वः वसुनोधनस्य क्षयथ हि ईशिध्वे खलु। किञ्च भद्रं भजनीयं क्रतुं च सोमयागादिलक्षणं कर्म च अमृतं च अमृतममरणरूपं तज्जन्यफलं च बिभृथ धारयथ पुष्णीथ वा ।तथा रायश्च धनस्य च स्वपत्यस्य शोभनपुत्रस्य च पत्नीः पत्न्यः पालयित्र्यः स्थ भवथ । तथा सरस्वती तदभिमानिनी देवता गृणते स्तुवते मह्यं तदिदं सर्वं वयोन्नलक्षणं धनं धात् दधातु ॥ १२ ॥

अपोनप्त्रीये प्रतियदापइत्येषा। सूत्रितंच—प्रतियदापोअदृश्रमायतीरितिप्रतिदृश्यमानास्विति ।

तत्रैषा त्रयोदशी—

प्रतियदापोअदृश्रमायतीर्घृतंपयांसिबिभ्रतीर्मधूनि ।
अध्वर्युभिर्मनसासंविदानाइन्द्रायसोमंसुषुतंभरन्तीः ॥ १३ ॥

प्रति । यत् । आपः । अदृश्रम् । आऽयतीः । घृतम् । पयांसि ।
बिभ्रतीः । मधूनि । अध्वर्युऽभिः । मनसा । सम्ऽविदानाः ।
इन्द्राय । सोमम् । सुऽसुतम् । भरन्तीः ॥ १३ ॥

हे आपः आयतीः अस्मद्यज्ञं प्रत्यागच्छन्तीः यत् सुपांसुलुगितिविभक्तेर्लुक् याः युष्मान् प्रत्यदृश्रं प्रतिपश्यामि घृतं सोमसंसृष्टमाज्यं मधूनि मधुसदृशानि मृष्टरसानि पयांस्युदकानि संभूय बिभ्रतीः यागकाले धारयन्तीः तथा अध्वर्युभिः मनसा अन्तःकरणेन संविदानाः संभाषमाणाः । किञ्च इन्द्रायेन्द्रार्थं सुषुतं सुष्ठु सुतं सोमं भरन्तीः धारयन्तीः एवं भूतास्ताः युष्मामस्तौमीतिशेषः ॥ १३ ॥

त्वं एवंभू॰ ॰ेनप्त्रीये एमाअग्मन्निति द्वे। सूत्रितंच—एमाअग्मन्रेवतीर्जीवधन्याइति द्वे सन्नासूत्तर-

सैषा चतुर्दशी—

एमाअंग्मन्रेवतीर्जीवधन्याअध्वर्यवःसादयतासखायः।
निबर्हिषिधत्तनसोम्यासोपांनप्त्रासंविदानासएनाः ॥ १४ ॥

आ। इमाः। अग्मन्। रेवतीः। जीवऽधन्याः। अध्वर्यवः।
सादयत। सखायः। नि। बर्हिषि। धत्तन। सोम्यासः।
अपाम्। नप्त्रा। सम्ऽविदानासः। एनाः ॥ १४ ॥

रेवतीरेवत्योधनवत्यः जीवधन्याः जीवानां पाययित्र्यः प्रीणयित्र्योवा इमाईदृग्भूताआपः आग्मन् अस्मद्यज्ञं प्रत्यागच्छन् एतज्ज्ञात्वा हे सखायः सखिभूताहे अध्वर्यवः यूयं अपांनप्त्रा वृष्टिकर्मस्वधिकृतेन देवेन सह संविदानासः संविदानाः संमंत्रयमाणाः एनाः एताअपः सादयत स्थापयत। कुत्र सादयामीति उच्यते—सोम्यासः सोमसंपादिनः अध्वर्यवोयूयं बर्हिषि वेद्यामास्तीर्णे कुशमये निधत्तन नियमेन स्थापयत ॥ १४ ॥

अथ पंचदशी—

आग्मन्नापउशतीर्बर्हिरेदंन्यध्वरेअसदन्देवयन्तीः।
अध्वर्यवःसुनुतेन्द्रायसोममभूदुवःसुशकादेवयज्या ॥ १५ ॥ २६ ॥

आ। अग्मन्। आपः। उशतीः। बर्हिः। आ। इदम्। नि।
अध्वरे। असदन्। देवऽयन्तीः। अध्वर्यवः। सुनुत। इन्द्राय।
सोमम्। अभूत्। ऊँ इति। वः। सुऽशका। देवऽयज्या ॥ १५ ॥ २६ ॥

आपः वसतीवर्येकधनाख्याः इदं ईदृशं बर्हिर्वेदिस्तरणं उशतीरुशत्यः कामयमाना आग्मन् आआगच्छन् अस्मद्यज्ञं प्रति आगत्य च अध्वरे अस्मदीये यज्ञे देवयन्तीः देवान्कामयमानाः तर्पयितुमिच्छन्त्यइत्यर्थः न्यसदन् निषीदन् एतज्ज्ञात्वा हे अध्वर्यवः यूयं इन्द्रायेन्द्रार्थं

सोमं सुनुत अभिषुणुत इदानीमपां प्रसादात् वोयुष्माकं देवयज्या देवानिन्द्रादीनुद्दिश्य क्रियमाणा यागक्रिया सुशका सुष्ठु कर्तुं शक्या अभूदासीदेव ॥ १५ ॥

॥ इति सप्तमस्य सप्तमे षड्विंशोवर्गः ॥ २६ ॥

आनइत्येकादशर्चं द्वितीयं सूक्तं कवषस्यार्षं त्रैष्टुभं वैश्वदेवं अनुक्रान्तञ्च—आनएकादशवैश्वदेवमिति गतः सूक्तविनियोगः । एकादशिनस्य वैश्वदेवस्य पशोः पुरोडाशस्यानइत्येषानुवाक्या सूत्रितञ्च—विश्वेअद्यमरुतोविश्वऊत्यानोदेवानामुपवेतुशंसइति ।

तत्र प्रथमा—

आनोदेवानामुपवेतुशंसोविश्वेभिस्तुरैरवसेयजत्रः ।
तेभिर्वयंसुषखायोभवेमतरन्तोविश्वादुरितास्याम ॥ १ ॥

आ । नः । देवानाम् । उप । वेतु । शंसः । विश्वेभिः । तुरैः ।
अवसे । यजत्रः । तेभिः । वयम् । सुऽसखायः । भवेम ।
तरन्तः । विश्वा । दुःऽइता । स्याम ॥ १ ॥

देवानां स्तोतॄणां नोस्माकं शंसः स्तोतव्यः यजत्रोयष्टव्यः एवंभूतः इन्द्रः तुरैः त्वरणशीलैः विश्वेभिः सर्वैर्मरुद्भिः सह अवसे अस्मद्यज्ञरक्षणार्थं आउपवेतु उपागच्छतु । वयमपि तेभिस्तैः सह सुसखायः शोभनसखायः स्याम भवेम । किञ्च विश्वा दुरिता विश्वानि दुरितानि पापानि तरन्तः स्याम ॥ १ ॥

अथ द्वितीया—

परिचिन्मर्तोद्रविणंममन्यादृतस्यपथानमसाविवासेत् ।
उतस्वेनक्रतुनासंवदेतश्रेयांसंदक्षंमनसाजगृभ्यात् ॥ २ ॥

परि । चित् । मर्तः । द्रविणम् । ममन्यात् । ऋतस्य । पथा । नमसा ।
आ । विवासेत् । उत । स्वेन । क्रतुना । सम् । वदेत ।
श्रेयांसम् । दक्षम् । मनसा । जगृभ्यात् ॥ २ ॥

मर्तोमनुष्योयजमानः परिचित्सर्वतः द्रविणं विश्वेषां देवानां यागार्थं धनं ममन्यात् न्यात् मन्यतिः कान्तिकर्मा कामयेत लब्धुमिच्छेत् धनं लब्ध्वा च ऋतस्य यज्ञस्य पथा म ण नमसा हविराख्येनान्नेन आविवासेत् परिचरेत् । उतापिच स्वेनात्मीयेन क्रतुना प्रज्ञानेन नसेत्यर्थः संवदेत संवादोत्र सम्यग्ध्यानमुच्यते हविर्गृहीत्वा वषट्करिष्यन् विश्वान्देवान्म सा ध्यायेदित्यर्थः । विश्वेषां देवानां यागानन्तरं च तत्प्रसादात् श्रेयांसमतिशयेन प्रशस्य त्मानं दक्षं प्रवृद्धं सर्वव्यापिनं मनसा ध्यानसाधनेनान्तःकरणेन जगृभ्यात् गृह्णीयात् ॥ २

अथ तृतीया—

अधायिधीतिरसंसृग्रमंशास्तीर्थेनदस्ममुपयन्त्यूमाः ।
अभ्यानश्मसुवितस्यशूषंनवेदसोअमृतानामभूम ॥ ३ ॥

अधायि । धीतिः । असंसृग्रम् । अंशाः । तीर्थे । न । दस्मम् ।
उप । यन्ति । ऊमाः । अभि । आनश्म । सुवितस्य ।
शूषम् । नवेदसः । अमृतानाम् । अभूम ॥ ३ ॥

धीतिः देवयागक्रिया अधायि निहिता स्थापिता अस्माभिः प्रवर्तितेत्यर्थः तदनन्तरं ऊमाः अवितारः तर्पयितारः अंशाः अस्माभिर्दत्ताः हविर्भागाः दस्मं दर्शनीयं शत्रूणामुपक्षपयितारं वा अससृग्रं असमानसृष्टिं उग्रजन्मानमित्यर्थः एवंभूतं देवसंघं उपयन्ति उपगच्छन्तु। तत्र दृष्टान्तः— तीर्थे न यथा गंगादितीर्थे तर्पणमुखेन विसृष्टाअपामंशादेवसंघमुपगच्छन्ति तद्वत् । तदनन्तरं वयं सुवितस्य सुइतस्य सुष्ठु प्राप्तस्य स्वर्गादिकस्य शूषं सुखं अभ्यानश्म अभिप्रापवाम । किञ्च वयं अमृतानां देवानां नवेदसोनवेदेत्येतस्मिन्नर्थे नवेदः शब्दोनभ्राणन्पान्नवेदाइति निपातितः न न वेत्तारः वेत्तारएव स्वरूपतोज्ञातारएवेत्यर्थः अभूम भवेमेत्याशास्महे ॥ ३ ॥

अथ चतुर्थी—

नित्यंश्चाकन्यात्स्वपतिर्दमूनायस्माउदेवःसविताजजान ।
भगोवागोभिरर्यमेमनज्यात्सोअस्मैचारुश्छदयदुतस्यात् ॥ ४ ॥

नित्यः । चाकन्यात् । स्वऽपतिः । दमूनाः । यस्मै । ऊँ इति । देवः ।
सविता । जजान । भगः । त्वा । गोभिः । अर्यमा । ईम् ।
अनज्यात् । सः । अस्मै । चारुः । छदयत् । उत । स्यात् ॥ ४ ॥

नित्यः कल्पावस्थायी प्रजापतिः चाकन्यात् तस्मै दृष्टादृष्टफलं चाकनतु कामयतां । कीदृशः स्वपतिः स्वीयानां प्रजानां स्वामी धनपतिर्वा दमूनाः दानमनाः । कस्मै कामयतामिति उच्यते । उ अपिच यस्मै यजमानाय मह्यं सविता सर्वस्य प्रेरकोदेवः जजान जनितवान् दृष्टादृष्टफलं दत्तवानित्यर्थः । वाशब्दः समुच्चये । तथा भगोदेवश्च गोभिरस्मदीयाभिः स्तुतिरूपाभिर्वाग्भिः अर्यमादेवश्च ईमीदृग्भूतं दृष्टादृष्टफलं अनज्यात् व्यक्तीकुर्यात् दद्यादित्यर्थः । उतापिच स्यात् अन्योपि योदेवगणोस्ति चारुः रमणीयः सोपिदेवगणः अस्मै यजमानाय मह्यं छदयत् दृष्टादृष्टफलं दातुं कामयतामित्येतदाशास्महे ॥ ४ ॥

अथ पञ्चमी—

इयंसाभूयाउषसामिवक्षायद्धक्षुमन्तःशवसासमायन् ।
अस्यस्तुतिंजरितुर्भिक्षमाणाआनःशग्मासउपयन्तुवाजाः॥५॥२७॥

इयम् । सा । भूयाः । उषसाम्ऽइव । क्षाः । यत् । ह । क्षुऽमन्तः ।
शवसा । सम्ऽआयन् । अस्य । स्तुतिम् । जरितुः । भिक्षमाणाः ।
आ । नः । शग्मासः । उप । यन्तु । वाजाः ॥ ५ ॥ २७ ॥

क्षुमन्तः क्षुशब्दोन्नवाची शब्दवाची वा अन्नवन्तः स्तुतिमन्तः कीर्तिमन्तोवेत्यर्थः एवंभूताः देवाः शवसा बलेन यत् यामस्मदीयां स्तुतिं प्रतिसमायन् समागच्छन्संप्राप्ताः सेयं स्तुतिर्देवानां प्राप्याभूयाः भूयात् भवतु उषसामिवक्षाः यथा पृथिवी उषसां व्याप्ता सर्वेषां प्राप्या भवति तद्वत् । किञ्च जरितुः स्तोतुरस्य मम स्तुतिं भिक्षमाणाः याचमानाः शग्मासः शग्ममिति सुखनाम सुखाः सुखकराः वाजाः सुधन्वनः पुत्राः त्रयोप्यृभुर्विभ्वावाजइत्येते नोस्मानाभिमुख्येन उपयन्तु उपगच्छन्तु ॥ ५ ॥

॥ इति सप्तमस्य सप्तमे सप्तविंशोवर्गः ॥ २७ ॥

१ ऋ० सं० ३. ७. ३.

अथ षष्ठी—

अस्येदेषासुमतिःपप्रथानाभवत्पूर्व्याभूमनागौः ।
अस्यसनीळाअसुरस्ययोनौसमानआभरणेबिभ्रमाणाः ॥ ६ ।

अस्य । इत् । एषा । सुऽमतिः । पप्रथाना । अभवत् । पूर्व्या ।
भूमना । गौः । अस्य । सऽनीळाः । असुरस्य । योनौ ।
समाने । आ । भरणे । बिभ्रमाणाः ॥ ६ ॥

इत् इदानीं अस्य देवगणस्य संबंधिनी एषा सुमतिः सुष्ठु स्तुतिः पप्रथाना भवत् विस्तीर्यमाणाभूत् अस्माभिः क्रियमाणाइत्यर्थः । कीदृशी पूर्व्या पूर्वकालीना भूमना भूम्ना बहुत्वेन युक्तेतिशेषः सर्वदेवसंबंधित्वात् भृशं जातेत्यर्थः गौः देवान्प्रति गन्त्री एतज्ज्ञात्वा सर्वे देवाअसुरस्य प्रजारूपबलवतः अस्य मम संबंधिनि समाने सर्वदेवसाधारणे भरणे सर्वेषां देवानां तुष्टिकरणे योनौ यज्ञाख्ये स्थाने सनीळाः समानस्थानाः बिभ्रमाणाः अस्मदर्थं दृष्टादृष्टफलं धारयन्तः आगच्छन्त्विति शेषः ॥ ६ ॥

अथ सप्तमी—

किंस्विद्वनंकउसवृक्षआसयतोद्यावापृथिवीनिष्टतक्षुः ।
संतस्थानेअजरेइतऊतीअहानिपूर्वीरुषसोजरन्त ॥ ७ ॥

किम् । स्वित् । वनम् । कः । ऊँ इति । सः । वृक्षः । आस । यतः ।
द्यावापृथिवी इति । निःऽततक्षुः । सन्तस्थाने इति सम्ऽतस्थाने ।
अजरे इति । इतऊती इतीतःऽऊती । अहानि ।
पूर्वीः । उषसः । जरन्त ॥ ७ ॥

यतः यस्माद्वृक्षात् द्यावापृथिवी द्यावापृथिव्यौ निष्टतक्षुः देवाः निःशेषेण कृतवन्तः स ताहशोवृक्षः कउ आस कीदृग्वा बभूव तदुत्पादकं वनमरण्यं किंस्वित् सन्तस्थाने सम्यक् तिष्ठन्त्यौ अजरे जरावर्जिते इतऊती इतः एतेभ्योदेवेभ्योरक्षणं ययोस्ते । किञ्च अहानि सर्वाणि दिनानि पूर्वीर्बह्वीरुषसश्च देवाः निष्टतक्षुः एवंभूतान्देवान् जरन्तः स्तोतारः स्तवन्ति ॥ ७ ॥

अथाष्टमी—

नैतावदेनापरोअन्यदस्त्युक्षासद्यावापृथिवीबिभर्ति ।
त्वचंपवित्रंकृणुतस्वधावान्यदींसूर्यंनहरितोवहन्ति ॥ ८ ॥

न । एतावत् । एना । परः । अन्यत् । अस्ति । उक्षासः ।
द्यावापृथिवी इति । बिभर्ति । त्वचम् । पवित्रम् । कृणुत ।
स्वधाऽवान् । यत् । ईम् । सूर्यम् । न । हरितः । वहन्ति ॥ ८ ॥

द्यावापृथिव्योः निर्माणरूपं एतावद्देवजातं सामर्थ्येन युक्तं इति न अपितु एना एतेभ्योदेवेभ्यः परः उत्कृष्टः अन्यदन्योहिरण्यगर्भोस्ति उक्षा सेक्ता प्रजानां स्रष्टेत्यर्थः हिरण्यगर्भः परमसूक्ष्मोवायुरूपोलिङ्गात्मापः प्रविश्य द्यावापृथिवी द्यावापृथिव्यौ बिभर्ति धारयति । किञ्च स्वधावान् बलवान् अन्नवान्वा सहिरण्यगर्भः पवित्रं पवित्रमयं त्वचं आत्मीयं शरीरं दीप्तं मन्त्रं वा कृणुत करोति । कदेति उच्यते—यद्यदा ईमिमां त्वचं हरितोश्वाः सूर्यं न वहन्ति न प्रापयन्ति तदेति सृष्टेः प्रागित्यर्थः ॥ ८ ॥

अथ नवमी—

स्तेगोनक्षामत्येतिपृथ्वींमिहंनवातोविहवातिभूम ।
मित्रोयत्रवरुणोअज्यमानोग्निर्वनेनव्यसृष्टशोकम् ॥ ९ ॥

स्तेगः । न । क्षाम् । अति । एति । पृथ्वीम् । मिहम् । न । वातः ।
वि । हवाति । भूम । मित्रः । यत्र । वरुणः । अज्यमानः ।
अग्निः । वने । न । वि । असृष्ट । शोकम् ॥ ९ ॥

स्तेगः स्त्यै ष्ट्यै शब्दसंघातयोः रश्मिसंघातीआदित्यः पृथ्वीं विस्तीर्णां क्षां भूमिं तेजसा नात्येति नातिगच्छति मर्यादया तिष्ठतीत्येवमादित्यः स्तूयते वातोवायुरपि खलु भूम भूमिं मिहं वृष्टिं न विवाति समर्थोपि सन् विविधं न गमयति भूमिं प्रति सावशेषमेव वर्षतीति वातः स्तूयते यत्र यस्मिन्प्रजापतौ मित्रोदेवः अज्यमानोव्यज्यमानः व्यक्तीभवन्नुत्पाद्यमानइत्यर्थः शोकं स्वदीप्तिं व्यसृष्ट विसृजति सर्वतोविक्षिपति । तथा वरुणश्च व्यक्तीभवन्स्वदीप्तिं विक्षिपति । तत्र

दृष्टान्तः—अग्निर्दवानलः वने न यथा वृक्षसंघाते स्वदीप्तिं सर्वतोविसृजति तद्वत् तादृशं प्रजा-तिं स्तौमीति शेषः ॥ ९ ॥

अथ दशमी—

स्तरीर्यत्सूतसद्योअज्यमानाव्यथिरव्यथीःकृणुतस्वगोपा ।
पुत्रोयत्पूर्वःपित्रोर्जनिष्टशम्यांगौर्जगारयद्धपृच्छान् ॥ १० ॥

स्तरीः । यत् । सूत । सद्यः । अज्यमाना । व्यथिः । अव्यथीः ।
कृणुत । स्वऽगोपा । पुत्रः । यत् । पूर्वः । पित्रोः । जनिष्ट ।
शम्याम् । गौः । जगार । यत् । ह । पृच्छान् ॥ १० ॥

अरण्याकारभूतां शमीं गोत्वेन निरूपयति स्तरीर्निवृत्तप्रसवागौः सद्यः शीघ्रं अज्यमा-ना निषिच्यमानरेतस्कासती यद्यदा सूत वत्सं प्रसूते तदा व्यथिर्दुःखानां बाधयित्री स्वगोपा स्वायत्तगोप्तृका स्वभूतरक्षणा वा सती सा गौः अव्यथीः व्यथारहिताः प्रजाः कृणुत करोति । यदा शमी पुत्रस्थानीयमश्वत्थं प्रसूते तदानीमरण्याहरणाय तादृशमश्वत्थमन्विष्यतामृत्विजां अश्वत्थस्य जनयित्री शमी सुखहेतुर्भवतीत्यर्थः । शमीगर्भादश्वत्थादरणीआहर्तव्ये । श्रूयतेहि—शमीगर्भादग्निं मथ्नन्तीति । अपिच पूर्वः पुरातनः पुत्रः पुन्नाम्नोनरकात्त्राता यद्वा पुत्रस्थानीयोग्निः पित्रोर्जनयित्र्योररण्योः सकाशाद्यद्यदा जनिष्टमन्थनेन प्रादुर्भवति तदानीं गौः पृथिवीतयोरर-ण्योर्मातृभूतां शम्यां अश्वत्थगर्भां तां शमीं सुपांसुलुगितिसुपोड्यादेशः जगार उद्गिरति य-द्ध यां खलु शमीं पृच्छान् ऋत्विजः पृच्छन्ति ज्ञीप्सन्ति गवेषयन्ति ॥ १० ॥

अथैकादशी—

उतकण्वंनृषदःपुत्रमाहुरुतश्यावोधनमादत्तवाजी ।
प्रकृष्णायरुशदपिन्वतोधर्ऋतमत्रनकिरस्माअपीपेत् ॥ ११ ॥ २८ ॥

उत । कण्वम् । नृऽसदः । पुत्रम् । आहुः । उत । श्यावः । धनम् ।
आ । अदत्त । वाजी । प्र । कृष्णाय । रुशत् । अपिन्वत ।
ऊधः । ऋतम् । अत्र । नकिः । अस्मै । अपीपेत् ॥ ११ ॥ २८ ॥

उतापिच कण्वमृषिं नृषदः पुत्रमाहुः वेदवादिनोवदन्ति । उतापिच वाजी हविर्लक्षणान्नवान्कण्वः श्यामः श्यामवर्णः सन्नस्मादग्नेः सकाशात् धनमादत्त अगृह्णात् । कृष्णाय श्यामवर्णाय नार्षदाय कण्वाय अग्निरूधः रुशत् रोचमानं रूपं प्रापिन्वत प्रासिञ्चत् । अत्रेत्थं अग्निव्यतिरिक्तः कश्चिदपि देवः अस्मै कण्वाय ऋतं यज्ञं नकिरपीपेत् नावर्धत । युवं श्यावायरुशतीमदत्तमित्युक्तं ॥ ११ ॥

॥ इति सप्तमस्य सप्तमेष्टाविंशोवर्गः ॥ २८ ॥

प्रसुग्मन्तेति नवर्चं तृतीयं सूक्तं आदितः पञ्चजगत्यः चतस्रस्त्रिष्टुभः पूर्ववदृषिदेवते । तथाचानुक्रान्तम्—प्रसुग्मन्तानव पञ्चाद्याजगत्यइति । गतोविनियोगः ।

तत्र प्रथमा—

प्रसुग्मन्ताधियसानस्यसक्षणिंवरेभिर्वरांअभिषुप्रसीदतः ।
अस्माकमिन्द्रउभयंजुजोषतियत्सोम्यस्यान्धसोबुबोधति ॥ १ ॥

प्र । सु । ग्मन्ता । धियसानस्य । सक्षणिं । वरेभिः । वरान् । अभि ।
सु । प्रऽसीदतः । अस्माकम् । इन्द्रः । उभयम् । जुजोषति ।
यत् । सोम्यस्य । अन्धसः । बुबोधति ॥ १ ॥

इन्द्रः स्वभूतौ हरी धियसानस्य इन्द्रागमनं चिन्तयतोयजमानस्य मनः संबंधिनिसक्षणि सेवायां मद्गुणके सेव्ये यज्ञेनिमित्तेग्मन्ता आगच्छन्तौ सु सुष्ठु प्रेरयति ततः सइन्द्रः वरेभिर्वरणीयैर्मार्गैः प्रसीदतः हविरासादयतोयजमानस्य वरानुत्कृष्टान् हविर्विशेषान्स्तुतिविशेषांश्चाभिलक्षीकृत्य सुष्ठु आगच्छतु सइन्द्रआगतः सन् अस्माकं स्वभूतं उभयं हविश्च स्तुतिश्चैतद्द्वयं जुजोषति सेवतां भक्षयतु शृणोतु चेत्यर्थः । यद्यदा सोम्यस्य सोमसंपादिनोमम अन्धसः अन्नरूपस्य सोमस्य रसमितिशेषः बुबोधति बुध्यते जिह्वया विजानाति सोमं पिबतीत्यर्थः तदा जुजोषतीति पूर्वेण संबंधः ॥ १ ॥

अथ द्वितीया—

वीन्द्रयासिदिव्यानिरोचनाविपार्थिवानिरजसापुरुष्टुत ।
येत्वावहन्तिमुहुरध्वरांउपतेसुवन्वन्तुवग्वनांअराधसः ॥ २ ॥

---

१ ऋ० सं० १. ८. १४.

वि । इन्द्र । यासि । दिव्यानि । रोचना । वि । पार्थिवानि । रजसा । पुरुऽस्तुत । ये । त्वा । वहन्ति । मुहुः । अध्वरान् । उप । ते । सु । वन्वन्तु । वग्वनान् । अराधसः ॥ २ ॥

हे इन्द्र दिव्यानि दिविभवानि रोचना रोचनानिदीप्तिस्वभावकानि ज्योतींषि यद्वा दिव्यान् लोकान्वियासि व्याप्नोषि हेपुरुष्टुत बहुभिः स्तुतेन्द्र पार्थिवानि पृथिव्यां भवानि रजसा आत्मीयेन ज्योतिषा विद्युल्लक्षणेन यद्वा रजःशब्दाच्छसआकारः पार्थिवान् लोकान् व्याप्नोषि येत्वदीयाअश्वाः मुहुः पुनःपुनः अध्वरानस्मदीयान्यज्ञान्प्रति त्वा त्वां उपावहन्ति समीपे प्रापयन्ति तेश्वाः वग्वनान् वचनेन स्तुत्या संभजमानान् अराधसः धनरहितानस्मान् सुष्ठु वन्वंतु धनप्रदानार्थं संभजंतां ॥ २ ॥

अथ तृतीया—

तदिन्मेछन्त्सद्वपुषोवपुष्टरंपुत्रोयज्जानंपित्रोरधीयति ।
जायापतिंवहतिवग्नुनासुमत्पुंसइद्भद्रोवहतुःपरिष्कृतः ॥ ३ ॥

तत् । इत् । मे । छन्त्सत् । वपुषः । वपुःऽतरम् । पुत्रः । यत् । जानम् । पित्रोः । अधिऽईयति । जाया । पतिम् । वहति । वग्नुना । सुऽमत् । पुंसः । इत् । भद्रः । वहतुः । परिऽकृतः ॥ ३ ॥

वपुषः वपूरूपं तद्वान् लक्ष्यते वष्पुमतोपि वपुष्टरं रूपवत्तरं अत्यन्तं सुरूपं तव यज्ञकर्म मे मह्यं छन्त्सत् इन्द्रः कामयतां यद्यदा पुत्रः जानं जन्म आत्मनउत्पत्तिं पित्रोर्मातापित्रोः सकाशादधीयति संकीर्तनद्वारेणाधिगच्छति सुब्रह्मण्याह्वानकाले अमुकशर्मणः पुत्रोयजतइत्यात्मनोजन्मसंकीर्तयति यद्वा यज्जननादागतं धनं पित्रोः सकाशात्पुत्रःअधिगच्छति तदेव मह्यमिच्छतु जाया पत्नी पतिं यजमानं सुमत् कल्याणेन वग्नुना वाग्रूपेण शब्देन वहति आत्मसमीपं प्रापयति भद्रोभजनीयः परिष्कृतः संस्कृतः पुंसइव पुसः पत्युरेवार्थं वहतुर्जायायै प्रदातव्यः । तदुक्तं सुभद्रमर्यभोजनंविभार्षीइति । यद्वा पुंसः अतिशूरस्येन्द्रस्यार्थाय भद्रः भजनीयः वहतुर्वहनशीलोदेवान्प्रति ससोमः परिष्कृतः संस्कृतोभवति तदेन्द्रः कामयतामित्यर्थः॥३॥

१ ऋ० सं० ५. ७. १६. ।

अथ चतुर्थी

तदित्सधस्थमभिचारुदीधययगावोयच्छासन्वहतुंनधेनवः ।
मातायन्मन्तुर्यूथस्यपूर्व्याभिवाणस्यसप्तधातुरिज्जनः ॥ ४ ॥

तत् । इत् । सधऽस्थम् । अभि । चारु । दीधय । गावः ।
यत् । शासन् । वहतुम् । न । धेनवः । माता । यत् । मन्तुः । यूथस्य ।
पूर्व्या । अभि । वाणस्य । सप्तऽधातुः । इत् । जनः ॥ ४ ॥

तदित् तदेव सधस्थं सहतिष्ठन्त्यत्रेति सधस्थं स्थानं यज्ञाख्यं चारु शोभनं अभिदीधय हे इन्द्र अभितो दीप्यस्व यद्यत्र गावः स्तुतिलक्षणावाचः इन्द्र आगच्छ हरिव आगच्छेत्येवमाद्याः शासन् अस्मद्यज्ञंप्रति त्वदागमनमाशासते । तत्र दृष्टान्तः—वहतुंन यथा धेनवो नवप्रसूतागावः प्रापणसाधनं गृहं आशासते तद्वत्। यतः आगत्य प्रकाशयेत्यत्र कारणमाह—यद्यस्मात् मन्तुः मन्यतिरर्चतिकर्मा अर्चकस्य मम स्वभूता माता देवतागणानां निष्पादयित्री स्तुतिर्यूथस्य यष्टृस्तोतृगणस्य पूर्व्या प्रथमभागिनी खलु यस्माच्चसप्तधातुः धार्यन्ते क्रियन्ते कर्माण्येभिरिति धातवश्छदांसि ऋतवो वा सप्तछन्दस्कः सप्तर्तुकः सप्तहोत्रात्मकोवायं जनः वाणस्यस्तुतिशब्दस्य अभिकर्ता खलु तस्माच्छीघ्रमागच्छेति भावः । यद्वा यत्कल्याणं तदेव स्थानमस्माकमभिधारय प्रयच्छ यस्मिन्स्थाने धेनवः पयः प्रदानेन प्रीणयित्र्योगावः वहतुं उह्यते पुरुषोनेनेति वहतुरन्नं पयोघृतादि तत्तु शासति नः संप्रत्यर्थे इदानीं प्रयच्छन्ति तथा यस्मिन्मन्तुः मन्तव्यापूजनीयापुत्रसमूहस्य माताभिगच्छति वाणस्य वाद्यस्य सप्तधातुः निषादादिसप्तस्वरोपेतो जनः अभिगच्छति तद्वत् तद्गुणोपेतं प्रयच्छेति भावः ॥ ४ ॥

अथ पञ्चमी—

प्रवोच्छारिरिचेदेवयुष्पदमेकोरुद्रेभिर्यातितुर्वणिः ।
जरावायेष्वमृतेषुदावनेपरिवऊमेभ्यःसिञ्चतामधु ॥ ५ ॥ २९ ॥

प्र । वः । अच्छ । रिरिचे । देवऽयुः । पदम् । एकः । रुद्रेभिः ।
याति । तुर्वणिः । जरा । वा । येषु । अमृतेषु । दावने ।
परि । वः । ऊमेभ्यः । सिञ्चत । मधु ॥ ५ ॥ २९ ॥

हे यजमानाः देवयुः देवान्कामयमानो होता वो युष्माकं पदमच्छस्थानं प्रति प्ररि
अतिरिक्तोभूव अन्यहोतृभ्यःसकाशात् एकः मुख्यः इन्द्रः रुद्रेभिः रुद्रपुत्रैर्मरुद्भिः सह तुर्वं
क्षिप्रगामीसन् याति गच्छति युष्मदीयं यज्ञं जरावा वाशब्दोप्यर्थे स्तुतिरपि एव्वमृतेषु मरण
धर्मरहितेषु देवेषु दावने धनप्रदानाय समर्था भवति तस्मात् वो यूयं छान्दसोवसादेशः ऊमे
भ्यो रक्षितृभ्यो देवेभ्यः मधु मदकरं सोमं अद्भिः परिषिञ्चत ॥ ५ ॥

॥ इति सप्तमस्य सप्तमे एकोनत्रिंशोवर्गः ॥ २९ ॥

अथ षष्ठी—

नि॒धीय॑मान॒मप॑गूळ्हम॒प्सु प्र मे॑ दे॒वानां॑ व्रत॒पा उ॑वाच ।
इन्द्रो॑ वि॒द्वाँ अनु॒ हि त्वा॑ च॒चक्ष॒ तेना॒हम॑ग्ने॒ अनु॑शिष्ट॒ आगा॑म् ॥ ६ ॥

नि॒ऽधीय॑मानम् । अप॑ऽगूळ्हम् । अ॒प्ऽसु । प्र । मे॒ । दे॒वाना॑म् ।
व्र॒त॒ऽपाः । उ॒वा॒च॒ । इन्द्रः॑ । वि॒द्वान् । अनु॑ । हि । त्वा॒ ।
च॒चक्ष॑ । तेन॑ । अ॒हम् । अ॒ग्ने॒ । अनु॑ऽशिष्टः । आ । अ॒गा॒म् ॥ ६ ॥

कुरुश्रवणस्य यज्ञे निधीयमानोग्निरभिधीयते निधीयमानं अध्वर्युणा हवनीयेग्नौ
अप्सु मातृभूतासु अपगूळ्हं अन्तर्हितं देवानां व्रतपाः कर्मणोरक्षकः इन्द्रः मे मह्यं प्रोवाच मा-
वादीत् हे अग्ने विद्वान् जानानइन्द्रः स्वाधिकारमस्मद्भक्ततां वा त्वा त्वां अनुहि चचक्ष अनु-
गतः पश्चाद्ददर्श तेनेन्द्रेणानुशिष्टोहं अनेन पथा त्वया स्वर्गोगन्तव्यइत्येवमुपदिष्टः सन् आगां
आभिमुख्येन स्वर्गं गच्छेयं ॥ ६ ॥

अथ सप्तमी—

अक्षे॑त्रवि॒त्क्षेत्र॒विदं॒ ह्यप्रा॒ट् स प्रैति॑ क्षेत्र॒विदानु॑शिष्टः ।
ए॒तद्वै भ॒द्रम॑नु॒शास॑नस्यो॒त स्रु॒तिं वि॑न्द॒त्य॒ञ्ज॒सीना॑म् ॥ ७ ॥

अक्षे॑त्रऽवित् । क्षे॒त्र॒ऽविद॑म् । हि । अप्रा॑ट् । सः । प्र । ए॒ति॒ ।
क्षे॒त्र॒ऽवि॒दा॑ । अनु॑ऽशिष्टः । ए॒तत् । वै । भ॒द्रम् । अ॒नु॒ऽशास॑नस्य ।
उ॒त । स्रु॒तिम् । वि॒न्द॒ति॒ । अ॒ञ्ज॒सीना॑म् ॥ ७ ॥

सेयमनुशासनस्तुतिः प्रासंगिकी अक्षेत्रवित् क्षिनिवासगत्योः क्षीयते गम्यतेनेनेति क्षेत्रं पंथाः पंथानमजानन्पुरुषः क्षेत्रविदं क्षेत्रज्ञं पुरुषं अप्राट् पृष्टवान् सक्षेत्रविदा पथिज्ञेन तेनानुशिष्टः प्रदर्शितमार्गः सन्प्रैति स्वाभिलषितदेशं गच्छति अनुशासनस्यस्वर्गोपदेशरूपस्य एतद्वै एतत्खलु भद्रं भजनीयं कल्याणकरं कितव । उतापिच अञ्जसीनां ऋजुना मार्गेण गन्तव्यानां अपां स्रुतिं मार्गं पिपासितः सन्विन्दति लभते । यद्वा अञ्जसीनामिति स्रुतेर्विशेषणं ऋजुमकुटिलं अप्रयासेन गन्तव्यमार्गं लभते खलु ॥ ७ ॥

अथाष्टमी—

अ॒द्येदु॒ प्राणी॒दम॑मन्नि॒माहापी॑वृतो॒ अध॑यन्मा॒तुरूध॑ः ।
एमे॑नमाप जरि॒मा युवा॑नमहे॑ळ॒न्वसु॑ः सु॒मना॑ बभूव ॥ ८ ॥

अ॒द्य । इत् । ऊँ इति॑ । प्र । आ॒नी॒त् । अम॑मन् । इ॒मा । अहा॑ ।
अपि॑ऽवृतः । अ॒ध॒य॒त् । मा॒तुः । ऊध॑ः । आ । ई॒म् । ए॒न॒म् । आ॒प॒ ।
ज॒रि॒मा । युवा॑नम् । अहे॑ळन् । वसु॑ः । सु॒ऽमना॑ः । ब॒भू॒व॒ ॥ ८ ॥

अयमग्निः अद्येत् अद्यैवास्मिन्दिने प्राणीत् मन्थनेन चेष्टितोभवत् [श्वसप्राणने अनचेतिधातुः । तदानीमेव इमा इमानि अहा अहानि सौमिकानि अममन् नेतुममन्यत मनज्ञाने व्यत्ययेन श्लुः तिङउत्तरत्वादनिघातः । अपिच अपीवृतः तेजोभिः परिवृतः सन् मातुः पृथिव्याः ऊधः सारभूतं सोमादिकं हविरधयत् पिबति तथा युवानं नित्यतरुणं देवानां हविषा मिश्रयन्तं वा एनमग्निं जरिमा जरतिः स्तुतिकर्मा तस्मादौणदिकइमनिच् । स्तोतृभिः क्रियमाणा स्तुतिरापआभिमुख्येन चाप्नोति ईमिति पूरणः । ततः अहेळन् अक्रुध्यन् स्तोतॄन्प्रति वसुः वासयिता सर्वेषां धनदानेनाच्छादयिता तेजोभिः शत्रूणां वा वसुमान्वा अग्निः सुमनाः शोभनमनस्कोबभूव ॥ ८ ॥

अथ नवमी—

ए॒तानि॑ भ॒द्रा क॑लश क्रियाम॒ कुरु॑श्रवण॒ दद॑तो म॒घानि॑ ।
दा॒न इद्वो॑ मघवानः॒ सो अ॑स्त्व॒यं च॒ सोमो॑ हृ॒दि यं बिभ॑र्मि ॥ ९ ॥ ३० ॥

एतानि । भद्रा । कलश । क्रियाम । कुरुऽश्रवण । ददतः । मघानि । दानः । इत् । वः । मघऽवानः । सः । अस्तु । अयम् । च । सोमः । हृदि । यम् । बिभर्मि ॥ ९ ॥ ३० ॥

हे कलश कलावन् सर्वकलापरिपूर्ण यद्वा लुप्तमत्वर्थीयः द्रोणकलशवन् हे कुरुश्रवण कुरवऋत्विजः तेषां स्वभूतानां स्तुतीनां श्रोतः हेइन्द्र मघानि धनानि स्तोतृभ्योयष्टृभ्यश्च ददतः प्रयच्छतस्तवेन्द्रस्यार्थं एतानि भद्रा भजनीयानि हवींषि स्तोत्राणि च क्रियाम विधेयास्म करोतेराशीर्लिङि रिङ्शयग्लिङ्क्षिवति रिङादेशः । अथ स्तोतॄन्प्रत्याह हेमघवानः मंहनीयस्तोत्ररूपधनवन्तः वोयुष्माकं सइन्द्रः दानइत् धनादेर्दातैवास्तु भवतु अयंच यज्ञेस्थितः सोमोदातास्तु हृदि हृदये आत्मीये यं पीतं सोमं बिभर्मि धारयामि डुभृञ्धारणपोषणयोः जौहोत्यादिकः भृञामिदित्यभ्यासस्येत्वं यद्योगादनिघातः यद्वा हेकलश कुलजात हे कुरुश्रवण एतन्नामक त्रसदस्योः पुत्र राजन् ऋत्विग्भ्योधनानि प्रयच्छतस्तवार्थं वयं कर्माणि क्रियामहे मघवानः कुरुश्रवणाः पूजायां बहुवचनं पदं यागकर्म कुर्वाणस्य तव इन्द्रोदाता भवतु अयं सोमश्च धनानि प्रयच्छतु ॥ ९ ॥

॥ इति सप्तमस्य सप्तमे त्रिंशोवर्गः ॥ ३० ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके सप्तमोध्यायः ॥ ७

## ॥ श्रीगणेशाय नमः ॥



यस्यनिःश्वसितं वेदा योवेदेभ्योखिलं जगत्। निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥ १॥

अथसप्तमेष्टमोध्यायआरभ्यते। तत्र प्रमेति नवर्चं चतुर्थं सूक्तं ऐलूषस्य कवषस्यार्षं आद्या त्रिष्टुप् साच वैश्वदेवी द्वितीया तृतीये बृहतीसतोबृहत्यौ ऐंद्र्यौ पराः षड्गायत्र्यः कुरुश्रवणमावृणीति द्वाभ्यां त्रसदस्युपुत्रस्य कुरुश्रवणनाम्नोराज्ञोदानं तुष्टाव अतस्तद्देवताके अथ यस्य मस्वादसइत्यादिभिश्चतसृभिः मित्रातिथिनाम्नि राज्ञि परलोकं गते शोकाभिभूतं तस्य पुत्रं उपमश्रवोनामानं कवषऋषिः स्नेहवशादवगत्यविगतशोकमकरोत् अतस्तासां तद्देवतात्वं। तथाचानुक्रान्तं—प्रमाद्यावैश्वदेव्यैंद्रः प्रगाथः परागायत्र्यो द्वे कुरुश्रवणस्य त्रासदस्यवस्य दानस्तुतिः पराभिर्मृते मित्रातिथौ राज्ञि तत्स्नेहादृषिरुपमश्रवसं पुत्रमस्य व्यशोकयदिति। गतोविनियोगः।

तत्र प्रथमा—

ओम् प्रमांयुयुज्रेप्रयुजोजनानांवहामिस्मपूषणमन्तरेण।
विश्वेदेवासोअधमामरक्षन्दुःशासुरागादितिघोषआसीत् ॥ १ ॥

प्र। मा। युयुज्रे। प्रऽयुजः। जनानाम्। वहामि। स्म। पूषणम्। अन्तरेण। विश्वे। देवासः। अध। माम्। अरक्षन्। दुःऽशासुः। आ। अगात्। इति। घोषः। आसीत् ॥ १ ॥

जनानां यजमानानां प्रयुजः प्रयोक्तारोदेवाः मा मां कवषमृषिं प्रयुयुज्रे कुरुश्रवणं प्रतियुक्तवन्तः अन्तरेण मार्गे पूषणं देवमध्वनां पतिं सखायमहं वहामिस्म ऊढवानस्मि। तथाच श्रूयते—ऐंद्राग्नमेकादशकपालंनिर्वपेत् जनतामेष्यन्नित्युपक्रम्य पौष्णंचरुमनुनिर्वपेदिति[1]। अधअथ मार्गे विश्वेदेवासः विश्वेदेवामां कवषमरक्षन् रक्षितवंतः दुःशासुः केनापि दुःशासनोयमृषिः आगादागच्छतीति घोषः शब्दश्च मार्गआसीदभूत् ॥ १ ॥

---

१ तै० सं० २. २. १-।

अथ द्वितीया—

सं॒मा॒तप॒न्त्य॒भितः॑स॒पत्नी॑रिव॒पर्श॑वः ।
निबा॑धते॒अम॑तिर्न॒ग्नता॒जसु॒र्वेर्नवे॑वीयते॒म॒तिः ॥ २ ॥

सम् । मा॒ । त॒प॒न्ति॒ । अ॒भितः॑ । स॒पत्नीः॑ऽइव । पर्श॑वः ।
नि । बा॒ध॒ते॒ । अम॑तिः । न॒ग्नता॑ । जसुः॑ । वेः । न । वे॒वी॒य॒ते॒ । म॒तिः ॥२॥

मा मां देवताप्रसादरहितं कवषं पर्शवः पार्श्वास्थीनि अन्नाभावाद्दौर्बल्यात् कुशयनाच्च सपत्नीरिव यथासपत्न्यः तद्वदभितउभयतः संतपंति दुःखयंतीत्यर्थः । किंच अमतिर्दारिद्र्यादागता दुर्मतिः सर्वार्थविषया सा निबाधते मां पीडयति वस्त्राभावादागता नग्नता च मां निबाधते जसुः अशनाभावादागतउपक्षयोपि मां निबाधते । किंच वेर्न यथा पक्षिणोमतिः शाकुनिकव्याधभयात् कंपयते तथा मे मतिः शत्रोर्वेवीयते भृशं कंपयते ॥ २ ॥

अथ तृतीया—

मूषो॒नशि॒श्ना॒व्य॑द॒न्ति॒मा॒ध्यः॑स्तो॒तारं॑ते॒शतक्रतो ।
स॒कृत्सुनो॑मघवन्निन्द्रमृळ॒याधा॑पि॒तेव॑नोभव ॥ ३ ॥

मूषः॑ । न । शि॒श्ना । वि । अ॒द॒न्ति॒ । मा॒ । आ॒ऽध्यः॑ । स्तो॒तार॑म् । ते॒ ।
श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । स॒कृत् । सु । नः॒ ।
म॒घ॒ऽव॒न् । इ॒न्द्र॒ । मृ॒ळ॒य॒ । अध॑ । पि॒ताऽइ॑व । नः॒ । भ॒व॒ ॥ ३ ॥

हे शतक्रतो बहुकर्मन् मघवन्निंद्र ते तव स्तोतारं मा मां कवषं आध्यःआधयः मूषोन यथा मूषिकाः शिश्ना स्नातानि सूत्राण्यश्नंति तथा व्यदंति विविधमदंति । तथाच यास्कः—संतपंतिमामभितः सपत्न्यइवेमाः पर्शवः कूपपर्शवोमूषिकाइवास्नातानि सूत्राणि व्यदंति स्वांगाभिधानं वास्यात् शिश्नानि व्यदंतीति वा संतपंति माध्यः कामाइति । तथा च सति हे इंद्र नोस्मान्सकृत्सुमृळयाभीष्टप्रदानेन सम्यक् सुखय अध अथ नोस्माकं पितेव यथा पिता तद्वद्रक्षिता भव ॥ ३ ॥

---

१ नि० ४. ६. ।

अथ चतुर्थी—

कुरुश्रवणमावृणिराजानंत्रासदस्यवम् । मंहिष्ठंवाघतामृषिः ॥४॥

कुरुऽश्रवणम् । आऽवृणि । राजानम् । त्रासदस्यवम् । मंहिष्ठम् । वाघताम् । ऋषिः ॥ ४ ॥

ऋषिरतींद्रियार्थद्रष्टा कवषोहं त्रासदस्यवं त्रसदस्योः पुत्रं मंहिष्ठं धनानामतिशयेन दातारं कुरुश्रवणं कुरवऋत्विजः तदीयानां स्तुतीनां श्रोतारं कुरुश्रवणं तन्नामकं राजानं वाघतां ऋत्विजामर्थाय अवृणि धनानि प्रार्थये ॥ ४ ॥

अथ पंचमी—

यस्यंमाहरितोरथेतिस्रोवहन्तिसाधुया । स्तवैसहस्रदक्षिणे॥५॥१॥

यस्य । मा । हरितः रथे । तिस्रः । वहन्ति । साधुऽया । स्तवै । सहस्रऽदक्षिणे ॥ ५ ॥ १ ॥

यस्य कुरुश्रवणाख्यस्य राज्ञः स्वभूतास्तिस्रोहरितः त्रयोश्वा रथे प्रस्थितं मा मां कषवं साधुया साधुवहंति कुरुश्रवणं राजानमहं सहस्रदक्षिणेस्मिन् यागे स्तवै स्तौमि प्रष्टिवाहिनं रथं च परिगृह्य ऋषिराशास्ते ॥ ५॥

॥ इति सप्तमस्याष्टमे प्रथमोवर्गः ॥ १ ॥

अतःपरं यस्येत्यादिकेन सूक्तशेषेण मित्रातिथौ राज्ञि मृते तत्पुत्रस्योपमश्रवसः समीपमागत्य कवषः स्नेहात् शोकं निवारयति ।

अथ षष्ठी—

यस्यप्रस्वादसोगिरउपमश्रवसःपितुः । क्षेत्रंनरण्वमूचुषे ॥ ६॥

यस्य । प्रऽस्वादसः । गिरः । उपमऽश्रवसः । पितुः । क्षेत्रम् । न । रण्वम् । ऊचुषे ॥ ६ ॥

हे राजन् उपमश्रवसस्तव पितुर्यस्य मित्रातिथेर्गिरोवाचः प्रस्वादसः प्रकर्षेण स्वादयित्र्यः । तत्र दृष्टांतः—ऊचुषे सेवमानाय दरिद्राय दानार्थं प्रकल्पितं रण्वं रमणीयं क्षेत्रं न यथा क्षेत्रं स्वदयितृ तद्वदित्यर्थः । उत्तरत्र संबंधः ॥ ६ ॥

अथ सप्तमी—

**अधिपुत्रोपमश्रवोनपान्मित्रातिथेरिहि । पितुष्टेअस्मिवन्दिता ॥७**

अधि । पुत्र । उपमऽश्रवः । नपात् । मित्रऽअतिथेः । इहि ।
पितुः । ते । अस्मि । वन्दिता ॥ ७ ॥

हे पुत्रोपमश्रवः मित्रातिथेर्नपात् पुत्रः त्वं अधीहि मत्समीपमागच्छ ते तव पितुस्तस्य मित्रातिथेरहं वंदिता स्तोतास्मि एतत् ज्ञात्वा शोकं मा कुरु यद्देयं द्रव्यमस्ति तत्सर्वं मह्यं देहि ॥ ७ ॥

अथाष्टमी—

**यदीशीयामृतानामुतवामर्त्यानाम् । जीवेदिन्मघवाममं ॥ ८ ॥**

यत् । ईशीय । अमृतानाम् । उत । वा । मर्त्यानाम् । जीवेत् ।
इत् । मघऽवा । मम ॥ ८ ॥

उतापिच यद्यमृतानां देवानां मर्त्यानां मनुष्याणां वा मरणहेतूनामीशीय अहमीश्वरः स्यां तर्हि मम कवषस्य याज्योमघवा धनवान्मित्रातिथीराजा जीवेत् प्राणान् धारयेत् । तथाच नाहं मरणहेतोरीश्वरस्तस्मादयं राजा मृतइत्यर्थः ॥ ८ ॥

अथ नवमी—

**नदेवानामतिव्रतंशतात्माचनजीवति । तथायुजाविवावृते ॥ ९ ॥ २ ॥**

न । देवानाम् । अति । व्रतम् । शतऽआत्मा । चन । जीवति ।
तथा । युजा । वि । ववृते ॥ ९ ॥ २ ॥

देवानां ब्रह्मादीनां व्रतं मर्यादालक्षणं कर्म अतिक्रम्य शतात्मा चन शतवत्सरः कश्चन न जीवति । तथा युजा सहायादिना विववृते विवर्तते वियुक्तोभवति इति ज्ञात्वा शोकं मा कुर्वित्यर्थः ॥ ९ ॥

॥ इति सप्तमस्याष्टमे द्वितीयोवर्गः ॥ २ ॥

प्रावेपाइति चतुर्दशर्चं पंचमं सूक्तं ऐलूषस्य कवषस्यार्षं मूजवतः पुत्रस्याक्षाख्यस्य वा । सप्तमी जगती शिष्टास्त्रयोदशत्रिष्टुभः अत्र द्वादश्यक्षान् स्तौति नवम्याद्या चातस्तास्तद्देवत्याः सप्तमी त्रयोदशी च कृषिंस्तौति अतस्तयोः सा देवता एवं पंच गताः । शिष्टाभिर्नवभिः कितवोक्षाश्च निंद्यंते अतस्ताअपि तद्देवत्याः । तथाचानुक्रांतं—प्रावेपाः षळूना मौजवान्वाक्षोक्षकृषिप्रशंसा चाक्षकितवनिंदा च सप्तमी जगतीति । गतोविनियोगः ।

तत्र प्रथमा—

**प्रावेपामांबृहतोमांदयन्तिप्रवातेजाइरिणेवर्वृतानाः ।**
**सोमंस्येवमौजवतस्यंभक्षोविभीदकोजागृविर्मह्यमच्छान् ॥ १ ॥**

**प्रावेपाः । मा । बृहतः । मादयन्ति । प्रवातेऽजाः । इरिणे ।**
**वर्वृतानाः । सोमंस्यऽइव । मौजऽवतस्य । भक्षः । विऽभीदकः ।**
**जागृविः । मह्यम् । अच्छान् ॥ १ ॥**

बृहतोमहतोविभीतकस्य फलत्वेन संबंधिनः प्रवातेजाः प्रवणे देशे जाताः इरिणे आस्फारे ववृंतानाः प्रवर्तमानाः प्रावेपाः प्रवेपिनः कंपनशीलाः अक्षाः मा मां मादयंति हर्षयंति । किंच जागृविः जयपराजययोर्हर्षशोकाभ्यां कितवानां जागरणस्य कर्ता विभीदकोविभीतक-

---

१ दिशोभ्यय॒ँराजाभूदिति पंचाक्षान्प्रयच्छति एते वै सर्वे याः । अपराजायिनमेवैनंकरोति । अक्षाःकपर्दकाः । सुवर्णनिर्मितबिभीतकफलानि सौवर्णानीत्येके । तेचाक्षाः द्यूतस्थाने निवपनीयाः । तथाचापस्तंबेन दर्शितं—अक्षावापोधिदेवनमुद्धृत्यावोक्ष्याक्षान्निवपेत्सौवर्णान्परःशतान्परःसहस्रान्वेति । तेभ्यःपंचाक्षानुद्धृह्यजितवानयंराजेत्यभिप्रायेण तस्मै राज्ञे दद्यात् एतएवपंचाक्षा अयाः सर्वे संपद्यंते अयशब्दोक्षवाची पंचदिग्वर्त्यक्षाभिप्रायेण पंचाक्षाणां दत्तत्वात् राशिस्थाः सर्वेप्यक्षादत्ताभवंति तथासत्येनं यजमानं अपराजायिनं कदाचिदपि पराजयरहितमेव करोति ।

विकाराक्षोमह्यं मां अच्छान् अचच्छदत् अत्यर्थं मादयति । तत्र दृष्टांतः—सोमस्येव यथा सोमस्य मौजवतस्य मुजवति पर्वते जातोमौजवतस्तस्य तत्र ह्युत्तमः सोमोजायते । भक्षः पा यजमानान् देवांश्च मादयति तद्वदित्यर्थः । तथाच यास्कः—प्रवेपिणोमामहतोविभीतकस्य फ ळानिमादयंति प्रवातेजाः प्रवणेजा इरिणे वर्तमानाइरिणं निर्ऋणं ऋणातेरपार्णं भवत्यपरताअस्मा दोषधयइति वासोमस्येव मौजवतस्य भक्षोमौजवतोमूजवति जातोमूजवान्पर्वतोमुंजवान्मुंजो विमुंचतीषीकामिषीकैषतेर्गतिकर्मणइयमपीतरेषीकैतस्मादेवबिभीतकोबिभेदनात् जागृविर्जागरणात् मह्यमवच्छददिति ॥ १ ॥

अथ द्वितीया—

न मा॑ मिमेथ॒ न जि॑हीळ ए॒षा शि॒वा सखि॑भ्य उ॒त मह्य॑मासीत् ।
अ॒क्षस्या॒हमे॑कप॒रस्य॑ हे॒तोरनु॑व्रता॒मप॑ जा॒याम॑रोधम् ॥ २ ॥

न । मा॒ । मि॒मे॒थ॒ । न । जि॒ही॒ळे॒ । ए॒षा । शि॒वा । सखि॑ऽभ्यः ।
उ॒त । मह्य॑म् । आ॒सी॒त् । अ॒क्षस्य॑ । अ॒हम् । ए॒क॒ऽप॒रस्य॑ ।
हे॒तोः । अनु॑ऽव्रताम् । अप॑ । जा॒याम् । अ॒रो॒ध॒म् ॥ २ ॥

एषास्मदीया जाया मा मां कितवं नमिमेथ नच चुक्रोध न जिहीळे नच लज्जितवती सखिभ्योस्मदीयेभ्यः कितवेभ्यः शिवा सुखकर्यासीदभूत् । उतापिच मह्यं शिवासीत् इत्थमनुव्रतामनुकूलां जायां एकपरस्य एकः परः प्रधानं यस्य तस्याक्षस्य हेतोः कारणादहमपारोधं परित्यक्तवानस्मीत्यर्थः ॥ २ ॥

अथ तृतीया—

द्वेष्टि॑ श्व॒श्रूरप॑ जा॒या रु॑णद्धि॒ न ना॑थि॒तो वि॑न्दते मर्डि॒तार॑म् ।
अश्व॑स्येव॒ जर॑तो॒ वस्न्य॑स्य॒ नाहं वि॑न्दामि कित॒वस्य॒ भोग॑म् ॥ ३ ॥

---

१ नि० ९. ८.।

द्वेष्टि । श्वश्रूः । अप । जाया । रुणद्धि । न । नाथितः ।
विन्दते । मर्डितारम् । अश्वस्यऽइव । जरतः । वस्न्यस्य । न ।
अहम् । विन्दामि । कितवस्य । भोगम् ॥ ३ ॥

श्वश्रूर्जायायामाता गृहगतं कितवं द्वेष्टि निंदतीत्यर्थः । किंच जाया भार्यापरुणद्धि निरुणद्धि ।अपिच नाथितोयाचमानः कितवः धनं मर्डितारं धनदानेन सुखयितारं नविंदते न लभते । इत्थं बुध्याविमृशत्वान्नाहं जरतोवृद्धस्य वस्न्यस्य वस्नं मूल्यं तदर्हस्याश्वस्येव कितवस्य भोगं न विंदामि न लभे ॥ ३ ॥

अथ चतुर्थी—

अन्येजायांपरिमृशन्त्यस्ययस्यागृधद्वेदनेवाज्य१क्षः ।
पितामाताभ्रातरएनमाहुर्नजानीमोनयताबद्धमेतम् ॥ ४ ॥

अन्ये । जायाम् । परि । मृशन्ति । अस्य । यस्य । अगृधत् ।
वेदने । वाजी । अक्षः । पिता । माता । भ्रातरः एनम् । आहुः ।
न । जानीमः । नयत । बद्धम् । एतम् ॥ ४ ॥

यस्य कितवस्य वेदने धने वाजी बलवान् अक्षोदेवोऽगृधत् अभिकांक्षां करोति तस्यास्य कितवस्य जायां भार्यामन्ये प्रतिकितवाः परिमृशंति वस्त्रकेशाद्याकर्षणेन संस्पृशंति । किंच पिता माता जननी च भ्रातरः सहोदराश्चैनं कितवमाहुः वदंति न वयमस्मदीयं एनं जानीमः रज्ज्वा बद्धमेतं कितवं हे कितवायूयं नयत यथेष्टदेशं प्रापयतेति ॥ ४ ॥

अथ पञ्चमी—

यदादीध्येनदविषाण्येभिःपरायद्भ्योवहीयेसखिभ्यः ।
न्युप्ताश्चबभ्रवोवाचमक्रतँएमीदेषांनिष्कृतंजारिणीव ॥ ५ ॥ ३ ॥

यत् । आऽदीध्ये । न । दविषाणि । एभिः । परायत्ऽभ्यः ।
अव । हीये । सखिऽभ्यः निऽउप्ताः । च । बभ्रवः । वाचम् ।
अक्रत । एमि । इत् । एषाम् । निःऽकृतम् । जारिणीऽइव ॥५॥३॥

यद्यदाहमादीध्ये ध्यायामि तदानीं एभिरक्षैः न दविषाणि न दूषये न परितपामि यद्वा दविषाणि न देविष्याणीत्यर्थः । न द्वेषये परायद्भ्यः स्वयमेव परागच्छद्भ्यः सखिभ्यः सखिभूतेभ्यः कितवेभ्योवहीये अवहितोभवामि नाहं प्रथममक्षान् विसृजामीति । किंच बभ्रवोबभ्रुवर्ण अक्षाः न्युप्ताः कितवैरवक्षिप्ताः संतोवाचमक्रत शब्दं कुर्वंति तदा संकल्पं परित्यज्य अक्षव्यसनेनाभिभूयमानोहमेषामक्षाणां निष्कृतं स्थानं जारिणीव यथा कामव्यसनेनाभिभूयमाना स्वैरिणी संकेतस्थानं याति तद्वदेमीव् गच्छाम्येव ॥ ५ ॥

॥ इति सप्तमस्याष्टमे तृतीयोवर्गः ॥ ३ ॥

अथ षष्ठी—

सभामेतिकितवःपृच्छमानोजेष्यामीतितन्वा३शूशुजानः ।
अक्षासोअस्यवितिरन्तिकामंप्रतिदीव्नेदधतआकृतानि ॥ ६ ॥

सभाम् । एति । कितवः । पृच्छमानः । जेष्यामि । इति ।
तन्वा । शूशुजानः । अक्षासः । अस्य । वि । तिरन्ति । कामम् ।
प्रतिऽदीव्ने । दधतः । आ । कृतानि ॥ ६ ॥

तन्वा शरीरेण शूशुजानः शोशुचानोदीप्यमानः कितवः कोनास्ति धनिकः तं जेष्यामीति पृच्छमानः पृच्छन् सभां कितवसंबंधिनीमेति गच्छति तत्र प्रतिदीव्ने प्रतिदेवित्रे कितवाय कृतानि देवनोपयुक्तानि कर्माण्यादधतोजयार्थमाभिमुख्येन मर्यादया वा दधतोस्य कितवस्य काममिच्छामक्षासोक्षाः वितिरंति वर्धयंति ॥ ६ ॥

अथ सप्तमी—

अक्षासइदंकुशिनोनितोदिनोनिकृत्वानस्तपनास्तापयिष्णवः ।
कुमारदेष्णाजयतःपुनर्हणोमध्वासंपृक्ताःकितवस्यबर्हणा ॥ ७ ॥

अक्षासः । इत् । अंकुशिनः । नि॒ऽतो॒दिनः । नि॒ऽकृत्वानः ।
तपनाः । तापयिष्णवः । कुमारऽदेष्णाः । जयतः । पुनःऽहनः ।
मध्वा । सम्ऽपृक्ताः । कितवस्य । बर्हणा ॥ ७ ॥

अक्षासइत् अक्षाएव अंकुशिनोंकुशवंतोनितोदिनोनितोदितवंतश्च पुरुषे च कृषौ प्रवर्तमाने निकृत्वानः पराजये निकर्तनशीलाः छेत्तारोवा तपनाः पराजये कितवस्य संतापकाः तापयिष्णवः सर्वस्वहारकत्वेन कुटुंबस्य संतापनशीलाश्च भवंति । किंच जयतः कितवस्य कुमारदेष्णाधनदानेन धन्यतां लंभयंतः कुमाराणां दातारोभवंति । अपिच मध्वा मधुना संपृक्ताः प्रतिकितवेन बर्हणा परिवृद्धेन सर्वस्वहरणेन कितवस्य पुनर्हणः पुनर्हंतारोभवंति ॥ ७ ॥

अथाष्टमी—

त्रिपञ्चाशःक्रीळतिव्रातएषांदेवइवसवितासत्यधर्मा ।
उग्रस्यचिन्मन्यवेनानमन्तेराजाचिदेभ्योनमइत्कृणोति ॥ ८ ॥

त्रिऽपञ्चाशः । क्रीळति । व्रातः । एषाम् । देवःऽइव ।
सविता । सत्यऽधर्मा । उग्रस्य । चित् । मन्यवे । न । नमन्ते ।
राजा । चित् । एभ्यः । नमः । इत् । कृणोति ॥ ८ ॥

एषामक्षाणां त्रिपंचाशः त्र्यधिकपंचाशत्संख्याकोव्रातः संघः क्रीळति अस्फारे विहरति अक्षिकाः प्रायेण तावद्भिरक्षैर्दीव्यंति हि । तत्र दृष्टांतः—सत्यधर्मा सविता सर्वस्य जगतः प्रेरकः सूर्योदेवइव यथा सविता देवोजगति विहरति तद्वदक्षाणां संघआस्फारे विहरतीत्यर्थः । किंच उग्रस्य चित् क्रूरस्यापि मन्यवे क्रोधाय एते अक्षाः न नमंते न प्रह्वीभवंति न वशे वर्तंते तं नमयंतीत्यर्थः । राजा चित् जगतईश्वरोपि एभ्योनमइत् नमस्कारमेव देवनवेळायां कृणोति नावज्ञां करोतीत्यर्थः ॥ ८ ॥

अथ नवमी—

नीचावर्तन्तउपरिस्फुरन्त्यहस्तासोहस्तवन्तंसहन्ते ।
दिव्याअङ्गाराइरिणेन्युप्ताःशीताःसन्तोहृदयंनिर्दहन्ति ॥ ९ ॥

नीचा । वर्तन्ते । उपरि । स्फुरन्ति । अहस्तासः । हस्तऽवन्तम् । सहन्ते । दिव्याः । अङ्गाराः । इरिणे । निऽउप्ताः । शीताः । सन्तः । हृदयम् । निः । दहन्ति ॥ ९ ॥

अपि चैते अक्षाः नीचा नीचीनस्थले वर्तंते तथाप्युपरि पराजयाद्भीतानां द्यूतकराणां कितवानां हृदयस्योपरिस्फुरंति अहस्तासोहस्तरहिताअप्यक्षाः हस्तवंतं द्यूतकरं कितवं सहंते पराजयकरणेन अभिभवंति । दिव्यादिविभवाअपकृताः अंगाराः अंगारसदृशाः अक्षाः इरिणे इंधनरहिते आस्फारे न्युप्ताः शीताः शीतस्पर्शाः संतोपि हृदयं कितवानामंतःकरणं निर्दहंति पराजयजनितसंतापेन भस्मीकुर्वंति ॥ ९॥

अथ दशमी—

जायातप्यतेकितवस्यहीनामातापुत्रस्यचरतःक्वस्वित् ।
ऋणावाबिभ्यद्धनमिच्छमानोन्येषामस्तमुपनक्तमेति ॥१०॥४॥

जाया । तप्यते । कितवस्य । हीना । माता । पुत्रस्य । चरतः । क्व । स्वित् । ऋणऽवा । बिभ्यत् । धनम् । इच्छमानः । अन्येषाम् । अस्तम् । उप । नक्तम् । एति ॥ १० ॥ ४ ॥

क्वचित् क्वापि चरतोनिर्वेदाद्गच्छतः कितवस्य जाया भार्या हीना परित्यक्ता सती तप्यते वियोगसंतापेन संतप्ता भवति माता जनन्यपि पुत्रस्यापि क्वापि चरतः कितवस्य संबंधाद्धीना तप्यते पुत्रशोकेन संतप्ता भवति । ऋणावा अक्षपराजयात् ऋणवान् कितवः सर्वतोबिभ्यत् धनं स्तेयजनितं इच्छमानः कामयमानः अन्येषां ब्राह्मणादीनां अस्तं गृहं । अस्तं पस्त्यमिति गृहनामसु पाठात् । नक्तं रात्रावुपैति चौर्यार्थमुपगच्छति ॥ १० ॥

॥ इति सप्तमस्याष्टमे चतुर्थोवर्गः ॥ ४ ॥

अथैकादशी—

स्त्रियंदृष्ट्वायकितवंततापान्येषांजायांसुकृतंचयोनिम् ।
पूर्वाह्णेअश्वान्युयुजेहिबभ्रून्त्सोअग्नेरन्तेवृषलःपपाद ॥ ११ ॥

स्त्रियम् । दृष्ट्वाय । कितवम् । तताप । अन्येषाम् । जायाम् ।
सुऽकृतम् । च । योनिम् । पूर्वाह्णे । अश्वान् । युयुजे । हि ।
बभ्रून् । सः । अग्नेः । अन्ते । वृषलः । पपाद ॥ ११ ॥

कितवं कितवोविभक्तिव्यत्ययः अन्येषां स्वव्यतिरिक्तानां पुरुषाणां जायां जायाभूतां स्त्रियं नारीं सुखेन वर्तमानां सुकृतं सुष्ठु कृतं योनिं गृहं दृष्ट्वा मज्जाया दुःखिता गृहं चासंस्कृतमिति ज्ञात्वा तताप तप्यते पुनः पूर्वाह्णे प्रातःकाले बभ्रून् बभ्रूवर्णानश्वान् व्यापकानक्षान् युयुजे युनक्ति पुनश्च वृषलोवृषलकर्मा सकितवोरात्रावग्नेरंते समीपे पपाद शीतार्तः सन् शेते॥११॥

अथ द्वादशी—

योवःसेनानीर्महतोगणस्यराजाव्रातस्यप्रथमोबभूव ।
तस्मैकृणोमिनधनारुणध्मिदशाहंप्राचीस्तदृतंवदामि ॥ १२ ॥

यः । वः । सेनाऽनीः । महतः । गणस्य । राजा । व्रातस्य ।
प्रथमः । बभूव । तस्मै । कृणोमि । न । धना । रुणध्मि । दश ।
अहम् । प्राचीः । तत् । ऋतम् । वदामि ॥ १२ ॥

हेअक्षावोयुष्माकं महतोगणस्य संघस्य योक्षः सेनानीर्नेता बभूव भवति व्रातस्य च गणव्रातयोरल्पोभेदः राजेश्वरः प्रथमोमुख्योबभूव तस्माअक्षाय कृणोम्यहं अंजलिं करोमि अतःपरं धना धनान्यक्षार्थं अहं न रुणध्मि न संपादयामीत्यर्थः। एतदेव दर्शयति—अहं दशसंख्याकाअंगुलीः प्राचीः प्राङ्मुखीः करोमि तदेतदहं ऋतं सत्यमेव वदामि नानृतं ब्रवीमीत्यर्थः ॥ १२ ॥

अथ त्रयोदशी—

अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ॥ १३ ॥

अक्षैः । मा । दीव्यः । कृषिम् । इत् । कृषस्व । वित्ते । रमस्व ।
बहु । मन्यमानः । तत्र । गावः । कितव । तत्र । जाया ।
तत् । मे । वि । चष्टे । सविता । अयम् । अर्यः ॥ १३ ॥

हे कितव बहुमन्यमानोमद्वचने विश्वासं कुर्वन् त्वमक्षैर्मा दीव्योद्यूतं मा कुरु । कृषिमित् कृषिमेव कृषस्व कुरु । वित्तेकृष्या संपादिते धने रमस्व रतिं कुरु । तत्र कृषौ गावोभवंति तत्र जाया भवति तदेव धर्मरहस्यं श्रुतिस्मृतिकर्ता सविता सर्वस्य प्रेरकोयं दृष्टिगोचरोऽर्यईश्वरोमे मह्यं विचष्टे विविधमाख्यातवान् ॥ १३ ॥

अथ चतुर्दशी—

मित्रं कृणुध्वं खलु मृळता नो मा नो घोरेण चरताभि धृष्णु ।
नि वो नु मन्युर्विशतामरातिरन्यो बभ्रूणां प्रसितौ न्वस्तु ॥ १४ ॥ ५ ॥

मित्रम् । कृणुध्वम् । खलु । मृळत । नः । मा । नः । घोरेण ।
चरत । अभि । धृष्णु । नि । । वः नु । मन्युः । विशताम् ।
अरातिः । अन्यः । बभ्रूणाम् । प्रऽसितौ । नु । अस्तु ॥ १४ ॥ ५ ॥

हे अक्षाः यूयं मित्रं कृणुध्वं अस्मासु मैत्रीं कुरुत खल्विति पूरणः । नोस्मान्मृळत सुखयत च नोस्मान् धृष्णु धृष्णुना तृतीयार्थे प्रथमा घोरेणासह्येन माभिचरत मागच्छत । किंच वोयुष्माकं मन्युः क्रोधःअरातिः अस्माकं शत्रुः नु क्षिप्रं निविशतां अस्मच्छत्रुषु तिष्ठतु नोस्माकं अन्यः शत्रुः कश्चिद्बभ्रूणां बभ्रुवर्णानां युष्माकं प्रसितौ दृढबंधने नु क्षिप्रमस्तु भवतु ॥ १४ ॥

॥ इति सप्तमस्याष्टमे पंचमोवर्गः ॥ ५ ॥

अबुध्रमिति चतुर्दशर्चं षष्ठं सूक्तं धनाकपुत्रस्य लुशस्यार्षं इदमुत्तरं चवैश्वदेवं त्रयोदशी-चतुर्दश्यौ त्रिष्टुभौ शिष्टाद्वादश जगत्यः । तथाचानुक्रांतं—अबुध्रं लुशोधानाकोवैश्वदेवं तु द्वित्रिष्टुबंतं त्विति । गतः सूक्तविनियोगः । एकादशिनस्य वैश्वदेवस्य पशोर्वपायागस्यानुवाक्या विश्वेअद्येत्येषा । सूत्रितंच—विश्वेअद्यमरुतोविश्वऊत्यानोदेवानामुपवेतुशंसइति ।

तत्र प्रथमा—

अबुंध्रमुत्यइन्द्रंवन्तोअग्नयोज्योतिर्भरंन्तउषसोव्युंष्टिषु ।
महीद्यावांपृथिवीचेततामपोद्यादेवानामवआवृंणीमहे ॥ १ ॥

अबुंध्रम् । ऊँ इति । त्ये । इन्द्रं॑ऽवन्तः । अग्नर्यः । ज्योतिः ।
भरंन्तः । उषसः । विऽउंष्टिषु । मही इति । द्यावांपृथिवी इति ।
चेतताम् । अपः । अद्य । देवानाम् । अवः । आ । वृणीमहे ॥ १ ॥

इंद्रवंतोयष्टव्यत्वेनेन्द्रसंबंधिनः त्ये ते अमी आहवनीयादयोग्नयः उषसोव्युष्टिषु व्युच्छनेषु तमसां विवसनकालेषुज्योतिः तेजोभरंतोधारयंतः अबुध्रं प्रबुद्धाआसन् । मही महत्यौ द्यावापृथिव्यौ अपः कर्म अपः अमइतिकर्मनामसुपाठात् । चेततां जानीतां अद्यास्मिन्नहनि देवानामिंद्रादीनां अवोरक्षणं वयमावृणीमहे ॥ १ ॥

अथ द्वितीया—

दिवस्पृंथिव्योरवआवृंणीमहेमातॄन्त्सिन्धून्पर्वताञ्छर्यणावंतः ।
अनागास्त्वंसूर्यंमुषासंमीमहेभद्रंसोमंःसुवानोअद्याकृंणोतुनः ॥ २ ॥

दिवःपृंथिव्योः । अवः । आ । वृणीमहे । मातॄन् । सिन्धून् ।
पर्वतान् । शर्यणाऽवंतः । अनागाःऽत्वम् । सूर्यम् । उषसंम् ।
ईमहे । भद्रम् । सोमंः । सुवानः । अद्य । कृणोतु । नः ॥ २ ॥

दिवःपृथिव्योः द्यावापृथिव्योः कार्येण संबंधि अवोरक्षणं वयमावृणीमहे । किंच मातॄन् लोकस्य निर्मातॄन् सिंधून् शर्यणावतः सरसः संबंधिनः पर्वतान् शिलोच्चयांश्च तथा

सूर्यमुषसं च अनागास्त्वं कर्मवैगुण्यजनितपापराहित्यमीमहे वयं याचामहे । किंच अद्यास्मिन्नहनि नोस्मकं सुवानोभिषूयमाणः सोमोभद्रं कल्याणं कृणोतु करोतु ॥ २ ॥

अथ तृतीया—

द्यावानोअद्यपृथिवीअनागसोमहीत्रायेथांसुवितायमातरा ।
उषाउच्छन्त्यपबाधतामघंस्वस्त्य१ग्निंसमिधानमीमहे ॥ ३ ॥

द्यावा । नः । अद्य । पृथिवी इति । अनागसः । मही इति । त्रायेथाम् । सुवितायं । मातरा । उषाः । उच्छन्ती । अप । बाधताम् । अघम् । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ३ ॥

मही महत्यौ मातरा मातरौ सर्वस्य मातृभूते द्यावापृथिवी द्यावापृथिव्यौ अद्यास्मिन्नहनि अनागसोपराधरहितान् नोस्मान् सुविताय सुखाय त्रायेतां रक्षतां । किंच उच्छंती तमांसि विवासयंती उषाः अस्माकमघं पापमपबाधतां अपनयतु अपिच समिधानं सम्यक् दीप्यमानमग्निं स्वस्ति सर्वप्रकाराविनाशमीमहे वयं याचामहे ॥ ३ ॥

अथ चतुर्थी—

इयंनउस्राप्रथमासुदेव्यंरेवत्सनिभ्योरेवतीव्युच्छतु ।
आरेमन्युंदुर्विदत्रस्यधीमहिस्वस्त्य१ग्निंसमिधानमीमहे ॥ ४ ॥

इयम् । नः । उस्रा । प्रथमा । सुऽदेव्यम् । रेवत् । सनिऽभ्यः । रेवती । वि । उच्छतु । आरे । मन्युम् । दुःऽविदत्रस्य । धीमहि । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ४ ॥

रेवती धनवती प्रथमा मुख्या इयं उस्रा पापानामुत्सारिणी उषाः सुदेव्यं शोभनदेवार्हं रेवद्धनवत् प्रधानकालयागत्वं सनिभ्योभजमानेभ्योनोस्मभ्यं प्रयच्छंती व्युच्छतु तमांसि विवासयतु । किंच दुर्विदत्रस्य दुर्धनस्य पुरुषस्य मन्युं क्रोधं आरे दूरे धीमहि निधीमहि । सिद्धमन्यत् ॥ ४ ॥

अथ पंचमी—

प्रयाःसिस्रंतेसूर्यस्यरश्मिभिर्ज्योतिर्भरंन्तीरुषसोव्युंष्टिषु ।
भद्रानोअद्यश्रवंसेव्युंच्छतस्वस्त्यं१ग्निंसंमिधानमींमहे ॥५॥६॥

प्र । याः । सिस्रंते । सूर्यस्य । रश्मिऽभिः । ज्योतिः । भरंन्तीः । उषसः । विऽउंष्टिषु । भद्राः । नः । अद्य । श्रवंसे । वि । उच्छत । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ५ ॥ ६ ॥

याउषसः सूर्यस्य रश्मिभिः किरणैः प्रसिस्रते संगच्छंते व्युष्टिषु व्युच्छनेषु तमसां विवासनकालेषु ज्योतिरात्मीयं तेजोभरंतीः भरंति च तायूयं नोस्माकमद्यास्मिन्नहनि श्रवसे अन्नाय भद्रा भजनीया भवत व्युच्छत तमांसि विवासयत च । सिद्धमन्यत् ॥ ५ ॥

॥ इति सप्तमस्याष्टमे षष्ठोवर्गः ॥ ६ ॥

अथ षष्ठी—

अनमीवाउषसआचरन्तुनउदग्नयोजिहतांज्योतिषाबृहत् ।
आयुंक्षातामश्विनातूतुंजिंरथंस्वस्त्यं१ग्निंसंमिधानमींमहे ॥६॥

अनमीवाः । उषसः । आ । चरन्तु । नः । उत् । अग्नयः । जिहताम् । ज्योतिषा । बृहत् । अयुंक्षाताम् । अश्विना । तूतुंजिम् । रथम् । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ६ ॥

अनमीवारोगरहिताः उषसोनोस्मानाचरंतु आगच्छंतु बृहत् बृहता महता ज्योतिषा तेजसा युक्ताअग्नयोप्युज्जिहतां उद्गच्छंतु अश्विना अश्विनावपि तूतुजिं क्षिप्रगामिनं रथमायुक्षातां अस्मान् प्रत्यागंतुं रासभाभ्यां युंक्तां हरितआदित्यस्य रासभावश्विनोरिति । पाठात् । सिद्धमन्यत् ॥ ६ ॥

अथ सप्तमी—

श्रेष्ठंनोअद्यसवितर्वरेण्यंभागमासुवसहिरत्नधाअसि ।
रायोजनित्रींधिषणामुपब्रुवेस्वस्त्य१ग्निंसमिधानमीमहे ॥ ७ ॥

श्रेष्ठम् । नः । अद्य । सवितः । वरेण्यम् । भागम् । आ । सुव । सः । हि । रत्नऽधाः । असि । रायः । जनित्रीम् । धिषणाम् । उप । ब्रुवे । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ७ ॥

हे सवितस्त्वं अद्यास्मिन्नहनि नोस्मभ्यं वरेण्यं वरणीयं श्रेष्ठं प्रशस्यतमं भागं भजनीयं धनं आसुव प्रेरय देहीत्यर्थः । हि यस्मात् प्रार्थितस्त्वं रत्नधाः श्रेष्ठानां धनानां संविभक्ताऽसि भवसि । तथाच निगमांतरं—विभक्तारंहवामहेवसोश्चित्रस्यराधसः । सवितारंनृचक्षसमिति[1] । रायोधनस्य जनित्रीं धिषणां सर्वदेवस्तुतिरूपां वाचमुपब्रुवे अहमुपब्रवीमि । यद्वा धिषणां देवीं उपब्रुवे उपस्तौमीत्यर्थः । सिद्धमन्यत् ॥ ७ ॥

अथाष्टमी—

पिपर्तुमातदृतस्यप्रवाचनंदेवानांयन्मनुष्याअमन्महि ।
विश्वाइदुस्राःस्पळुदेतिसूर्यःस्वस्त्य१ग्निंसमिधानमीमहे ॥ ८ ॥

पिपर्तु । मा । तत् । ऋतस्य । प्रऽवाचनम् । देवानाम् । यत् । मनुष्याः । अमन्महि । विश्वाः । इत् । उस्राः । स्पट् । उत् । एति । सूर्यः । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ८ ॥

यदृतस्य यज्ञस्य सत्यस्य वा संबंधि देवानां प्रवाचनं प्रकर्षेण गुणानां कथनं स्तोत्रं मनुष्यावयममन्महि कर्तुं जानीमः तत्प्रवाचनं मा मां पिपर्तु पालयतु । किंच सूर्योविश्वाः सर्वा उस्राः उषसः स्पट् स्पृशन्नवगच्छन् वोदेति उदेतु । सिद्धमन्यत् ॥ ८ ॥

---

१ ऋ० सं० १. २. ५. ।

अथ नवमी—

अद्वेषोअद्यबर्हिषस्तरीमणिग्राव्णांयोगेमन्मनःसाधईमहे ।
आदित्यानांशर्मणिस्थाभुरण्यसिस्वस्त्यग्निंसमिधानमीमहे ॥ ९ ॥

अद्वेषः । अद्य । बर्हिषः । स्तरीमणि । ग्राव्णाम् । योगे ।
मन्मनः । साधे । ईमहे । आदित्यानाम् । शर्मणि । स्थाः ।
भुरण्यसि । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ९ ॥

अद्यास्मिन्नहनि बर्हिषस्तरीमणि वेद्यां स्तरणे मन्मनोमननीयस्याभीष्टस्य फलस्य साधे साधके ग्राव्णामभिषवपाषाणानां योगे सोमेन सह संयोगे च सत्यद्वेषोद्वेषवर्जितानादित्यानीमहे वयमभीष्टं याचामहे । हे स्तोतस्त्वं तेषामादित्यानां देवानां शर्मणि सुखे स्थाने वा स्थास्तिष्ठ भुरण्यसि कर्तव्यानि कर्माणि बिभर्षि गच्छसि । सिद्धमन्यत् ॥ ९ ॥

अथ दशमी—

आनोबर्हिःसधमादेबृहद्दिविदेवाँईळेसादयासप्तहोतॄन् ।
इन्द्रंमित्रंवरुणंसातयेभगंस्वस्त्यग्निंसमिधानमीमहे ॥ १० ॥ ७ ॥

आ । नः । बर्हिः । सधऽमादे । बृहत् । दिवि । देवान् । ईळे ।
सादय । सप्त । होतॄन् । इंद्रम् । मित्रम् । वरुणम् । सातये ।
भगम् । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ १० ॥ ७ ॥

नोस्माकं बृहत् बृहति महति दिवि दीप्ते सधमादे सह माद्यंति देवायत्र तस्मिन् बर्हिर्बर्हिषि यज्ञे सप्त सप्तसंख्याकान् होतॄन् वषट्कर्तॄन् इंद्रमिंद्रं च भगं च देवानितरानपि यष्टव्यान् देवान् हे अग्ने त्वमासादय । अग्नेराभिमुख्यकरणमिहाद्यदैव्यंजनंबर्हिरासादयावसोइत्येवमादिमंत्रैरेवगम्यते । तत्र त्वदासादितांस्तानिंद्रादीन् देवानहं सातये धनलाभाय ईळे स्तौमि । सिद्धमन्यत् ॥ १० ॥

इति सप्तमस्याष्टमे सप्तमो वर्गः ॥ ७ ॥

---

१ ऋ० सं १. ३. १२. ।

अथैकादशी—

त आ॑दि॒त्या आ ग॑ता स॒र्वता॑तये वृ॒धे नो॑ य॒ज्ञम॑वता सजोषसः ।
बृह॒स्पतिं॑ पू॒षण॑म॒श्विना॒ भगं॑ स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ ११ ॥

ते । आ॒दि॒त्याः । आ । ग॒त॒ । स॒र्वऽता॑तये । वृ॒धे । नः॒ । य॒ज्ञम् । अ॒व॒त॒ । स॒ऽजो॒ष॒सः॒ । बृह॒स्पति॑म् । पू॒षण॑म् । अ॒श्विना॑ । भग॑म् । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ ११ ॥

हे आदित्याः येस्माभिराहूताः ते यूयं सर्वतातये यज्ञार्थमागतागच्छत । आगत्य च हे सजोषसः संगतायूयं नोस्माकं वृधे वर्धनाय यज्ञं प्रति अवत रक्षत । वयं च बृहस्पतिं पूषणं चाश्विनाश्विनौच भगं भगाख्यं देवं च समिधानं सम्यक् दीप्तमग्निं च स्वस्ति सर्वप्रकाराविनाशमीमहे याचामहे ॥ ११ ॥

अथ द्वादशी—

तन्नो॑ देवा यच्छत सुप्रवाच॒नं छ॒र्दिरा॑दित्याः सु॒भरं॑ नृ॒पाय्य॑म् ।
पश्वे॑ तो॒काय॒ तन॑याय जी॒वसे॑ स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ १२ ॥

तत् । नः॒ । दे॒वाः॒ । य॒च्छ॒त॒ । सु॒ऽप्र॒वा॒च॒नम् । छ॒र्दिः । आ॒दि॒त्याः॒ । सु॒ऽभर॑म् । नृ॒ऽपाय्य॑म् । पश्वे॑ । तो॒काय॑ । तन॑याय । जी॒वसे॑ । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ १२ ॥

हे आदित्यादेवाः यूयं सुप्रवाचनं अत्यंतं प्रशस्तं सुभरं सुसमृद्धंनृपाय्यं नृणां रक्षकं तदस्मदभिलषितं छर्दिर्गृहं नोस्माकं पश्वे पशवे तोकाय पुत्राय तनयाय पौत्राय च जीवसे जीवनार्थं यच्छत दत्त । सिद्धमन्यत् ॥ १२ ॥

अथ त्रयोदशी—

विश्वे॑ अ॒द्य म॒रुतो॒ विश्व॑ ऊ॒ती विश्वे॑ भवन्त्व॒ग्नयः॒ समि॑द्धाः ।
विश्वे॑ नो दे॒वा अव॒सा ग॑मन्तु॒ विश्व॑मस्तु॒ द्रवि॑णं॒ वाजो॑ अ॒स्मे ॥ १३ ॥

विश्वे॑ । अ॒द्य । म॒रुतः॑ । विश्वे॑ । ऊ॒ती । विश्वे॑ । भ॒व॒न्तु॒ । अ॒ग्नयः॑ ।
सम्ऽइ॑द्धाः । विश्वे॑ । नः॒ । दे॒वाः । अव॑सा । आ । ग॒म॒न्तु॒ ।
विश्व॑म् । अ॒स्तु॒ । द्रवि॑णम् । वाजः॑ । अ॒स्मे इति॑ ॥ १३ ॥

अद्यास्मिन्नहनि प्रधानयागदिवसे विश्वे सर्वे मरुतोविश्वे सर्वे मरुद्गणसहचरितारुद्रादयोदेवाश्चोती ऊत्यै रक्षणाय भवंतु अपिच विश्वे सर्वे अग्नयः आहवनीयादयः समिद्धाः संदीप्ताः भवंतु । अपिच विश्वे सर्वे इंद्रादयोदेवानोस्माकमवसा रक्षणेनागमंतु आगच्छंतु किंचास्मे अस्मासु विश्वं सर्वं द्रविणं धनं वाजोन्नं चास्तु भवतु ॥ १३ ॥

अथ चतुर्दशी—

यंदे॑वा॒सोऽव॑थ॒वाज॑सातौ॒यंत्राय॑ध्वे॒यंपि॑पृ॒थात्यंहः॑ ।
योवो॑गो॒पीथे॒नभ॒यस्य॒वेद॑ते॒स्याम॑दे॒ववी॑तये॒तु॒रासः॑ ॥ १४ ॥ ८ ॥

यम् । दे॒वा॒सः॒ । अव॑थ । वाज॑ऽसातौ । यम् । त्राय॑ध्वे । यम् ।
पि॒पृ॒थ । अति॑ । अंहः॑ । यः । वः॒ । गो॒ऽपी॒थे । न । भ॒यस्य॑ ।
वेद॑ । ते । स्या॒म॒ । दे॒वऽवी॑तये । तु॒रासः॑ ॥ १४ ॥ ८ ॥

हे तुरासोभीष्टप्रदानेक्षिप्रादेवासोदेवाः यूयं वाजसातौ संग्रामे यं मनुष्यमवथ रक्षथ यं च त्रायध्वे शत्रोः पालयथ यं चांहः पापमत्यतिनीय पिपृथ कामैः पूरयथ । यश्चापि मनुष्योवोयुष्माकं कार्यत्वेन संबंधिनि गोपीथे रक्षणे भयस्य भयं न वेद न जानाति ते सर्वे वयं देववीतये यज्ञार्थं स्याम भवेम ॥ १४ ॥

॥ इति सप्तमस्याष्टमेष्टमोवर्गः ॥ ८ ॥

उषासानक्तेति चतुर्दशर्चं सप्तमं सूक्तं धानाकस्य लुशस्यार्षं आदितोद्वादशजगत्यः ततोद्वे त्रिष्टुभौ विश्वेदेवादेवता । पूर्वसूक्ते वैश्वदेवं तु द्विनिष्टुबंतं त्वित्युक्तत्वात् । उषासानक्तेत्यनुक्रांतं आभिप्लविके षष्ठेहनि वैश्वदेवे इदं वैश्वदेवनिविद्धानं । सूत्रितंच—कतरापूर्वोषासानक्तेति वैश्वमिति ।

तत्र प्रथमा—

उषासानक्ताबृहतीसुपेशसाद्यावाक्षामावरुणोमित्रोअर्यमा ।
इन्द्रंहुवेमरुतःपर्वताँअपआदित्यान्द्यावापृथिवीअपःस्वः ॥ १ ॥

उषसानक्ता । बृहती इति । सुऽपेशसा । द्यावाक्षामा ।
वरुणः । मित्रः । अर्यमा । इन्द्रम् । हुवे । मरुतः । पर्वतान् ।
अपः । आदित्यान् । द्यावापृथिवी इति । अपः । स्वः१रिति स्वः ॥१॥

बृहती बृहत्यौ महत्यौ सुपेशसा सुरूपे उषासानक्ता रात्र्युषसौ द्यावाक्षामा द्यावापृथिव्यौ च वरुणोमित्रो मित्रावरुणौ चार्यमा च येत्र विहितादेवास्तानेतानिंद्रं मरुतश्च पर्वतांश्च अपउदकानिचादित्यांश्च द्यावापृथिवी द्यावापृथिव्यौ च पुनर्द्यावापृथिव्योर्ग्रहणमादरार्थं अपोंतरिक्षं च स्वः स्वर्गं च यष्टव्यं देवजातं हुवे ह्वयामि ॥ १ ॥

अथ द्वितीया—

द्यौश्चनःपृथिवीचप्रचेतसऋतावरीरक्षतामंहसोरिषः ।
मादुर्विदत्रानिर्ऋतिर्नईशततद्देवानामवोअद्यावृणीमहे ॥ २ ॥

द्यौः । च । नः । पृथिवी । च । प्रऽचेतसा । ऋतवरी इत्यृतऽवरी ।
रक्षताम् । अंहसः । रिषः । मा । दुःऽविदत्रा । निःऽऋतिः । नः ।
ईशत । तत् । देवानाम् । अवः । अद्य । वृणामहे ॥ २ ॥

प्रचेतसा सुबुद्धी ऋतावरी यज्ञवत्यौ सत्यवत्यौ च द्यौश्चपृथिवी च द्यावापृथिव्यावुभे नोस्मान् रिषोहिंसकादंहसः पापाच्च रक्षतां । किंच दुर्विदत्रा कुत्सितज्ञाना निर्ऋतिः मृत्युदेवता नोस्माकं माईशत ईश्वरी माभूत् । किंच वयं देवानां संबंधि तदसाधारणं अवोरक्षणमद्यास्मिन्नहनि प्रधानयागदिवसे वृणीमहे प्रार्थयामहे ॥ २ ॥

अथ तृतीया—

विश्वस्मान्नोअदितिःपात्वंहसोमातामित्रस्यवरुणस्यरेवतः ।
स्वर्वज्ज्योतिरवृकंनशीमहितद्देवानामवोअद्यावृणीमहे ॥ ३ ॥

विश्वस्मात् । नः । अदितिः । पातु । अंहसः । माता । मित्रस्य ।
वरुणस्य । रेवतः । स्वः॒ऽवत् । ज्योतिः । अवृकम् । नशीमहि ।
तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ३ ॥

रेवतोधनवतोमित्रस्य वरुणस्य च धनवतोर्मित्रावरुणयोर्माता जनन्यदितिर्देवी नोस्मान्
विश्वस्मात्सर्वस्मादंहसः पापात्पातु रक्षतु । किंच वयमवृकं बाधकरहितं स्वर्वत् सर्वं ज्योतिस्ते-
जोनशीमहि नशिः पलायनकर्मा पलायनं च शीघ्रगमनं शीघ्रं प्राप्नुमइत्यर्थः । सिद्धमन्यत् ॥३॥

अथ चतुर्थी—

ग्रावावदन्नपरक्षांसिसेधतुदुःष्वप्न्यंनिर्ऋतिंविश्वमत्रिणम् ।
आदित्यंशर्ममरुतामशीमहितद्देवानामवोअद्यावृणीमहे ॥ ४ ॥

ग्रावा । वदन् । अप । रक्षांसि । सेधतु । दुःऽस्वप्न्यम् । निःऽऋतिम् ।
विश्वम् । अत्रिणम् । आदित्यम् । शर्म । मरुताम् । अशीमहि ।
तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ४ ॥

ग्रावाभिषवपाषाणोवदन्नभिषववेलायां शब्दं कुर्वन् रक्षांसि यागविघ्नकारीण्यपसेधतु
विनिवारयतु दुःस्वप्न्यं दुःस्वप्नप्रभवमस्मदीयमनिष्टं चापसेधतु निर्ऋतिं मृत्युदेवतांचापसेधतु
अत्रिणं अदनशीलंविश्वं सर्वं पिशाचादिकं चापसेधतु एवं निर्विघ्नेन निष्पन्ने यागे वयमादि-
त्यमादित्यानां संबंधि मरुतां च संबंधि शर्म सुखं अशीमहि प्राप्नुयाम । सिद्धमन्यत् ॥ ४ ॥

अथ पंचमी—

एन्द्रोबर्हिःसीदतुपिन्वतामिळाबृहस्पतिःसामभिर्ऋक्वोअर्चतु ।
सुप्रकेतंजीवसेमन्मधीमहितद्देवानामवोअद्यावृणीमहे ॥५॥१॥

आ । इन्द्रः । बर्हिः । सीदतु । पिन्वताम् । इळा । बृहस्पतिः ।
सामंऽभिः । ऋक्कः । अर्चतु । सुऽप्रकेतम् । जीवसे । मन्म । धीमहि
तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ५ ॥ ९ ॥

इंद्रोबर्हिरासीदतु इळामाध्यमिका स्तनयित्नुलक्षणा वागपि पिन्वतां प्रीणयतु । किंतु सामभिर्गीयमाने ऋक्कः स्तुतिमान् बृहस्पतिरप्यर्चतु अस्मान् पूजयतु । किंच वयं सुप्रकेतं सुप्रज्ञानं मन्म मननीयं धनं स्तोत्रं वा धीमहि निधीमहि जीवसे जीवनाय । सिद्धमन्यत् ॥ ५ ॥

॥ इति सप्तमस्याष्टमे नवमोवर्गः ॥ ९॥

अथ षष्ठी—

दिविस्पृशंयज्ञमस्माकमश्विनाजीराध्वरंकृणुतंसुम्नमिष्टये ।
प्राचीनरश्मिमाहुतंघृतेनतद्देवानामवोअद्यावृणीमहे ॥ ६ ॥

दिविऽस्पृशम् । यज्ञम् । अस्माकम् । अश्विना । जीरऽअध्वरम् ।
कृणुतम् । सुम्नम् । इष्टये । प्राचीनऽरश्मिम् । आऽहुतम् ।
घृतेन । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ६ ॥

हे अश्विना अश्विनौ युवां नोस्माकं यज्ञं दिविस्पृशं दिविस्प्रष्टारं गंतारं कृणुतं कुरुतं तथा । जीराध्वरं क्षिप्रं हिंसारहितं च यज्ञं नोस्माकं कृणुतं इष्टयेभिलषितसिद्ध्यर्थं सुम्नं सुखं च कुरुतं । किंच घृतेनाज्येनाहुतमग्निं प्राचीनरश्मिं देवाभिमुखं कुरुतमित्यर्थः । सिद्धमन्यत् ॥ ६॥

अथ सप्तमी—

उपंह्वयेसुहवंमारुतंगणंपावकमृष्वंसख्यायशंभुवम् ।
रायस्पोषंसौश्रवसायधीमहितद्देवानामवोअद्यावृणीमहे ॥ ७ ॥

उप । ह्वये । सुऽहवम् । मारुतम् । गणम् । पावकम् । ऋष्वम् ।
सख्याय । शम्ऽभुवम् । रायः । पोषम् । सौश्रवसाय । धीमहि ।
तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ७ ॥

सुहवं स्वाह्वानं पावकं शोधकं ऋष्वं दर्शनीयं शंभवं सुखस्य भावयितारं रायोधनस्य पोषं पोषकं मारुतं मरुतां संबंधिनं गणं संवं सख्याय सखिभावायोपह्वये उपगम्य ह्वयामि आगतं गणं सौश्रवसाय शोभनान्नवत्वाय सुयशस्त्वाय वा वयं धीमहि बुद्धौ निधीमहि। सिद्धमन्यत् ॥ ७ ॥

अथाष्टमी—

अपांपेरुंजीवधन्यंभरामहेदेवाव्यंसुहवंमध्वरश्रियम्।
सुरश्मिंसोममिन्द्रियंयमीमहितद्देवानामवोअद्यावृणीमहे ॥ ८ ॥

अपाम्। पेरुम्। जीवऽधन्यम्। भरामहे। देवऽअव्यम्। सुऽहवम्। अध्वरऽश्रियम्। सुऽरश्मिम्। सोमम्। इन्द्रियम्। यमीमहि। तत्। देवानाम्। अवः। अद्य। वृणीमहे ॥ ८ ॥

अपामुदकानां पेरुं पालकं जीवधन्यं धन्याजीवायस्मिन्नसौ जीवधन्यः तं देवाव्यं देवानां तर्पकं सुहवं शोभनाह्वानं शोभनस्तुतिं वा अध्वरश्रियं सुरश्मिं शोभनांशुं सोमं भरामहे धारयामः पत्नीशालातोहविर्धानं प्रति प्रापयामोवा भृतं तं सोममिंद्रियं वीर्यं यमीमहि वयं याचामहे। सिद्धमन्यत् ॥ ८ ॥

अथ नवमी—

सनेमतत्सुसनितासनित्वभिर्वयंजीवाजीवपुत्राअनागसः।
ब्रह्मद्विषोविष्वगेनोभरेरततद्देवानामवोअद्यावृणीमहे ॥ ९ ॥

सनेम। तत्। सुऽसनिता। सनित्वऽभिः। वयम्। जीवाः। जीवऽपुत्राः। अनागसः। ब्रह्मऽद्विषः। विष्वक्। एनः। भरेरत। तत्। देवानाम्। अवः। अद्य। वृणीमहे ॥ ९ ॥

जीवाजीवंतोजीवपुत्राजीवनवत्पुत्राश्चानागसोपराधवर्जिताश्च वयं धानाका लुशाः सनित्वभिः संभक्तृभिः पुत्रपौत्रादिभिः सह सुसनिता शोभनेन भजनेन तद्देवजातं सनेम स्तुत्या हविःप्रदानेन च संभजेमहि । किंच ब्रह्मद्विषोब्राह्मणानामस्माकं द्वेष्टारोविष्वक् नानागच्छदेनोस्मदीयं पापंभरेरत आत्मनि धारयंतु पोषयंतु । सिद्धमन्यत् ॥ ९ ॥

अथ दशमी—

येस्थामनोर्यज्ञियास्तेशृणोतनयद्वोदेवाईमहेतद्दधातन ।
जैत्रंक्रतुंरयिमद्वीरवद्यशस्तद्देवानामवोअद्यावृणीमहे ॥ १० ॥ १० ॥

ये । स्थ । मनोः । यज्ञियाः । ते । शृणोतन । यत् । वः । देवाः ।
ईमहे । तत् । दधातन । जैत्रम् । क्रतुं । रयिऽमत् । वीरऽवत् ।
यशः । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ १० ॥ १० ॥

हे देवा ये यूयं मनोर्मनुष्यस्य यज्ञियायज्ञार्हाः स्थ भवथ ते यूयं शृणोतनास्मदीयां स्तुतिं शृणुत । किंच हे देवावोयुष्मान् यदभीष्टमीमहे याचामहे तत् जैत्रं जयशीलं क्रतुं प्रज्ञानं रयिमत् धनवत् वीरवत् पुत्राद्युपेतं यशश्च ददातनास्मभ्यं प्रयच्छत । सिद्धमन्यत् ॥ १० ॥

इति सप्तमस्याष्टमे दशमोवर्गः ॥ १० ॥

अथैकादशी—

महदद्यमहतामावृणीमहेवोदेवानांबृहतामनर्वणाम् ।
यथावसुवीरजातंनशामहैतद्देवानामवोअद्यावृणीमहे ॥ ११ ॥

महत् । अद्य । महताम् । आ । वृणीमहे । अवः । देवानाम् ।
बृहताम् । अनर्वणाम् । यथा । वसु । वीरऽजातम् । नशामहै ।
तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ११ ॥

अद्यास्मिन्नहनि महतां श्रेष्ठानां बृहतां वृद्धानां अनर्वणां अप्रतिगतानांदेवानामिंद्रादीनां संबंधि महदधिकं अवोरक्षणमावृणीमहे प्रार्थयामहे । किंच वयं यथा वसु धनं वीरजातं अपत्यजातं च नशामहै प्राप्नुयाम तथा ते देवाः कुर्वंत्विति शेषः ॥ ११ ॥

अथ द्वादशी–

महोअग्नेःसमिधानस्यशर्मण्यनागामित्रेवरुणेस्वस्तये ।
श्रेष्ठेस्यामसवितुःसवीमनितद्देवानामवोअद्यावृणीमहे ॥ १२ ॥

महः । अग्नेः । सम्ऽइधानस्य । शर्मणि । अनागाः ।
मित्रे । वरुणे । स्वस्तये । श्रेष्ठे । स्याम । सवितुः ।
सवीमनि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ १२ ॥

समिधानस्य समिध्यमानस्य महोमहतोग्नेः शर्मणि सुखे वयं स्याम भवेम । किंच वयमनागाअनागसोवचनव्यत्ययः स्याम । अपिच मित्रे वरुणे मित्रावरुणयोः षष्ठ्यर्थे सप्तमी सवितुश्च श्रेष्ठेऽतिप्रशस्ये सवीमनि प्रसवे स्वस्तये सर्वप्रकाराविनाशाय स्याम । सिद्धमन्यत् ॥१२॥

अथ त्रयोदशी–

येसवितुःसत्यसवस्यविश्वेमित्रस्यव्रतेवरुणस्यदेवाः ।
तेसौभगंवीरवद्गोमदप्नोदधातनद्रविणंचित्रमस्मे ॥ १३ ॥

ये । सवितुः । सत्यऽसवस्य । विश्वे । मित्रस्य । व्रते ।
वरुणस्य । देवाः । ते । सौभगम् । वीरऽवत् गोऽमत् । अप्नः ।
दधातन । द्रविणम् । चित्रम् । अस्मे इति ॥ १३ ॥

ये विश्वेदेवाः सत्यसवस्य सत्यप्रसवस्य सवितुर्मित्रस्य वरुणस्य मित्रावरुणयोश्च व्रते प्रसवाख्ये कर्मणि भवंति ते यूयं सौभगं सौभाग्यं वीरवत्पुत्राद्युपेतं गोमत् गोयुक्तं चित्रं पूजनीयं द्रविणं धनं चाप्नः कर्म चास्मे मह्यं दधातन प्रयच्छत ॥ १३ ॥

अथ चतुर्दशी–

स॒वि॒ता प॒श्चाता॑त्सवि॒ता पु॒रस्ता॑त्सवि॒तोत्त॒रात्ता॑त्सवि॒ताध॒रात्ता॑त् ।
स॒वि॒ता नः॑ सुवतु स॒र्वता॑तिं सवि॒ता नो॑ रासतां दी॒र्घमायुः॑ ॥ १४॥ ११॥

स॒वि॒ता । प॒श्चाता॑त् । स॒वि॒ता । पु॒रस्ता॑त् । स॒वि॒ता । उ॒त्त॒रात्ता॑त् ।
स॒वि॒ता । अ॒ध॒रात्ता॑त् । स॒वि॒ता । नः॒ । सु॒व॒तु॒ । स॒र्वऽता॑तिम् ।
स॒वि॒ता । नः॒ । रा॒स॒ता॒म् । दी॒र्घम् । आयुः॑ ॥ १४ ॥ ११ ॥

पश्चातात् पश्चिमतः स्थितः सविता पुरस्तात् पूर्वतश्चस्थितः सविता उत्तरात्तात् उत्तरतः स्थितश्च अधरात्तात् दक्षिणतश्च स्थितः सविता नोस्माकं सर्वतातिं सर्वमभिलषितं धनादिकं सुवतु प्रेरयतु। किंच सवितैव नोस्मभ्यं दीर्घं बहुकालीनं आयुः रासतां ददातु बहुधा सवितृपदग्रहणमत्यंतमादरार्थं ॥ १४ ॥

॥ इति सप्तमस्याष्टमे एकादशोवर्गः ॥ ११ ॥

नमोमित्रस्येति द्वादशर्चमष्टमं सूक्तं अभितपानाम सूर्यपुत्रऋषिः इदमादीनि पंचसूक्तानि जागतानि अस्य सूक्तस्य दशमी त्रिष्टुप् सूर्योदेवता। तथा चानुक्रांतं–नमोद्वादश सौर्योभितपाः सौर्यं जागतं वै त्रिष्टुप् दशमीति। आश्विनशस्त्रे सूर्योदयादूर्ध्वं सौर्यकांडे एतत्सूक्तं। सूत्रितंच–चित्रंदेवानां नमोमित्रस्येति। विषुवति निष्केवल्ये आद्यस्तृचोनुरूपः। सूत्रितंच–विभ्राट्बृहत्पिबतुसोम्यंमधु नमोमित्रस्यवरुणस्यचक्षसइति स्तोत्रियानुरूपाविति। स्वपंतमभ्यस्तमयेसति रात्रिशेषं स्थित्वा प्रातर्येनसूर्यज्योतिषेत्यादिभिः सूर्यउपस्थेयः। सूत्रितंच–अव्याधितं चेत्स्वपंतमादित्योभ्यस्तमियाद्वाग्यतोनुपविशन् रात्रिशेषं भूत्वा येनसूर्यज्योतिषाबाधसेतमइति पंचभिरादित्यमुपतिष्ठेत। स्वपंतमभ्युदिते यस्यते विश्वेत्यादिभिश्चतसृभिः सूर्यउपस्थेयः। सूत्रितंच–अभ्युदियाच्चेदकर्मश्रांतमनभिरूपेण कर्मणा वाग्यतइति समानमुत्तराभिश्चतसृभिरुपस्थानमिति। एकादशिनस्य सौर्यस्य पशोर्हविषोयाज्या। सूत्रितंच–शन्नोभवचक्षसाशन्नोअह्नाऽऽवायोभूषशुचिपा उपनइति। होत्रकाणांशकलाधाने यद्वोदेवाइत्येषा। विवाहेकन्यारोदनीये जीवंरुदंतीत्येषा जप्या।

तत्र प्रथमा—

नमो॑ मि॒त्रस्य॒ वरु॑णस्य॒ चक्ष॑से म॒हो दे॒वाय॒ तदृ॒तं स॑पर्यत ।
दू॒रे॒दृशे॑ दे॒वजा॑ताय के॒तवे॑ दि॒वस्पु॒त्राय॒ सूर्या॑य शंसत ॥ १ ॥

नम॑ः । मि॒त्रस्य॑ । वरु॑णस्य । चक्ष॑से । म॒हः । दे॒वाय॑ । तत् ।
ऋ॒तम् । स॒प॒र्य॒त॒ । दू॒रे॒ऽदृशे॑ । दे॒वऽजा॑ताय । के॒तवे॑ ।
दि॒वः । पु॒त्राय॑ । सूर्या॑य । शं॒स॒त॒ ॥ १ ॥

हे ऋत्विजो यूयं मित्रस्य वरुणस्य मित्रावरुणयोश्चक्षसे द्रष्ट्रे महो महते देवाय द्योतमानाय दूरेदृशे दूरे संतमपि पश्यते देवजाताय देवेषु जाताय देवार्थं उत्पन्नाय केतवे विश्वस्य प्रज्ञापकाय दिवः पुत्राय पुत्रभूताय दिवि जायमानत्वात् तत्पुत्रत्वव्यपदेशः सूर्याय सूर्यार्थं नमः कृत्वा तद्विहितं ऋतं यागादिलक्षणं कर्म सपर्यत पूजयत शंसत स्तुतिमपि कुरुत ॥ १ ॥

अथ द्वितीया—

सा मा॑ स॒त्योक्तिः॒ परि॑ पातु वि॒श्वतो॒ द्यावा॑ च॒ यत्र॑ त॒तन॒न्नहा॑नि च ।
विश्व॑म॒न्यन्नि वि॑शते॒ यदेज॑ति वि॒श्वाहापो॑ वि॒श्वाहोदे॑ति॒ सूर्य॑ः ॥ २ ॥

सा । मा॒ । स॒त्यऽउ॑क्तिः । परि॑ । पा॒तु॒ । वि॒श्वत॑ः । द्यावा॑ । च॒ । यत्र॑ ।
त॒तन॑न् । अहा॑नि । च॒ । विश्व॑म् । अ॒न्यत् । नि । वि॒श॒ते॒ । यत् ।
एज॑ति । वि॒श्वाहा॑ । आप॑ः । वि॒श्वाहा॑ । उत् । ए॒ति॒ । सूर्य॑ः ॥ २ ॥

सा सत्योक्तिः तत्सत्यवचनं मा मां विश्वतः सर्वतः परिपातु परिरक्षतु । यया सत्योक्त्या यत्र यस्मिन् देशे द्यावा च द्यावापृथिव्यावहानि रात्रयश्च ततनन् अतन्वन् तत्र विश्वं सर्वमन्यत् भूतजातं निविशते विश्राम्यति यदेतद्भूतजातमेजति कंपते विश्वाहा सर्वदा आपश्च स्यंदते विश्वाहा सर्वदा सूर्यश्चोदेति सा सत्योक्तिर्मां परिपात्वित्यर्थः ॥ २ ॥

अथ तृतीया—

नतेअदेवःप्रदिवोनिवासतेयदेतशेभिःपतरैरथर्यसि ।
प्राचीनमन्यदनुवर्ततेरजउदन्येनज्योतिषायासिसूर्य ॥ ३ ॥

न । ते । अदेवः । प्रऽदिवः । नि । वासते । यत् । एतशेभिः । पतरैः । रथर्यसि । प्राचीनम् । अन्यत् । अनु । वर्तते । रजः । उत् । अन्येन । ज्योतिषा । यासि । सूर्य ॥ ३ ॥

हे सूर्य ते तव समीपे प्रदिवः प्रत्नः पुरातनः कश्चिददेवोऽसुरोराक्षसोवा न निवासते न निवसति । कदेत्यतआह यद्यदा त्वं पतरैर्गमनशीलैरेतशेभिः अश्वैः रथर्यसि रथं कामयसे योक्तुं । किंच प्राचीनमन्यत त्वदीयं ज्योतिः रजउदकमनुवर्तते अन्येन तेन ज्योतिषा उद्यासि उदेषि । यद्वा प्राचीनमन्यद्रजश्चंद्राख्यं ज्योतिस्त्वामनुवर्तते ततस्त्वमन्येन ज्योतिषा सहोदेषीत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

येनसूर्यज्योतिषाबाधसेतमोजगच्चविश्वमुदियर्षिभानुना ।
तेनास्मद्विश्वामनिरामनाहुतिमपामीवामपदुःष्वप्न्यंसुव ॥ ४ ॥

येन । सूर्य । ज्योतिषा । बाधसे । तमः । जगत् । च । विश्वम् । उत्ऽइयर्षि । भानुना । तेन । अस्मत् । विश्वाम् । अनिराम् । अनाहुतिम् । अप । अमीवाम् । अप । दुःऽस्वप्न्यम् । सुव ॥ ४ ॥

हे सूर्य त्वं येन ज्योतिषा तेजसा तमोंधकारं बाधसे निवारयसि येन च भानुना तेजसा विश्वं सर्वं जगज्जंगममुदियर्षि उद्गमयसि तेन ज्योतिषास्मदस्मत्तोविश्वां सर्वामनिरां अन्नाभावं अनाहुतिं अहोमं चामीवां रोगजातं चापसुव अपगमय दुःस्वप्न्यं दुःस्वप्नप्रभवमरिष्टं चापसुव ॥ ४ ॥

अथ पंचमी--

विश्वस्यहिप्रेषितोरक्षंसिव्रतमहेळयन्नुच्चरंसिस्वधाअनुं ।
यद्द्यत्वांसूर्योपब्रवांमहैतन्नोदेवाअनुंमंसीरतक्रतुंम् ॥ ५ ॥

विश्वस्य । हि । प्रऽइंषितः । रक्षंसि । व्रतम् । अहेळयन् ।
उत्ऽचरंसि । स्वधाः । अनुं । यत् । अद्य । त्वा । सूर्य । उपऽब्रवांमहै ।
तत् । नः । देवाः । अनुं । मंसीरत । क्रतुंम् ॥ ५ ॥

हे सूर्य प्रेषितः प्रेरितः त्वमहेळयन् अक्रुध्यन् विश्वस्य सर्वस्य यजमानस्य व्रतं कर्म रक्षसि हि यज्ञविध्वंसकेभ्योराक्षसेभ्यः पालयसि । स्वधाहवींष्यनु उच्चरसि उद्गच्छसिच प्रातर्होमे निवृत्ते सति पश्चादुद्गच्छसीत्यर्थः । तथाच यद्यदाद्यास्मिन्नहनि त्वा त्वां उपब्रवामहै उपब्रूमः तदानोस्माकं तं क्रतुं तत्कर्म देवाइंद्रादयोनुमंसीरत अनुमन्यंतां ॥ ५ ॥

अथ षष्ठी--

तंनोद्यावांपृथिवीतंनआपइन्द्रंःशृण्वन्तुमरुतोहवंवचंः ।
माशूनेंभूमसूर्यस्यसंदृशिभद्रंजीवंन्तोजरणामंशीमहि ॥ ६ ॥ १२ ॥

तम् । नः । द्यावांपृथिवी इति । तत् । नः । आपंः । इन्द्रंः । शृण्वन्तु ।
मरुतंः । हवंम् । वचंः । मा । शूने । भूम । सूर्यस्य । सम्ऽदृशि ।
भद्रम् । जीवंन्तः । जरणाम् । अशीमहि ॥ ६ ॥ १२ ॥

द्यावापृथिवी द्यावापृथिव्यौ आपश्च इंद्रश्च मरुतश्च नोस्माकं तं हवमाह्वानं नोस्माकं तद्वचः स्तुतिरूपं वाक्यं च नइतिद्विरुक्तिरादरार्थाः शृण्वंतु । किंच वयं सूर्यस्य संदृशि संदर्शने शूने प्रवृद्धाय दुःखाय माभूम मैव भवेम किंतु जीवंतः चिरं प्राणान् धारयंतोवयं भद्रं कल्याणं जरणां वृद्धत्वममरत्वं चाशीमहि प्राप्नुयाम ॥ ६ ॥

॥ इति सप्तमस्याष्टमे द्वादशोवर्गः ॥ १२ ॥

अथ सप्तमी—

विश्वाहात्वासुमनसःसुचक्षसःप्रजावन्तोअनमीवाअनागसः ।
उद्यन्तंत्वामित्रमहोदिवेदिवेज्योग्जीवाःप्रतिपश्येमसूर्य ॥ ७ ॥

विश्वाहा । त्वा । सुऽमनसः । सुऽचक्षसः । प्रजाऽवन्तः ।
अनमीवाः । अनागसः । उत्ऽयन्तम् । त्वा । मित्रऽमहः ।
दिवेऽदिवे । ज्योक् । जीवाः । प्रति । पश्येम । सूर्य ॥ ७ ॥

हे सूर्य त्वा त्वां सुमनसः प्रीतियुक्तमनस्काः सुचक्षसः सुदर्शनाः प्रजावंतः पुत्राद्युपेताः अनमीवाः रोगरहिताः अनागसः अपराधवर्जिताश्च वयं विश्वाहा सर्वदा यजेमेति शेषः । किंच हे मित्रमहः मित्राणां पूजयितः सूर्य दिवेदिवे प्रतिदिनं उद्यंतमुदयं प्राप्नुवंतं त्वा त्वां ज्योक् चिरं जीवा जीवंतोवयं प्रतिपश्येम ॥ ७ ॥

अथाष्टमी—

महिज्योतिर्बिभ्रतंत्वाविचक्षणभास्वन्तंचक्षुषेचक्षुषेमयः ।
आरोहन्तंबृहतःपाजसस्परिवयंजीवाःप्रतिपश्येमसूर्य ॥ ८ ॥

महि । ज्योतिः । बिभ्रतम् । त्वा । विऽचक्षण । भास्वन्तम् ।
चक्षुषेऽचक्षुषे । मयः । आऽरोहन्तम् । बृहतः । पाजसः ।
परि । वयम् । जीवाः । प्रति । पश्येम । सूर्य ॥ ८ ॥

हे विचक्षण विद्रष्टः सूर्य महि महत् ज्योतिस्तेजोबिभ्रतं धारयंतं भास्वंतं दीप्तिमंतं चक्षुषेचक्षुषे सर्वेषां द्रष्टॄणां चक्षुषे मयः सुखकरं बृहतोमहतः पाजसोबलवतः परि महतोबलवतः सामुद्रस्योदकस्योपरीत्यर्थः । आरोहंतं त्वा त्वां जीवाश्चिरं जीवंतोवयं प्रति प्रतिदिनं पश्येम ॥ ८॥

अथ नवमी—

यस्यतेविश्वाभुवनानिकेतुनाप्रचेरतेनिचविशन्तेअक्तुभिः ।
अनागास्त्वेनहरिकेशसूर्याह्नाह्नानोवस्यसावस्यसोदिहि ॥ ९ ॥

यस्य॑ । ते॒ । विश्वा॑ । भुव॑नानि । के॒तुना॑ । प्र । च॒ । ईर॑ते । नि ।
च॒ । वि॒शन्ते॑ । अ॒क्तुऽभिः॑ । अ॒ना॒गाः॒ऽत्वेन॑ । ह॒रि॒ऽके॒श॒ ।
सूर्य॒ । अह्नाः॑ऽअह्ना । न॒ः । वस्य॑साऽवस्यसा । उत् । इ॒हि॒ ॥ ९ ॥

हे हरिकेश हरितवर्णकेश सूर्य यस्य ते तव केतुना प्रज्ञानेन विश्वा विश्वानि भुवनानि भूतजातानि प्रेरते प्रकर्षेण गच्छंति अक्तुभिः रात्रिभिः निविशंते च विश्राम्यंति च स्वपंतीत्यर्थः। सत्वं नोस्माकं अनागास्त्वेन अपराधवर्जितत्वेन वस्यसावस्यसा अत्यंतश्रेयस्करेण वसुमत्तरेण वा अह्नाह्ना तेनतेन दिवसेनोदिहि उद्गच्छ ॥ ९ ॥

अथ दशमी—

शंनो॑भव॒चक्ष॑सा॒शंनो॒अह्ना॒शंभा॒नुना॒शंहि॒माशंघृ॒णेन॑ ।
यथा॒शम॒ध्व॒ञ्छम॒सं॒द्दु॒रो॒णेतत्सू॑र्य॒द्रवि॑णंधेहि॒चि॒त्रम् ॥ १० ॥

शम् । न॒ः । भ॒व॒ । चक्ष॑सा । शम् । न॒ः । अह्ना॑ । शम् । भा॒नुना॑ ।
शम् । हि॒मा । शम् । घृ॒णेन॑ । यथा॑ । शम् । अध्व॑न् । शम् । अस॑त् ।
दु॒रो॒णे । तत् । सू॒र्य॒ । द्रवि॑णम् । धे॒हि॒ । चि॒त्रम् ॥ १० ॥

हे सूर्य त्वं चक्षसा तेजसा नोस्माकं शं सुखकरोभव अह्ना दिवसेन शं सुखकरोनोस्माकं भव भानुना रश्मिना च शं भवास्माकं सुखकरोभव । हिमा शैत्येन च शं भव घृणेन औष्ण्येन च शंकरोभव। यथा यादृशेन नोस्माकमध्वन् अध्वनि मार्गे शं भवति दुरोणे गृहे च शं सुखमसद्भवति तच्चित्रं पूजनीयं द्रविणं धनं धेह्यस्मभ्यं प्रयच्छ ॥ १० ॥

अथैकादशी—

अ॒स्माकं॑देवाउ॒भया॑यज॒न्म॑ने॒शर्म॑यच्छतद्वि॒पदे॒चतु॑ष्पदे ।
अ॒दत्पिब॑दू॒र्जय॑मान॒माशि॑तं॒तद॒स्मेशंयोर॑र॒पोद॑धातन ॥ ११ ॥

अस्माकम् । देवाः । उभयाय । जन्मने । शर्म । यच्छत । द्विऽपदे
चतुःऽपदे । अदत् । पिबत् । ऊर्जयमानम् । आशितम् ।
तत् । अस्मे इति । शम् । योः । अरपः । दधातन ॥ ११ ॥

हे देवाः सूर्येणाभ्यनुज्ञातायूयमस्माकं द्विपदे मनुष्यात्मकाय चतुष्पदे पश्वात्मकाय चोभयाय उभयविधाय जन्मने भूतजाताय शर्म सुखं यच्छत दत्त । किञ्च यथास्मत्पुत्रादिकं अदत् भक्षणीयं भक्षयत पिबत् पानीयं पिबच्च ऊर्जयमानं बलवंतमिवात्मानमाचरदाशितं सुहितं च भवति तथा अस्मे अस्माकं तत् शं रोगशांतिनिमित्तकं सुखं योर्विषययोगजनितं सुखं च अरपः अपापं च दधातन प्रयच्छत ॥ ११ ॥

अथ द्वादशी—

यद्वोदेवाश्चकृमजिह्वयागुरुमनसोवाप्रयुतीदेवहेळनम् ।
अरावायोनोअभिदुच्छुनायतेतस्मिन्तदेनोवसवोनिधेतन ॥१२॥१३॥

यत् । वः । देवाः । चकृम । जिह्वया । गुरु । मनसः । वा । प्रऽयुती ।
देवऽहेळनम् । अरावा । यः । नः । अभि । दुच्छुनऽयते ।
तस्मिन् । तत् । एनः । वसवः । नि । धेतन ॥ १२ ॥ १३ ॥

हे वसवोवासयितारोदेवाः वोयुष्माकं वयं जिह्वया वाचा मनसः प्रयुती प्रयुत्या प्रयोगेण उरु महद्देवहेळनं देवक्रोधनं च यदेनश्चकृम अकार्ष्म योस्मच्छत्रुर्नोस्मानभिप्रति अरावा गमनवान् भूत्वादुच्छुनायते पापान्याचरति अस्मानुद्वेजयति वा तस्मिन्नस्मच्छत्रौ तदेनोस्माभिः कृतं पापं निधेतन सूर्यस्याज्ञया निधत्त स्थापयतेत्यर्थः ॥ १२ ॥

॥ इति सप्तमस्याष्टमे त्रयोदशोवर्गः ॥ १३ ॥

अस्मिन्नइति पञ्चर्चं नवमं सूक्तं जागतमैंद्रं मुष्कविशिष्टइंद्राख्यऋषिः । तथाचानुक्रांतं- अस्मिन्नः पञ्चमुष्कवानिंद्रइति । गतोविनियोगः । अपरे तु तांड्यशाट्यायनकाअस्य सूक्तस्य मुष्कवानिंद्रोदेवता लुशऋषिरितिवर्णयंति ।

तत्र प्रथमा—

अस्मिन्नइन्द्रपृत्सुतौयशस्वतिशिमीवतिक्रन्दसिप्रावसातये।
यत्रगोषाताधृषितेषुखादिषुविष्वक्पतन्तिदिद्यवोनृषाह्ये ॥ १ ॥

अस्मिन्। नः। इन्द्र। पृत्सुतौ। यशस्वति। शिमीऽवति।
क्रन्दसि। प्र। अव। सातये। यत्र। गोऽसाता। धृषितेषु।
खादिषु। विष्वक्। पतन्ति। दिद्यवः। नृऽसह्ये ॥ १ ॥

हे इंद्र त्वं यशस्वति कीर्तिमति शिमीवति परस्परप्रहारलक्षणकर्मवति अस्मिन्नुपस्थिते पृत्सुतौ संग्रामे क्रंदसि सिंहनादं करोषि। सातये धनलाभाय प्राव नः अस्मान् प्ररक्षसि च। कस्मिन्नित्यत्राह यत्र यस्मिन् गोषाता गोसातौ लब्धपशुके नृषाह्ये नृणामभिभावुके च संग्रामे खादिषु परस्परखादकेषु च योद्धृषु धृषितेषु धृष्टेषु सत्सु दिद्यवः आयुधानि विष्वक् सर्वतः पतंति॥ १॥

अथ द्वितीया—

सनःक्षुमन्तंसदनेव्यूर्णुहिगोअर्णसंरयिमिन्द्रश्रवाय्यम्।
स्यामतेजयतःशक्रमेदिनोयथावयमुश्मसितद्वसोकृधि ॥ २ ॥

सः। नः। क्षुऽमन्तम्। सदने। वि। ऊर्णुहि। गोऽअर्णसम्।
रयिम्। इन्द्र। श्रवाय्यम्। स्याम। ते। जयतः। शक्र। मेदिनः।
यथा। वयम्। उश्मसि। तत्। वसो इति। कृधि ॥ २ ॥

हे इंद्र ससर्वानुग्रहकत्वेन प्रसिद्धः त्वं नोस्माकं सदने गृहे क्षुमंतं अन्नवंतं शब्दवंतं वा गोअर्णसं गावोर्णउदकमिव प्रवृद्धायस्मिन् तं श्रवाय्यं श्रवणीयंरायिंधनं व्यूर्णुहि विविधमाच्छादय। किंच हे वसो वासक शक्रेंद्र जयतः शत्रुं ते तव प्रसादात् वयं मेदिनोमेदसा युक्ताः बलवंतः स्याम भवेम। किंबहूक्त्या यथा यत् वयमुश्मसि कामयामहे तत्सर्वं कृधि कुरु॥ २॥

अथ तृतीया—

योनोदासआर्योवापुरुष्टुतादेवइन्द्रयुधयेचिकेतति ।
अस्माभिष्टेसुषहाःसन्तुशत्रवस्त्वयावयंतान्वनुयामसंगमे ॥ ३ ॥

यः । नः । दासः आर्यः । वा । पुरुऽस्तुत । अदेवः । इन्द्र ।
युधये । चिकेतति । अस्माभिः । ते । सुऽसहाः । सन्तु ।
शत्रवः । त्वया । वयम् । तान् । वनुयाम । सम्ऽगमे ॥ ३ ॥

हे पुरुष्टुत बहुस्तुतेंद्र योदासः कर्मकरः शूद्रः आर्यस्त्रैवर्णिकोवा देवश्चान्योसुरोवा नोस्मान् युधये युद्धाय चिकेतति जानाति ते सर्वे शत्रवोस्मदरयस्ते तव प्रसादादस्माभिः सुसहाः स्वभिभवाः संतु भवंतु। किंच वयं त्वया सहायेन तान् शत्रून् संगमे संग्रामे वनुयाम हन्याम॥३॥

अथ चतुर्थी—

योदभ्रेभिर्हव्योयश्चभूरिभिर्योअभीकेवरिवोविन्नृषाह्ये ।
तंविखादेसस्निमद्यश्रुतंनरमर्वाञ्चमिन्द्रमवसेकरामहे ॥ ४ ॥

यः । दभ्रेभिः । हव्यः । यः । च । भूरिऽभिः । यः । अभीके ।
वरिवःऽवित् । नृऽसह्ये । तम् । विऽखादे । सस्निम् । अद्य ।
श्रुतम् । नरम् । अर्वाञ्चम् । इन्द्रम् । अवसे । करामहे ॥ ४ ॥

नृसह्ये नृणामभिभावुके विखादे विशेषण भक्षके अभीके संग्रामे वरिवोवित् धनस्य लंभकोयइंद्रोदभ्रेभिः स्वल्पैर्हव्योह्वातव्योयश्च भूरिभिः बहुभिः हव्यः तं सस्निं शुचिं श्रुतं सर्वत्र विख्यातं नरं नेतारमिंद्रं अद्यास्मिन्नहनि अवसेस्मद्रक्षणाय अर्वाचमस्मदभिमुखं करामहे कुर्मः॥४॥

अथ पञ्चमी—

स्ववृजंहित्वामहमिन्द्रशुश्रवानानुदंवृषभरध्रचोदनम् ।
प्रमुंचस्वपरिकुत्सादिहागहिकिमुत्वावान्मुष्कयोर्बद्धआसते ॥५ ॥१४॥

स्व॒ऽवृज॑म् । हि । त्वाम् । अ॒हम् । इ॒न्द्र॒ । शु॒श्रव॑ । अ॒न॒नु॒ऽदम् ।
वृ॒ष॒भ॒ । र॒ध्र॒ऽचोद॑नम् । प्र । मु॒ञ्चस्व॒ । परि॑ । कुत्सा॑त् । इ॒ह । आ ।
ग॒हि॒ । किम् । ऊँ॒ इति॑ । त्वा॒ऽवा॑न् । मु॒ष्कयोः॑ । ब॒द्धः । आ॒स॒ते॒ ॥५॥१४॥

हे वृषभ कामानां वर्षकेंद्र स्ववृजं स्वयमेव छेत्तारं अननुदं अनपेक्षितबलानुप्रदानं रध्रचोदनं राधकस्य चोदकं प्रेरकं त्वामहं लुशः शुश्रव अश्रौषं हि यस्मात्तस्मात् प्रमुंचस्व कुत्सेन वाध्रिशतेनांडयोर्बद्धमात्मानं बंधनाद्विमुंच । अथ परि सर्वतः परिवृतस्त्वं कुत्सात् कुत्साख्यादृषेः इहास्मद्यागे आगह्यागच्छ किमु त्वावान् त्वत्सदृशोन्यः कश्चिन्मुष्कयोर्बद्ध आसते न कोप्येतादृशोनिर्लज्जः त्वत्तोन्योस्तीत्यभिप्रायः । तत्र शाट्यायनकं कुत्सश्चलुशश्चेंद्रं व्यह्वयेतां सकुत्सस्याहवमागच्छत् तंशतेनवाध्रिभिरांडयोरबध्नात् लुशोभ्यवदत् स्ववृजंहित्वामहमिंद्रशुश्रवानानुदंवृषभरध्रचोदनंप्रमुंचस्व परिकुत्सादिहागहि किमुत्वावान्मुष्कयोर्बद्धआसतइति । ताः सर्वाः संलुप्यलुशमभिप्रादुद्रवदिति । छंदोगब्राह्मणमपि कुत्सश्च लुशश्च युगपदिंद्रमाहूतवंतौ स्वंस्वंयज्ञं प्रत्यंगभावाय सखित्वादिंद्रः कुत्सं प्रतिजगाम तं तु गतं वशित्वात् कुत्सोवध्रिशतेनांडयोरबध्नादिति ॥ ५ ॥

॥ इति सप्तमस्याष्टमे चतुर्दशोवर्गः ॥ १४ ॥

योवामिति चतुर्दशर्चं दशमं सूक्तं कक्षीवतोदुहिताघोषानाम ब्रह्मवादिनी ऋषिः अंत्यात्रिष्टुप् शिष्टाजगत्यः अश्विनौ देवता । तथाचानुक्रांतं--योवांषळूना काक्षीवतीघोषाश्विनं हि त्रिष्टुबंतमिति । प्रातरनुवाकाश्विनशस्त्रयोर्जागतेछंदसि इदमादीनि त्रीणि सूक्तानि । सूत्रितंच--योवांपरिज्मेति त्रीणि त्रिश्विन्नोअद्येति ।

तत्र प्रथमा—

यो वां॒ परि॑ज्मा सु॒वृद॑श्विना॒ रथो॑ दो॒षामु॒षासो॒ हव्यो॑ ह॒विष्म॑ता ।
श॒श्व॒त्त॒मास॒स्तमु॑ वामि॒दं व॒यं पि॒तुर्न नाम॑ सु॒हवं॑ हवामहे ॥ १ ॥

यः । वा॒म् । परि॑ऽज्मा । सु॒ऽवृत् । अ॒श्वि॒ना॒ । रथः॑ । दो॒षाम् ।
उ॒षसः॑ । हव्यः॑ । ह॒विष्म॑ता । श॒श्व॒त्ऽत॒मासः॑ । तम् । ऊँ॒ इति॑ ।
वा॒म् । इ॒दम् । व॒यम् । पि॒तुः । न । नाम॑ । सु॒ऽहव॑म् । ह॒वा॒म॒हे॒ ॥१॥

हे अश्विनाश्विनौ वां युवयोः परिज्मा परितोगंता सुवृत् सुष्ठु वर्तमानोयोरथोदोषां रात्रिं उषसश्च अहोरात्रयोरित्यर्थः हविष्मता यजमानेन हव्योह्वातव्यः वां युवयोः स्वभूतं सुहवं शोभनाह्वानं तमु तमेव रथं शश्वत्तमासोतिशयेन चिरंतनावयं पितुर्न यथा पितुरिदं नाम त-था हवामहे ह्वयाम ॥ १ ॥

अथ द्वितीया–

चोदयतंसूनृताःपिन्वतंधियउत्पुरंधीरीरयतंतदुश्मसि ।
यशसंभागंकृणुतन्नोअश्विनासोमंनचारुंमघवत्सुनस्कृतम् ॥ २ ॥

चोदयतम् । सूनृताः । पिन्वतम् । धियः । उत् । पुरम्ऽधीः । ईरयतम् तत् । उश्मसि । यशसम् । भागम् । कृणुतम् । नः । अश्विना । सोमम् । न । चारुम् । मघवत्ऽसु । नः । कृतम् ॥ २ ॥

हे अश्विना अश्विनौ युवां सूनृतावाचउषसोवा चोदयतं प्रेरयतं अस्माकं धियः क-र्माणि च पिन्वतं पूरयतं पुरंधीर्बह्वीः प्रज्ञाश्चोदीरयतं उद्गमयतंप्रेरयतंउत्पादयतमित्यर्थः । तदेत-त्त्रयमुश्मसि वयं कामयामहे । किंच नोस्माकंयशसं यशस्विनं भागं भजनीयं धनादिकं कृणुतं कुरुतं । चारुं कल्याणं सोमं न सोममिव नोस्मान्मघवत्सु धनवत्सु कृतं कुरुतं ॥ २ ॥

अथ तृतीया–

अमाजुरश्चिद्भवथोयुवंभगोनाशोश्चिदवितारापमस्यचित् ।
अन्धस्यचिन्नासत्याकृशस्यचिद्युवामिदाहुर्भिषजारुतस्यचित् ॥३॥

अमाऽजुरः । चित् । भवथः । युवम् । भगः । अनाशोः । चित् । अवितारा । अपमस्य । चित् । अन्धस्य । चित् । नासत्या । कृशस्य । चित् । युवाम् । इत् । आहुः । भिषजा । रुतस्य । चित् ॥ ३॥

हे नासत्या नासत्यौ युवं युवां अमाजुरश्चित् पितृगृहे जूर्यन्त्याअपि दुर्भगायाघोषायाः भगोभवथः शोभनरूपेणात्मानं परिणमय्य पतिं दत्तवंतौ स्थइत्यर्थः । तथा च निगमांतरं— घोषायैचित्पितृषदेदुरोणेपतिंजूर्यंत्याअश्विनावदत्तमिति[1] । अनाशोश्चित् अनशनस्याप्यविताारा रक्षितारौ युवां भवथः अधमस्य चित् जात्यादिनिकृष्टस्यापि रक्षितारौ भवथः अंधस्य चित् चक्षुर्विकलस्यापि रक्षितारौ भवथः कृशस्य चित् दुर्बलस्यापि रक्षितारौ भवथः । किंच युवामित् युवामेव ऋतस्यचित् यज्ञस्यापि भिषजा भिषजौ वैद्यावाहुर्विद्वांसः ॥ ३ ॥

अथ चतुर्थी—

युवंच्यवानंसनयंयथारथंपुनर्युवानंचरथायतक्षथुः ।
निष्टौग्र्यमूहथुरद्भ्यस्परिविश्वेत्तावांसवनेषुप्रवाच्या ॥ ४ ॥

युवम् । च्यवानम् । सनयम् । यथा । रथम् । पुनः । युवानम् ।
चरथाय । तक्षथुः । निः । तौग्र्यम् । ऊहथुः । अत्ऽभ्यः । परि ।
विश्वा । इत् । ता । वाम् । सवनेषु । प्रऽवाच्या ॥ ४ ॥

हे अश्विनौ युवं युवां सनयं पुराणं च्यवानमृषिं यथा रथं जीर्णरथमिव पुनर्युवानं तरुणं चरथाय चरणार्थं तक्षथुः ततक्षथुः अकुरुतमित्यर्थः । तथाचयास्कः—युवां च्यवनं सनयं पुराणं यथारथं पुनर्युवानं चरणाय तक्षथुर्युवा प्रयौति कर्माणितक्षतिः करोतिकर्मेति[2] । किंच युवां तौग्र्यं तुग्रपुत्रं भुज्युमद्भ्यः परि समुद्रस्योपरि निरूहथुः । किंच वां युवयोर्विश्वा विश्वानि ता तानि कर्माणि सवनेषु यज्ञेषु प्रवाच्या प्रवाच्यानि प्रकर्षेण वक्तव्यानि ॥ ४ ॥

अथ पञ्चमी—

पुराणावांवीर्या३प्रब्रवाजनेथोहासथुर्भिषजामयोभुवा ।
तावांनुनव्यावसेकरामहेयंनासत्याश्रदरिर्यथादधत् ॥५॥१५॥

---

१ ऋ० सं० १. ८. १४ । २ नि० ४. १९. ।

पुराणा । वाम् । वीर्या । प्र । ब्रव । जने । अथो इति । ह । आसथुः ।
भिषजा । मयःऽभुवा । ता । वाम् । नु । नव्यौ । अवसे । करामहे ।
अयम् । नासत्या । श्रत् । अरिः । यथा । दधत् ॥ ५ ॥ १५ ॥

हे अश्विनौ वां युवयोः पुराणा पुराणानि वीर्या वीर्याणि जने लोके प्रब्रव प्रब्रवीमि । अथो अपिच हे नासत्या नासत्यौ युवां मयोभुवा सुखस्य भावयितारौ भिषजा भिषजौ वैद्यौ आसथुः बभूवथुः ता तौ वां युवामवसे रक्षणाय नव्यौ स्तुत्यौ नु क्षिप्रं करामहे कुर्मः अयमरिर्गंता पतिः यजमानोयथा श्रद्दधत् श्रद्दध्यादिति ॥ ५ ॥

॥ इति सप्तमस्याष्टमे पञ्चदशोवर्गः ॥ १५ ॥

अथ षष्ठी—

इयंवामह्वेशृणुतंमेअश्विनापुत्रायेवपितरामह्यंशिक्षतम् ।
अनापिरज्ञाअसजात्यामतिःपुरातस्याअभिशस्तेरवस्पृतम् ॥ ६॥

इयम् । वाम् । अह्वे । शृणुतम् । मे । अश्विना । पुत्रायऽइव ।
पितरा । मह्यम् । शिक्षतम् । अनापिः । अज्ञाः । असजात्या ।
अमतिः । पुरा । तस्याः । अभिऽशस्तेः । अव । स्पृतम् ॥ ६ ॥

हे अश्विना अश्विनौ वां युवामियं घोषाहं अह्वे आह्वयामि मे मम संबंधिनमिममाह्वानं शृणुतं श्रुत्वा चाह्वानं मह्यं पुत्रायेव यथा पुत्राय पितरा मातापितरौ तद्वत् शिक्षतं धनं दत्तं अनापिरबंधुरज्ञा अकृतज्ञा असजात्या अमतिः अश्रद्धेया चाभिशस्तिः मामागच्छति तस्याः अभिशस्तेः पुरा प्रागेव अवस्पृतं मामवधारयतं ॥ ६ ॥

अथ सप्तमी—

युवंरथेनविमदायशुन्ध्युवंन्यूहथुःपुरुमित्रस्ययोषणाम् ।
युवंहवंवध्रिमत्याअगच्छतंयुवंसुषुतिंचक्रथुःपुरंधये ॥ ७ ॥

युवम् । रथेन । विऽमदाय । शुन्ध्युवम् । नि । ऊहथुः ।
पुरुऽमित्रस्य । योषणाम् । युवम् । हवम् । वध्रिऽमत्याः ।
अगच्छतम् । युवम् । सुऽसुतिम् । चक्रथुः । पुरम्ऽधये ॥ ७ ॥

हे अश्विनौ युवं युवां पुरुमित्रस्य पुरुमित्रनामधेयस्य योषणां दुहितरं शुंध्युवं नाम जायां विमदाय विमदनामधेयाय ऋषये रथेन स्वसेनापरिवृतेन रथेन न्यूहथुः प्रापयतं विमदस्य गृहं नीतवंतौ स्थइत्यर्थः । तथाचनिगमांतरं—यावर्भगायविमदायजायांसेनाजुवान्यूहतूरथेनेति[1] । किंच युवं युवां वध्रिमत्याः संग्रामे शत्रुभिः छिन्नहस्तायाहवमाह्वानमगच्छतं आगत्य तस्यै हिरण्मयं हस्तं प्रयच्छतं । तथाचनिगमांतरं—अजोहवीन्नासत्याकरावांमहेयामन्पुरुभुजापुरंधिः । श्रुतंतच्छासुरिववध्रिमत्याहिरण्यहस्तमश्विनावदत्तमिति[2] । किंच युवं युवां पुरंधये बहुप्रज्ञायै वध्रिमत्यै सुषुतिं सुप्रसवं शोभनमैश्वर्यं वा चक्रथुः कृतवंतौस्थः ॥ ७ ॥

अथाष्टमी—

युवंविप्रस्यजरणामुपेयुषःपुनःकलेरकृणुतंयुवद्वयः ।
युवंवन्दनमृश्यदादुदूपथुर्युवंसद्योविश्पलामेतवेकृथः ॥ ८ ॥

युवम् । विप्रस्य । जरणाम् । उपऽईयुषः । पुनरिति । कलेः ।
अकृणुतम् । युवत् । वयः । युवम् । वन्दनम् । ऋश्यऽदात् । उत् ।
ऊपथुः । युवम् । सद्यः । विश्पलाम् । एतवे । कृथः ॥ ८ ॥

हे[3] अश्विनौ युवं युवां विप्रस्य मेधाविनः जरणां जरां उपेयुषः उपगतवतः कलेः कलिनामधेयस्य ऋषेः वयः पुनरपि युवत् युवत्वयुक्तं अकृणुतं अकुरुतं । तथाचनिगमांतरं—कलिंयाभिर्वित्तजानिंदुवस्यथइति[4] । किंच युवं युवां वंदनं जायावियोगसंतापेन कूप-

---

१ ऋ० सं० १.८.८. । २ ऋ०सं० १.८.१०. । ३ हे अश्विनौ युवं युवां जरणां जरां उपेयुषः उपेतस्य विप्रस्य पुत्रादिभिः परित्यक्तस्य च्यवनाख्यस्य ऋषेः कलेःकलेवरस्य युवत् युवासदृशं वयः अकृणुतं अकुरुतं तथाचनिगमांतरं—जुजुरुणोनासत्योतवव्रिंमामुंचतंद्रापिमिवच्यवानात् । प्रातिरतंजहितस्यायुर्दस्रादित्पतिमकृणुतंकनीनामिति । ४ ऋ०सं० १.७.३५. ।

पतितं वंदनाख्यमृषिमृश्यदात् कूपादुदूपथुः उदैरयतं । तथाचनिगमांतरं—उद्वंदनमैरयतंस्वर्दृशइति । किंच युवं युवां विश्पलां खेलस्य राज्ञः सेनायां योध्रीविश्पलानाम काचित् स्त्री तां संग्रामे शत्रुभिः छिन्नजंघांसद्यस्तदैव एतवे गमनाय कृथः अकुरुतं। तथाचनिगमांतरं—चरित्रंहिवेरिवाच्छेदिपर्णमाजाखेलस्यपरितक्म्यायां। सद्योजंघामायसींविश्पलायैधनेहितेसर्तवेप्रत्यधत्तमितिं॥८॥

अथ नवमी--

युवंहरेभंवृषणागुहाहितमुदैरयतंममृवांसमश्विना ।
युवमृबीसमुतनप्तमत्रयओमन्वन्तंचक्रथुःसप्तवध्रये ॥ ९ ॥

युवम् । ह । रेभम् । वृषणा । गुहा । हितम् । उत् । ऐरयतम् । ममृऽवांसम् । अश्विना । युवम् । ऋबीसम् । उत । तप्तम् । अत्रये । ओमन्ऽवन्तम् । चक्रथुः । सप्तऽवध्रये ॥ ९ ॥

हे वृषणा वर्षितारावश्विना अश्विनौ युवं युवां गुहा गुहायां हितं असुरैर्निहितं ममृवांसं म्रियमाणं रेभं रेभाख्यमृषिं उदैरयतं उत्तारितवंतौ स्थः। तथाचनिगमांतरं--दशरात्रीरशिवेनानवद्यूनवनद्धंश्नथितमप्स्वंतः। विप्रुतंरेभमुदनिप्रवृक्तमुन्निन्यथुःसोममिवस्रुवेणेतिं । उत किंच युवं युवां तप्तमृबीसं अग्निकुंडं अत्रये अत्रेरर्थाय ओमन्वंतं अवनवंतं चक्रथुः वृष्ट्या विशमय्य शीतं कृतवंतौस्थइत्यर्थः। तथाचनिगमांतरं--हिमेनाग्निंघ्रंसमवारयेथांपितुमतीमूर्जमस्माअधत्तं । ऋबीसेअत्रिमश्विनावनीतमुन्निन्यथुःसर्वगणंस्वस्तीतिं । किंच युवां सप्तवध्रये अश्वमेधेन राज्ञा केनचिदपराधेन काष्ठमयमंजूषायां निहितस्य सप्तवध्रिनामधेयस्य ऋषेरर्थाय चक्रथुः मंजूषोद्घाटनं कृतवंतौ स्थइत्यर्थः । तथाचनिगमांतरं--विजिहीष्ववनस्पतेयोनिःसूष्यंत्याइव । श्रुतंमेअश्विनाहवंसप्तवध्रिंचमुंचतमितिं ॥ ९ ॥

---

१ ऋ० सं० १. ७. २३। २ ऋ० सं० १. ८. १०। ३ ऋ० सं० १. ८. १२।
४ ऋ० सं० १. ८. ९। ५ ऋ० सं० ४. ४. २०।

अथ दशमी–

युवंश्वेतंपेदवेश्विनाश्वंनवभिर्वाजैर्नवतीचंवाजिनम् ।
चर्कृत्यंददथुर्द्रावयत्सखंभगंननृभ्योहव्यंमयोभुवम् ॥ १० ॥ १६ ॥

युवम् । श्वेतम् । पेदवे । अश्विना । अश्वम् । नवऽभिः । वाजैः । नवती । च । वाजिनम् । चर्कृत्यम् । ददथुः । द्रवयत्ऽसखम् । भगम् । न । नृऽभ्यः । हव्यम् । मयःऽभुवम् ॥ १०॥१६॥

हे अश्विनाश्विनौ युवं युवां पेदवे पेदुनामधेयाय राज्ञे श्वेतं श्वेतवर्णं वाजिनं बलिनं नवभिर्नवती नवत्या चाश्वैः सहितं चर्कृत्यं संग्रामाणां अत्यर्थं कर्तारं शत्रूणां जेतारं वा द्रवयत्सखंशत्रुसखानां द्रावयितारं हव्यं ह्वातव्यं मयोभुवं सुखस्य भावयितारं अश्वं नृभ्योमनुष्येभ्योभगं न भजनीयं धनमिव ददथुः प्रायच्छतं ॥ १० ॥

॥ इति सप्तमस्याष्टमे षोडशोवर्गः ॥ १६ ॥

अथैकादशी–

नतंराजानावदितेकुतंश्चननांहोअश्नोतिदुरितंनकिर्भयम् ।
यमंश्विनासुहवारुद्रवर्तनीपुरोरथंकृणुथःपत्न्यांसह ॥ ११ ॥

न । तम् । राजानौ । अदिते । कुतः । चन । न । अंहः । अश्नोति । दुःऽइतम् । नकिः । भयम् । यम् । अश्विना । सुऽहवा । रुद्रवर्तनी इति रुद्रऽवर्तनी । पुरःऽरथम् । कृणुथः । पत्न्या । सह ॥ ११ ॥

हे राजानावीश्वरौ अदिते अदीनौ सुहवा स्वाह्वानौ रुद्रवर्तनी स्तोत्रयुक्तमार्गौ हे अश्विना अश्विनौ युवां यं जनं पुरोरथं अग्रतोरथं पत्न्या सह स्वयंवरे कृणुथः कुरुथः तंजनं कुतश्चन कुतोपि अंहः पापं नाश्नोति नव्याप्नोति दुरितं दुर्गतिरपिनाश्नोति नकिः नच भयं प्राप्नोति ॥ ११ ॥

अथ द्वादशी—

आतेनंयातंमनंसोजवींयसारथंयंवामृभवंश्चक्रुरंश्विना ।
यस्ययोगेंदुहिताजायंतेदिवउभेअहंनीसुदिनेंविवस्वंतः ॥ १२ ॥

आ । तेनं । यातम् । मनंसः । जवींयसा । रथंम् । यम् । वाम् ।
ऋभवंः । चक्रुः । अश्विना । यस्यं । योगें । दुहिता । जायंते । दिवः ।
उभे इतिं । अहंनी इतिं । सुदिने इतिं सुऽदिनें । विवस्वंतः ॥ १२ ॥

हे अश्विनाश्विनौ वां युवयोर्यं रथं ऋभवश्चक्रुः अकार्षुः यस्य रथस्य योगे संबंधे सति दिवोदुहितोषाः जायते प्रादुर्भवति यस्य च योगे विवस्वतोभास्कराद्उभे अहनी अहोरात्रे सुदिने शोभने जायेते तेन रथेन मनसोपि जवीयसा वेगवत्तरेणायातं युवामागच्छत-मस्मान् ॥ १२ ॥

अथ त्रयोदशी—

तावर्तिर्यातंजयुषाविपर्वंतमपिन्वतंशयवेंधेनुमंश्विना ।
वृकंस्यचिद्वर्तिकामन्तरास्याद्युवंशचींभिर्ग्रसितामंमुञ्चतम् ॥ १३ ॥

ता । वर्तिः । यातम् । जयुषां । वि । पर्वंतम् । अपिन्वतम् । शयवें ।
धेनुम् । अश्विना । वृकंस्य । चित् । वर्तिकाम् । अन्तः । आस्यात् ।
युवम् । शचींभिः । ग्रसिताम् । अमुञ्चतम् ॥ १३ ॥

हे अश्विना अश्विनौ ता तौ युवां जयुषा जयशीलेन रथेन पर्वतं आद्रिंप्रति वर्तिर्मार्गं वियातं विविधं गच्छथः । तथाच निगमांतरं—विजयुषारथ्यायातमद्रिंश्रुतंहवंवृषणावध्रिमत्याइ-ति[1] । किंच युवं शयवे शयोरर्थाय धेनुं अपिन्वतं निवृत्तप्रसवां वृद्धां गां प्रभूतस्य पयसोदो-

---

१ऋ० सं० ५. १. २.

र्भ्रीं कृतवंतौ स्थइत्यर्थः। तथाचनिगमांतरं--युवंधेनुंशयवेनाधितायापिन्वतमश्विनापूर्व्यायं। किंच युवं युवां वृकस्यांतरनुप्रविष्टां ग्रसितां वृकेण ग्रस्तां वर्तिकां वर्तिकानाम चटका तामास्यात् वृकस्य मुखात् शचीभिः प्रज्ञाभिः कर्मभिर्वा अमुंचतं अमोचयतं। तथाचनिगमांतरं--अजोहवीदश्विनावर्तिकावामास्नोयत्सीममुंचतंवृकस्येति[2] ॥ १३ ॥

अथ चतुर्दशी--

एतंवांस्तोमंमश्विनावकर्मातक्षामभृगवोनरथंम्।
न्यमृक्षामयोषणांनमर्येनित्यंनसूनुंतनयंदधानाः ॥ १४ ॥ १७ ॥

एतम्। वाम्। स्तोमंम्। अश्विनौ। अकर्म। अतक्षाम। भृगवः।
न। रथम्। नि। अमृक्षाम। योषणाम्। न। मर्ये। नित्यम्।
न। सूनुम्। तनयम्। दधानाः ॥ १४ ॥ १७ ॥

हे अश्विनौ वां युवयोः एतं यथोक्तं स्तोमं स्तोत्रं अकर्म अकुर्म तदेवाह--भृगवोन भृगवइव रथं अतक्षाम वयं स्तोत्रं संस्कृतवंतः कर्मयोगाद्दृभवोभृगवउच्यंते। अथवा रथकारा-भृगवः। किंच वयं नित्यं शाश्वतं तनयं यागादीनां कर्मणां तनितारं सूनुं न औरसं पुत्र-मिव स्तोमं दधानाधारयंतोमर्ये मनुष्ये न्यमृक्षाम युवयोः स्तुतिं नितरां संस्कृतवंतः। तत्रदृष्टांतः--योषणां न यथा जायां तद्वदित्यर्थः ॥ १४ ॥

॥ इति सप्तमस्याष्टमे सप्तदशोवर्गः ॥ १७ ॥

रथंयांतमितिचतुर्दशर्चमेकादशं सूक्तं काक्षीवत्याघोषायाआर्षं जागतमाश्विनं। रथंयांतमित्यनुक्रांतं। प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः।

तत्र प्रथमा--

रथंयान्तंकुहकोहवांनराप्रतिद्युमन्तंसुवितायभूषति।
प्रातर्यावाणंविभ्वंविशेविशेवस्तोर्वस्तोर्वहमानंधियाशमि ॥ १ ॥

---

१ ऋ० सं० १. ८. १९. । २ ऋ० सं० १. ८. १६. ।

रथम् । यान्तम् । कुह । कः । ह । वाम् । नरा । प्रति । द्युऽमन्तम् ।
सुविताय । भूषति । प्रातःऽयावानम् । विऽभ्वम् ।
विशेऽविशे । वस्तोःऽवस्तोः । वहमानम् । धिया । शमि ॥ १ ॥

हे नरा कर्मणां नेताराववश्विनौ वां युवयोः संबंधिनं द्युमंतं दीप्तिमंतं प्रातर्यावाणं यज्ञं प्रति विलंबेन प्रातः काले गंतारं विश्वं विभुं व्यापिनं विशेविशे सर्वेषु मनुष्येषु वस्तोर्वस्तोः अन्वहं वहमानं धनं प्रापयंतं यान्तं गच्छंतं रथं कुह कस्मिन् देशे कोह कः खलु यजमानः शमि यज्ञरूपे कर्मणि धिया स्तुतिरूपेण कर्मणा सुवितायाभ्युदयार्थं प्रतिभूषति अलंकरोति कस्मिन्देशे यज्ञे कोन्यो यजमानोयुवां स्तुतिभिर्हविर्भिश्च पूजितवान् येनास्मद्यज्ञं प्रति विलंबेनागतवंतौ स्थइत्यभिप्रायः ॥ १ ॥

अथ द्वितीया–

कुहस्विद्दोषाकुहवस्तोरश्विनाकुहाभिपित्वंकरतःकुहोषतुः ।
कोवांशयुत्राविधवेवदेवरंमर्यंनयोषाकृणुतेसधस्थआ ॥ २ ॥

कुह । स्वित् । दोषा । कुह । वस्तोः । अश्विना । कुह ।
अभिऽपित्वम् । करतः । कुह । ऊषतुः । कः । वाम् । शयुऽत्रा ।
विधवाऽइव । देवरम् । मर्यम् । न । योषा । कृणुते । सधऽस्थे । आ ॥ २ ॥

हे अश्विनाश्विनौ कुहस्वित् क्वस्विद्दोषारात्रौ भवथइतिशेषः कुह वस्तोः क्व वा दिवा भवथः कुह क्व वाभिपित्वमभिप्राप्तिं करतः कुरुथः कुह क्वा ऊषथुः वसथः । किंच वां युवां कोयजमानः सधस्थे सहस्थाने वेद्याख्ये आकृणुते आकुरुते परिचरणार्थमात्माभिमुखीकरोति । तत्र दृष्टांतौदर्शयति–शयुत्रा शयने विधवेव यथा मृतभर्तृका नारी देवरं भर्तृभ्रातरं अभिमुखीकरोति । मर्यं न यथा च सर्वं मनुष्यं योषा सर्वा नारी संभोगकालेभिमुखी करोति तद्वदित्यर्थः । तथाच यास्कः–क्वस्विद्रात्रौ भवथः क्वदिवा क्वाभिप्राप्तिं कुरुथः क्ववसथः कोवां शयने विधवेव देवरं देवरः कस्माद्द्वितीयोवरउच्यते विधवाविधातृकाभवति विधवनाद्वा विधा-

वनादेति चर्मशिराअपिवा धवइति मनुष्यनाम तद्वियोगाद्विधवा देवरो दीव्यतिकर्मा मर्योमनुष्योमरणधर्मा योषायैतेराकुरुते सहस्थानेइति ॥ २ ॥

अथ तृतीया—

प्रातर्जरेथेजरणेवकापयावस्तोर्वस्तोर्यजतागच्छथोगृहम् ।
कस्यंध्वस्राभवथःकस्यंवानराराजपुत्रेवसवनावगच्छथः ॥ ३ ॥

प्रातः । जरेथे । जरणाऽइव । कापया । वस्तोःऽवस्तोः । यजता ।
गच्छथः । गृहम् । कस्य । ध्वस्रा । भवथः । कस्य ।
वा । नरा । राजपुत्राऽइव । सवना । अव । गच्छथः ॥ ३ ॥

हे नरा नेतारावश्विनौ युवां प्रातः प्रातःकाले जरेथे स्तोतृभिः स्तूयेथे । तत्र दृष्टांतः—जरणेव यथाजरणावैश्वर्येण वृद्धौ राजानौ कापया प्रातः प्रबोधकस्य बंदिनोवाणी कापा तया स्तूयेते तद्वदित्यर्थः । किंच वस्तोर्वस्तोरन्वहं यजता यष्टव्यौ युवां गृहं यजमानस्य मंदिरं गच्छथः प्रामुथः तौ युवां कस्य यजमानसंबंधिनो दोषस्य ध्वस्रा ध्वंसकौ विनाशयितारौ भवथः कस्य यजमानस्य सवना सवनानि राजपुत्रेव राजकुमाराविव युवामवगच्छथः प्रामुथः॥३॥

अथ चतुर्थी—

युवांमृगेववारणामृगण्यवोदोषावस्तोर्हविषानिह्वयामहे ।
युवंहोत्रामृतुथाजुह्वतेनरेषंजनायवहथःशुभस्पती ॥ ४ ॥

युवाम् । मृगाऽइव । वारणा । मृगण्यवः । दोषा । वस्तोः ।
हविषा । नि । ह्वयामहे । युवम् । होत्राम् । ऋतुऽथा । जुह्वते ।
नरा । इषम् । जनाय । वहथः । शुभः । पती इति ॥ ४ ॥

---

१ नि० ३. १५.

हे अश्विनौ युवां वारणा वारणौ मृगेव यथा शार्दूलौ मृगण्यवोमृगयवः तद्वद्वयं दोषा रात्रौ वस्तोरहनि च हविषा निह्वयामहे नियमेन ह्वयामः। किंच हे नरा नेतारावश्विनौ युवं युवां ऋतुथा कालेकाले होत्रामाहुतिं जुह्वते जुह्वति यजमानाइतिशेषः। किंच युवां शुभः शुभस्य वृष्ट्युदकस्य पती स्वामिनौ संतौ जनाय जनार्थमिषं अन्नं वहथः प्रापयथः ॥ ४ ॥

अथ पञ्चमी—

युवांहघोषापर्यश्विनायतीराज्ञऊचेदुहितापृच्छेवांनरा।
भूतंमेअह्नउतभूतमक्तवेश्वावतेरथिनेशक्तमर्वते ॥ ५ ॥ १८ ॥

युवाम्। ह। घोषा। परि। अश्विना। यती। राज्ञः। ऊचे।
दुहिता। पृच्छे। वाम्। नरा। भूतम्। मे। अह्ने। उत। भूतम्।
अक्तवे। अश्वऽवते। रथिने। शक्तम्। अर्वते ॥ ५ ॥ १८ ॥

हे नरा नेतारावश्विनौ युवां ह खलु परि परितोयती गच्छंती राज्ञोदीप्तस्यकक्षीवतोदुहिता पुत्री घोषा घोषाख्या अहमूचे संनिहितेभ्योवृद्धेभ्यः उक्तवत्यस्मि। किंच वां युवां पृच्छे वृद्धान् संनिहितान् कीदृशावश्विनाविति पृच्छामि। तथा सति मे मम अह्ने दिवसाय दिवसनिर्वर्त्यकर्मणे भूतं भवतं। उतापिच अक्तवे रात्र्यै रात्रिनिर्वर्त्यकर्मणे भूतं भवतं। तथाश्वावते अश्वयुक्ताय रथिने रथवतेचार्वते भ्रातृव्याय शक्तं निरसनेशक्तौ भवतं ॥ ५ ॥

॥ इति सप्तमस्याष्टमेष्टादशोवर्गः ॥ १८ ॥

अथ षष्ठी—

युवंकवीष्ठःपर्यश्विनारथंविशोनकुत्सोजरितुर्नशायथः।
युवोर्हमक्षापर्यश्विनामध्वासाभरतनिष्कृतंनयोषणा ॥ ६ ॥

युवम्। कवी इति। स्थः। परि। अश्विना। रथम्। विशः। न।
कुत्सः। जरितुः। नशायथः। युवोः। ह। मक्षा। परि। अश्विना।
मधु। आसा। भरत। निःऽकृतम्। न। योषणा ॥ ६ ॥

हे अश्विनाश्विनौ कवी क्रांतदर्शिनौ युवं युवां रथं परिष्ठः परितोभवथः । अथ जरितुः स्तोतुः यज्ञं प्रतिगमनाय नशायथः रथं प्राप्नुथः । तत्र दृष्टांतः—विशोमनुष्यः कुत्सोन यथा कुत्सर्थेंद्रश्च सरथमधितिष्ठतः । तथाच मंत्रांतरं--यासिकुत्सेनसरथमवस्युस्तोदोवातस्यहर्योरीशानइति[1] । किंच हे अश्विनाश्विनौ युवोर्ह युवयोः खलु स्वभूतं मधु मक्षा मक्षिका आसा आस्येन परिभरत बिभर्ति । तत्रदृष्टांतः—निष्कृतं न यथा निष्कृतं संस्कृतं मधु योषणा नारी तद्वदित्यर्थः । तथाचमंत्रांतरं--उतस्यावांमधुमन्मक्षिकारपन्मदेसोमस्यौशिजोहुवन्यतीति[2] ॥ ६ ॥

अथ सप्तमी—

युवंहभुज्युंयुवमश्विनावशंयुवंशिंजारमुशनामुपारथुः ।
युवोररावापरिसख्यमासतेयुवोरहमवसासुम्नमाचके ॥ ७ ॥

युवम् । ह । भुज्युम् । युवम् । अश्विना । वशम् । युवम् । शिञ्जारम् ।
उशनाम् । उप । आरथुः । युवोः । ररावा । परि । सख्यम् ।
आसते । युवोः । अहम् । अवसा । सुम्नम् । आ । चके ॥ ७ ॥

हे अश्विनाश्विनौ युवं ह युवां खलु भुज्युं समुद्रमध्ये विपन्ननावं तुग्रपुत्रं भुज्युमुपारथुः उत्तारयितुमुपगतवंतौ भवथः । किंच युवं युवां वशंहस्तिबलेन शत्रुभिः पराजयमानं वशनामधेयं राजानं रक्षणायोपारथुः । किंच युवं युवां शिंजारं अत्रिं अग्निकूटादुत्तारयितुं उशनां कमनीयां स्तुतिं च श्रोतुं उपारथुः । तथाच मंत्रांतरं--अत्रिंशिंजारमश्विनेति[3] । किंच युवोर्युवयोः सख्यं मित्रत्वं ररावा हविषां प्रदाता यजमानः पर्यासते पर्यास्ते छांदसोवचनव्यत्ययः । किंच युवोर्युवयोः अवसा रक्षणेनाहं घोषा सुम्नं सुखं आचके कामये ॥ ७ ॥

अथाष्टमी—

युवंहकृशंयुवमश्विनाशयुंयुवंविधन्तंविधवामुरुष्यथः ।
युवंसनिभ्यःस्तनयन्तमश्विनापव्रजमूर्णुथःसप्तास्यम् ॥ ८ ॥

---

१ ऋ० सं० ३. ५. १८ । २ ऋ० सं० १. ८. २१ । ३ ऋ० सं० ५. ८. ५ ।

यु॒वम् । ह॒ । कृ॒शम् । यु॒वम् । अ॒श्वि॒ना॒ । श॒युम् । यु॒वम् । वि॒धन्त॑म् ।
वि॒धवा॑म् । उ॒रु॒ष्य॒थः॒ । यु॒वम् । स॒निऽभ्यः॑ । स्त॒नय॑न्तम् ।
अ॒श्वि॒ना॒ । अप॑ । व्र॒जम् । ऊ॒र्णु॒थः॒ । स॒प्तऽआ॑स्यम् ॥ ८ ॥

हेअश्विना अश्विनौ युवं युवां ह खलु कृशं दुर्बलं कृशनामधेयं वा उरुष्यथः रक्षथः । किंच युवं युवां शयुं शयुनामानमृषिं उरुष्यथः । किंच युवं युवां विधंतं परिचरंतं मानुष्यं विधवां चापतिकां वध्रिमतीं योध्रीं स्त्रियं चोरुष्यथः । किंच हे अश्विनाश्विनौ युवं युवां स्तनयंतं शब्दं कुर्वंतं सप्तास्यं सर्पणशीलद्वारं व्रजं मेघं व्रजः चरुरितिमेघनामसु पाठात् । सनिभ्योहविषां दातृभ्यः अपोर्णुथः विवृतद्वारं कृतवंतौ स्थइत्यर्थः ॥ ८ ॥

अथ नवमी—

जनि॑ष्ट॒योषा॑प॒तय॑त्क॒नीन॒कोविचारु॑ह॒न्वी॒रुधो॒दंस॑ना॒अनु॑ ।
आस्मै॑रीयन्तेनि॒व॒नेव॒सिन्ध॑वो॒स्माअह्ने॑भवति॒तत्प॑ति॒त्व॒नम् ॥ ९ ॥

जनि॑ष्ट । योषा॑ । प॒तय॑त् । क॒नी॒न॒कः । वि । च॒ । अरु॑हन् । वी॒रुधः॑ ।
दं॒सना॑ः । अनु॑ । आ । अ॒स्मै॒ । री॒य॒न्ते॒ । नि॒व॒नाऽइ॑व । सिन्ध॑वः ।
अ॒स्मै॒ । अह्ने॑ । भ॒व॒ति॒ । तत् । प॒ति॒ऽत्व॒नम् ॥ ९ ॥

हे अश्विनौ युवयोः प्रसादादियं घोषा योषा स्त्रीगुणोपेता सुभगाजनिष्ट जाता अस्याः समीपं कनीनकः कन्याकामः पतिः पतयत् पततु अस्मै कनीनकाय युवयोर्दंसना अनुवृष्टिलक्षणानि कर्माणि लक्षीकृत्य वीरुधः ओषधयोविचारुहन् विरोहन्तु प्रादुर्भवन्तु । अस्मै कनीनकाय निवनेव प्रवणेनेव सिंधवउदकानि आरीयंते अभिगच्छंति तद्वत् तावीरुधोभिगच्छंतु । किंच अह्ने केनाप्यहंतव्यायास्मै कनीनकाय तत्संभोगसमर्थं पतित्वनं यौवनं भवति भवतु ॥९॥

अथ दशमी—

जी॒वंरु॑दन्ति॒विम॑यन्तेअध्व॒रेदी॒र्घामनु॒प्रसि॑तिंदीधियु॒र्नरः॑ ।
वा॒मंपि॒तृभ्यो॒यइ॒दंस॑मेरि॒रेमयः॒पति॑भ्यो॒जन॑यःपरि॒ष्वजे॑ ॥ १० ॥ ११ ॥

जीवम् । रुदन्ति । वि । मयन्ते । अध्वरे । दीर्घाम् । अनु । प्रऽसितिम् ।
दीधियुः । नरः । वामम् । पितृऽभ्यः । ये । इदम् । सम्ऽएरिरे ।
मयः । पतिऽभ्यः । जनयः । परिऽस्वजे ॥ १० ॥ १९ ॥

हे अश्विनौ युवयोरनुग्रहात् ये नरः पतयोजायानां जीवं जीवनमुद्दिश्य रुदंति रोदनेनापि जायानां जीवनमेव आशासतइत्यर्थः । ताजायाअध्वरे यज्ञे विमयंते निवेशयंति च । किंच तासु दीर्घां महतीं प्रसितिं भुजयोः प्रबंधनमनुदीधियुः अनुदधति इदं वामं वननीयमपत्यं पितृभ्यः समेरिरे संप्रेरयंति तेभ्यः पतिभ्योजनयोजायाः परिष्वजे परिष्वंगार्थं मयः सुखं कुर्वंतीतिशेषः ॥ १० ॥

॥ इति सप्तमस्याष्टमे एकोनविंशोवर्गः ॥ १९ ॥

अथैकादशी—

नतस्यंविद्मतदुषुप्रवोचतयुवाहयद्युवत्याःक्षेतियोनिषु ।
प्रियोस्रियस्यवृषभस्यरेतिनोगृहंगमेमाश्विनातदुश्मसि ॥ ११ ॥

न । तस्य । विद्म । तत् । ऊँ इति । सु । प्र । वोचत । युवा । ह ।
यत् । युवत्याः । क्षेति । योनिषु । प्रियऽउस्त्रियस्य । वृषभस्य ।
रेतिनः । गृहम् । गमेम । अश्विना । तत् । उश्मसि ॥ ११ ॥

हे अश्विनाश्विनौ तस्य तत् सुखं वयं न विद्म न जानीम तत्सुखं यूयं सु सुष्ठु प्रवोचत । बहुवचनं पूजार्थं युवा ह तरुणः खलु मत्पतिः युवत्या यौवनान्वितायाममयोनिषु गृहेषु यत्र क्षेति निवसतीति । किंच प्रियोस्त्रियस्य प्रिययुवतेर्वृषभस्य सेक्तुः रेतिनोरेतस्विनोमत्पतेर्गृहं गमेम गच्छेम वयंतद्गृहमुश्मसि कामयामहे ॥ ११ ॥

अथ द्वादशी—

आवांमगन्त्सुमतिर्वाजिनीवसून्यश्विनाहृत्सुकामाअयंसत ।
अभूतंगोपामिथुनाशुभस्पतीप्रियाअर्यम्णोदुर्याँअशीमहि ॥ १२ ॥

आ। वाम्। अगन्। सुऽमतिः। वाजिनीवसू इति वाजिनीऽवसू।
नि। अश्विना। हृत्ऽसु। कामाः। अयंसत। अभूतम्। गोपा।
मिथुना। शुभः। पती इति। प्रियाः। अर्यम्णः। दुर्यान्। अशीमहि ॥१२॥

हे वाजिनीवसू अन्नधनौ शुभस्पती उदकस्य स्वामिनौ हे अश्विनाश्विनौ मिथुना मिथुनौ परस्परसहितौ वां युवां सुमतिरागन् आगच्छतु हृत्स्वस्मदीयेषु हृदयेषु कामाः अभिलाषाः न्ययंसत नियम्यंतां । किंच युवां गोपामम गोपायितारावभूतं भवतं । अपिच प्रियाः सत्योवयं अर्यम्णः पत्युः दुर्यान् गृहान् अशीमहि प्राप्नुयाम ॥ १२ ॥

अथ त्रयोदशी--

तामन्दसानामनुषोदुरोणआधत्तंरयिंसहवीरंवचस्यवे।
कृतंतीर्थंसुप्रपाणंशुभस्पतीस्थाणुंपथेष्ठामपदुर्मतिंहतम् ॥ १३ ॥

ता। मन्दसाना। मनुषः। दुरोणे। आ। धत्तम्। रयिम्। सहऽवीरम्।
वचस्यवे। कृतम्। तीर्थम्। सुऽप्रपानम्। शुभः। पती इति।
स्थाणुम्। पथेऽस्थाम्। अप। दुःऽमतिम्। हतम् ॥ १३ ॥

हे अश्विनौ मंदसाना मंदसानौ ता तौ युवां मनुषोमनुष्यस्य मत्पतेर्दुरोणे गृहे वचस्यवे युष्मवस्तुतिकामायै मह्यं सहवीरं पुत्रादिसहितं रयिं धनं आधत्तं स्थापयतं । किंच हे अश्विनौ शुभस्पती उदकस्य स्वामिनौ युवां पतिगृहं गच्छंत्याः मम तीर्थं पानाय सुप्रपाणं कृतं कुरुतं । किंच युवां पथेष्ठां मार्गस्थं स्थाणुं वृक्षं दुर्मतिं दुर्बुद्धिं परिपंथिनंचापहतं अपगमयतं ॥१३॥

अथ चतुर्दशी--

कंस्विदद्यकतमास्वश्विनाविक्षुदस्रामादयेतेशुभस्पती।
कईंनियेमेकतमस्यजग्मतुर्विप्रस्यवायजमानस्यवागृहम्॥ १४॥२०॥

क्व। स्वित्। अद्य। कतमासु। अश्विना। विक्षु। दस्रा। मादयेते
इति। शुभः। पती इति। कः। ईम्। नि। येमे। कतमस्य।
जग्मतुः। विप्रस्य। वा। यजमानस्य। वा। गृहम् ॥ १४ ॥ २० ॥

हे अश्विनाश्विनौ दस्रा दर्शनीयौ शुभस्पती उदकस्य पती स्वामिनौ भवंतौ क्वस्वित् क्वस्थितौ जनपदे अद्यास्मिन्नहनि कतमासु कासु विक्षु प्रजासु मादयेते आत्मानं तर्पयतः। किंच कोयजमानईमेनौ युवां नियेमे नियच्छति । किंच भवंतौ कलमस्य विप्रस्य मेधाविनः स्तोतुर्वा यजमानस्य वा गृहं जग्मतुः गतवंतौ ॥ १४ ॥

॥ इति सप्तमस्याष्टमे विंशोवर्गः ॥ २० ॥

समानमितितृचं द्वादशं सूक्तं घोषायाः पुत्रस्य सुहस्त्यस्यार्षं जागतमाश्विनं अनुक्रांतंच—समानंतृचंसुहस्त्योघौषेयइति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः ।

तत्र प्रथमा—

समानमुत्यंपुरुहूतमुक्थ्यं१रथंत्रिचक्रंसवनागनिग्मतम् ।
परिज्मानंविदथ्यंसुवृक्तिभिर्वयंव्युष्टाउषसोहवामहे ॥ १ ॥

समानम् । ऊँ इति । त्यम् । पुरुऽहूतम् । उक्थ्यम् । रथम् ।
त्रिऽचक्रम् । सवना । गनिग्मतम् । परिऽज्मानम् । विदथ्यम् ।
सुवृक्तिऽभिः । वयम् । विऽउष्टाः । उषसः । हवामहे ॥ १ ॥

हे अश्विनौ युवयोः समानमु साधारणमेव त्यं तं पुरुहूतं बहुभिराहुतं उक्थ्यं प्रशस्यं त्रिचक्रं सवना सवनानि यज्ञान् गनिग्मतं प्रतिगच्छंतं परिज्मानं परितोगंतारं विदथ्यं यज्ञहितं रथं उषसोव्युष्टौ सुवृक्तिभिः सुष्ठु दोषवर्जिताभिः स्तुतिभिः वयं हवामहे आह्वयामः ॥ १ ॥

अथ द्वितीया—

प्रातर्युजंनासत्याधितिष्ठथःप्रातर्यावाणंमधुवाहनंरथम् ।
विशोयेनगच्छथोयज्वरीर्नराकीरेश्चिद्यज्ञंहोतृमन्तमश्विना ॥ २ ॥

प्रातःऽयुजम् । नासत्या । अधि । तिष्ठथः । प्रातःऽयावानम् ।
मधुऽवाहनम् । रथम् । विशः । येन । गच्छथः । यज्वरीः । नरा ।
कीरेः । चित् । यज्ञम् । होतृऽमन्तम् । अश्विना ॥ २ ॥

हेनासत्या नासत्यभूतौ सत्यस्य प्रणेतारौ वा नरा नेतारावश्विनौ युवां प्रातर्युजं प्रातःकाले अश्वैर्युज्यमानं प्रातर्यावाणं प्रातर्गंतारं मधुवाहनं मधुनोमृतस्य वाहकं तं रथं अधितिष्ठथः आरोहथइत्यर्थः । यज्वरीर्यजनशीलाः विशः प्रजाः येन रथेन गच्छथः येन च कीरेश्चित् स्तोतुरपि होतृमंतं ऋत्विग्युक्तं यज्ञं गच्छथः ॥ २ ॥

अथ तृतीया—

**अ॒ध्व॒र्युं वा॒ मधु॑पाणिं सु॒हस्त्य॑म॒ग्निधं॑ वा धृ॒तद॑क्षं॒ दमू॑नसम् ।**
**विप्र॑स्य वा॒ यत्सव॑नानि॒ गच्छ॒थोत॒ आ या॑तं मधु॒पेय॑मश्विना ॥ ३ ॥ २१ ॥**

अ॒ध्व॒र्युम् । वा॒ । मधु॑ऽपाणिम् । सु॒ऽह॒स्त्य॑म् । अ॒ग्निध॑म् । वा॒ ।
धृ॒तऽद॑क्षम् । दमू॑नसम् । विप्र॑स्य । वा॒ । यत् । सव॑नानि । गच्छ॑थः ।
अतः॑ । आ । या॒तम् । म॒धु॒ऽपेय॑म् । अ॒श्वि॒ना॒ ॥ ३ ॥ २१ ॥

हे अश्विनौ युवां मधुपाणिं सोमपाणिमध्वर्युं वा सुहस्त्यं सुहस्त्यनामानमृषिं मां धृतदक्षं धृतबलं दमूनसं दानमनसं अग्निधं वा ऋत्विग्विशेषमायातं । तदेवदर्शयति—यत् यद्यपि विप्रस्यान्यस्य मेधाविनः सवनानि यज्ञान् गच्छथः तथाप्यतः तेभ्योयज्ञेभ्योमधुपेयमस्माकं सोमात्मकं पेयमायातमन्वागच्छतं ॥ ३ ॥

॥ इति सप्तमस्याष्टमे एकविंशोवर्गः ॥२१॥

अस्तेवेत्येकादशर्चं त्रयोदशं सूक्तं आंगिरस्य कृष्णाख्यस्यार्षं त्रैष्टुभमैंद्रं । अनुक्रांतंच—अस्तेवैकादश कृष्णइति । आभिप्लविकेषूक्थेषु स्तोमवृद्धौइदं सूक्तं ब्राह्मणाच्छंसिनआवापार्थं सूत्रितंच—यज्ञेदिवइतिसूक्ते अस्तेवसुप्रतरमिति ।

तत्र प्रथमा—

**अस्ते॑व॒ सु प्र॑त॒रं लाय॒मस्य॒न्भूष॑न्निव॒ प्र भ॑रा॒ स्तोम॑मस्मै ।**
**वा॒चा वि॑प्रास्तरत॒ वाच॑म॒र्यो नि रा॑मय जरितः॒ सोम॒ इन्द्र॑म् ॥ १ ॥**

अस्ताऽइव । सु । प्रऽतरम् । लायम् । अस्यन् । भूषन्ऽइव । प्र । भर । स्तोमम् । अस्मै । वाचा । विप्राः । तरत । वाचम् । अर्यः । नि । रमय । जरितरिति । सोमे । इन्द्रम् ॥ १ ॥

प्रतरं प्रवृद्धतरं लायं संश्लेषणं हृदयवेधिनं शरं सु सुष्ठु अस्यन् क्षिपन् अस्तेव यथा क्षेप्ता धानुष्कोभूषन्निव यथावालंकारमलंकुर्वन्नलंकर्ता तद्वत् स्तोममस्माइंद्राय प्रभर प्रापय । हे अंतरात्मन् त्वमितिशेषः । किंच हे विप्रामेधाविनोयूयं वाचा स्तुत्या अर्यः अरेः शत्रोर्वाचं तरत नितरां तरत निराकुरुतइत्यर्थः । हे जरितः स्तातस्त्वं मे सोमयागे इंद्रं निरमय क्रीडय ॥ १ ॥

अथ द्वितीया—

दोहेनगामुपशिक्षासखायंप्रबोधयजरितर्जारमिन्द्रम् ।
कोशंनपूर्णवसुनान्यृष्टमाच्यावयमघदेयायशूरम् ॥ २ ॥

दोहेन । गाम् । उप । शिक्ष । सखायम् । प्र । बोधय । जरितः । जारम् । इन्द्रम् । कोशम् । न । पूर्णम् । वसुना । निऽऋष्टम् । आ । च्यवय । मघऽदेयाय । शूरम् ॥ २ ॥

हे जरितस्त्वं दोहेन कामानां दोहनार्थं गां गोरूपं सखायं प्रियमिंद्रमुपशिक्ष वशं नय । किंच जारं भूतानां जरयितारमिंद्रं प्रबोधय स्तुतिभिः प्रबुद्धं कुरु । किंच पूर्णमुदकेन पूरितं कोशं न पात्रमिव वारिभिः वसुना हिरण्यादिना धनेन न्यृष्टं नीचैर्गतं शूरं वीरमिंद्रं मघदेयाय धनदानाय च्यवय अभिमुखं कुर्वित्यर्थः ॥ २ ॥

अथ तृतीया—

किमङ्गत्वांमघवन्भोजमाहुःशिशीहिमाशिशयंत्वाशृणोमि ।
अप्नस्वतीममधीरस्तुशक्रवसुविदंभगमिन्द्राभरानः ॥ ३ ॥

कि॒म् । अ॒ङ्ग । त्वा॒ । म॒घ॒ऽव॒न् । भो॒जम् । आ॒हुः । शि॒शी॒हि । मा॒ ।
शि॒श॒यम् । त्वा॒ । शृ॒णो॒मि॒ । अप्न॑स्वती । मम॑ । धीः । अ॒स्तु॒ ।
श॒क्र॒ । व॒सु॒ऽविद॑म् । भग॑म् । इ॒न्द्र॒ । आ । भ॒र॒ । नः॒ ॥ ३ ॥

अंगेति सामान्याह्वानं अंग हे मघवन् धनवन् शक्रेंद्र त्वा त्वां किं किमर्थं भोजं स्तोतॄणां भोजकमभीष्टदमाहुः सर्वे विद्वांसः यदि नददासीत्यध्याहारः तस्माद्ददास्येव स्तोतृभ्योधनानीत्यर्थः तथासति मा मां स्तोतारं शिशीहि धनदानेन तीक्ष्णीकुरु। त्वा त्वां शिशयं स्तोतॄणां संस्कर्तारं शृणोमि । किंच मम धीर्बुद्धिः अप्नस्वती कर्मवत्यस्तुभवतु । किंच नोस्माकं वसुविदं धनस्य लंभकं भगं भाग्यमाभर आहर ॥ ३ ॥

अथ चतुर्थी—

त्वांजना॑ममस॒त्येष्विं॑न्द्रसन्तस्था॒नाविह्व॑यन्तेसमी॒के ।
अत्रा॒युजं॑कृणुते॒योह॒विष्मा॒न्नासु॑न्वतास॒ख्यंव॑ष्टि॒शूर॑ः ॥ ४ ॥

त्वाम् । जना॑ः । म॒म॒ऽस॒त्येषु॑ । इ॒न्द्र॒ । स॒म्ऽत॒स्था॒नाः । वि ।
ह्व॒य॒न्ते॒ । स॒म्ऽई॒के । अत्र॑ । यु॒जम् । कृ॒णु॒ते॒ । यः । ह॒विष्मा॑न् ।
न । असु॑न्वता । स॒ख्यम् । व॒ष्टि॒ । शूर॑ः ॥ ४ ॥

हे इंद्र त्वां जनाममसत्येषु संग्रामेषु विह्वयंते विविधमाह्वयंति सहायार्थं । एतदेव दर्शयति—समीके युद्धे संतस्थानाः सम्यक् तिष्ठंतोजनाविह्वयंतइति । अत्रास्मिन्नाह्वाने सशूरोवीरइंद्रस्तं युजं सखायं कृणुते कुरुते योहविष्मान् भवति असुन्वता सोमाभिषवमकुर्वता पुरुषेण सह सख्यं सखित्वं न वष्टि न कामयते ॥ ४ ॥

अथ पंचमी—

धनं॒नस्प॒न्द्रंब॑हु॒लंयोअ॑स्मैती॒व्रान्त्सोमाँ॑आसु॒नोति॒प्रय॑स्वान् ।
तस्मै॒शत्रू॒न्त्सुतु॒कान्प्रा॒तरह्नो॒निस्व॒ष्ट्रान्यु॒वति॒हंति॑वृ॒त्रम् ॥५॥२२॥

धनंम् । न । स्पन्द्रम् । बहुलम् । यः । अस्मै । तीव्रान् । सोमान् ।
आऽसुनोति । प्रयस्वान् । तस्मै । शत्रून् । सुऽतुकान् । प्रातः ।
अह्नः । नि । सुऽअष्ट्रान् । युवति । हन्ति । वृत्रम् ॥ ५ ॥ २२ ॥

प्रयस्वान् हविष्मान् योयजमानः स्पंद्रं स्पंदनशीलं गवाश्वादिकं बहुलं प्रभूतं धनं न यथा धनं दरिद्राय पात्रभूताय दातुं संस्कारोति तद्वदस्माइंद्राय तीव्रान् तीव्ररसान् सोमानासुनोति अभिषुणोति अभिषवाख्येन संस्कारेण संस्करोति तस्मै यजमानाय प्रातरह्नः पूर्वाह्णः सुतुकान् सुप्रेरणान् शोभनपुत्रान्वा स्वष्ट्रान् ज्ञानायुधान् शत्रून् नियुवति सइंद्रः पृथक्करोति । किंच वृत्रं तदीयमुपद्रवं हंति हिनस्ति ॥ ५ ॥

इति सप्तमस्याष्टमे द्वाविंशोवर्गः ॥ २२ ॥

अथ षष्ठी—

यस्मिन्वयंदधिमाशंसमिन्द्रेयःशिश्रायमघवाकाममस्मे ।
आराच्चित्सन्भयतामस्यशत्रुर्न्यस्मैद्युम्नाजन्यानमन्ताम् ॥ ६ ॥

यस्मिन् । वयम् । दधिम । शंसम् । इन्द्रे । यः । शिश्राय ।
मघऽवा । कामम् । अस्मे इति । आरात् । चित् । सन् । भयताम् ।
अस्य । शत्रुः । नि । अस्मै । द्युम्ना । जन्या । नमन्ताम् ॥ ६ ॥

यस्मिन्निंद्रे वयं घोषेयाः सुहस्त्याः शंसं स्तुतिं दधीम विदधीमः । यश्च मघवा धनवानिंद्रोस्मेस्मासु काममभिलाषं शिश्राय श्रयति अस्येंद्रस्य शत्रुरारात् दूरएव संश्रित् सन्नपि भयतां बिभेतु । किंचास्माइंद्राय जन्या जन्यानि शत्रुजनपदभवानि द्युम्ना द्युम्नानि अन्नानि निनमंतां प्रह्वीभवंतु भोजनीयानि भवंत्वित्यर्थः ॥ ६ ॥

अथ सप्तमी—

आ॒रात् । शत्रु॑म् । अप॑ । बा॒ध॒स्व॒ । दू॒रम् । उ॒ग्रः । यः । शम्बः॑ ।
पु॒रु॒ऽहू॒त॒ । तेन॑ । अ॒स्मे इति॑ । धे॒हि॒ । यव॑ऽमत् । गोऽम॑त् ।
इ॒न्द्र॒ । कृ॒धि । धिय॑म् । ज॒रि॒त्रे । वाज॑ऽरत्नाम् ॥ ७ ॥

हे पुरुहूत बहुभिराहूतेंद्र तव यउग्रउद्गूर्णः शंबोवज्रः तथाच यास्कः—शंबइति वज्रनाम शमयतेर्वा शातयतेर्वा इति । तेन वज्रेण शत्रुमस्मदरिं आरात् अस्मत्समीपात् दूरमपबाधस्व त्वमपगमय । किंच अस्मे अस्मासु यवमत् यवयुक्तं गोमद्गोयुक्तं च धनं धेहि निधेहि । किंच जरित्रे स्तोत्रे मह्यं वाजरत्नां रमणीयान्नां धियं कर्म कृधि कुरु ॥ ७ ॥

अथाष्टमी—

प्र॒यम॒न्तर्वृ॑षस॒वासो॒अग्म॑न्ती॒व्राःसोमा॑बहु॒लान्ता॑स॒इन्द्र॑म् ।
नाह॑दा॒मान॑म्म॒घवा॒नियं॑स॒न्निसु॒न्व॒तेव॑ह॒ति॒भूरि॑वा॒मम् ॥ ८ ॥

प्र । यम् । अ॒न्तः । वृ॒ष॒ऽस॒वासः॑ । अग्म॑न् । ती॒व्राः । सोमाः॑ ।
ब॒हु॒ल॒ऽअ॑न्तासः । इन्द्र॑म् । न । अह॑ । दा॒मान॑म् । म॒घ॒ऽवा॑ । नि ।
यं॑स॒त् । नि । सु॒न्व॒ते । व॒ह॒ति॒ । भूरि॑ । वा॒मम् ॥ ८ ॥

अंतर्जठरे यमिंद्रं वृषसवासः वृषसवाः अग्नौ सोमस्य वर्षितृभिरध्वर्युभिरभिषुतास्तीव्रास्तीव्ररसाबहुलांतासोबहुलमन्नादिकमंते येभ्यः ते बहुलांताः सोमाः प्राग्मन् प्रगच्छंति । समघवा धनवानिंद्रः दामानं दातारं यजमानं नाह नैव नियंसत् नियच्छति किंतु सुन्वते सोमाभिषवं कुर्वते यजमानाय भूरि अधिकं वामं वननीयं धनं निवहति नितरां प्रापयति ॥ ८ ॥

अथ नवमी—

उ॒तप्र॒हाम॑ति॒दीव्या॒जयाति॒कृ॒तंन॒श्व॒घ्नीवि॑चि॒नोति॑का॒ले ।
योदे॒वका॑मो॒नधना॑रुण॒द्धिसमित्तंरा॒यासृ॑जति॒स्वधावा॑न् ॥ ९ ॥

उत । प्रऽहाम् । अतिऽदीव्यं । जयाति । कृतम् । यत् । श्वऽघ्नी ।
विऽचिनोति । काले । यः । देवऽकामः । न । धना । रुणद्धि ।
सम् । इत् । तम् । राया । सृजति । स्वधाऽवान् ॥ ९ ॥

उतापिचेंद्रः प्रहां प्रहंतारमतिदीव्यः अतिरभिपूजितार्थे वर्तते दीव्यतिर्गत्यर्थः अभिपूजितं गमयित्वा जयाति जयति । किंच यत् यथा अत्र प्रकारवचनप्रत्ययस्य लोपोद्रष्टव्यः । श्वघ्नीकितवः कृतं कृतसमयं प्रति कितवं कितवानां मध्ये विचिनोति परीक्ष्यगृह्णाति तद्वदिंद्रः काले युद्धकाले बलवंतं शत्रुं परीक्ष्य वधार्थं गृह्णातीत्यर्थः। किंच योमनुष्योदेवकामोदेवान् यष्टुं स्तोतुं वाभिलाषवान् भवति तस्यार्थाय धना धनानि न रुणद्धि नावृणोति नाच्छादयतीत्यर्थः । किंतु प्रकाशयति स्वधावान् बलवानिंद्रः तं देवकामं राया धनेन संसृजतीत् संयोजयत्येव॥९॥

अथ दशमी—

**गोभिष्टरेमामतिंदुरेवांयवेनक्षुधंपुरुहूतविश्वाम् ।**
**वयंराजभिःप्रथमाधनान्यस्माकेनवृजनेनाजयेम ॥ १० ॥**

गोभिः । तरेम । अमतिम् । दुःऽएवाम् । यवेन । क्षुधम् ।
पुरुऽहूत । विश्वाम् । वयम् । राजऽभिः । प्रथमाः ।
धनानि । अस्माकेन । वृजनेन । जयेम ॥ १० ॥

हे पुरुहूत बहुभिराहूतेंद्र तव प्रसादात् दुरेवां दुष्टागमनां दारिद्र्यादागताममतिं दुर्बुद्धिं वयं घोषेयाः सुहस्त्यागोभिः पशुभिस्तरेम निस्तरेम । किंच यवेन विश्वां व्याप्तां क्षुधं तरेम । किंच प्रथमा मुख्यानि धनानि राजभिर्धनानामीश्वरैर्लभेमहीतिशेषः। यद्वा प्रथमावयमिति संबंधः किंचास्माकेन अस्मदीयेन वृजनेन बलेन जयेम शत्रूनितिशेषः ॥ १० ॥

अथैकादशी—

**बृहस्पतिर्नःपरिपातुपश्चादुतोत्तरस्मादधरादघायोः ।**
**इन्द्रःपुरस्तादुतमध्यतोनःसखासखिभ्योवरिवःकृणोतु ॥ ११ ॥ २३ ॥**

बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् ।
अधरात् । अघऽयोः । इन्द्रः । पुरस्तात् । उत । मध्यतः । नः ।
सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥ ११ ॥ २३ ॥

पश्चात्पश्चिमतः उतापिच उत्तरस्मात् उत्तरतः अधरात् दक्षिणतश्च योघायुरागच्छति तस्मादघायोः पापकाच्छत्रोर्नोस्मान् बृहस्पतिः परिपातु । उतापिचेंद्रः पुरस्तात् पूर्वतोमध्यतश्च योघायुरागच्छति तस्मादघायोर्नोस्मान् परिपातु । किंच सखासखिभूतेंद्रः सखिभ्यः प्रियेभ्यो स्मभ्यं वरिवोधनं कृणोतु करोतु ॥ ११ ॥

॥ इति सप्तमस्याष्टमे त्रयोविंशोवर्गः ॥ २३ ॥

॥ इति दशमे मंडले तृतीयोनुवाकः ॥ ३ ॥

चतुर्थेनुवाके अष्टादश सूक्तानि तत्राच्छामइत्येकादशर्चं प्रथमं सूक्तं दशम्येकादश्यौ त्रिष्टुभौ शिष्टाजगत्यः पूर्ववदृषिदेवते । तथाचानुक्रांतं—अच्छामे द्वित्रिष्टुबंतंत्विति । उक्थ्ये ब्राह्मणाच्छंसिनस्तृतीयसवनेएतत्सूक्तं । सूत्रितंच—अच्छामइंद्रबृहस्पतेयुवमिंद्रश्चवस्वइति याज्ये इति । पृष्ठ्येहन्यप्येतत्सूक्तं । सूत्रितंच—अच्छामइंद्रमिति नित्यमैकाहिकमिति ।

तत्र प्रथमा—

अच्छामइन्द्रंमतयःस्वर्विदःसध्रीचीर्विश्वाउशतीरनूषत ।
परिष्वजन्तेजनयोयथापतिंमर्यंनशुन्ध्युंमघवानमूतये ॥ १ ॥

अच्छ । मे । इन्द्रम् । मतयः । स्वःऽविदः । सध्रीचीः । विश्वाः ।
उशतीः । अनूषत । परि । स्वजन्ते । जनयः । यथा । पतिम् ।
मर्यम् । न । शुन्ध्युम् । मघऽवानम् । ऊतये ॥ १ ॥

भर्तारं मर्यं न यथा च मनुष्यं शुंध्युं शुद्धं दोषरहितं मघवानं धनवंतमूतयेरक्षणार्थं परिष्वजंते आलिंगंति तद्वदिंद्रं मे स्तुतयः परिष्वजंते ॥ १ ॥

अथ द्वितीया—

नघात्वद्रिगपवेतिमेमनस्त्वेइत्कामंपुरुहूतशिश्रय ।
राजेवदस्मनिषदोधिबर्हिष्यस्मिन्त्सुसोमेवपानमस्तुते ॥ २ ॥

न । घ । त्वद्रिक् । अप । वेति । मे । मनः । त्वे इति । इत् । कामम् ।
पुरुऽहूत । शिश्रय । राजाऽइव । दस्म । नि । सदः । अधि ।
बर्हिषि । अस्मिन् । सु । सोमे । अवऽपानम् । अस्तु । ते ॥ २ ॥

हे पुरुहूत बहुभिराहूत दस्म दर्शनीयेंद्र त्वद्रिक् त्वदभिमुखं मे मदीयं मनोन घ नखल्वपवेति त्वत्तोपगच्छति ।किंच त्वे इत् त्वय्येव काममभिलाषं शिश्रय स्थापयामि। किंच राजेव ईश्वर-इव बर्हिष्यधि निषदः निषीदः । किंच ते तवास्मिन् सोमे सुशोभनं अवपानमस्तु भवतु ॥ २ ॥

अथ तृतीया—

विषूवृदिन्द्रोअमतेरुतक्षुधःसइद्रायोमघवावस्वईशते ।
तस्येदिमेप्रवणेसप्तसिन्धवोवयोवर्धन्तिवृषभस्यशुष्मिणः ॥ ३ ॥

विषुऽवृत् । इन्द्रः । अमतेः । उत । क्षुधः । सः । इत् । रायः ।
मघऽवा । वस्वः । ईशते । तस्य । इत् । इमे । प्रवणे । सप्त ।
सिन्धवः । वयः । वर्धन्ति । वृषभस्य । शुष्मिणः ॥ ३ ॥

इंद्रः अमतेरस्माकं दुर्बुद्धेः प्रजापहारिण्याः पिपासायावा विषूवृत् विष्वग्वर्तकोभवतु । उतापिच क्षुधोबुभुक्षायाः विषूवृद्भवतु । किंच सइत् सएव मघवा धनवानिंद्रोवस्वोवासयितुः रायोधनस्य ईशते ईष्टे । किंच वृषभस्य वर्षितुः शुष्मिणः बलवतः तस्येत् इंद्रस्यैव इमे प्रसिद्धाः सप्त सप्तसंख्याकाः सिंधवोनद्यः प्रवणे देशे वयोन्नं वर्धन्ति वर्धयंति ॥ ३ ॥

अथ चतुर्थी—

वयो न वृक्षं सुपलाशमासदन्त्सोमास इन्द्रं मन्दिनश्चमूषदः ।
प्रैषामनीकं शवसा दविद्युतद्विदत्स्व१र्मनवे ज्योतिरार्यम् ॥ ४ ॥

वयः । न । वृक्षम् । सुऽपलाशम् । आ । असदन् । सोमासः । इन्द्रम् ।
मन्दिनः । चमूऽसदः । प्र । एषाम् । अनीकम् । शवसा ।
दविद्युतत् । विदत् । स्वः । मनवे । ज्योतिः । आर्यम् ॥ ४ ॥

वयोन यथा पक्षिणः सुपलाशं शोभनपर्णं वृक्षमासदन् आसीदंति तद्वन्मंदिनोमदकराश्चमूषदश्चमसपात्रेषु स्थातारः सोमासः सोमाः इंद्रमासदन् आसीदंति अधितिष्ठंतीत्यर्थः । एषामिंद्रमधितिष्ठतां सोमानां शवसा वेगेन युक्तमनीकमग्रं प्रदविद्युतत् प्रद्योतते । किंचायमिंद्रः स्वः स्वात्मना आर्यं प्रेर्यं ज्योतिरादित्याख्यं तेजोमनवे मनुष्येभ्योविदत् प्रयच्छतु ॥ ४ ॥

अथ पञ्चमी—

कृतं न श्वघ्नी वि चिनोति देवने संवर्गं यन्मघवा सूर्यं जयत् ।
न तत्ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन्नोत नूतनः ॥ ५ ॥ २४ ॥

कृतम् । न । श्वघ्नी । वि । चिनोति । देवने । सम्ऽवर्गम् । यत् ।
मघऽवा । सूर्यम् । जयत् । न । तत् । ते । अन्यः । अनु । वीर्यम् ।
शकत् । न । पुराणः । मघऽवन् । न । उत । नूतनः ॥ ५ ॥ २४ ॥

श्वघ्नी परस्वानां हंता कितवोदेवने द्यूते कृतं न यथा हतं विचिनोति तद्वदिंद्रः सूर्यं मृगयते । कदेत्यतआह—यद्यदा मघवा धनवानिंद्रः संवर्गं सम्यक् वृष्टेः वर्जयितारं सूर्यमादित्यं जयत् तदीयरसापहरणद्वारेण जयति । अथ प्रत्यक्षस्तुतिः हे मघवन्धनवन्निंद्र ते तव तत् सूर्यंजयलक्षणं वीर्यं वीरत्वमन्यस्त्वत्तोन्योभविष्यत्कालीनः पुमान् अनु अनुकर्तुं न शकत् न

शक्नोति पुराणः पुरातनोपि त्वद्वीर्यं अनुकर्तुं न शकत् न शक्नोति। उतापिच नूतनोवर्तमान-कालीनोपि त्वदीयं वीर्यंअनुकर्तुं न शक्नोति ॥ ५ ॥

॥ इति सप्तमस्याष्टमे चतुर्विंशोवर्गः ॥ २४ ॥

अथ षष्ठी—

विशंविशंमघवापर्यशायतजनानांधेनाअवचाकशद्वृषा।
यस्याहशक्रःसवनेषुरण्यतिसतीव्रैःसोमैःसहतेपृतन्यतः ॥ ६ ॥

विशम्ऽविशम्। मघऽवा। परि। अशायत। जनानाम्। धेनाः।
अवऽचाकशत्। वृषा। यस्य। अह। शक्रः। सवनेषु।
रण्यति। सः। तीव्रैः। सोमैः। सहते। पृतन्यतः ॥ ६ ॥

वृषा कामानां वर्षिता मघवा धनवानिंद्रोविशंविशंसर्वान्मनुष्यान् पर्यशायत परिशेते। किञ्च जनानां स्तोतृजनानां धेनाः स्तुतीः अवचाकशत् अभिपश्यति। किंच शक्रइंद्रोयस्याह यस्यैव यजमानस्य सवनेषु रण्यति रमते सयजमानस्तीव्रैः तीव्राकारैः प्रदीयमानैः सोमैः पृतन्यतः संग्राममिच्छतः शत्रून् सहतेभिभवति ॥ ६ ॥

अथ सप्तमी—

आपोनसिन्धुमभियत्समक्षरन्त्सोमासइन्द्रंकुल्याइवह्रदम्।
वर्धन्तिविप्रामहोअस्यसादनेयवंनवृष्टिर्दिव्येनदानुना ॥ ७ ॥

आपः। न। सिन्धुम्। अभि। यत्। सम्ऽअक्षरन्। सोमासः।
इन्द्रम्। कुल्याःऽइव। ह्रदम्। वर्धन्ति। विप्राः। महः। अस्य।
सदने। यवम्। न। वृष्टिः। दिव्येन। दानुना ॥ ७ ॥

यद्यदा सोमासः सोमाः इंद्रमभिसमक्षरन् अभिक्षरंति अभिगच्छंतीत्यर्थः । तत्रदृष्टांतौ द-र्शयति--आपोन यथा आपः सिंधुं समुद्रमभिसमक्षरंति कुल्याइव यथा च कुल्याः ह्रदमभि-समक्षरंति तद्वदित्यर्थः । तदानीमस्येंद्रस्य महोमहत्त्वं सदने यज्ञे विप्रामेधाविनोवर्धन्ति वर्धयन्ति तत्रदृष्टांतमाह--यवंन यथा यवं यवसस्यं वृष्टिः कर्तरि क्तत् वर्षितापर्जन्योदिव्येन दिविभवेन दानुना दानेन वर्षणेन वर्धयति तद्वदित्यर्थः ॥ ७ ॥

अथाष्टमी--

वृषानक्रुद्धःपतयद्रजस्स्वायोअर्यपत्नीरकृणोदिमाअपः।
ससुन्वतेमघवाजीरदानवेविन्दज्ज्योतिर्मनवेहविष्मते ॥ ८ ॥

वृषा । न । क्रुद्धः । पतयत् । रजःऽसु । आ । यः । अर्यऽपत्नीः ।
अकृणोत् । इमाः । अपः । सः । सुन्वते । मघऽवा । जीरऽदानवे ।
अविन्दत् । ज्योतिः । मनवे । हविष्मते ॥ ८ ॥

रजःसु लोकेषु वृषा न यथा वृषभः क्रुद्धः सन् प्रतिवृषभवधाय पतयत् गच्छति तद्वत् यइंद्रः क्रुद्धः सन् मेघवधाय पतति हत्वा च मेघं अर्यपत्नीः सर्वस्य जगतः स्वामिनइंद्रस्य पा-लयितव्याः इमाः प्रसिद्धाः अपः वृष्ट्युदकानि आकृणोत् आकृणोति । अस्मदभिमुखं करोति समघवा धनवानिंद्रः सुन्वते सोमाभिषवं कुर्वते जीरदानवे क्षिप्रदानाय हविष्मते मनवे मनुष्या-य यजमानायेत्यर्थः । ज्योतिस्तेजोऽविंदत् प्रायच्छत् ॥ ८ ॥

अथ नवमी--

उज्जायतांपरशुर्ज्योतिषासहभूयाऋतस्यसुदुघापुराणवत् ।
विरोचतामरुषोभानुनाशुचिःस्वर्णशुक्रंशुशुचीतसत्पतिः ॥ ९ ॥

उत् । जायताम् । परशुः । ज्योतिषा । सह । भूयाः । ऋतस्य ।
सुऽदुघा । पुराणऽवत् । वि । रोचताम् । अरुषः । भानुना ।
शुचिः । स्वः । न । शुक्रम् । शुशुचीत । सत्ऽपतिः ॥ ९ ॥

परशुरिंद्रस्य वज्रोज्योतिषा तेजसा सहउज्जायतां अस्मच्छत्रुवधे मेघवधेच व्याप्रियतामित्यर्थः । किंच ऋतस्य सत्यस्य सुदुघा माध्यमिका वाक् पुराणवत् प्रत्नवत् काले भूयाः भूयात् पुरुषव्यत्ययः । किंचेंद्रः अरुषः आरोचमानोभानुना दीप्त्याशुचिर्ज्वलन् विरोचतां प्रकाशतां । किंच सत्पतिः सतां पतिरिंद्रः स्वर्न आदित्यइव शुक्रं ज्वलन् शुशुचीत अत्यंतं दीप्यतां ॥ ९ ॥

अथ दशमी—

गोभिष्टरेमामतिंदुरेवांयवेनक्षुधंपुरुहूतविश्वाम् ।
वयंराजभिःप्रथमाधनान्यस्माकेनवृजनेनाजयेम ॥ १० ॥

गोभिः । तरेम । अमतिम् । दुःऽएवाम् । यवेन । क्षुधम् ।
पुरुऽहूत । विश्वाम् । वयम् । राजऽभिः । प्रथमाः ।
धनानि । अस्माकेन । वृजनेन । जयेम ॥ १० ॥

अथैकादशी—

बृहस्पतिर्नःपरिपातुपश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रःपुरस्तादुतमध्यतोनःसखासखिभ्योवरिवःकृणोतु॥ ११॥२५॥

बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् ।
अधरात् । अघऽयोः । इन्द्रः । पुरस्तात् । उत । मध्यतः । नः ।
सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥ ११ ॥ २५ ॥

दशमी एकादशी च व्याख्याता ॥ १० ॥ ११ ॥

॥ इति सप्तमस्याष्टमे पंचविंशोवर्गः ॥ २५ ॥

आयात्वित्येकादशर्चं द्वितीयं सूक्तं आंगिरसस्य कृष्णस्यार्षं ऐन्द्रं आदितस्तिस्रस्त्रि-ष्टुभः ततः षट् जगत्यः ततोद्वे त्रिष्टुभौ । तथाचानुक्रांतं—आयातु त्रिस्त्रिष्टुबादीति । आभिप्लु-विकेषूक्थेषु ब्राह्मणाच्छंसिनः स्तोमवृद्धाविदमावापार्थं । सूत्रितंच—आयात्विंद्रःस्वपतिरिमां-धियमिति ब्राह्मणाच्छंसीति ।

तत्र प्रथमा—

आयात्विन्द्रःस्वपतिर्मदाययोधर्मणातूतुजानस्तुविष्मान् ।
प्रत्वक्षाणोअतिविश्वासहांस्यपारेणमहतावृष्ण्येन ॥ १ ॥

आ । यातु । इन्द्रः । स्वऽपतिः । मदाय । यः । धर्मणा । तूतुजानः ।
तुविष्मान् । प्रऽत्वक्षाणः । अति । विश्वा । सहांसि ।
अपारेण । महता । वृष्ण्येन ॥ १ ॥

यइंद्रस्तूतुजानः त्वरमाणः तुविष्मान् वृद्धिमान् विश्वा विश्वानि सहांसि शत्रुबलानि अपारेण महता अधिकेन वृष्ण्येन बलेन प्रत्वक्षाणः प्रकर्षेण तनूकुर्वन् अतिगच्छतीति शेषः । स्वपतिर्धनपतिरिंद्रोमदाय मदार्थं धर्मणा धारकेण रथेनायात्वस्मद्यज्ञं प्रत्यागच्छतु ॥ १ ॥

अथ द्वितीया—

सुष्ठामारथःसुयमाहरीतेमिम्यक्षवज्रोनृपतेगभस्तौ ।
शीभंराजन्त्सुपथायाह्यर्वाङ्वर्धामतेपपुषोवृष्ण्यानि ॥ २ ॥

सुऽस्थामा । रथः । सुऽयमा । हरी इति । ते । मिम्यक्ष । वज्रः ।
नृऽपते । गभस्तौ । शीभम् । राजन् । सुऽपथा । आ । याहि ।
अर्वाङ् । वर्धाम । ते । पपुषः । वृष्ण्यानि ॥ २ ॥

हे नृपते नृणां पालकेंद्र ते तव रथः सुष्ठामा शोभनावस्थानः हरी अश्वावपि सुयमा सु-यमौ सुबद्धावित्यर्थः । किंच तव गभस्तौ बाहौ वज्रोमिम्यक्ष संहतोभवति। तथा सति हे राजन्

सर्वस्येश्वरेंद्र शीभं शीघ्रं सुपथा शोभनेन मार्गेण अर्वाङस्मदभिमुखं आयाह्यागच्छ आगत्य पपुषः सोमं पीतवतः ते तव वृष्ण्यानि बलानि वर्धाम वयं वर्धयामः ॥ २ ॥

अथ तृतीया—

एन्द्रवाहोनृपतिंवज्रबाहुमुग्रमुग्रासस्तविषासएनम् ।
प्रत्वक्षसंवृषभंसत्यशुष्ममेमस्मत्रासधमादोवहन्तु ॥ ३ ॥

आ । इन्द्रऽवाहः । नृऽपतिम् । वज्रऽबाहुम् । उग्रम् । उग्रासः ।
तविषासः । एनम् । प्रऽत्वक्षसम् । वृषभम् । सत्यऽशुष्मम् ।
आ । ईम् । अस्मऽत्रा । सधऽमादः । वहन्तु ॥ ३ ॥

नृपतिं नृणां पालकं वज्रबाहुं वज्रहस्तं उग्रमुद्गूर्णं प्रत्वक्षसं शत्रुबलानां प्रकर्षेण तनूकर्तारं वृषभं कामानां वर्षितारं सत्यशुष्मं अविसंवादिबलं एनमिंद्रं आईमिति पूरणौ उग्रासउद्गूणास्तविषासः प्रवृद्धाः सधमादः सह माद्यंतः इंद्रवाहः इंद्रस्य वोढारोस्मत्राअस्मास्वावहंतु ॥३॥

अथ चतुर्थी—

एवापतिंद्रोणसाचंसचेतसमूर्जस्कम्भंधरुणआवृषायसे ।
ओजःकृष्वसङ्गृभायत्वेअप्यसोयथाकेनिपानामिनोवृधे ॥ ४ ॥

एव । पतिम् । द्रोणऽसाचम् । सऽचेतसम् । ऊर्जः । स्कम्भम् ।
धरुणे । आ । वृषऽयसे । ओजः । कृष्व । सम् । गृभाय । त्वे इति ।
अपि । असः । यथा । केऽनिपानाम् । इनः । वृधे ॥ ४ ॥

हे इंद्र त्वं एव एवं पतिं पालकं द्रोणसाचं द्रोणकलशस्य सेवितारं सचेतसं प्रज्ञं ऊर्जस्कंभं बलस्य धारकं सोमं धरुणे धारके जठरे आवृषायसे आसिंचसे धारयसीत्यर्थः । किंच मह्यमोजोबलं कृष्व कुरुष्व । त्वे त्वयि अस्मानपि संगृभाय संगृहाणच । किंच केनिपानां मेधाविनामस्माकं । केनिपः उशिजइति मेधाविनामसु पाठात् । वृधे वर्धनाय यथा यथावत् सर्वथा इनः स्वामी असः भवसि ॥ ४ ॥

अथ पंचमी—

गम॑न्न॒स्मे वसू॒न्या हि शंसि॑षं स्वा॒शिषं॒ भर॒मा या॑हि सो॒मिनः॑ ।
त्वमी॑शिषे॒ सास्मिन्ना स॑त्सि ब॒र्हिष्य॑नाधृ॒ष्या तव॒ पात्रा॑णि॒ धर्म॑णा ॥ ५ ॥ २६ ॥

गम॑न् । अ॒स्मे इति॑ । वसू॑नि । आ । हि । शंसि॑षम् । सु॒ऽआ॒शिष॑म् । भर॑म् । आ । या॒हि॒ । सो॒मिनः॑ । त्वम् । ई॒शि॒षे॒ । सः । अ॒स्मिन् । आ । स॒त्सि॒ । ब॒र्हिषि॑ । अ॒ना॒धृ॒ष्या । तव॑ । पात्रा॑णि । धर्म॑णा ॥ ५ ॥ २६ ॥

हे इंद्र वसूनि त्वद्देयानि धनानि अस्मे अस्मासु आगमन् आगच्छंतु हि । यस्मात्त्वामहं शंसिषं स्तौमि । किंच सोमिनः सोमवतोमम स्वाशिषं शोभनाआशिषोयस्मिन् तं भरं यज्ञं आयाहि त्वमागच्छ । किंच त्वमीशिषे धनस्येश्वरोसि एवंविधः सत्वं अस्मिन्नस्मदीये वेद्यास्तृते बर्हिष्यासत्सि आसीद । किंच तव सोमपात्राणि धर्मणा राक्षसानां कर्मणा अनाधृष्य अनाधृष्याणि धर्षयितुमशक्यानि भवंतीतिशेषः ॥ ५ ॥

॥ इति सप्तमस्याष्टमे षड्विंशोवर्गः ॥ २६ ॥

अथ षष्ठी—

पृथ॒क्प्राय॑न्प्रथ॒मा दे॒वहू॑तयोऽकृण्वत श्र॒वस्या॑नि दु॒ष्टरा॑ ।
न ये शे॒कुर्य॒ज्ञियां॒ नाव॑मा॒रुह॑मी॒र्मैव ते न्य॑विशन्त॒ केप॑यः ॥ ६ ॥

पृथ॑क् । प्र । आ॒य॒न् । प्र॒थ॒माः । दे॒वऽहू॑तयः । अकृ॑ण्वत । श्र॒वस्या॑नि । दु॒स्तरा॑ । न । ये । शे॒कुः । य॒ज्ञिया॑म् । नाव॑म् । आ॒ऽरुह॑म् । ई॒र्मा । ए॒व । ते । नि । अ॒वि॒श॒न्त॒ । केप॑यः ॥ ६ ॥

हे इंद्र तव प्रसादात् ते पृथक् प्रायन् देवलोकान्पृथग्गच्छंति ये प्रथमाः पूर्वे मुख्यावा देवहूतयोदेवानामाह्वातारः कर्तरि क्तिन् । किंच दुष्टरा अन्यैर्दुस्तराणि श्रवस्यानि श्रवणीयानि यशांसि अकृण्वत अकुर्वत। किंच ये त्वत्प्रसादरहिताजनायज्ञियां यज्ञसंबंधिनीं यज्ञमयीमित्यर्थः नावमारुहं आरोढुं न शेकुर्न शक्नुवंति ते केपयः कुत्सितपूयकर्माणः पापकर्माणोजनाः ई-

मैव ऋणेनैव न्यविशंत नीचैराविशंत अधोगतिं प्राप्ताइत्यर्थः । तथाच यास्कः—पृथक्प्रायन् पृथक् प्रथतेः प्रथमादेवहूतयोयेदेवानाह्वयंताकुर्वतश्रवणीयानि यशांसि दुरनुकराण्यन्यैर्येशक्नुवन् यज्ञियां नावमारोढुमथ येनाशक्नुवन् यज्ञियां नावमारोढुमीमैवतेन्यविशंतेहैव तेन्यविशंत ऋणेनैवते न्यविशंतास्मिन्नेवलोकेइति[1] ॥ ६ ॥

अथ सप्तमी—

एवैवापागपरेसन्तुदूढ्योश्वायेषांदुर्युजआयुयुज्रे ।
इत्थायेप्रागुपरेसन्तिदावनेपुरूणियत्रवयुनानिभोजना ॥ ७ ॥

एव । एव । अपाक् । अपरे । सन्तु । दुःऽध्यः । अश्वाः । येषाम् । दुःऽयुजः । आऽयुयुज्रे । इत्था । ये । प्राक् । उपरे । सन्ति । दावने । पुरूणि । यत्र । वयुनानि । भोजना ॥ ७ ॥

एवैव एवमेव दूढ्योदुर्बुद्धयः अपरे अन्ये अयज्वानइत्यर्थः अपागपाचीनाअधोगंतारः संतु भवंतु । येषां यज्ञमकुर्वतामश्वादुर्युजोदुर्योजाः प्रबलाअप्यायुयुज्रे रथेषु युज्यंते ये सत्यपि सामर्थ्ये न यजंति ते नरकं गच्छंतीतिभावः । किंच इत्था इत्थं ते स्वर्गगामिनोये अपरे यज्वानः प्राक् मरणात् पूर्वमेव दावने देवानां हविर्दानाय संति भवंति यत्र येषु च यज्ञकारिषु वयुनानि प्रज्ञानानि कांतानि वा भोजना भोग्यानि धनानि पुरूणि बहूनि देवेभ्योदानाय संति ॥ ७ ॥

अथाष्टमी—

गिरीँरज्रान्रेजमानाँअधारयद्द्यौःक्रन्ददन्तरिक्षाणिकोपयत् ।
समीचीनेधिषणेविष्कभायतिवृष्णःपीत्वामदउक्थानिशंसति ॥ ८ ॥

गिरीन् । अज्रान् । रेजमानान् । अधारयत् । द्यौः । क्रन्दत् । अन्तरिक्षाणि । कोपयत् । समीचीने इति सम्ऽईचीने । धिषणे इति । वि । स्कभायति । वृष्णः । पीत्वा । मदे । उक्थानि । शंसति ॥ ८ ॥

गिरीन् मेघान् अज्रान् गमनशीलान् रेजमानान् कंपयमानान् अधारयत् इंद्रोधारितवान् निश्चलान् कृतवानित्यर्थः। किंच द्यौर्द्युलोकः तन्निवासी वा जनः असुरराक्षसेभ्योभीतः सन् क्रंदत् क्रंदति इंद्रमाह्वयत्यात्मनः परित्राणार्थं। किंचेंद्रः अंतरिक्षाणि कोपयत् कोपयति संक्षोभयतीत्यर्थः। किंचेंद्रः समीचीने परस्परं संगते धिषणे द्यावापृथिव्यौ विष्कभायति अंतरिक्षेण स्तभ्नाति स्तंभयतीत्यर्थः। किंचेंद्रः वृष्णः स्वोदरस्यासक्तत् वर्षणशीलान् सोमान् पीत्वा मदे सति उक्थानि प्रशस्यानि वचनानि शंसति प्रब्रवीति ॥ ८ ॥

अथ नवमी—

इ॒मं बि॑भर्मि॒ सुकृ॑तं ते अङ्कु॒शं येना॑रु॒जासि॑ मघवञ्छफा॒रुजः॑।
अ॒स्मिन्त्सु ते॒ सव॑ने अस्त्वो॒क्यं॑ सु॒त इ॒ष्टौ म॑घवन्बो॒ध्याभ॑गः ॥ ९ ॥

इ॒मम्। बि॒भ॒र्मि॒। सु॒ऽकृ॑तम्। ते॒। अ॒ङ्कु॒शम्। येन॑। आ॒ऽरु॒जासि॑। म॒घ॒ऽव॒न्। श॒फ॒ऽआ॒रुजः॑। अ॒स्मिन्। सु। ते॒। सव॑ने। अ॒स्तु॒। ओ॒क्य॑म्। सु॒ते। इ॒ष्टौ। म॒घ॒ऽव॒न्। बो॒धि॒। आऽभ॑गः ॥ ९ ॥

हे मघवन् धनवन्निंद्र ते तव सुकृतं संस्कृतं इमं अंकुशं बिभर्मि धारयामि अत्रांकुशशब्देन प्रेरकत्वगुणयोगात् स्तुतिरुच्यते स्तुतिं धारयामीत्यर्थः। येन स्तुतिलक्षणांकुशेन स्तुतः सन् त्वं शफारुजः आभिमुख्येन परबलानां हंतॄन् ऐरावतादीन् गजान् आरुजासि आभिमुख्येन रुजसि पीडयसीत्यर्थः। किंच ते तवास्मिन्नस्मदीयसवने सु सुष्ठु ओक्यं ओकोनिवासोस्तु भवतु। किंच हे मघवन् धनवन्निंद्र आभगः आभजनीयस्त्वं सुते सुतसोमे इष्टौ यज्ञे बोधि अस्मदीयाः स्तुतीः बुध्यस्व ॥ ९ ॥

अथ दशमी—

गोभि॑ष्टरे॒माम॑तिं दु॒रेवां॒ यवे॑न॒ क्षुधं॑ पुरुहूत॒ विश्वा॑म्।
व॒यं राज॑भिः प्रथ॒मा धना॑न्य॒स्माके॑न वृ॒जने॑ना जयेम ॥ १० ॥

गोभिः॑। त॒रे॒म॒। अम॑तिम्। दुः॒ऽए॒वाम्। यवे॑न। क्षुध॑म्। पु॒रु॒ऽहू॒त॒। विश्वा॑म्। व॒यम्। राज॑ऽभिः। प्र॒थ॒माः। धना॑नि। अ॒स्माके॑न। वृ॒जने॑न। ज॒ये॒म॒ ॥ १० ॥

अथैकादशी—

बृहस्पतिर्नः परिपातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥ ११ ॥ २७ ॥

बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् ।
अधरात् । अघऽयोः । इन्द्रः । पुरस्तात् । उत । मध्यतः । नः ।
सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥ ११ ॥ २७ ॥

इदमृग्द्वयं व्याख्यातचरं ॥ १० ॥ ११ ॥

इति सप्तमस्याष्टमे सप्तविंशोवर्गः ॥ २७ ॥

दिवस्परीति द्वादशर्चं तृतीयं सूक्तं भालंदनस्य वत्सप्रेरार्षं त्रैष्टुभमाग्नेयं । तथाचानुक्रांतं—दिवस्परिद्वादशवत्सप्रिराग्नेयं त्विति । प्रातरनुवाकाश्विनशस्त्रयोरिदमादिके द्वे सूक्ते । अस्य सूक्तस्यांत्यां वर्जयित्वा । सूत्रितंच—दिवस्परीति सूक्तयोः पूर्वस्योत्तमामुद्धरेदिति । क्षामवत्यां अक्रंददग्निरित्येषा याज्या । सूत्रितंच—अग्ने त्वमस्मद्युयोध्यमीवा अक्रंददग्निः स्तनयन्निवद्यौरिति ।

तत्र प्रथमा—

दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥ १ ॥

दिवः । परि । प्रथमम् । जज्ञे । अग्निः । अस्मत् । द्वितीयम् ।
परि । जातऽवेदाः । तृतीयम् । अप्ऽसु । नृऽमनाः । अजस्रम् ।
इन्धानः । एनम् । जरते । सुऽआधीः ॥ १ ॥

अग्निः प्रथमं पूर्वं दिवोद्युलोकस्य पर्युपरि आदित्यात्मना जज्ञे जातः जातवेदाः जातप्रज्ञोजातधनोवाग्निः द्वितीयं अस्मत् अस्माकं परि उपरि पार्थिवात्मना जज्ञे नृमणाः नृषु मनुष्येषु अनुग्राहकतया सक्तचित्तोग्निस्तृतीयं अप्सु अंतरिक्षे वैद्युतात्मना जज्ञे एवंविधमेनमग्निं स्वाधीः सुप्रज्ञोनेताजस्रमनवरतं इंधानोदीपयन् जरते स्तौति । यद्वा वाजसनेयकोक्त-

प्रकारेण अस्यमंत्रस्यार्थोद्रष्टव्यः—तद्यथा दिवस्परिप्रथमं जज्ञे अग्निरिति प्राणोवैद्यौः प्राणाद्वा एषप्रथममजायतास्मद्द्वितीयं परिजातवेदाइति यदेनमदोद्वितीयं पुरुषविधोजनयत् तृतीयमप्स्विति यदेनंतृतीयमद्भ्योजनयन् नृमणाअजस्रमिति प्रजापतिर्वैनृमणाः अग्निरजस्रमिंधानएनं जनयतेस्वाधीरिति ॥ १ ॥

अथ द्वितीया—

विद्माते॑अग्ने॒त्रेधात्र॒याणि॒विद्माते॒धाम॒विभृ॑तापुरु॒त्रा ।
वि॒द्माते॒नाम॑पर॒मंगुहा॒यद्वि॒द्मात॒मुत्सं॒यत॑आज॒गन्थ॑ ॥ २ ॥

वि॒द्म । ते॒ । अ॒ग्ने॒ । त्रे॒धा । त्र॒याणि॑ । वि॒द्म । ते॒ । धाम॑ ।
विऽभृ॑ता । पु॒रु॒ऽत्रा । वि॒द्म । ते॒ । नाम॑ । प॒र॒मम् । गुहा॑ ।
यत् । वि॒द्म । तम् । उत्स॑म् । यत॑ः । आ॒ऽज॒गन्थ॑ ॥ २ ॥

हे अग्ने ते तव त्रेधा त्रिषु स्थानेषु पृथिव्यंतरिक्षद्युलोकेषु स्थितानि त्रयाणि अग्निवाय्वादित्याख्यानि त्रीणि रूपाणि विद्म वयं जानीमः। किंच हे अग्ने ते तव धाम धामानि स्थानानि विभृता विभृतानि पुरुत्रा बहुधा बहूनि वा गार्हपत्याहवनीयान्वाहार्यपचनादीनि विद्म । किंच ते तव गुहा गूढं अवेद विद्वद्भिरविज्ञातं परमं प्रकृष्टं वेदे प्रसिद्धं यन्नामास्ति तद्विद्म वेदविदोवयं विजानीमः। किंच त्वं यतोयस्मादाजगंथ आगतवानसि उत्पन्नवानित्यर्थः तमुत्सं उत्स्यंदयितारमुत्पादयितारं कारणात्मानं विद्म जानीम ॥ २ ॥

अथ तृतीया—

स॒मु॒द्रेत्वा॑नृ॒मणा॑अ॒प्स्व१॒॑न्तर्नृ॒चक्षा॑ईधे॒दि॒वोअ॑ग्न॒ऊध॑न् ।
तृ॒तीये॑त्वा॒रज॑सितस्थि॒वांसं॑अ॒पामु॒पस्थे॑महि॒षाअ॑वर्धन् ॥ ३ ॥

स॒मु॒द्रे । त्वा॒ । नृ॒ऽमना॑ः । अ॒प्ऽसु । अ॒न्तः । नृ॒ऽचक्षा॑ः । ई॒धे॒ । दि॒वः ।
अ॒ग्ने॒ । ऊध॑न् । तृ॒तीये॑ । त्वा॒ । रज॑सि । त॒स्थि॒ऽवांस॑म् ।
अ॒पाम् । उ॒पऽस्थे॑ । म॒हि॒षाः । अ॒व॒र्ध॒न् ॥ ३ ॥